श्रीआत्म-वल्लभग्रन्थमाला [ग्रन्थाङ्कः १३]

ॐ नमः श्रीऋषिमण्डलाय ।

संविग्नशाखीयाद्याचार्य–न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीन्द्रपट्टालङ्कारश्रीमद्विजयवल्लभसूरिपादपद्मेभ्यो नमः ।

वाचनाचार्य–श्रीपद्ममन्दिरगणिविरचितकथाऽर्णवाङ्काख्यया व्याख्यया सङ्कलितं

श्रीधर्मघोषसूरिविनिर्मितं

# श्रीऋषिमण्डलप्रकरणम् ।

सम्पादकः संशोधकश्च—

पाञ्चालदेशोद्धारक–न्यायाम्भोनिधि–श्रीमद्विजयानन्दसूरीशपट्टप्रभावक–श्रीमद्विजयवल्लभसूरि-
मुख्यशिष्यरत्नतपोनिधि–श्रीमद्विवेकविजयान्तिपत्–श्रीमद्विजयोमङ्गसूरिः ।

प्रकाशकः—वालापुर(वलाद)नास्तव्यश्रीमालज्ञातीयश्रेष्ठिवर्य–खीमचन्द्रात्मजः पुष्पचन्द्रः ।

प्रतीनां-पञ्चशती] श्रीवीरसंवत् २४६५. [मूल्यम्-पादोनपञ्चरूप्यकम् ।

विक्रमसंवत् १९९५. आत्मसंवत् ४३. ईस्वीसन् १९३९.

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press,
26-28, Kolbhat Street, Bombay.

Published by Sheth Pushpachandra Khemchandra, Valad (*via* Ahmedabad)

अस्य ग्रन्थस्य प्राप्तिस्थानम्—

१ शाह फूलचंद खीमचंद. मु० वलाद. (स्टे. मेदरा. ए. पी. आर.)
२ शाह भूरालाल फूलचंद. मु० अमदावाद (शाहपुर मंगलपारेखरांचा, रेवादासनी पोल.)
३ मास्तर छोटालाल नानचंद. मु० अमदावाद (पांजरापोल कोटनचाल रूम नं. २३.)

नमः श्रीवीतरागाय ।

# कथाऽर्णवाङ्कविवरणोपेतस्य श्रीऋषिमण्डलप्रकरणस्योपक्रमः ।

उपादीयतां प्रमुदितमनसा प्रथमाविष्करणतया भूरिश्रमाविष्कृतं विश्रामपञ्चकविभूषितं कथाऽर्णवाङ्काख्यया व्याख्यया समलङ्कृतं श्रीऋषिमण्डलनामकमेतत् प्रकरणरत्नं धीप्रधानैर्धीधनैः ।

प्रकरणकारेणाऽऽचार्येण स्व-परोपकरणार्थं चिरन्तनपरममहर्षीणां संस्तवरूपं स्वनामसमानसंस्कृतऋषिमण्डलस्तोत्रतो भिन्नमष्टादशोत्तर-शतद्वय(*२१८)प्राकृतगाथात्मकं 'महरिसिकुलक(महर्षिकुलक)' इत्यपरनामधेयं प्रस्तुतप्रकरणं व्यधायि ।

अस्य प्रकरणस्योपरि व्याख्याकारेण मुनिपुङ्गवेनाऽऽवश्यकोत्तराध्ययन-भगवत्यादिजिनागममहोदधेरुद्धृत्य कतिपयतीर्थकृद्-गणधर-प्रत्येकबुद्ध-चक्रवर्त्ति-बलदेवादिशलाकापुरुषविशेषाणामन्येषां चानेकमहर्षीणां कथा-चरित्र-प्रबन्धादि मनोहरशैल्या वृत्तात्मकं निबद्धमत्र वृत्तौ सङ्क्षेपतया सङ्क्षिप्तरुचीनां प्राणिनामितिहासरसिकमतिमतां चोपकारकृते । तन्नामावली विषयानुक्रमे दृग्गोचरीभवेदिति नात्रोल्लेखः क्रियते ।

उक्तस्यास्य प्रकरणस्य वृत्तेश्चास्याः के प्रणेतारः ?, किंगच्छीयास्ते ?, विद्यमानताकालश्च तेषां कः ?, इति जिज्ञासूनां जिज्ञासायां जातायां सत्याम्—

---

* मुख्यतयाऽस्य प्रकरणस्य गाथानां परिमितिः २०८, २१० वर्तते, यदत्र च गाथाधिक्यं तत्तु पञ्चस्वाम्यधिकारे पूर्वाचार्यकृतानामावश्यकसूत्रनिर्युक्ति-भाष्यान्तर्गतगाथानां प्रक्षेपरूपाणामपि सङ्ख्यायां परिगणादजनि ।

एतत्प्रकरणस्यान्तिमाया गाथायाः 'सिरिधम्मघोसमणहं' इति शब्दश्लेषरूपेण तृतीयपादोल्लेखेन 'श्रीधर्मघोष' इति केवलं स्वस्याभिधानं समसूचि प्रकरणकारेण । न त्वन्यत् किमपि स्वकीयं विशिष्टं प्रकटितं परोपकरणैकस्पृहेण श्लाघास्पृहानिरीहेण । नापि वृत्तिकारेण ग्रन्थान्ते स्वविहितायां प्रशस्त्यां प्रकरणकारनिर्णायकोल्लेखः कृतः । यद्यपि गच्छपट्टावल्यादिष्वेतन्नामाभिधायिनस्तपा-खरतराञ्चलगच्छप्रभृतिनानागच्छालङ्कारभूताः सम्भूताः प्रभूताः प्रभावकाः सूरिवरा दरीदृश्यन्ते तथाऽप्येतत्प्रकरणकर्तृत्वं किंगच्छीयसूरेरिति निर्णयः कर्तुं न शक्यते, प्रकरणस्याऽऽद्यन्ते च तत्सम्बन्ध्युल्लेखस्यानवलोकनात् ।

ऋषिमण्डलप्रकरणकारधर्मघोषसूरिसम्बन्धे जेसलमेरुजैनभाण्डागारीयग्रन्थसूच्याम्—अप्रसिद्धग्रन्थग्रन्थकृत्परिचये चतुःपञ्चाशत्तम(५४)पृष्ठे तत्रत्ये बृहद्भाण्डागारे षड्विंशत्यधिकशत(१२६)तमे क्रमाङ्के ऋषिमण्डलप्रकरणस्य प्राचीनवृत्तेर्या ताडपत्रीया प्रतिर्वर्त्तते सा वैक्रमीयाशीत्युत्तरत्रयोदशशता(१३८०)ब्द्युल्लेखान्विता समसूचि । 'महरिसिकुलक(महर्षिकुलक)'इत्यपरनामकं मूलमात्रमेतद् धर्मघोषसूरिकृतमित्यत्र दर्शितम् । अतो मूलकारस्य व्याख्यातुरधिकप्राचीनता सम्भाव्यते । तपागच्छीयधर्मघोषाचार्यस्तु नृपविक्रमसप्तपञ्चाशदुत्तरत्रयोदशशत(१३५७)तमे संवत्सरे स्वर्गमलञ्चकारेत्युल्लेखा दृष्टिपथमधिगच्छन्ति । तस्य 'देवेन्द्र-विद्यानन्द-धर्मकीर्त्ति' ईदृग्नामोल्लेखशालिन्यो बह्व्यः कृतयोऽपि सम्मिलन्ति । अत्र च ऋषिमण्डलप्रकरणे ईदृगुल्लेखो न दृश्यते । तथैवास्यां व्याख्यायामपि तत्सम्बन्धि न किञ्चित् स्पष्टीकृतमवलोक्यते । तथा चान्यासु प्राचीनवृत्तिष्वपि न सम्भाव्यते ।

यत् पुनः चतुरविजयमुनिवरसम्पादित-संशोधिते साराभाई मणिलाल नवाब इत्यनेन प्रकाशिते जैनस्तोत्रसन्दोहनामकपुस्तके मुद्रितस्यास्य ऋषिमण्डलप्रकरणस्य कर्त्ता धर्मघोषसूरिस्तपागच्छीयः प्रदर्शितोऽस्ति प्रस्तावनायां [ पृ. ६० ] मुनिवर्येण, किन्तु तत्र सबलं प्रमाणं किमपि न व्यक्तीकृतम्, तदवचूरौ भावार्थे चापि तादृग् निर्देशो न दृश्यते । अत एवास्य सूरिवरस्य गच्छनिर्णयः सुदुष्कर एव ।

किञ्च तपागच्छीयधर्मघोषसूरिवरेण विविधजैनागममहोदधेरुद्धृत्य यानि कानिचित् स्तव-स्तोत्र-प्रकरण-सूत्राणि विनिर्मितानि *सन्ति तत्र तत्रान्त्यगाथायां प्रायः 'देवेन्द्र-विद्यानन्द-धर्मकीर्त्ति' इत्यभिधात्रयी यदवलोक्यते तद् 'देवेन्द्र'शब्देन स्वगुरोः श्रीदेवेन्द्रसूरेर्नाम सूचितम्, 'विद्यानन्द'पदेन स्वज्येष्ठसतीर्थ्यगुरुभ्रातुः श्रीविद्यानन्दसूरेरभिधा स्मारिता, 'धर्मकीर्त्ति' इत्युल्लेखेनाऽऽत्मनो धर्मकीर्त्तिरिति सूरिपदात् प्राग्भवं निजं प्रसिद्धमभिधानं च निर्दिष्टं स्वकृतिकलापे। अतः स धर्मकीर्त्तिरेवायं सूरिपदप्रदानसमये मन्त्रप्रदायिना सूरिणा कृतनामान्तरः श्रीधर्मघोषसूरियों द्व्युत्तरत्रयोदशशत(१३०२)तमे विक्रमनृपसंवत्सरे श्रीविद्यानन्दमुनेर्दीक्षानन्तरं धर्मकीर्त्तिरिति नाम्नाऽग्रहीदसौ दीक्षाम्, उपाध्यायपदं वैक्रमीयत्रयोविंशत्यधिकत्रयोदशशत(१३२३)तमे वर्षे सम्प्राप्तवान्, अष्टाविंशत्यधिकत्रयोदशशत(१३२८)तमे च हायने सूरिपदेनाऽऽत्मानमलङ्कृतवान्, स्वर्गं च सप्तपञ्चाशदधिकत्रयोदशशत(१३५७)तमे विक्रमाब्दे विभूषितवान्, इत्येष निर्णयस्तपागच्छपट्टावली-गुर्वावल्यादितोऽवसीयते।

ऋषिमण्डलप्रकरणस्य कर्त्रा श्रीधर्मघोषसूरिणा त्वत्र प्रकरणे तादृग्नामोल्लेखो न निरदेशि किन्तु 'भत्तिब्भर' इत्याद्युल्लेखो निर्दिष्टः, अत एव ऋषिमण्डलनाम्नी कृतिस्तपागच्छीयधर्मघोषसूरेर्भवितुमर्हति नैव। यदि च प्रस्तुतप्रकरणकारस्य गच्छनिर्णयो भवितुमनर्हस्तर्हि तद्विद्यमानताकालस्यापि निश्चयो भवितुमनर्ह एवेति।

---

* समवसरणप्रकरणम् (गाथा. २४), योनिस्तवः (गा १३), कालसप्ततिकाभिधानं प्रकरणम् (गा. ७४), देहस्थितिस्तवः (गा. १८), लोकनालिद्वात्रिंशिका (गा. ३२), चैत्यवन्दनभाष्यवृत्तिः (सङ्घाचाराख्या), चतुर्विंशतिजिनस्तुतय इत्यादीनि।

१ त्रयोदशदिनान्तराले गुरु-गुरुबन्धू देवेन्द्र-विद्यानन्दसूरी स्वर्जग्मतुः, तदनन्तरं च पञ्चमासैर्धर्मकीर्त्युपाध्यायस्य सूरिपदं सञ्जातम्।

अथ विक्षेपविचारणायां क्रियमाणायां सत्यां विधिपक्षाञ्चलगच्छनायको जयसिंहसूरिपट्टधरो धर्मघोषसूरिः सम्भाव्यते । यस्य जन्म वि. सं. १२०८ वर्षे, दीक्षा सं. १२२६ वर्षे, सूरिपदं सं. १२३४ वर्षे, स्वर्गगमनं च सं. १२६८ वर्षे समजनि । वि. सं. १२६३ वर्षे येन प्रश्नोत्तरविचाररूपः शतपदीग्रन्थः प्रणीत आसीद् यत्तदीयपट्टधरेण महेन्द्रसिंहसूरिणा वि. सं. १२९४ वर्षे विस्तारितस्तत्पट्टपरम्परामम्भूतेन मेरुतुङ्गसूरिणा च वि. सं. १४५३ वर्षे यत्सारोद्धारोऽकारि । एतेन धर्मघोषसूरिणा ऋषिमण्डलस्तव-प्रकरणं प्रणीतं स्यादिति निजपूर्वजस्य कृतेः प्राग् ज्ञानं व्याख्यानं तत्प्रचारणं च तत्क्रमानुयायिना भुवनतुङ्गसूरिणा विहितं विचार्यते तदनन्तरं चान्यैरपि । एवं विचार्यमाणं युक्तियुक्तं प्रतिभासेत विदुषाम् ।

अस्य प्रकरणस्य *प्रभूता व्याख्या ज्ञातास्तासां प्रणेतारोऽपि विधिपक्षाञ्चल-खरतरप्रभृतिविविधगच्छीया ज्ञायन्ते ।

---

* [१] अञ्चलगच्छीयभुवनतुङ्गसूरिकृता चतुर्दशशताब्दी जेसलमेरुदुर्गीयबृहज्जैनज्ञानकोशगता ताडपत्रीया वि. सं. १३८० वर्षे लिखिता, प्राचीनेयं वृत्ति', प्रस्तुतप्रकाशितवृत्त्यपेक्षयास्याः प्राचीनतायाः स्मरणमकारि मतभेदज्ञापने वाचनाचार्येण [पृ. १८, ४७ पत्रादौ], [२] खरतरगच्छीयजिनसागरसूरिनिर्मिता ३६१ पत्रमयी राजनगरस्थ'डेला'ऽऽख्योपाश्रयस्थज्ञानागारसत्का, [३] खरतरगच्छीयपद्ममन्दिरगणिकृता प्रस्तुतवृत्तिः ७२६१, ७५९०, ७७९०, ८००० श्लोकपरिमिता, वि. सं. १५५३ वर्षे रचिता, [४] पं० शुभवर्धनगणिरचिता बृहद्वृत्तिर्यत्पद्रस्थश्रीहंसविजयमुनीशचित्कोशसत्का १८००० वृत्तप्रमिता, वृत्तिकारसत्तासमयः षोडशशताब्द्या उत्तरार्धे, [५] खरतरगच्छीयहर्षनन्दनमुनिकृता ४५६४ वृत्तपरिमिता वि. सं. १७१३ वर्षे लिखिता वटपद्रे हंसविजयमुनीशसत्कज्ञानसङ्ग्रहे प्रतिवर्तते, अन्या च ४२०० श्लोकपरिमिता पुण्यपत्तनीयसङ्ग्रहे, [६] श्रीधर्मसागरशिष्येन श्रुतसागरेण विहितोऽस्य प्रकरणस्य बालावबोध', वि. सं. १६७० वर्षे इत्युल्लेख उपलभ्यते, [७] अज्ञातकर्तृकाऽवचूरिः पत्तन(पाटण)जैनज्ञानागारस्था, अन्यस्थलस्था १२५० श्लोकप्रमाणा, १७२४ वृत्तपरिमिता श्रूयते हं. म. सङ्ग्रहे इत्यादि जैनग्रन्थावल्यादिष्ववलोकनीयम् ।

पुनरेतत्प्रकरणस्य व्याख्याकारपरिचये तु वृत्तिप्रान्ततत्कृतायां प्रशस्त्याम्—'एनां जेसलमेरुनाम्नि नगरे प्रारब्धवानश्विनी-कोट्टे वाग्गुरुपद्ममन्दिरगणिः पूर्णीचकारानु च । वर्षे वह्नि-शराऽऽशुगोडुपमिते वैशाखशुक्लत्रयोदश्यां शुक्र-करोद्भवे शुभतमे योगेऽल्पधीशेखरः ॥ १ ॥' इत्यनेनाद्यपद्येन वृत्तिकर्तुर्वाचनाचार्यपद्ममन्दिरगणिरित्यभिधानं, वृत्तेः प्रारम्भस्थानं जेसलमेरुनामनगरं, तत्समाप्तिस्थलं तु अश्विनीकोट्ट( आधुनिकं देवीकोट- )नामनगरं, वृत्तिपूर्णतासमयो विक्रमनृपत्रिपञ्चाशदुत्तरपञ्चदशशत(१५५३)तमे वर्षे इति वृत्तिकारसत्तासमयो वैक्रमीयषोडशशताब्द्यामेतत् सर्वं सुस्पष्टमेव । गच्छोऽप्यस्य व्याख्याकारस्य वाचनाचार्यस्य प्रशस्त्यन्तर्वर्त्ति-वृत्तेभ्यः 'खरतर' इति नाम्ना सुप्रसिद्ध एव । स च खरतरगच्छशृङ्गारहारश्रीकीर्त्तिरत्नसूरितच्छिष्यरत्न—श्रीगुणरत्नाचार्यविनेयो

१ कीर्त्तिरत्नसूरिकृताऽप्येकाऽन्यावृत्तिः १२५ पत्रपरिमिता राजनगरे चञ्चलाऽऽख्याया सुश्राविकायाः सङ्ग्रहे [ डेलाज्ञानकोशसमर्पिते ] विद्यत इत्सूचि जैनग्रन्थावल्याम् [ पृ० १७५ ], किन्तु सा तत्प्रशिष्यपद्ममन्दिरगणिविनिर्मिताया एतस्याः पृथग् न प्रतिभाति । कीर्त्तिरत्नसूरेश्च स्मारकाणि कानिचित् फागादिभाषागीतानि तच्छाखासन्तानीयैः साधुकीर्त्ति-ललितकीर्त्ति-जयकीर्त्तिप्रभृतिभिः कृतान्युपलभ्यन्ते ऐतिहासिकजैनकाव्यसङ्ग्रहे [ अगरचंद-भँवरलाल-नाहटासम्पादिते, शङ्करदाननाहटाप्रकाशिते पृ० ४०३-४१२ ] एतैश्च ज्ञायते सूरेरस्य जन्म महेवनगरे उपकेशज्ञातौ संखवालगोत्रे देपाभार्या—देवलदे-कुक्षेः वि. सं. १४४९ वर्षे देल्ह इति च नाम । वि. सं. १४६३ वर्षे खरतरगच्छीयजिनवर्धनसूरेः पार्श्वे दीक्षा, वि. सं. १४७० वर्षे वाचकपदम्, वि. सं. १४८० वर्षे पाठक ( उपाध्याय ) पदम्, कीर्त्तिराज इति तदानीन्तनी संज्ञा, वि. सं. १४९७ वर्षे जेसलमेरुदुर्गे जिनभद्रसूरितोऽस्याचार्यपदे स्थापनाऽऽसीत् । वि. सं. १५२५ वर्षे स्वर्गवासश्च समजनि । अर्बुदगिरि–जोधान (योधपुर)–राजनगरे सूरेः पदानि, वीरमपुरे च स्तूप–स्थापनाऽवगम्यते । वि. सं. १५०५, १५१८ वर्षीयशिलालेखादौ कीर्त्तिरत्नसूरिनामोल्लेखोऽवलोक्यते । वि. सं. १५१४ वर्षे कुम्भलमेरौ जिनभद्रसूरौ स्वर्गं गते तत्पदेऽनेनैव स्थविरेण कीर्त्तिरत्नसूरिणा जिनचन्द्रसूरिः प्रतिष्ठित आसीद् यो वि. सं. १५३० वर्षे स्वर्गं जगाम ।

२ उपर्युक्तेन जिनचन्द्रसूरिणा कीर्त्तिरत्नसूरिपदे प्रतिष्ठितोऽयं गुणरत्नाचार्यो ज्ञायते ख. ग. पट्टावलीतः ।

वाग्गुरुपद्ममन्दिरगणिरिति प्रशस्त्युल्लेखतः सुप्रतीत एव तद्गच्छपट्टपरम्परासम्भूताष्टपञ्चाशत्तम(५८)श्रीजिनसमुद्रसूरि[1]विजयसुराज्ये।

व्याख्योपेतस्यास्य प्रकरणस्य मुद्रापणावसरे संशोधनकर्मणि षडादर्शपुस्तकानि समुपयोजितानि सन्ति। तत्प्रेषणादिसाहाय्यकर्तृणामेतेषां महानुभावानामौदार्यभाग्गनुमोदनं न कदाऽपि विस्मरामः। तत्र—

[ १ ] प्रथमं तावद् वालापुर(वलाद)ग्रामसंस्थापितास्मदीयज्ञानभाण्डागारसत्कं षट्षष्ट्यधिकशत(१६६)पत्रात्मकं नूतनमशुद्धप्रायिकम्।

[ २ ] द्वितीयम्—अव्यवस्थावस्थाप्राप्तविविधस्थानस्थज्ञानभाण्डागारोद्धरणैकनिपुण–प्रवर्त्तकश्रीमत्कान्तिविजयाह्वमुनिपुङ्गवस्य वटपद्र(वडोदरा)पत्तनसंस्थापितबृहच्चित्कोशीयं नवीनमेकपञ्चाशदधिकशत(१५१)पत्रपरिमितं शुद्धप्रायम्।

[ ३ ] तृतीयम्—अणहिलपाटकपत्तन(पाटण)नगरसंस्थसङ्घसत्कज्ञानागारीयं पञ्चषष्ट्यधिकशत(१६५)पर्णात्मकं प्राचीनं शुद्धं विद्वद्वर्यपुण्यविजयमुनिवरद्वारा समुपलब्धम्।

[ ४ ] चतुर्थम्—राजनगर(अहम्मदावाद)स्थ'डेला'इत्याख्योपाश्रयान्तर्गतप्राचीनज्ञानकोशसम्बन्धि सप्तदशाधिकशत(११७)पत्रमितं जीर्णप्रायिकं सूक्ष्मलिपीमयं शुद्धं च।

---

१ वि. सं. १५२० वर्षे जिनचन्द्रसूरिपट्टधरोऽयं जिनसमुद्रसूरिः, वि. सं. १५३६ वर्षेऽनेन कृतायाः प्रतिष्ठाया उल्लेख उपलभ्यते जेसलमेरुदुर्गीयजैनमन्दिरे [ जेसलमेरभां. सूच्याम्–पृ० ७० ], वि. सं. १५५५ वर्षेऽहम्मदावादे दिवं गतोऽयं सूरिः।

२ अत्रोपयुक्तानामेतेषां पुस्तकानामुल्लेखोऽग्रे प्रदर्शितस्ततोऽन्यद् विज्ञायतेऽस्या वृत्तेः २३१ पत्रात्मकं पुस्तकं स्व० श्रीहंसविजयमुनिराजीयशास्त्रसङ्ग्रहे। इतरदपि पुस्तकं द्वयं ज्ञायते राजनगरे ( अहम्मदावादे ) चंचळाऽऽख्यायाः श्राविकायाः सङ्ग्रहे [ डेलाज्ञानभाण्डागारसमर्पिते ], पुण्यपत्तने ( पूना ) च डेक्कन-( दक्षिण ) कॉलेजसङ्ग्रहे वि. सं० १८४५ वर्षे लिखितम्, यस्योल्लेखो विहितो रामकृष्णभाण्डारकरेण सन् १८८३–८४ वर्षीये १८८७ वर्षे प्रकाशिते स्वकीये रिपोर्टपुस्तके [ पृ० ४४४–४४६ ]

[ ५-६ ] पञ्चम-षष्ठे तु वटपद्र(वडोदरा)पत्तनस्थराजकीयप्राच्यविद्यामन्दिरीये आदर्शपुस्तके। तयोरेकं वि. सं. १६८० वर्षे समर्पितं चित्रचतुष्टयान्वितं चतुःषष्ट्यधिकशत(१६४)पत्रपरिमितं प्रायः शुद्धम्, द्वितीयं वि. सं. १६६३ वर्षे लिखितं चतुःसप्तत्युत्तरशत(१७४)-दलप्रमाणमशुद्धिबहुलम् ।

तत्र पूर्वोक्तपुस्तकचतुष्टयाधारेण संशोधितं सवृत्तिकं प्रस्तुतप्रकरणमिदमस्माभिः । अन्तिमपुस्तकद्वयेन वटपद्र(वडोदरा)स्थेन गान्धी-भगवान्दासेत्याह्वश्रेष्ठ्यात्मजेन साक्षरेण श्रीयुतलालचन्द्रेत्याख्येनास्मत्प्रेषितप्रत्यन्तिमप्रुफपत्राणा यन्निरीक्षणमकारि तदर्थं तदनुग्रहः स्मृतिपथमानीयते ।

एतत्पुस्तकपट्काधारेण सावधानतया संशोधितेऽप्यस्मिन् सवृत्तिके प्रकरणे मतिवैकल्यादक्षरयोजकदोषाद् वा यत्र क्वचनाशुद्धिः स्खलनं वा भवेत् तत्र संशोधनीयं गुण-दोषविवेकनिपुणैः कोविदैरित्यभ्यर्थयते—

५ १ ९ १
बाणाङ्काङ्केन्दुसङ्ख्याते, विक्रमक्ष्मापहायने ।
पौष्यां तिथौ गुरौ वारे, अजितेशप्रसादतः ॥ १ ॥
ऋषिमण्डलसूत्रस्योपक्रमोऽयं कृतो मया ।
प्रामयालापुरस्थेन, विजयोमङ्गसूरिणा ॥ २ ॥

सूरिप्रवरश्रीमद्विजयवल्लभसूरिमुख्यशिष्यरत्न–तपोनिधिश्रीमद्विवेकविजयान्तेवासी
विजयोमङ्गसूरिः ।

# कथार्णवाङ्कविवरणोपेतस्य श्रीऋषिमण्डलप्रकरणस्य विषयानुक्रमः ।



## पञ्चमविश्रामे द्वितीयोंऽशः

## पञ्चमविश्रामे तृतीयोंऽशः

## शुद्धिपत्रकम् ।

| पत्रे | पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|---|
| ६६ | १ | १३ | तं कं ? | तकं |
| ६६ | २ | ७ | तकं | तं कं ? |
| ७० | २ | ८ | पञ्चमो विश्रामः | पञ्चमविश्रामे प्रथमोंऽशः |
| ७३ | १ | ११ | महामहः पूर्वं, | महामहःपूर्वं, |
| ८६—९० | (उपरि) पार्श्वे | ६ | मर्षि- | महर्षि- |
| ९५ | २ | ९ | कस्मिन् | कस्मिन् |
| ९८ | २ | ९ | ७६ | ७७ |
| ११३ | (उपरि) पार्श्वे | ९ | प्रम्बन्धः | प्रबन्धः |
| ११६ | २ | २ | मी | भी |

सूचना—दृष्टिदोषवशादत्र मुद्रितप्रकरणे षट्सप्ततितमाया गाथाया द्विर्भावस्यभवनाद् तदग्रेतनासु गाथासु एकैकस्याङ्कस्य न्यूनत्वदर्शनादन्तिमायाः सप्तदशोत्तरद्विशततमाया गाथायाः स्थाने सप्तदशोत्तरद्विशततमा गाथा ध्यायाताऽस्तीति ।

---

नमः श्रीऋषिमण्डलाय ।

श्रीविजयवल्लभसूरिपादपद्मेभ्यो नमः ।

संविमशाखीयाद्याचार्य—न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीन्द्रपट्टालङ्कारश्रीमद्विजयवल्लभसूरिपादपद्मेभ्यो नमः ।

श्रीधर्मघोषसूरिविनिर्मितं

वाचनाचार्य—श्रीपद्ममन्दिरगणिविरचितकथार्णवाङ्काख्यलघुवृत्तिसङ्कलितं

# श्रीऋषिमण्डलप्रकरणम् ।



जयाय जगतामीशो, युगादीशो यदाश्रयात् । वृषः पशुरपि प्राप, जगद्भारधुरीणताम् ॥ १ ॥ नाम्नोऽस्मिन् मयि साम्यमेव वृषभ-
सेवात्र विश्वनये, तन्नाहं शकटापहारविकटो भ्राश्वरेणाधिकः । नेताऽसाविति गौरवाधिककलामादातुकामः प्रभुं, यं शिश्राय पदाब्जलाञ्छ-
नमिषाद् देयादसौ सम्मदम् ॥ २ ॥ नमः क्रमनमन्नाकिकिरीटघट्टिताङ्घ्रये । षोडशायार्हते शान्तिस्वामिने ब्रह्मगामिने ॥ ३ ॥ आचन्द्र-
सूर्यमिह योऽद्भुतशीललीलालेखामलीलिखदलं लसदिन्दुबिम्बे । श्रीमान् शिवाय स शिवातनयो नयानां, यो निर्नमन्नृपगणार्चितपादपद्मः
॥ ४ ॥ प्रसद्य सद्यो विपदां निरस्य, दत्ता यथा सा विपतोरगस्य । तथैव मे यच्छ भवं विधूय, श्रीपार्श्वनेतर्विभवं विशिष्टम् ॥ ५ ॥

[illegible] दुरग[illegible]णसङ्गणता तदा ॥ ५ ॥ प्रकपोद् वर्षितुं लग्नः, प्रावृष्यथ घनाघनः । मार्गवैषम्यतः सार्थोऽरण्ये

आशीविषो दृग्विषतां विहाय, द्विधां सुधाभोजनतामवाप । यस्यानुषङ्गात् त्रिशलाङ्गजस्य, नेत्रामृतं तज्जगतीं पुनातु ॥ ६ ॥ सिद्धिवृद्धिलसद्बुद्धिविधायी स गणाधिपः । कार्यारम्भे स्मृतः कार्यसिद्धिं दिश्यान्ममाऽऽदिमः ॥ ७ ॥ उल्लासयन्नाखिकदक्षपक्षं, प्रदर्शयन्नात्मनि ख्यातिपारम् । त्रिविष्टपस्पष्टगुरुर्गरिष्ठो, जीयाद् गुरुः श्रीगुणरत्नसूरिः ॥ ८ ॥ वन्दे सारस्वतं ज्योतिर्यत्प्रसादादहं जडः । करवाणि स्फुटं व्याख्यापाप्त्यमृषिमण्डले ॥ ९ ॥ वर्णना-विस्तरकथा-पीठभावप्रतिष्ठितः । प्रयासोऽल्परुचिप्राणिप्रेमक्षेमकृतेऽस्त्वसौ ॥ १० ॥



मङ्गलादिचतुष्टयम् ।

इहाभीष्टग्रन्थारम्भेऽभीष्टदेवतानमस्करणरूपमङ्गलाभिधानम्, अभिधेय-सम्बन्ध-प्रयोजनाभिधानं च शिष्टसमाचारः । तेन सर्वस्यापि "साहू य मंगलं सत्वे" इत्यार्षवचनत्वान्मङ्गलरूपस्य परमाप्तप्रणीतस्यास्य ऋषिमण्डलप्रकरणस्यारम्भे प्रकृष्टतमस्तवनरूपंमङ्गलं स्वयमेव श्रीधर्मघोषसूरिपादाः "भत्तिभर" इत्यादिना दर्शयिष्यन्ति । अभिधेयादि दर्शयामः । तत्र तावदत्राभिधेयं महर्षिचरित्राणि । सम्बन्धो द्विधा—उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च, तत्राद्यः तर्कानुसारिणः प्रति, तद्यथा—वचनरूपापन्नं प्रकरणमुपायः तत्परिज्ञानं चोपेयम् । द्वितीयः केवलश्रद्धानुसारिणः प्रति । प्रयोजनमपि द्विधा—परमपरं च, पुनरेकैकं द्विधा—कर्तृगतं श्रोतृगतं च, तत्र कर्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः, परम्परं तु अपवर्गप्राप्तिः, उक्तं च—"सर्वज्ञोक्तोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥ १ ॥" श्रोतृणामनन्तरं प्रयोजनं विवक्षितप्रकरणार्थपरिज्ञानम्, परम्परं निःश्रेयसावाप्तिः । ते हि विवक्षितं प्रकरणमर्थतः सम्यगवगम्य संसाराद्विरज्यन्ते, विरक्ताश्च सन्तः संसाराद्विनिर्जिगमिषवः संयमाध्वनि प्रवृत्तिमातन्वते, सम्यक् प्रवृत्तानां च संयमप्रकर्षाज्जायते सकलकर्मक्षयान्निःश्रेयसावाप्तिः । उक्तं च—"सम्यग्भावपरिज्ञानाद्विरक्ता भवतो जनाः । क्रियासक्ता ह्यविघ्नेन, गच्छन्ति परमां गतिम् ॥ १ ॥" इति । चालना-प्रत्यवस्थाने तु सुधिया स्वयमभ्यूह्ये, सङ्क्षिप्तमात्रत्वात् प्रयासस्य । प्रस्तुतं प्रस्तुमः—

॥ १ ॥

भत्तिभरनमिरसुरवरकिरीडमणिपंतिकंतिकयसोहे । उसभाइजिणवरिंदाणं पायपंकेरुहे णमिमो ॥ १ ॥

व्याख्या—ऋषभादिजिनवरेन्द्राणां 'पादपङ्केरुहान्' चरणकमलान् 'वयम्' इति क्रियायोगाद् गम्यं "नमिमो" नमस्कुर्म इति क्रियासम्बन्धः । ऋषभः—नाभेयः आदिः—प्रथमो येषां ते ऋषभादयः जिनाः—श्रुतवधिमनःपर्यायकेवलिभेदात् चतुर्विधास्तेषु वराः—प्रधानास्तेष्वपि समवसरणादिपरमैश्वर्ययोगादिन्द्रा इव इन्द्रा ऋषभादयश्च ते जिनवरेन्द्राश्च ऋषभादिजिनवरेन्द्रास्तेषाम् । किंविशिष्टान् पादपङ्केरुहान्? भक्तिः—आन्तरा प्रीतिस्तस्या भरः—पूरस्तेन 'नमिरा'—नमनशीला ये सुरवराः—इन्द्रास्तेषां किरीटाः—मुकुटास्तेषु ये मणयः—चन्द्रकान्तादयस्तेषां पङ्क्तयः—श्रेणयस्तासां याः कान्तयः—दीप्तयस्ताभिः कृता—निष्पादिता शोभा—विभूषा येषां तान् । अनेन विशेषणेन भगवतां पूजातिशयो ज्ञानातिशयश्च दर्शितः । विशिष्टज्ञानवतामेव हि साक्षात्सुरेन्द्रादिपूजाप्रपञ्चतासिद्धेः । 'जिनवरेन्द्राणाम्' इत्यनेन त्वपायापगमातिशयो वागतिशयश्च, रागाद्यान्तररिपुजेतृत्वाज्जिन इत्याद्यः । इन्द्र इति सर्वसत्त्वभाषावभासिसर्वसंशयापहारित्वाद्यनणुगुणग्रामाभिरामामृतस्राविवाक्परमैश्वर्यभाक्त्वाच्छादकत्वादिति द्वितीयः । इति गाथाक्षरार्थः । व्यासार्थस्तु सर्वार्हतां चरित्रेभ्योऽवसेयः । केवलं स्थानाशून्यार्थमवसर्पिणीचतुर्विंशतिकादिभूतत्वाद् युगादिजिनचरितं किञ्चिदुच्यते—

पुराऽपरविदेहेषु, पुरे क्षितिप्रतिष्ठिते । धनी धनाभिधानोऽभूद् धनेन धनदोपमः ॥ १ ॥ सोऽन्येद्युर्व्यवसायाय, वसन्तपुरपत्तनम् । गन्तुमारभ्यकारोशैः, पटहोद्घोषणामिमाम् ॥ २ ॥ द्रव्यं द्रविणहीनानां, दुर्बलानां च शम्बलम् । वाहनं तद्विहीनानां, यच्छामि सममीयुषाम् ॥ ३ ॥ श्रुत्वा तामिति भूयांसो, वणिक्-कार्पटिकादयः । सगच्छा धर्मघोषाख्याः, सूरयश्च तमन्वगुः ॥ ४ ॥ करभैः सैरिभैर्जात्यहयैः शकटसञ्चयैः । पन्थाः पृथुरपि प्रापाकीर्णसङ्कीर्णतां तदा ॥ ५ ॥ प्रकर्पाद् वर्पितुं लग्नः, प्रावृष्यथ घनाघनः । मार्गवैषम्यतः सार्थोऽरण्ये

तस्थौ ततोऽखिलः ॥ ६ ॥ क्रमेण क्षीणपाथेयाः, कन्दमूलफलाशिनः । बभूवुरखिला लोकास्तपःस्थास्तापसा इव ॥ ७ ॥ निशीथेऽन्येद्युरस्मार्षीत्, सार्थनाथस्तपोधनान् । प्रातराकार्य कार्यज्ञो, घृतेन प्रत्यलाभयत् ॥ ८ ॥ तेन दानेन सम्प्राप्तसम्यक्त्वश्चायुषः क्षये । उत्तरकुरुपूत्पन्नस्त्रिपल्यायुर्महासुखी ॥ ९ ॥ भवे तृतीये सौधर्मे, त्रिपल्यायुः सुरस्ततः । विजये गन्धिलावत्यां, प्रतीचीदिग्विदेहगे ॥ १० ॥ गान्धारदेशे वैताढ्ये, पुरे गन्धसमृद्धके । सम्राडतिबलस्तस्य, पुत्रः शतबलो नृपः ॥ ११ ॥ महिषी चन्द्रकान्ताख्या, जातस्तुत्या तयोः सुतः । महाबलाभिधः प्राप, राज्यं क्रमात् क्रमागतम् ॥ १२ ॥ [ त्रिभिः सम्बन्धः ] प्रिया विनयवत्यस्य, मन्त्री सुबुद्धिरास्तिकः । सद्धर्मा भिन्नसम्भिन्नश्रोताश्चान्योऽस्ति नास्तिकः ॥ १३ ॥ अन्यदा संसदासीनस्यास्य भूपस्य चाग्रतः । चकार चारुचारीभिर्नाटकं नटपेटकः ॥ १४ ॥ पश्यन्तं सस्पृहं नाट्यं, सुबुद्धिर्भूभुजं जगौ । स्फीतं गीतं विलापाभं, सर्वं नाट्यं विडम्बना ॥ १५ ॥ भारा हारादयलङ्काराः, सर्वे कामास्तु दुःखदाः । परं परत्र सर्वत्र, धर्मः शर्मकरोऽङ्गिनाम् ॥ १६ ॥ शूलभिन्न इवात्यन्तं, कपिकच्छूकदर्थितः । इवासहिष्णुश्चान्योऽदः, प्रोवाच सचिवो वचः ॥ १७ ॥ प्रत्यक्षं सौख्यमुत्सृज्य, परोक्षार्थी विलक्षताम् । को मूढो नैति जम्बूक, इव लक्षमुखामिषः ? ॥ १८ ॥ को वा मांसं भाजनस्थं, हित्वाऽन्यस्मै प्रतीक्षते ? । पिपासुर्वाऽमृतं प्राप्य, सन्दिग्धाम्भः क इच्छति ? ॥ १९ ॥ भुक्त्वा भोगानथो प्रान्ते, कुर्याद् वा सुकृतं कृती । स्तनं धयन्तं तनयं, को हि मातुर्वियोजयेत् ? ॥ २० ॥ सुबुद्धिरूचे यत् प्रान्ते, धर्मोद्धरणधीरता । तदेतद् दमनं लभे, सङ्ग्रामे गज-वाजिनाम् ॥ २१ ॥ कूपस्य खननारम्भो, लग्नेऽग्नौ सदनेऽथवा । पुरे रोधे क्रियाग्नीरेन्धन-धान्यादिसङ्ग्रहः ॥ २२ ॥ श्रेयसः करणं प्रान्ते, दुर्घटं घटते यतः । इवाकालफलापातः, प्राणिनामायुषः क्षयः ॥ २३ ॥ अतो भविमता विद्यमाने सम्यग्वयोबले । आहार्यकार्य एवासौ, धर्मः शर्मनिबन्धनम् ॥ २४ ॥ किञ्चातिलोभतः प्राणी,

प्रायः प्राप्नोति चापदः । वनस्थजम्बुकस्येवामात्योऽवोचदसौ कथम् ? ॥ २५ ॥ सुबुद्धिरभ्यधादेकोऽन्यदा वने वनेचरः । जगाम
भ्रमता तेन, दृष्टो दूरस्थितः करी ॥ २६ ॥ जघानैकेन बाणेन, धन्यंमन्यो धनुर्द्धरः । हित्वा धनुः शरं पर्शुपाणिर्मुक्ताकृतेऽगमत् ॥ २७ ॥
तत्पातशब्दभीतेन, दष्टो दुष्टोरगेण सः । परस्मिंश्चिन्त्यते यच्च, प्रायः पतति तद्गृहे ॥२८॥ दैवात् तत्रैक आयातः शृगालो ह्यचिन्तयत् ।
किञ्चित्कालं नृसर्पाभ्यां करिणा जीविका चिरम् ॥ २९ ॥ तावदद्मि धनुर्जीवां, भक्षयंस्तां ममार सः । तत्कोट्या तालुके भिन्ने, धिग् धिग्
लोभान्धचेष्टितम् ॥ ३० ॥ भुञ्जानो विषयानेवं, तद्विपाकमचिन्तयन् । अतृप्तस्तृप्तिपर्यन्तं, परत्रामुत्र दुःखभाक् ॥ ३१ ॥ तथा देवान्य-
लोकोऽपि, न सन्दिग्धो यदेकदा । आवाभ्यां नाकिनो दृष्टा, गताभ्यां नन्दने वने ॥ ३२ ॥ तेष्वेकः प्राह ते सोऽहमतिबलः पिता-
महः । शुद्धधीर्धर्ममाराध्य, ब्रह्मलोकेन्द्रतां श्रितः ॥ ३३ ॥ त्वमप्युद्यच्छ संसारकारागाराद्विनिर्गमे । मा स्म शोचीर्भवाम्भोधौ पतितैरिव
पक्षिभिः ॥ ३४ ॥ केऽमी पक्षिण इत्युक्ते, भवतोचे पुरन्दरः । हस्त्येकस्तृषितो ग्रीष्मे, नद्यां नीरार्थमाविशत् ॥ ३५ ॥ पङ्के मग्नस्तथा
सोऽभूद् यथा निर्गन्तुमक्षमः । शृगालभक्षितापानद्वारा काकादयोऽविशन् ॥ ३६ ॥ मांसलोभेन मध्यस्थाः, सुखास्ते तस्थुरस्थिराः । शुष्कं
सङ्कोचमापन्नं, हस्त्यङ्गं पद्मकोशवत् ॥ ३७ ॥ वर्षापूरेण तन्नीतं, समुद्रं मत्स्य-कच्छपैः । भिन्नं भिन्नं च नीरेण, निरीयुस्तेऽखिला बहिः
॥ ३८ ॥ इतस्ततो भ्रमन्तश्चापश्यन्तः पारमम्बुधेः । विनाशमापुरात्मानं, निन्दन्तोऽदीर्घदर्शिनम् ॥ ३९ ॥ एवं संसारिणो जीवा, मर्त्यज-
न्मकलेवरे । तिष्ठन्तो दुःखितां यान्ति, लोभिनो विषयामिषे ॥ ४० ॥ तस्मादवसरं प्राप्योद्यमः कार्यः क्रियोपरि । पश्चान्मृत्युमुखं प्राप्तो,
वत्स ! मा गच्छ दीनताम् ॥४१॥ एतत् स्मरसि तस्योक्तं, राज्ञोचे संस्मरामि भोः ! । मन्त्र्याह परलोकोऽपि, श्रद्धेयस्तर्हि निश्चितम् ॥४२॥
स्वामिंस्तवान्वये पूर्वं, कुरुचन्द्रोऽभवन्नृपः । भार्या कुरुमती तस्य, हरिश्चन्द्रः कुमारकः ॥ ४३ ॥ चार्वाकः स च चार्वाकमतं सत्यतया

वदन्। न मन्यतेऽन्यलोकं नो, बन्ध-मोक्षौ वृषावृषौ ॥ ४४ ॥ स प्रान्तावसरे पुष्पस्रस्तरं प्रस्तरव्रजम्। गोशीर्षचन्दनं पूतिं, पयस्तप्त-
त्रपूपमम् ॥ ४५ ॥ दुकूलतूलीः शूलीव, शर्कराः कर्करानिव। विदन् ज्ञात्वा रहो राज्ञी, सपुत्रा तमपालयत् ॥ ४६ ॥ परासुतामसावा-
पोग्रपापो विरसं रसन्। तत्पदे मन्त्रिभिर्न्यस्तो, हरिश्चन्द्रो नृपाङ्गजः ॥ ४७ ॥ पप्रच्छ सोऽन्यदा धर्मं, सुबुद्धिसचिवं निजम्। इतः
पुरो बहिर्देवाश्चक्रुः केवलिनो महम् ॥ ४८ ॥ सुबुद्धिमन्त्रिणा सार्द्धं, भूपस्तं वन्दितुं गतः। पप्रच्छावसरे तातो, भगवन्! मे गतः क्व
नु? ॥४९॥ भगवानाह सप्तम्यां, सवेगात् तौ प्रवं श्रितौ। मोक्षं गतौ चासङ्ख्याता, व्यतीयुस्ते तवान्वये ॥५०॥ यावद् भवान् सुबुद्धे-
श्चान्वयेऽहं क्रम एष नः। सद्धर्मावसरो ग्राह्यः, प्रभोर्लोकान्तिकैरिव ॥ ५१ ॥ 'यशानवसरे रङ्गभङ्गजङ्गमसङ्गमम्। वचो वच्मि तद-
त्रापि, प्रगुणं कारणं शृणु ॥ ५२ ॥ श्रीविजयामितघोषौ, श्रमणौ नन्दने वने। गतेन दृष्टौ पृष्टौ च, कियदायुः प्रभोर्मम? ॥ ५३ ॥
ताभ्यां मास इति प्रोक्तेऽत्राकुलो भवदन्तिके। आगतोऽतः परं देव!, यद् युक्तं तद् विधेहि भोः! ॥ ५४ ॥ सम्भ्रान्तो भूपतिः प्राह,
मन्त्रिन्! स्तोकदिनैः कियान्। धर्मो भवति? मन्त्र्याह, सोऽल्पोऽप्यनल्पसौख्यदः ॥५५॥ यदेकाहकृता शुद्धा, प्रव्रज्या पारमेश्वरी। मोक्षं
वैमानिकत्वं वा ददात्यत्र न संशयः ॥ ५६ ॥ चैत्येष्वष्टाह्निकां कृत्वा, लात्वा संस्तारकव्रतम्। द्वाविंशत्यहैरीशाने विमाने श्रीप्रभे दिवि
॥ ५७ ॥ उत्पन्नो ललिताङ्गाख्यो, देवो देवी स्वयंप्रभा। यानिन्द्रेण समं नन्दीश्वरद्वीपे च्युतोऽथ सः ॥ ५८ ॥ [ युग्मम् ] विजये
पुष्कलावत्यां पत्तने प्राग्विदेहगे। लोहार्गले नृपः स्वर्णजङ्घो लक्ष्मीः प्रिया तयोः ॥ ५९ ॥ पुत्रोऽभूद् वज्रजङ्घाख्यः, स पूर्वभव-
गेहिनीम्। श्रीमतीमुपयेमे श्रीवज्रसेनार्हतः सुताम् ॥ ६० ॥ क्रमात् सम्प्राप्तसाम्राज्यस्तल्लोभेनातिपाप्मना। विषधूपप्रयोगेण, हतः पुत्रेण
सप्रियः ॥ ६१ ॥ उत्तरकुरुषूत्पन्नः, पूर्णायुर्युग्मधर्म्मिषु। त्रिपल्यायुश्च सौधर्मे, सुरो जातस्ततश्च्युतः ॥ ६२ ॥ अथो महाविदेहेषु,

पुरे क्षितिप्रतिष्ठिते । सुविधेर्भिषजः पुत्रो, जीवानन्दाह्वयोऽजनि ॥ ६३ ॥ केशवः श्रीमतीजीवश्चत्वारः सुहृदोऽपरे । जज्ञिरेऽस्य नृपामात्य-सार्थप-श्रेष्ठिसूनवः ॥६४॥ विशेषात् पूर्वसम्बन्धादस्याद्ये प्रीतिरुत्तमा । एकजीवा इवान्योन्यं, समं चक्रुः क्रियाः समाः ॥ ६५ ॥ तिष्ठन्तोऽन्येद्युरद्राक्षुर्वैद्यपुत्रस्य मन्दिरे । भिक्षार्थमागतं दुष्टकुष्ठपुष्टं तपोधनम् ॥ ६६ ॥ सकृपाः सस्मितं प्राहुः, साहसं भिषजामहो ! । कुपात्रमपि लोभेन, चिकित्सन्ति न तूत्तमम् ॥ ६७ ॥ विज्ञाततदभिप्रायो, वयस्यान् प्राह वैद्यसूः । सत्यमेतत् परं नास्ति, धनं मे साध्य-साधनम् ॥ ६८ ॥ कम्बलश्चन्दनं तैलं, लक्षपाकं पृथक् पृथक् । विलोक्यतेऽत्र तत्राऽऽस्ते, तैलं मे लक्षपाककम् ॥ ६९ ॥ अमात्य-नृप-पुत्राद्यैः, प्रोक्तमन्यद्द्वयं पुनः । करिष्याम इति प्रोच्य, सर्वेऽगुर्वणिगापणे ॥ ७० ॥ लक्षद्वयेन गृह्णन्तश्चन्दनं कम्बलं च ते । वणिजाऽभाणि किं कार्यं ?, तेऽपि साध्वर्थमादिशन् ॥ ७१ ॥ शिशूनामप्यहो ! बुद्धिर्धर्मे नो तादृशी मम । श्रेष्ठिश्रेष्ठ इति ध्यात्वा, विना मूल्यमदाद् द्वयम् ॥ ७२ ॥ वैराग्याच्च व्रतं लात्वा, सिद्धसौधाध्वगोऽभवत् । लात्वा समग्रसामग्रीं, ते जग्मुः श्रमणान्तिकम् ॥ ७३ ॥ भगवन्ननु-जानीहि, कुर्मस्ते रुक्प्रतिक्रियाम् । इत्युक्त्वाऽभ्यङ्गमङ्गस्य, सिद्धतैलेन ते व्यधुः ॥ ७४ ॥ कम्बलेनाऽऽवृतादङ्गान्निरीयुः कृमयो बहिः । क्षुभितास्ते दयावद्भिर्निक्षिप्ता गोकलेवरे ॥ ७५ ॥ चन्दनालेपनं चक्रुरेवं त्रिस्त्रिः प्रयोगतः । त्वग्मांसास्थिगताः कीटा, निर्गता गात्रतो मुनेः ॥ ७६ ॥ संरोहिण्या वरौषध्या, सुवर्णवपुषं मुनिम् । विधाय क्षमयित्वा च, धन्यंमन्या ययुर्गृहम् ॥ ७७ ॥ साध्वर्थकल्पितार्थेन, जिनचैत्यमचीकरन् । ते क्रमाद् व्रतमासाद्याच्युते कल्पेऽभवन् सुराः ॥ ७८ ॥

इतश्च जम्बूद्वीपस्य, विदेहे विजयेऽष्टमे । नगर्यां पुण्डरीकिण्यां, तीर्थकृद् वज्रसेनराट् ॥७९॥ तत्पत्नी धारिणी तस्या, वज्रना-भादयः सुताः । पञ्च पञ्चसुरप्राणा बभूवुरच्युतात् च्युताः ॥ ८० ॥ [ युग्मम् ] वज्रसेनो जिनो लोकान्तिकैरागत्य बोधितः । दानं

दत्त्वा व्रतं लात्वा, क्रमाज्ज्ञानमवाप च ॥ ८१ ॥ वज्रनाभः समुत्पन्नचक्ररत्नो भुवस्तलम् । प्रसाध्य बन्धुभिः सार्द्धं, बुभुजे चक्रिणः श्रियम् ॥ ८२ ॥ स्वाधीनानि निधानानि, नवाप्यस्य चतुर्दश । रत्नान्यश्वरथेभानां, लक्षाश्चतुरशीतिकाः ॥ ८३ ॥ चतुःषष्टिसहस्राणि, स्त्रियोऽस्य भोग्यतामगुः । वेदाक्षिलक्षपूर्वाणि, राज्यं भुक्त्वाऽन्तिके पितुः ॥ ८४ ॥ सबन्धुर्व्रतमादत्तामूचतुर्दशपूर्ववित् । चत्वारो बाहुमुख्याश्चैकादशाङ्गविदोऽपरे ॥ ८५ ॥ वज्रनाभोऽभवत् सूरिरर्हदाराधनादिभिः । विंशतिस्थानकैस्तीर्थकृत्कर्माऽऽर्जीदसौ पुनः ॥८६॥ बाहुर्वह्वन्नपानादिदानतश्चक्रिणः श्रियम् । सद्विश्रामणयाऽऽनर्ज, सुबाहुर्बाहुशक्तिताम् ॥ ८७ ॥ सुलब्धमेतयोर्जन्म, सद्वैयावृत्यकारिणोः । व्याख्यान्तीत्यादिनाऽऽचार्याः, सन्तः सत्पक्षपातिनः ॥ ८८ ॥ श्रुत्वा पीठ-महापीठौ, स्वाध्याय-ध्यानबन्धुरौ । सञ्जातमत्सरौ चित्ते, वदतः स्म परस्परम् ॥ ८९ ॥ शरीरसुखकारी स्यात्, प्रायः श्लाघ्यो जने नरः । न धर्मे दृश्यतेऽन्यथाऽहो ! मोहविजृम्भितम् ॥ ९० ॥ इत्युक्तवद्भ्यामेताभ्यां, स्त्रीवेद्यं कर्म सञ्चितम् । चतुर्दशपूर्वलक्षाः, सर्वेऽप्याराध्य सद्व्रतम् ॥ ९१ ॥ सर्वार्थसिद्धमासेदुर्दुरासदमदर्शनैः । त्रयस्त्रिंशत्पयोराश्यायुषः ससुखमायुषः ॥ ९२ ॥

इतश्च पश्चिममहाविदेहे वणिजावुभौ । वाणिज्यं चक्रतुः सार्द्धं, भद्रक-क्षुद्रकाशयौ ॥ ९३ ॥ क्षुद्रः प्रच्छन्नलाभादि स्वगयन्नाददे स्वयम् । मृत्वाऽत्र भरते जातौ, नरेभौ युग्मधर्मिणौ ॥९४॥ नरं वीक्ष्य गजः स्नेहात् स्कन्धमारोहयत् स्वयम् । युग्मिनस्तमिति प्राहुर्नाम्ना विमलवाहनम् ॥ ९५ ॥ हीयमानेषु गीर्वाणद्रुमेषु कालदोषतः । युग्मिनः कलहायन्तेऽलभमानाः कलं फलम् ॥ ९६ ॥ साकं चन्द्रयशःपत्न्येभस्थं तं वीक्ष्य युग्मिनः । विवादच्छेदमिच्छन्तः, स्वावज्ञां तत्पुरोऽवदन् ॥ ९७ ॥ सोऽपि नीतिमिमामेषां हक्काराख्यां समादिशत् । मर्यादास्थायिनां तेषां, न व्यतीयुर्महाह्रियः ॥ ९८ ॥ धनुर्नवशतान्युच्चः, प्रसूय युगलं स तु । पल्यस्य दशभागायुः, सुपर्ण-

पूदपचत ॥ ९९ ॥ चक्षुष्मान् कुलकृच्चान्यश्चन्द्रकान्तापतिर्नृपः । पल्यस्यासङ्ख्यभागायुरुच्चाङ्गोऽष्टधनुःशती ॥ १०० ॥ तामेव नीतिं
नीतिज्ञो, दर्शयन्नपराधिनाम् । मृत्वा सुपर्णकुमारेऽगाद् राज्ये संस्थाप्य नन्दनम् ॥१०१॥ यशस्वीति तृतीयोऽभूत्, सुरूपापतिरीश्वरः ।
आनुपूर्व्योनपूर्वायुः, धनुःसप्तशताङ्गवान् ॥ १०२ ॥ मर्यादाच्छेदिनां कालदोषान्नीतिद्वयं दिशन् । हकाराख्यां मकाराख्यामल्पानल्पाप-
राधिनाम् ॥ १०३ ॥ मृत्वोदधिकुमारेऽगाद् राज्ये न्यस्य निजाङ्गजम् । चतुर्थोऽथाभिचन्द्रोऽभूत्, प्रतिरूपापतिः पतिः ॥ १०४ ॥
पूर्वोक्तायुर्वपुर्मानः, स सार्द्धं षड्धनुःशतम् । स्वायुर्दशांशे विन्यस्तपुत्रराज्योऽगमद् दिवम् ॥ १०५ ॥ धनूंषि षट्शतान्युच्चः, पञ्चमोऽथ
प्रसेनजित् । चक्षुःकान्तापतिः पूर्वोक्तायुः प्रियङ्गुवर्णरुक् ॥ १०६ ॥ धिकाराख्यतृतीयाया, नीतेः कर्त्ता महागसाम् । मृत्वा द्वीप-
कुमारेऽगात्, सूनुसङ्क्रामितेन्दिरः ॥ १०७ ॥ सार्द्धपञ्चशतचापाङ्गः, कुलकृन्मरुदेवकः । श्रीकान्तेशश्च पूर्वायुर्न्यस्य राज्ये तनूद्भवम्
॥ १०८ ॥ देवो द्वीपकुमारेऽभून्नीतित्रयप्रवर्त्तकः । सप्तमः कुलकृन्नाभिस्तत्पत्नी मरुदेव्यथ ॥ १०९ ॥

जम्बूद्वीपेऽत्र भरते, सुषमा-दुःषमारके । एकोननवतिपक्षैरूने स त्रुटिताङ्गके ॥ ११० ॥ आषाढाद्यचतुर्थ्यामुत्तराषाढागते
विधौ । स जीवो वज्रनाभस्य, च्युत्वा सर्वार्थसिद्धितः ॥ १११ ॥ तस्याः कुक्षाववातारीत्, सापि स्वप्नांश्चतुर्दश । ददर्श सुखनिद्राणा,
प्रोन्निद्राननपङ्कजा ॥ ११२ ॥ गौर्गजः केसरी लक्ष्मीस्स्रग्दामे रविः शशी । ध्वजः कुम्भः सरोऽब्धिर्विमानं रत्नोच्चयः शिखी
॥ ११३ ॥ लष्टान् पुष्टानिमान् दृष्ट्वा, हृष्टतुष्टा सती सती । स्पष्टमाचष्ट मिष्टाभिर्वाग्भिरभ्येत्य भूभुजम् ॥ ११४ ॥ स्वामिन्नद्य सखां कल्पे,
तल्पे सुप्ता सती निशि । मुखे प्रविशतः स्वप्नान्, प्रबुद्धा वीक्ष्य साम्प्रतम् ॥ ११५ ॥ तदेषां किं फलं ? नन्वे, सद्यो मेऽद्य निवेद्य-
ताम् । श्रुत्वा सम्यग् विचार्याऽऽर्यो, बुद्धिविज्ञानपूर्वकम् ॥ ११६ ॥ उवाच वाचमाचारपूतः सद्भूतमुन्नृपः । सर्वाङ्गसुभगो भाग्यलभ्यस्ते

भविता सुतः ॥ ११७ ॥ स यौवनमनुप्राप्तः, प्रतापाक्रान्तभूतलः। आक्रमिष्यति भूपालमण्डलं भानुवन्नभः ॥ ११८ ॥ आकर्ण्य कर्णा-
मृतवृष्टिरूपं, नाभेर्वचः श्रीमरुदेव्यपीदम्। बभूव धाराहतनीपपुष्पमिवोल्लसद्विग्रहरोमकूपा ॥ ११९ ॥ शीर्षे दशनखावर्त्तं, विधाया-
ञ्जलिमब्रवीत्। स्वामिन्निष्टमसन्दिग्धं, सम्यगेतत् प्रतीप्सितम् ॥ १२० ॥ इत्युक्त्वा नाभ्यनुज्ञाता, गृहमेत्य सुखेन सा। गर्भं बभार
धौरेयं, सद्बीजं बीजसूरिव ॥१२१॥ वासवाश्च चतुःषष्टिः, सद्रत्नकुक्षिधारिके !। भवत्या भविता तीर्थकृत्पुत्रः प्रोचुरेत्य ताम् ॥ १२२॥
सार्द्धाष्टमदिने मासे, नवमे पूर्णदोहदा। सुतं प्रासूत चैत्राषाढाष्टम्यामर्द्धनिशि प्रसूः ॥ १२३ ॥ काष्ठाः प्रसेदुरासेदुः, क्षणं नारकिणः
सुखम्। हर्षाद्वैतमयं जज्ञे, जगच्चन्द्रोदयेऽब्धिवत् ॥ १२४ ॥ षट्पञ्चाशत्कुमारीणामासनानि चकम्पिरे। विज्ञायावधिनाऽभ्येत्य, जिनज-
न्मोत्सवं व्यधुः ॥ १२५ ॥ संवर्त्त-मेघाऽऽदर्शांश्च, भृङ्गार-तालवृन्तकान्। चामरोद्योतरक्षाश्च, कुर्युः, कार्याणि ताः क्रमात् ॥ १२६ ॥
समातरं जिनं नत्वोद्गाय गीतानि तानि ताः। जग्मुर्यथागतं सर्वाः, प्रमोदाञ्चितचेतसः ॥ १२७ ॥ अथाऽऽसनप्रकम्पोत्थावधिज्ञानेन
वासवः। विज्ञो विज्ञाय सर्वज्ञजन्म सन्महिमास्पदम् ॥ १२८ ॥ सुघोषघण्टाटङ्कारसावधानीकृतामरः। पालकाख्यविमानस्थः प्रापार्ह-
ज्जन्ममन्दिरम् ॥ १२९ ॥ [ युग्मम् ] दत्त्वाऽवस्वापिनीं मातुर्मुक्त्वा पार्श्वे जिनाकृतिम्। पञ्चरूपधरो मेरुधराधरमगाद्धरिः ॥ १३■ ॥
रूपेणैकेन हस्तेऽलाद्, वहन् द्वाभ्यां च चामरे। एकेनोल्लालयन् वज्रं, छत्रमेकेन मूर्द्ध्न्यधात् ॥ १३१ ॥ [ युग्मम् ] क्षीरार्णवाहृता-
म्भोभिः, क्षालितं वपुरार्हतम्। वासवैश्चात्मनः पङ्कमनेकभवसञ्चितम् ॥ १३२ ॥ नाट्यपाटपटो नाट्यं, चक्रे शक्रवधूजनः। को
वाऽऽसाद्य सुधाकुण्डमुदासीनो भवेत् सुधीः ? ॥ १३३ ॥ प्राचीनविधिनाऽऽनीयापनीय तद्विचेतनाम्। अलङ्कारान् प्रभोर्योग्यान् दत्त्वा
खेलनकानि च ॥ १३४ ॥ ससुराः सुरराजाश्च, जग्मुः स्वर्गं यथागतम्। शशंस नाभये देवी, प्रबुद्धा सुतजन्म तत् ॥ १३५ ॥ प्रभो

ऋषभ इत्याख्यां, पितरौ चक्रतुर्यतः । तदूर्वोर्वृषभाङ्कोऽस्ति, स्वप्ने प्राक् चेक्षितोऽम्बया ॥१३६॥ गते देशोनवर्षेऽस्य, सेक्षुयष्टिः पुरन्दरः । दर्शनायाऽऽगतस्तत्र, प्रभुणा दृष्टिरर्पिता ॥ १३७ ॥ अकर्तीक्षुं भवान् पाणिं, प्रससार जिनेश्वरः । इत्यत्रेक्ष्वाकुवंशस्य, स्थापनां वासवो व्यधात् ॥ १३८ ॥ अथ देवाहृतोत्तरकुरुस्वर्द्रुफलैः प्रभुः । पुपोष वपुषा वृद्धिं, सार्द्धं पित्रोर्मनोरथैः ॥ १३९ ॥ दिवश्च्युतोऽद्भुतश्रीको, देव-देवीभिराश्रितः । श्वेतदन्तद्युतिः श्यामशिरोजः सुसरोजदृक् ॥ १४० ॥ बिम्बोष्ठोऽष्टोत्तरं चारुलक्षणानां सहस्रकम् । दधानो धनुषां पञ्चशतमुच्चतया तनौ ॥ १४१ ॥ वृषभाङ्को धनूराशिर्ध्मातरुक्मसमाङ्गरुक् । छत्राकारशिरा जानुलम्बबाहुर्महाशयः ॥ १४२ ॥ नीलोत्पलाभनिःश्वासो, जातजातिस्मृतिः प्रभुः । कान्तिभिर्बुद्धिभिस्तेषु मनुष्येष्वधिकोऽभवत् ॥ १४३ ॥ [चतुर्भिः सम्बन्धः] अकालमृत्युराघोऽभूद् बालस्तालफलाहतः । कन्या कुलकृता पत्नी, वृषभस्येति रक्षिता ॥ १४४ ॥ भोगयोग्यं विभुं ज्ञात्वा, हरिरेत्य वरक्रियाम् । देव्यो वधूक्रियां चक्रुः, सुमङ्गला-सुनन्दयोः ॥ १४५ ॥ प्रभोः षट्पूर्वलक्षेषु, युग्मयुग्मं गतेष्वभूत् । क्रमेण भरत-ब्राह्म्यौ, सौनन्देयश्च सुन्दरी ॥ १४६ ॥ पराण्येकोनपञ्चाशतमसूत सुमङ्गला । युग्मान्यतिक्रमे नीतेः, कथनं वृषभस्य च ॥ १४७ ॥ दण्डं करोति राजेति, शिष्टं ते प्रोचुरस्तु सः । मूर्ध्यं कुलकृतं सोऽयगस्तु वो वृषभः प्रभुः ॥१४८॥ समयज्ञः समेत्येन्द्रो, राज्यस्नात्रमसूत्रयत् । राजार्हमुकुटादींश्चालङ्कारान् न्यस्तवांस्तनौ ॥ १४९ ॥ राज्यस्नात्रकृते नीरमानीय नलिनीदलैः । युग्मिनोऽप्यागता नाथं, ददृशुर्भूषितं भृशम् ॥१५०॥ माऽऽपत् क्लेदमिदं यस्मादर्च्यंस्त्वान् प्रभुपादयोः । चक्रुः पत्राम्बुभिः पूजां, शिक्षयेत् कः सतां नयम् ? ॥१५१॥ विनीताः साध्वमी मर्त्या, इतीन्द्रोऽन्वर्थसूचकाम् । स्थापनां तु विनीतायाः, पुर्यास्तस्यां भुवि व्यधात् ॥ १५२ ॥ कुञ्जराश्व-गवादीनां, राज्यार्थं सङ्ग्रहोऽभवत् । तथोग्र-भोग-राजन्य-क्षत्रियाणां क्रमोऽपि च ॥ १५३ ॥ आरक्षकार्यमित्राणि, जज्ञिरे क्षत्रियाः परे । इत्यादिसङ्ग्रहं कृत्वा, साम्राज्यं

बुभुजे विभुः ॥ १५४ ॥ कन्द-मूल-दलाहारास्तथा पुष्प-फलाशिनः । बभूवुर्मनुजा नाभिसूनुः कुलकरो यदा ॥१५५॥ आसन्निक्षुभुजः पूर्वं,
मुख्येनेक्ष्वाकवो ह्यमी । शणसप्तदशं सस्यं, भुञ्जते चाममेव ते ॥ १५६ ॥ तस्मिन्नजीर्यमाणेऽन्ने, युग्मिनः प्रभुमैयरुः । प्रभुणाऽभाणि
मुञ्जीध्वं, घृष्ट्वा हस्तेन निस्तुषम् ॥ १५७॥ न जीर्यति तथाप्येतत् ततस्तेऽस्य प्रभूक्तितः । घर्षणं तीमनं हस्तदोर्मूले तापनं व्यधुः ॥१५८॥
कालस्य मध्यमत्वेनोत्पेदेऽग्निर्वृक्षघर्षतः । मुञ्जतां पक्वमन्नाद्यं, ज्ञानात् ज्ञात्वाऽऽह तान् प्रभुः ॥ १५९ ॥ प्रक्षिप्य दाहाचौषध्या गजारूढ-
प्रभोः पुरः । युग्मिनः प्राहुरस्मभ्यं, ददाति स न किञ्चन ॥ १६० ॥ विज्ञायावसरं स्वामी, तानाहाऽऽनीयतां हि मृत् । तदादौ वै
गजेन्द्रस्य, कुम्भं कुम्भस्थलेऽकरोत् ॥ १६१ ॥ कृत्वा प्रत्याह तानेष, स्थानान्येतादृशानि भोः! । निर्माय पक्वमन्नाद्यं, भुञ्जतां तनुपुष्टये
॥ १६२ ॥ एवं लोह-घट-क्षौर-चित्र-चीवरकारिणाम् । शिल्पान्येकस्य चैकस्य, विंशतिर्विंशतिर्भिदः ॥ १६३ ॥ कर्माणि कृषिवाणिज्यादीनि
लोकाय चादिशत् । कर्मानाचार्यकं शिल्पं, स्यादाचार्योपदेशजम् ॥ १६४ ॥ ब्राह्मया दक्षिणहस्तेनादिशिक्षयताक्षरावलीम् । सुन्दर्या
वामहस्तेन, गणिताङ्कांश्च नाभिभूः ॥ १६५ ॥ चतुःषष्टिर्गुणान् स्त्रीणां, रूपं कर्म तथार्षभेः । बाहुबलेर्लक्षणानि, नरादीनामदर्शयत्
॥ १६६ ॥ तांस्तत्रामालुगे देशे, पुत्रान् राज्ये न्यवीविशत् । सर्वलोकोपकाराय, यज्जन्माद्यार्हतां भवेत् ॥ १६७ ॥ त्रिषष्टिं पूर्वलक्षाणि,
राज्यं पालयतोऽत्यगुः । ईयुर्लोकान्तिका देवाः, कल्पतः कल्पतस्त्वथ ॥ १६८ ॥ जय त्वं नन्द भद्रं ते, क्षत्रियवृषभास्तु ते । धर्मेऽविघ्नं
धर्मतीर्थं, तीर्थनाथ! प्रवर्त्तय ॥ १६९ ॥ बोधयन्तीत्यादिवाग्भिः, स्वयम्बुद्धमपि प्रभुम् । वन्दिनः प्रातराशीर्भिर्जागरूकमिवाधिपम्
॥ १७० ॥ प्रारेभे वार्षिकं दातुं, धनदानीतशेवधेः । ईप्सितं दानमर्थिभ्यः, स्वयमावालभोजनम् ॥ १७१ ॥ त्रीणि कोटिशतान्यष्टाशीति-
कोटीः करार्पितम् । साशीतिलक्षका वर्षे, दानमेतज्जगद्गुरोः ॥ १७२ ॥ अथो चैत्रासिताष्टम्यां, पञ्चेनाऽह्नोऽन्तिमेंऽशके । शिबिकां

सुदर्शनाख्यां, त्यक्त्वा सिद्धार्थकानने ॥ १७३ ॥ चतुःसहस्रैर्भूपानां, सहाशोकतरोस्तले । देवदूष्यधरो धीरः, प्राव्राजीद् वृजिनोज्झितः ॥ १७४ ॥ [युग्मम्] चतुःसहस्राः कच्छाद्या, लोचं कृत्वा स्वयं नृपाः । करिष्यति यथा नाथः, करिष्यामो वयं तथा ॥ १७५॥ इति ध्यात्वाऽन्वगुर्नाथं, व्युत्सृष्ट-त्यक्तविग्रहः । पुरं ग्राममनुग्रामं विजहारेशिताऽपि हि ॥ १७६ ॥ न जानाति जनो भिक्षा, का ? के भिक्षाचरा ? इति । कच्छाद्या अलभमानास्तां, बभूवुस्तापसा वने ॥ १७७ ॥ नमिर्विनमिरागत्याऽऽहतुरत्रान्तरे प्रभो ! । चारित्रावसरे प्राप्तमावाभ्यां किञ्चिदेव न ॥ १७८ ॥ इदानीमपि तद् देहीत्युक्त्वा सेवां प्रचक्रतुः । कायोत्सर्गस्थभूशुद्धि-पयःसेकादिभिर्भृशम् ॥ १७९ ॥ धरणेन्द्रोऽन्यदाऽऽयातो, वन्दितुं तौ तथास्थितौ । वीक्ष्याह कथमर्हन्तं, सेवाथे ? स्वार्थमाहतुः ॥१८०॥ नीरागोऽयं महाभागो, निग्रहानुग्रहौ न च । कुरुते युवयोरेतद् राज्यं ददे मनोहरम् ॥ १८१ ॥ पुरान् पञ्चाशतं षष्टिं, वैताढ्ये दक्षिणोत्तरे । संस्थाप्य स्थापयतां श्रेणी, सुखेनेत्याह नागराट् ॥ १८२ ॥ अष्टाचत्वारिंशद् विद्यासहस्रान् स तयोर्ददौ । महतां पादसेवा हि, सता सर्वं फलेग्रहिः ॥ १८३ ॥ स्वामिभक्तिफलं स्वस्य, दर्शयन्तौ पितॄन् प्रति । तौ परिच्छदमादाय, सद्यो वैताढ्यमीयतुः ॥ १८४ ॥ वर्षं यावन्निराहारो, दैन्यहीनः प्रभुर्भ्रमन् । वस्त्राभरण-कन्याभिश्छत्राद्यैश्च निमन्त्र्यते ॥ १८५ ॥ क्रमाद् गजपुरं प्राप्तो, वर्षान्ते विहरन् प्रभुः । यत्र बाहुबलेः पौत्रः, सोमप्रभनृपाङ्गजः ॥ १८६ ॥ श्रीश्रेयांसकुमारः सोऽद्राक्षीत् स्वप्ने सुराचलम् । श्यामलं तं पुनर्दीप्तं, धौतं पीयूषपूर्णघटैः ॥ १८७ ॥ सुबुद्धिश्रेष्ठ्यप्यैक्षिष्ट, सूर्यं स्थानाच्युतं ततः । आरोपितं कुमारेण, सोमप्रभनृपोऽप्यमुम् ॥ १८८ ॥ पुमानेको महाकायः, परानीकपराजितः । कुमारकृतसाहाय्यः, स्वस्थोऽभूत् सुतरामसौ ॥ १८९ ॥ आस्थाने तेऽमिलन् सर्वे, शशंसुः स्वं समीक्षितम् । न जाने परमस्याद्य लाभो भावीति राड् जगौ ॥ १९० ॥ श्रुत्वेत्युत्थाय श्रेयांसः, स्वगवाक्षमशिश्रयत् । प्रभुं गोचरचर्यायां, भ्रमन्तं वीक्ष्य दध्यिवान्

॥ १९१ ॥ मूर्च्छितो लब्धचैतन्यो, जातिस्मृतिमवाप्तवान् । स्मृतदानविधिः पूर्वाभ्यासाद् गेहादवातरत् ॥ १९२ ॥ तावद् गेहाङ्गणं प्राप्तः, कल्पद्रुजङ्गमः प्रभुः । कुमारप्राग्भवाचीर्णपुण्यपुञ्जः प्रसन्नदृक् ॥ १९३ ॥ तदोपदागतेनेक्षुरसेन प्रत्यलाभयत् । भगवान् पाणिपात्रेण, निर्दोषं तमपारयत् ॥ १९४ ॥ [त्रिभिः सम्बन्धः] रत्नवृष्टिरहोदानोद्घोषो दुन्दुभिवादनम् । चेलोत्क्षेपैः सुरोपातः, पञ्च दिव्यानि जज्ञिरे ॥ १९५ ॥ प्रभुणाऽपारि यैः पादैस्तत्र पीठमचीकरत् । जनो मा क्रामति पदैरित्यवज्ञाऽऽस्पदच्छिदे ॥ १९६ ॥ अपूपुजत् स तच्छश्वदेवं प्रभुरपारयत् । यत्र तत्र जनः पीठं, चक्रे प्रावाहिको हि सः ॥ १९७ ॥ तदर्कमण्डलमिति, ख्यातं कालेऽर्चितं जनैः । प्रभुस्तक्षशिलापुर्यां, विहरन्नन्यदा ययौ ॥ १९८ ॥ निवेदनं बाहुबलेर्यास्यामीत्यतिविस्तरात् । विजहार प्रभुः प्रातस्तंनियतस्थितिरीदृशाम् ॥१९९॥ प्राप्तः प्रातः शुचा क्रान्तो, मा शोचीर्मय्यवक् प्रभो! । अर्च्यत्वात् पादयोस्तीर्थं, धर्मचक्रं कुरु त्विह ॥२००॥ बहली-सुवर्णभूम्यादिदेशेषु भ्रमताऽर्हता । प्रापुर्भद्रकतां केचित्, म्लेच्छा अप्यनुशिक्षिताः ॥ २०१ ॥ आद्यस्तीर्थकृतां वर्षसहस्रं मौनमुद्रया । विहृत्यानुपसर्गेण, पुरे पुरिमतालके ॥ २०२ ॥ शकटास्यवने कृष्णैकादश्यां फाल्गुनस्य च । पूर्वाह्ने वटवृक्षाधोऽष्टमेन प्राप केवलम् ॥ २०३ ॥ [युग्मम्] चक्रुश्चतुर्विधाश्चैत्य धर्मसद्म दिवौकसः । पुर्यन्तः शस्त्रशालायां, चक्रस्योत्पत्तिरप्यभूत् ॥ २०४ ॥ आर्यभेरागता वर्द्धापनिका युगपद् द्वयोः । प्राक् पूजयामि किं चक्रं ?, तातं वा ? इत्यचिन्तयत् ॥ २०५ ॥ धिग् धिग् मां कदभिप्रायं, यच्चक्रमिहलौकिकम् । ताते हि पूजिते चक्रं, स्वयमेवार्चितं भवेत् ॥ २०६ ॥ इतश्च प्राग् विभोर्दीक्षादानदूनमना मनाक् । त्वमूर्जस्वलसाम्राज्यश्रियं श्रयसि मत्सुतः ॥ २०७ ॥ वने वनेचर इवैकाकी भ्रमति नित्यशः । मरुदेवाऽङ्गजस्नेहाद्, भरतस्योक्तवत्यभूत् ॥ २०८ ॥ [युग्मम्] निजाङ्गजन्म जननि ! श्रियं पश्यैत्य साम्प्रतम् । इत्युक्त्वा सिन्धुरस्कन्धे, तामारोप्यामतोऽचलत् ॥ २०९ ॥ शोकध्यामलनेत्राया, दृष्टिरुद्-

घटिता द्विधा । छत्रातिछत्रं पश्यन्त्या मरुदेव्या विमोस्तदा ॥ २१० ॥ उत्पन्नकेवला पूर्णायुष्का मोक्षमगाच्च सा । सिद्धः प्रथम इत्यस्याश्चक्रेऽर्चा निर्जरैस्ततोः ॥ २११ ॥ जगाम भरतो धर्मसद्माऽर्हद्धर्मदेशनाम् । निशम्य सम्यगादत्त, श्रावकद्वादशव्रतीम् ॥ २१२ ॥ ऋषभसेन-मरीचिमुख्याः पञ्चशती सुताः । सप्तांऽऽर्पमेः पौत्रशती जगृहुर्ब्राह्म्यपि व्रतम् ॥ २१३ ॥ सुन्दर्या वारणं चक्रे, चक्री स्त्रीरत्नमित्यतः । पूर्वाङ्गगणभृद्दोऽस्रो, गणभृद्वृषभोऽभवत् ॥ २१४ ॥ पुण्डरीकाख्यया ख्यातस्तथाऽन्ये गणधारिणः । स्थापिताश्चतुरशीतिः, स्वहस्तेनाऽऽदिमाऽर्हता ॥ २१५ ॥ सहस्राश्चतुरशीतिः, साधूनां सर्वसंख्यया । लक्षत्रयं तु साध्वीनामजिह्मब्रह्मवर्चसाम् ॥ २१६ ॥ श्रावकाणां तिस्रो लक्षाः, सहस्राः पञ्च चाभवन् । श्राद्धीनां चतुःपञ्चाशत्सहस्रा लक्षपञ्चकम् ॥२१७॥ सहस्राः पञ्च पादोनाः, स्युश्चतुर्दशपूर्विणाम् । ते विंशतिः केवलिनामवधिज्ञानिनां नव ॥ २१८॥ षट्शती वैक्रियवतां, विस्तीर्णमति वादिनाम् । सार्द्धानि षट् शतानि स्युः, सहस्रा द्वादश क्रमात् ॥ २१९ ॥ द्वाविंशतिसहस्राः स्युरनुत्तरोपपातिनाम् । शतानि नव चेत्येष, विशेषोऽर्हत्परिग्रहे ॥ २२० ॥ आर्षभिर्भरतक्षेत्रं, साधयित्वाऽखिलं बलात् । षष्टिवर्षसहस्रेण, निजं पत्तनमीयिवान् ॥ २२१ ॥ चक्रे चक्रित्वाभिषेकोऽस्य भूपैर्द्वादशाब्दिकः । यन्धून् सर्वांश्च सस्मार, भ्रातृंस्तत्राप्यनागतान् ॥ २२२ ॥ ततो दूतमुखेनाऽऽह्वाप्यानयत्यनुजन्मनः । समेत्य भ्रातरः सेवां कुर्वन्तु मम साम्प्रतम् ॥ २२३ ॥ तेऽपि तद्वचसा क्रुद्धा, दण्डस्पृष्टा इवोरगाः । दध्युः कथमनात्मज्ञः, सोऽस्मान् हा ! सेवकीयति ? ॥ २२४ ॥ पितरं राज्यदातारं, पृच्छामस्तदुपास्तये । ध्यात्वेति सर्वे सम्भूय, सम्प्रापुः ,पितुरन्तिकम् ॥ २२५ ॥ प्रभुणाऽभाणि भो भद्राः !, अनुत्तरसुरेष्वलम् । पूर्वं स्मरत यद् भुक्तं, सुखं विषयनिस्तुषम् ॥ २२६ ॥ तुच्छासारैः सुखैरेभिः, कियतीं तृप्तिमाप्स्यथ । अङ्गारकारकस्येव ?, कोऽसावीदृति कथ्यताम् ॥ २२७ ॥ प्रभुराह पुरा कश्चिद् दृतिमात्रपयाः पुमान् । जगामाङ्गारकान् कर्तुं, दृष्टकाष्ठा-

शलाकापुरुषाधिकारे श्रीऋषभचरित्रम् ।

कुले वने ॥ २२८ ॥ ग्रीष्मातिरेकतः सूर्य-वह्नितापात् तृषार्दितः । पीत्वा पयोऽखिलं सोऽगाद् वेगाद् गेहं मुमूर्च्छ च ॥ २२९ ॥ स्वप्ने पयः पयोराशि-नदी-कूप-नदोद्भवम् । पीत्वाऽप्यतृप्तो जीर्णैकमनूपं कूपमैक्षत ॥ २३० ॥ तृणपूलकलग्नाम्बुबिन्दून् लिहन् स जिह्वया । कथं तृप्यति भो भद्राः !?, भवन्तोऽप्येवमेव हि ॥ २३१ ॥ तथा सूत्रकृतो वैतालिकाध्ययनदेशनात् । प्रबुद्धा जगृहुर्दीक्षां, सन्तो हि सफलोद्यमाः ॥ २३२ ॥ चक्री चक्रमथादाय, विनीतायामुपागतः । चक्राप्रविशने हेतुं, पुनः पप्रच्छ मन्त्रिणः ॥ २३३ ॥ तेऽप्याहुरजिते शस्त्रावेकस्मिन् प्रविशेन्न तत् । कथमस्त्यजितः कोऽप्याप्याहुर्बाहुबलीति ते ॥ २३४ ॥ ततो दूतं सुवेगाख्यं, प्राहिणोदनुजन्मने । सोऽपि गत्वा जगादैवं, त्वामाह्वयति चक्रभृत् ॥ २३५ ॥ किमर्थमात्मसेवार्थं, बली बाहुबली जगौ । आः पापं ! स च पापीयानियतापि न तृप्यति ॥ २३६ ॥ मत्तो मत्तोऽपि शुश्रूषां, सिंहान्मृग इवेहते । जानाति स यथा पूर्वं, माहिता भ्रातरो व्रतम् ॥ २३७ ॥ तथैनं ग्राहयिष्यामि तया मीपिकयेति तत् । ते कपित्था न चाल्यन्ते, भवता ये परे वयम् ॥ २३८ ॥ सावष्टम्भमभाषिष्टेत्येवं दूतपुरो वचः । उपेक्षितोऽसि दूतत्वाद्, याहि याहि म्रियस्व मा ॥ २३९ ॥ वक्तव्यं स्वप्रभोरग्रे, मा कार्षीर्बहलीपतेः । आशां स्वप्नेऽपि सेवाया, युद्धश्रद्धा यदेहि तत् ॥ २४० ॥ सर्वं तदुक्तमेलाख्यद् दूतश्चक्रिण आगतः । सोऽपि कोपप्रकोपेण, यात्राभम्भामवादयत् ॥२४१॥ चतुरङ्गचमूचक्राक्रान्तभूर्भरतेश्वरः । बहल्या एत्य सीमानं, तस्थौ स्वस्थमना मनाक् ॥ २४२ ॥ तमागतं निशम्याशु, बलिष्ठो बहलीपतिः । स्वपुर्या निर्ययौ वर्यतूर्यसूचितदोर्जयः ॥ २४३ ॥ रणकण्डूलदोर्दण्डा, अवतेरू रणाङ्गणे । स्वस्वेशवर्द्धि(र्द्धि)तोत्साहा, योद्धारः सैन्ययोर्द्वयोः ॥ २४४ ॥ आर्यभिर्जनसंहारे, वीक्ष्योचे चक्रवर्तिनम् । कथं निरपराधानां वधो बन्धो ! विधीयते ? ॥२४५॥ मिथोऽस्ति ह्यावयोर्वैरं, तेनान्योन्यं रणोऽस्तु नौ । चक्रिणाऽप्यनुमेने तदेकैव सुधियां हि धीः ॥२४६॥ ततो योद्धुं प्रवृत्तौ तौ, गजाविव मदोत्कटौ । जितः सर्वत्र तेनासौ, दृग्-वाग्-दोर्दण्ड-मुष्टिषु

॥२४७॥ अपयाऽधोमुखश्चक्री, सौनन्देयेन जल्पितम्। किञ्चिद् विनष्टं नाद्यापि, याहि भुङ्क्ष्व निजां श्रियम् ॥२४८॥ ज्वलंस्तयाऽधिकं वाचा,
घृतसिक्त इवानलः। चक्री योद्धुमढौकिष्ट, धिगन्धकरणं क्रुधम् ॥ २४९ ॥ तस्यामुक्तानि शस्त्राणि, बहलीशे वृथाऽभवन्। वज्रसारगिरौ
दन्तप्रहारा इव दन्तिनः ॥२५०॥ कथं चक्रीत्यसौ चित्ते, सन्दिहानस्य चक्रिणः। विद्युदुद्योतवद् दीप्रं, चक्रं करमशिश्रयत् ॥ २५१ ॥
तदाप्य हृष्टतुष्टात्मा निधानमिव निर्धनः। प्राह बाहुबलिन्! याहि, आत्मघातकपातकम् ॥ २५२ ॥ मा देहि भुङ्क्ष्व साम्राज्यं, स्वीकृत्याज्ञां
परं मम। पश्चात् पश्चात्तापमाप्स्यसीति चेतसि चिन्तय ॥ २५३ ॥ [युग्मम्] स्मित्वेषदार्षभिः प्रोचे, क्रोधान्धो धरणीधवम्। मुग्ध!
दुग्धमुखाभाकं, मा दर्शय बिभीषिकाम् ॥ २५४ ॥ मुञ्चामुं लोहखण्डं त्वं, खण्डीकुर्वे स्वमुष्टिना। सोऽमुचच्चक्रमित्युक्ते, हाहारवपरे जने
॥ २५५ ॥ गोत्रे प्रभवतीदं नो, स्पृष्टोरःस्थलमार्षभेः। पश्चादागत्य हस्तस्थं तद्भूचक्रवर्त्तिनः ॥२५६॥ सचक्रं चूर्णयाम्येनं, मुष्टिमुत्पाट्य
धावितः। अत्रान्तरेऽन्तरायाय, बभूव भवितव्यता ॥२५७॥ आः! पापारम्भसंरम्भः, कोऽयं मे साधुगर्हितः?। स्मृत्वेति सद्भिरारब्धं,
नान्यथेति स्वमुष्टिना ॥२५८॥ उत्पाट्य स्वशिरःकेशान्, क्लेशानिव महाव्रती। व्रतमादाय तत्रास्थान्मानी प्रतिमयाऽऽर्षभिः ॥ २५९ ॥
[त्रिभिः सम्बन्धः] मुक्त्वा मानं नतश्चक्री, मा मुञ्चैकाकिनं च माम्। इत्युक्तोऽप्यब्रवीन्नासौ, मेरुवद् ध्याननिश्चलः ॥ २६० ॥ ततस्तदङ्ग-
जन्यस्तराज्यश्चक्री गृहं गतः। बुभुजे चक्रिणो भोगानेकच्छत्रां विधाय गाम् ॥ २६१ ॥ वर्षान्ते भाषिते ब्राह्मी-सुन्दर्यौ नाभिजन्मना
भगवतीभ्यां वचो वाच्यं, गत्वाऽदो बहलीपतेः ॥ २६२ ॥ गजादवतरेतीशादेशमासाद्य ते गते। व्याप्तं वल्लीवितानेन, पश्यतः स न तं
वने ॥ २६३ ॥ पश्चादेत्य प्रभोरमेऽप्याहतुस्तत्र नो मुनिः। आस्ते तत्रैव सेत्युक्ते, ते गत्वोचतुरुच्चकैः ॥ २६४ ॥ गजादवतर भ्रातः!,
तत्रस्थस्य न केवलम्। दध्यौ बाहुबली साध्व्यौ, कथं कथयतो मृषा? ॥ २६५ ॥ सर्वसङ्गपरित्यागवतो मे क्वास्ति कुञ्जरः?। कुञ्जरस्तु

तदारोहः ?, सीमा ग्रामं विना कुतः ? ॥२६६॥ ज्ञातं मानगजारूढं धिग् मां दुश्चिन्तिताग्रिमम्। वन्देऽथापि लघून् भ्रातॄनित्युक्त्वोत्पाटितः क्रमः ॥ २६७ ॥ तदा केवलमुत्पेदे, गत्वाऽर्हद्धर्मसद्मनि । स नमस्तीर्थायेत्युक्त्वाऽऽसीनः केवलिपर्षदि ॥ २६८ ॥ अथान्यदाऽऽर्षभिर्भृत्वाऽनांसि भूयांसि संस्कृतैः । भोज्यैर्न्यमन्त्रयद् भ्रातॄन्, क्षमाश्रमणपूर्वकम् ॥ २६९ ॥ प्रभुरप्यभ्यधादभ्याहृताधाकर्मदूषितः । राजराज ! राजपिण्डोऽप्यकल्प्योऽयं महात्मनाम् ॥ २७० ॥ तातेन सर्वथा त्यक्त इति दुःखार्त्त आर्षभौ । अत्रान्तरेऽवग्रहाणां, स्वरूपं पृष्टवान् हरिः ॥ २७१ ॥ कियन्तोऽवग्रहाः स्वामिंस्ते च पञ्चेत्यवक् प्रभुः । इन्द्र-राड्-गृहपत्याद्या, वक्त्याह सोऽर्पितो मया ॥ २७२ ॥ विश्राणितो मयाऽप्येष इत्याख्यद् भरतप्रभुः । स्वेच्छया साधवः सर्वे, मद्भूमौ विहरन्त्वथ ॥ २७३ ॥ दर्शिता मौलरूपस्य, शक्रेण चक्रिणोऽङ्गुली । अष्टाह्निकामहस्तेने, तेन सेन्द्रोत्सवोऽभवत् ॥ २७४ ॥ अनादानेन चान्नस्य, खिद्यमानं नरेश्वरम् । वीक्ष्योचे वासवश्चक्रिन् !, पूजयस्व गुणाधिकान् ॥ २७५ ॥ स दध्यौ ते तु मुनयः, आ ! ज्ञातं श्रावका अपि । वसनैरशनैश्चापि, तेनैतानर्चयाम्यहम् ॥ २७६ ॥ ततो भोजयितुं लग्नश्चतुर्वेदार्थवेदिनः । अतिभूयस्त्वतः सूदाः, सादादूचुरथैत्य तम् ॥ २७७ ॥ निर्वहत्यधिकारोऽयमस्माभिर्नेश ! साम्प्रतम् । तन्निशम्य तदाकार्य, चक्री पप्रच्छ तानिति ॥ २७८ ॥ को देवः ? को गुरुर्धर्मः, ?, को वस्तद्वेदिनां पुनः(रः) । रत्नत्रयाङ्कं काकिन्या, चक्री रेखात्रयं व्यधात् ॥ २७९ ॥ षष्ठे षष्ठे पुनर्मासे तत्त्रिकप्रश्नपूर्वकम् । स्थाप्यन्ते तेऽपि तत्पङ्क्तौ, न दम्भो महतां हृदि ॥ २८० ॥ जितो भवान् वर्द्धते भीस्तस्मान्मा हन मा हन । प्रमत्तं नृपमित्युक्त्वा, वोधयन्तीति तत्स्थितिः ॥ २८१ ॥ एवं तदन्वये भूपैः, पाश्चात्यैः पूजिताश्च ते । अभिज्ञानाय रुक्मादियज्ञोपवीतदायिभिः ॥ २८२ ॥ कालान्तरे बभूवुस्ते, सद्गुरूणामभावतः । विपर्यस्तधियो विप्राः, स्युः कियन्त्यो गुरून् विना ? ॥ २८३ ॥ भगवानादिदेवोऽथ, विहृत्य चिरमुर्वराम् । भरतान्यतरैकोनशतपुत्रैस्तथाऽष्टभिः ॥ २८४ ॥

पौत्रैश्च सममेकेन, समयेनाऽऽयुषः क्षयात् । सिद्धिसौधामसध्यास्त, प्रसिद्धाष्टापदाचले ॥ २८५ ॥ [युग्मम्] तत्र वर्धकिरत्नेन, चक्री चैत्यमचीकरत् । मानायुपेताः प्रतिमाश्चतुर्विंशतिरर्हताम् ॥ २८६ ॥ साधर्मिकाणां वात्सल्यं, कुर्वतोऽर्चयतोऽस्य ताः । व्यतीयुरेकसम्राजः, पूर्वाणीत्थं कियन्त्यपि ॥ २८७ ॥ अन्यदाऽऽदर्शगेहान्तः, स्वं रूपमवलोकयन् । आससादाविपादेन, परमानन्दसम्पदम् ॥२८८॥ पपाताथ ठ(ट)णत्कारादङ्गुलीतोऽङ्गुलीयकम् । तां विलोक्य गतश्रीकां, लूनपुष्पां लतामिव (इव स्रजम्) ॥ २८९ ॥ क्रमान्मुमोच सर्वस्मादङ्गादाभरणान्यसौ । काष्ठशेषं वृक्षमिवात्मानं वीक्ष्य व्यचिन्तयत् ॥ २९० ॥ अहो! आगन्तुकैरेभिर्भूषणैर्भूष्यतेऽङ्गकम् । नामुष्य मुख्यवृत्त्याऽस्ति, किञ्चित् प्रेमानुबन्धनम् ॥ २९१ ॥ इत्युग्रभावनायोगाद् भगवान् भरतेश्वरः । आरुह्य क्षपकश्रेणीमाप निष्पापकेवलम् ॥ २९२ ॥ विधिनाऽवधिना ज्ञात्वा, हरिरेत्य तमब्रवीत् । गृहाण यतिनो लिङ्गं, कुर्मस्ते केवलोत्सवम् ॥ २९३ ॥ आत्तलिङ्गश्चिरं पृथ्वीं, विहृत्याऽऽर्षभिकेवली । आससाद महानन्दपदमष्टापदाचले ॥२९४॥ इति चरितमुदारं श्रीयुगादीश्वरस्य, निजहृदि परिभाव्य प्रीतिभाजो भवेयुः । जगति मदनजेतुर्धर्मकर्मैकहेतु, प्रकटितजननीतेस्त्यक्तसंसारभीतेः ॥ २९५ ॥ इति श्रीखरतरगच्छभृङ्गारहारश्रीगुणरत्नाचार्यशिष्यलेशवाचनाचार्यपद्ममन्दिरगणिविरचितायां कथार्णवाङ्कायां श्रीऋषिमण्डलप्रकरणवृत्तौ श्रीआदिनाथचरित्रं परिपूर्णम् ॥

अथ आदिशब्दात् तमपि वर्तमानतीर्थाधिपत्वेन आसन्नोपकारित्वात् श्रीवीरनमस्कारमाहुः पूज्यश्रीधर्मघोषसूरयः—

**निज्जियपरीसहचमुं, संभग्गुवसग्गवग्गरिउपसरं । संपत्तकेवलसिरिं, सिरिवीरजिणेसरं वंदे ॥ २ ॥**

व्याख्या—'श्रीवीरजिनेश्वरं' श्रीवर्द्धमानतीर्थङ्करं 'वन्दे' स्तौमि अभिवादयामीति यावदिति क्रियायोगः । किंविशिष्टं? निर्जिता—निःशेषात् पराभूता परीषहाणां—क्षुत्-पिपासाऽऽदीनां चमूः—सेना येन तम् । पुनः किंविशिष्टं? "संभग्ग" त्ति उपसर्गाणां—कालचक्रमोचन-

शलाकापुरुषाधिकारे श्रीऋषभचरित्रसमाप्तिः श्रीवीरवर्णनं च ।

चरणान्तरपयःपाकादीनां वर्गः—समूहास्त एव रिपवः—आन्तरशत्रवस्तेषां प्रसरः—अतिव्याप्तिः सं—सामस्त्येन भग्नः—खण्डीकृत उपसर्गवर्गरिपुप्रसरो येन स तम् । पुनः किंविशिष्टं ? सम्प्राप्ता—भोग्यत्वेनोपग(न)ता केवलश्रीर्येन असौ तम् । एवंविधं वीरं वन्दे इति गाथाक्षरार्थः ॥ २ ॥ भावार्थस्तु किञ्चिदुच्यते—

तथाहि जम्बूद्वीपस्य, प्रत्यग्विदेहभूषणे । वप्राख्यविजये पुर्यां, जयन्त्यां रिपुमर्दनः ॥१॥ नृपोऽभूत् तन्निदेशेपी क्षितिप्रतिष्ठिते पुरे । नयसाराभिधो ग्राममुख्यः सर्वत्र कर्मणि ॥ २ ॥ [ युग्मम् ] सोऽन्यदाऽऽदेशतो भर्तुश्चारुदारुकृते गतः । सपाथेयः सहादायाटव्यां शकटपेटकम् ॥ ३ ॥ मध्याह्नेऽपश्यदायातान्, सार्थभ्रष्टांस्तपोधनान् । वपुष्मत इव श्रेयः क्षुत्-तृषाध्यामलेक्षणान् ॥ ४ ॥ तादृक्षान् वीक्ष्य तानेप, प्रफुल्ला भद्रकाशयः । धन्यंमन्यो जहर्षोच्चैर्निधिलाभादिवाधनः ॥ ५ ॥ अनुगृह्णीत मां पूज्याः!, भक्ताद्यादानकर्मणा । इत्युक्ते तेन ते मुदं, भक्तं भक्त्याऽर्पितं ललुः ॥ ६ ॥ कृताहाराश्च ते तेन, सन्मार्गमवतारिताः । कृपया गुरुभिः प्रोक्तो, बोधिबीजमवाप सः ॥ ७ ॥ त्रिधा सद्दर्शनो मृत्वा, सौधर्मे त्रिदशोऽभवत् । पल्यायुश्च ततश्च्युत्वा, यत्राभूत् तन्निशम्यताम् ॥ ८ ॥

अत्रैव भरतक्षेत्रे, आद्योऽर्हन् वृषभोऽभवत् । तत्पुत्रो भरतश्चक्री, षट्खण्डभरताधिपः ॥ ९ ॥ तत्पुत्रत्वेन चोत्पन्नः, स जन्मलक्षणे क्षणे । मरीचिनामतः ख्यातो, मरीचीन् मुक्तवानिति ॥१०॥ स च प्राप्तवया दीक्षां, पितामहकरेऽग्रहीत् । बहुभिर्भ्रातृभिः सार्द्धं, भ्रातृपुत्रैस्तथाऽपरैः ॥ ११ ॥ सामायिकादिमामेकादशाङ्गीं गुरुसन्निधौ । सोऽधीतवान् सतां पादसेवा हि स्यात् फलेग्रहिः ॥ १२ ॥ अथान्यदा निदाघर्चौ, मलाविलकलेवरः । यूकाकुलजरद्वस्त्रः, प्रक्षरत्स्वेदबिन्दुभृत् ॥ १३ ॥ खरातपातप्तटह्निवालुकाज्वलितक्रमः । भग्नव्रतपरीणामो, मनस्येवं व्यचिन्तयत् ॥ १४ ॥ [ युग्मम् ] महाव्रतभरो मेरूपमः क्लीवस्त्वहं पुनः । वोढुं शक्यः कथङ्कारं, वत्सेनेवानसो

भरः ॥ १५ ॥ एवं चिन्तयतस्तस्य, समुत्पन्ना मतिः स्वतः । मया लब्ध उपायोऽयं, जाता मे शाश्वती मतिः ॥१६॥ सुखेनाऽऽजीविका यत्र, व्रतमप्यक्षतं भवेत् । आम्राः सिक्तास्तथा तृप्ताः, पितरश्चैवमस्त्विति ॥ १७ ॥ त्रिदण्डविरताश्चैते, भगवन्तो जितेन्द्रियाः । अजितेन्द्रियदण्डस्य, त्रिदण्डं चिह्नमस्तु मे ॥ १८ ॥ लोचमुण्डाः साधवोऽमी, सशिखः क्षौरकर्मवान् । सर्वहिंसानिवृत्तास्ते, स्थूलाया मेऽस्तु वर्जनम् ॥ १९ ॥ निष्किञ्चना अमी मेऽस्तु, तन्मुद्राऽऽदिपरिग्रहः । एते सुगन्धाः शीलेन, चन्दनैर्मे सुगन्धता ॥ २० ॥ गतमोहा अमी मोहच्छन्नस्य छत्रिकाऽस्तु मे । मुनयो ह्यनुपानत्का, अस्तु मे पादुका पुनः(ऽऽदरः) ॥ २१ ॥ स्युर्मुनीनां सिचः श्वेताः, कषायकलुषत्वतः । कषायिताऽस्तु मे याहग्, देवः पाऽप्यपि तादृशी ॥ २२ ॥ अवद्यभीरवो वर्जयन्ति जीवाकुलं जलम् । मितेन तेन मे पानं, स्नानं च भवतादिति ॥ २३ ॥ एवं मनःकल्पनयाऽनयाऽसौ, मुनिः परिव्राजकचिह्नमेतत् । प्रवर्त्तयामास जनस्य यस्मात्, सुखक्रियायां प्रकृतिप्रवृत्तिः ॥ २४ ॥ अथ प्रकटलिङ्गं तं, जनो वीक्ष्य स पृच्छति । धर्मं सोऽप्याह साधूनां, न साधुरनृतं वदेत् ॥ २५ ॥ भवान् करोति किं नैनमशक्तोऽसीति भाषते । किं करिणो हि पर्याणं, वोढुं शक्नोति रासभः ? ॥ २६ ॥ प्रबुद्धान् धर्मकथया, चारित्राभिमुखान् नरान् । ददातीशाय शिष्यत्वे, लाभोऽनायासतः सतः ॥ २७ ॥ एवं विहरतः सार्द्धं, प्रभुणाऽस्यान्यदाऽभवत् । रोगेण वपुराक्रान्तं, राहुणेवेन्दुमण्डलम् ॥२८॥ द्विधा पार्श्वस्थमप्येनं, दृष्ट्वा दृष्टाऽपि नर्षयः । सम्भावयन्ति नीरागा(रागाङ्गं), नार्य(वरा)ङ्गमिव योगिनः ॥२९॥ मरीच्यूपिस्ततो दध्यौ, साधवो बन्धवोऽप्यमी । रोगार्त्तमपि मां नोपचरन्ति ही ! कठोरता ॥ ३० ॥ हहा ! दुश्चिन्तितं ह्येतत्, निष्कलङ्कव्रतास्त्वमी । सातशीलस्य संसर्गं, कर्त्तुमर्हन्ति नैव मे ॥ ३१ ॥ दुःस्थावस्थोचितं कञ्चित्, कुर्वेऽहं परिचारकम् । तेन येन ममात्माऽसौ, नार्त्तौ पतति कर्हिचित् ॥ ३२ ॥ इति ध्यातवतोऽस्यान्तेऽन्यदाऽऽगात् कपिलाह्वयः । पुरुषः क्षत्रजातीयः, कश्चिद् गुरुभवस्थितिः ॥ ३३ ॥

स युक्त्या बोधितो धर्मं, धर्मदेशनयर्पिणा । नाथाय प्रेषितः प्राह, किं धर्मो नास्ति तेऽन्तिके ? ॥ ३४ ॥ मत्समो गुरुकर्माऽसौ, सत्रस्यति यदुत्तमात् । स्थाने यच्चन्दनं हित्वा, मेध्यमायाति मक्षिका ॥ ३५ ॥ इति ध्यात्वा मुनिः प्राह, धर्मोऽत्राप्यस्ति तत्र च । भवोऽनन्तोऽनया वाचोपार्जितो ही ! धिगज्ञताम् ॥ ३६ ॥ अथापृच्छत् प्रभुं चक्री, त्रिपक्षुत्तमभूस्पृशाम् । नाम-मान-प्रमाणादि तत् सर्वं प्रभुरप्यवक् ॥ ३७ ॥ पुनश्चत्याह कोऽप्यस्तीतीयस्यां नाथ ! पर्षदि । यो भावी भरतक्षेत्रे, धर्मचक्री जगद्गुरुः ? ॥ ३८ ॥ भगवानाह ते पुत्रो, मरीचिश्चरमो जिनः । भावी वीर इति ख्यातो, विदेहे चक्रवर्त्यपि ॥ ३९ ॥ तथाऽऽद्यो वासुदेवोऽत्र, त्रिपृष्ठ इति भाव्यसौ । श्रुत्वेति भरतस्तत्र, समेत्य मुनिमानमत् ॥ ४० ॥ नत्वाऽऽख्यच्च न ते पारिव्राज्यं वन्दे न पुत्रताम् । किन्त्वर्हतोदिवार्हत्तावस्थां तामभिनौम्यहम् ॥ ४१ ॥ हर्षोद्धुषितरोमाञ्चः, श्रुत्वेति भरताङ्गभूः । त्रिकृत्वस्त्रिपदीं तत्राऽऽस्फोट्यावोचदिदं वचः ॥ ४२ ॥ आद्योऽस्मि वासुदेवानां, पिता मे चक्रवर्त्तिनाम् । पितामहस्तीर्थकृतामहो ! मे कुलमुत्तमम् ॥ ४३ ॥ पुनः पुनर्भुवश्चैवमुल्ललन्नुच्चकैरसौ । बद्धवान् नीचकर्मापि, तिर्यगादिभवानुगम् ॥ ४४ ॥ एवं समर्जितक्रूरकर्माऽऽयुः प्रतिपाल्य सः । चतुर्भिरधिकाशीतिं पूर्वलक्षस्य संख्यया ॥ ४५ ॥ मृत्वा तथाऽप्रतिक्रम्य, ब्रह्मलोके सुरोऽभवत् । कोल्लाकसन्निवेशेऽतश्च्युत्वाऽभूत् कौशिको द्विजः ॥४६॥ अशीतिपूर्वलक्षायुर्भवं भ्रान्त्वा कुयोनिषु । द्वासप्ततिपूर्वलक्षायुः स्थूणायां पुष्पमित्रकः ॥ ४७ ॥ आद्ये कल्पे सुरोऽथैतः, सोऽग्न्युद्योतो द्विजोऽभवत् । चैत्यग्रामे चतुःषष्टिपूर्वलक्षायुरेष तु ॥४८॥ मृत्वेशाने सुरो जज्ञेऽग्निभूतिर्मन्दिरे पुरे । षट्पञ्चाशत्पूर्वलक्षायुस्तृतीयेऽगमद् ग(दि)वि ॥ ४९ ॥ भारद्वाजद्विजः श्वेतम्ब्यां पुर्यामायुरस्य तु । चतुश्चत्वारिंशत्पूर्वलक्षास्तुर्ये ययौ गवि ॥ ५० ॥ तिर्यगादिभवं भ्रान्त्वा, स्थावरो राजमन्दिरे । चतुस्त्रिंशत्पूर्वलक्षायुः कल्पे पञ्चमेऽगमत् ॥ ५१ ॥ एवं भवेषु षट्स्वेषु, स्वकल्पितमते व्रतम् । उपादाय सुरीभूय, कियतो-

ऽप्यभ्रमद् भवान् ॥ ५२ ॥ अथ राजगृहे राजा, विश्वनन्दीति विश्रुतः । विशाखभूतिस्तद्भ्राता, युवराड् धारिणीधवः ॥ ५३ ॥ पुत्रो विशाखनन्दीति, विश्वभूतिश्च भ्रातृजः । अभूद् भगवतो जीवश्च्युत्वा पञ्चमकल्पतः ॥ ५४ ॥ आस्ते क्रमागतं तत्रोद्यानं पुष्पकरण्डकम् । धारकेण कुमारेन्द्रास्तत्र क्रीडन्त्यहर्निशम् ॥ ५५ ॥ स्वप्रियाभिः समं विश्वभूतिं क्रीडन्तमन्यदा । प्रियङ्गुदास्यो वीक्ष्यात्र, गत्वैवं स्वामिनीं जगुः ॥५६॥ किमस्ति स्वामिन्यस्माकं ?, राज्ये यद् युवराट्सुतः । एवं क्रीडाभिरात्रीडे, क्रीडतीन्द्रकुमारवत् ॥ ५७ ॥ महिषी वचसा तेन, कोपमाप परं हृदि । स्वभावचपला बालाः, किं पुनः प्रेरिताः परैः ? ॥ ५८ ॥ तत् ज्ञात्वा भूपतिः स्नेहात्, समागत्य तदास्पदम् । उच्चावचान्युवाचोच्चैर्वचांसि तत्प्रसत्तये ॥ ५९ ॥ तस्यां कोपविषावेगममुञ्चन्त्यां तथापि हि । ज्ञात्वा मन्त्र्याह भूप ! स्त्री, न बलात्कारमर्हति ॥ ६० ॥ परं विधीयतां देवोपायोऽस्याशु प्रशान्त(सत्त)ये । मा स्वापमानिता वृथादात्मघातकपातकम् ॥ ६१ ॥ इति मन्त्रिवचोजातबुद्धिर्भूपश्छलाद् वनात् । निष्कासनाय तस्यासौ, यात्राभम्भामवीवदत् ॥ ६२ ॥ विज्ञाय विश्वभूतिस्तत्, सहसा साहसादथ । एत्यावग् देवपादानां, कोऽयमारम्भसम्भ्रमः ? ॥ ६३ ॥ नृपोऽप्याहाङ्गजाऽऽसन्नो, राजाऽऽज्ञालोपकृन्मम । तमाज्ञावर्त्तिनं कर्तुं, यास्यामः सपरिच्छदाः ॥ ६४ ॥ निशम्याह कुमारः किं, कटकं कीट(टि)कोपरि ? । पदातिमात्रसाध्येऽस्मिन्, कः प्रभूणामुपक्रमः ? ॥ ६५ ॥ अतोऽहमेव तं जेतुं, यास्यामि भवदाज्ञया । समर्थे हि सुते तातोद्यमो लज्जावहो जने ॥ ६६ ॥ द्विधाऽपि सबलोऽचालीदित्युक्त्वा युवराट्सुतः । सोऽपि सम्मुखमस्यागान्निशम्य विनयान्वयी ॥ ६७ ॥ सोपद्रो ववले पश्चात्, क्रमाद् वनमुपागतः । पुरा प्रविष्टभूपालसूनुद्वास्थैर्निवारितः ॥ ६८ ॥ आहत्य मुष्टिनैकेन, कपित्थस्य फलावलीः । पातयित्वाऽवदत् क्रोधाद्, रे रे शृणुत पामराः ! ॥ ६९ ॥ एवं वः स्वामिनश्चापि, शिरसां पातनेऽस्म्यलम् । परं वृद्धपितुर्लज्जां, कुर्वे भोगैरतः सृतम् ॥ ७० ॥ इति वैराग्यतो दीक्षामादाय गुरु-

शलाकापुरुषाधिकारे श्रीवीरवर्णनम् ।

सन्निधौ । पालयामास मासक्षपणैस्तपोभिरुत्कटैः ॥ ७१ ॥ अन्यदा मथुरापुर्यां, मासक्षपणपारणे । भ्रमन् गोचरचर्यायां, मध्याह्ने राजवर्त्मनि ॥ ७२ ॥ अस्थि-चर्मावशेषाङ्ग, उग्रेण तपसा मुनिः । नवप्रसूतया धेन्वा, स्पृष्टो भूमौ पपात सः ॥ ७३ ॥ [ युग्मम् ] विवाहसनन्दयायातस्तदा तदधिपात्मजाम् । उद्वोढुं राजमार्गान्तर्लब्धावासोपरि स्थितः ॥ ७४ ॥ वीक्ष्योपलक्ष्य तं भृत्याः, प्रोचुः स्वामिन्! विलोक्यताम् । विश्वभूतिरसौ साधुर्धेन्वा क्षिप्तोऽपतद् भुवि ॥ ७५ ॥ अथोचद्विश्वकैरेप, कोलाहलपुरस्सरम् । क कपित्थफलभ्रंशशक्तिस्ते साम्प्रतं गता ? ॥ ७६ ॥ श्रुत्वेत्युत्क्षिप्य शृङ्गाभ्यां, गां मुनिर्मस्तकोपरि । भ्रमयित्वाऽमुचद् भूमौ, कृपया शनकैरसौ ॥ ७७ ॥ मामर्षः प्राह सिंहस्य, दुर्बलस्यापि जम्बुकैः । न बलं लुप्यते जातु, हेलोद(द्दा)लितहस्तिनः ॥ ७८ ॥ वैरं मुञ्चति नाद्यापि, दुरात्माऽयं ममोपरि । विचिन्त्येति ततः स्थानाभिवृत्तो बहिरागमत् ॥ ७९ ॥ अमुष्य तपसो ब्रह्मचर्यस्य फलमस्ति चेत् । एष्यज्जन्मन्यहं भूयासममितस्थामा, तदा भवेयमित्यदः ॥ ८० ॥ कृत्वा निदानमानन्दादप्रतिक्रम्य च क्रमात् । विपद्य वर्ष(स च)कोट्यायुर्महाशुक्रे सुरोऽभवत् ॥ ८१ ॥ अथ प्रजापतिर्भूपः, श्रीपोतनपुरेऽभवत् । भद्रा भद्राशया तस्य प्रिया प्रेमवती सती ॥ ८२ ॥ तस्याः सूनुश्चतुःस्वप्नसूचितः प्रथमो हली । नाम्नाऽचलोऽचलाचालनीयः प्रत्यर्थिमारुतैः ॥ ८३ ॥ पुत्री मृगावती चाथ, प्रजापतिरसौ कथम् । जात इत्युच्यते प्राग् रिपुप्रतिशत्रुरित्यभूत् ॥ ८४ ॥ नामास्यान्यदिने पुत्री, दीप्तवोद्भिन्नयौवना । विहितस्फारशृङ्गारा, वरार्थं प्रेषिताऽम्बया ॥८५॥ एत्य राजसभां तातोत्सङ्गमङ्गीचकार सा । तस्याः स्पर्शे च रूपे च, मूर्च्छितो राडचिन्तयत् ॥८६॥ पुण्यलावण्यपीयूषकुल्येयं कु(कि)लबालिका । कस्य भाग्य(पुण्य)वतो भोग्ययोग्यतामेष्यतीत्यहो ! ॥ ८७ ॥ अयत्नोपनतं रत्नमीदृक् परकर(व परतः)स्थितम् । नैव द्रष्टुमपीशोऽस्मि, तन्ममैवास्त्वसाविति ॥ ८८ ॥ नृपो निश्चित्य पप्रच्छ, सदस्यान् सदसि स्थितान् । कस्य रत्नमिहोत्पन्नं, तेऽप्याहुर्भूभुजामिति ॥ ८९ ॥

एवं छलेन त्रिःकृत्वः(त्वा), पृष्ट्वा तानाह दुर्नृपः । वर्हीदं प्रमदारत्नं, भवत्साक्षिकमस्तु मे ॥ ९० ॥ कर्णक्रकचवत् श्रुत्वा, तद्वचोऽधोमुखा
जनाः । न किञ्चिदूचिरेऽकार्ये, सतां तूष्णीकतैव हि ॥ ९१ ॥ इत्युक्त्वोत्पादिता भार्या, धिगहोऽनङ्गचेष्टितम् ! । ततो भद्राऽचलं
पुत्रं, त्यक्त्वा देशान्तरेऽगमत् ॥ ९२ ॥ माहेश्वरीं पुरीं नूत्नां, कृत्वा तत्राऽचलः स्वयम् । समेत्य स्वपितुः पार्श्वे, तस्थौ सेवापरः सुखम्
॥ ९३ ॥ प्रजाऽनेन कृता पत्नी, लोकैरिति प्रजापतिः । नामास्य निर्ममे प्राय, उन्नामनि जनादरः ॥ ९४ ॥ अथ च्युत्वा(तो) महाशु-
क्रात् तस्याः कुक्षाववातरत् । नीचैःकर्मोदयात् स्वामी, सप्तस्वप्नोपलक्षितः ॥ ९५ ॥ जन्मकाले जनन्याऽसावुष्णतैलेन म्रक्षितः । त्रिपृष्ठ
इति सञ्जज्ञे, नाम्नाऽऽकृत्या च वर्ष्मणः ॥ ९६ ॥ अश्वग्रीवाभिधो भूपस्तदा प्रत्यर्द्धचक्र्यभूत् । त्रिखण्डाखण्डितादेशश्चण्डदोर्दण्डविक्रमः
॥ ९७ ॥ निमित्तज्ञं निमित्तज्ञं, सोऽन्यदा सदसि स्थितः । पप्रच्छ कीदृशी मेऽग्रे, भाविनी भवितव्यता ? ॥ ९८ ॥ न्यगादीत् सोऽपि
यश्चण्डवेगं दूतं हनिष्यति । मुष्ट्यादिभिस्तथा सिंहं, वस्त्रवत् पाटयिष्यति ॥ ९९ ॥ ततस्ते भीतिरित्युक्तं, निशम्य मगधाधिपः । भयेन
कम्पमानाङ्गो, मृत्युवार्त्ता हि दुःसहा ॥ १०० ॥ प्राहिणोत् तत्परीक्षार्थं, दूतं प्रजापतिं प्रति । सोऽप्यच्छिन्नप्रयाणेन, प्राप पोतनपत्तनम्
॥ १०१ ॥ तदाऽन्तःपुरसन्तःपुरे नाट्यं नाटितं नटैः । रङ्गभङ्गोऽभवद् भूपेऽभिमुखं तस्य चोत्थिते ॥ १०२ ॥ तं दृष्ट्वा कुमरौ
क्रुद्धावूचतुः पार्श्ववर्त्तिनः । कोऽयं मूर्खो ह्यनात्मज्ञोऽकस्मात् कस्मादिहागतः ? ॥ १०३ ॥ तेऽप्याहुः स्वामिनोऽ(नाथ)श्वग्रीवस्य
सं(स्या)देशहारकः । चण्डवेगाभिधो युष्मत्ताताज्ञां दातुमागतः ॥ १०४ ॥ यदादेशाय यातेऽप, ज्ञाप्य एवाऽऽवयोस्तदा । इति तावूचतु-
र्भूत्यांस्तां वेलां तेऽभ्यधुस्तयोः ॥ १०५ ॥ तौ क्रोधान्धावधाविष्टां, प्रहर्त्तुं यावदेतकम् । काकनाशं प्रणेशुः प्राक्, सहायास्तस्य सर्वतः
॥ १०६ ॥ यष्टि-मुष्ट्यादिभिर्गाढमेक एव स कुट्टितः । तत् ज्ञात्वा भूपतिर्भीतः, पश्चादानाययन्नरैः ॥ १०७ ॥ क्षमयित्वाऽर्चयित्वाथ,

शलाकापु-
रुषाधिकारे
श्रीवीर-
वर्णनम् ।

वस्त्रायैर(थ वस्त्रायैरभ्यर्च्य चा)वदन्नृपः । बालाभ्यामपराद्धं यत्, तत्र वाच्यं प्रभोः पुरः ॥ १०८ ॥ तथेत्युक्त्वा चचालासौ, पुरोगैस्तत् तथास्थितम् । कथितं स्वामिनः सोऽपि, ज्ञात्वा तथ्यमचीकथत् ॥ १०९ ॥ जातप्रत्ययतो भीतो, [ऽ]वारके पुनरादिशत् । शालिक्षेत्रस्य रक्षायै, सोऽर्द्धचक्री प्रजापतिम् ॥ ११० ॥ प्रोचे प्रजापतिर्वत्सौ !, यद् दूतस्तस्य धर्षितः । तेनादेशोऽयमायातः(तोऽ) काल एव किलात्मनाम् ॥ १११ ॥ तेन यामोऽस्य रक्षायै, त्रिपृष्ठस्तन्निशम्य च । तावाहमेव यास्यामि, तिष्ठन्तु प्रभवो गृहे ॥ ११२ ॥ इत्युदित्वाऽचलद् वेगात्, तत्र प्राप्तः क्रमादसौ । पप्रच्छ कथमन्यत्ता, रक्षन्तीति तदाश्रितान् ? ॥ ११३ ॥ क्षेत्रिणः प्राहुरश्वेभ-नृ-रथैर्वप्र-मुत्कटम् । कृत्वा कियच्चिरं यावच्छालिर्नायाति पक्वताम् ॥ ११४ ॥ त्रिपृष्ठः प्राह कः स्थाताऽटव्यामस्यामियच्चिरम् ? । दर्शयन्तु परं मे ता, गुहां सिंहोपलक्षिताम् ॥ ११५ ॥ अथ तैर्दर्शिता सा तु, प्रतस्थेऽभिमुखं त(ग)तः । रथारूढः कुमारोऽस्य, चक्रे कोलाहलोऽग्रैः (ऽग्रिमैः) ॥ ११६ ॥ जजागार कुरङ्गारिरराति सैन्यसन्मुखम् । एक एवोत्थितः सूरो, न सहायमु(म)पेक्षते ॥११७॥ दृष्ट्वैकाकिनमायान्तं, कुमारो ह्यचिन्तयत् । क्षत्रियाणामसदृशम्, युद्धं युक्तं न कर्हिचित् ॥ ११८ ॥ तपस्वी पादचार्येप, रथारूढः पुनस्त्वहम् । ध्यात्वोत्तीर्णो रथात् तूर्णं, खेटकासिकरः परम् ॥११९॥ क्रमात् तावपि सोऽत्याक्षीदेयमेव वदन् पुनः । निर्भयं तं तथाऽऽयान्तं, वीक्ष्य सिंहो विसिष्मिये ॥ १२० ॥ स्पष्टं धृष्टोऽयमायाति, कथङ्कारमियद्भुवम् ? । दर्शयामि ममामुष्य, क्षमोल्लङ्घनजं फलम् ॥ १२१ ॥ इति ध्यात्वा ददौ यावत् फालां तं प्रति केसरी । तावदोष्ठपुटद्वन्द्वं, कराभ्यां सोऽग्रहीत् पृथक् ॥ १२२ ॥ ऊर्ध्वस्फाटं स्फुटत्कूष्माण्ड इव स्फाटितः स्फुटम् । निरस्तो भुवि भू-भूभृद्भ्योरिव वलिः पृथक् ॥ १२३ ॥ तथास्थितस्य नो तस्य, स्फुरतो याति जीवितम् । अमर्षाद् वा कथं सामान्येनानेन निपातितः ? ॥ १२४ ॥ अथ तत्सारथिर्जीवो, गौतमस्याभवत् सदा । स आहाहो ! महासिंह !, न सामान्यः पुमानयम् ॥ १२५ ॥

न्नर्धभरतक्षेत्र-शालाऽयं पुरुषोत्तमः । हतस्त्वं येन मा खेदं, कुर्याः(यायाः) शौर्यातिवर्यधीः ॥ १२६ ॥ तद्वचो मधुवत् पीत्वा, मृतः
सिंहः समाधिना । दत्त्वा त्रिपृष्ठस्तच्चर्म, ग्रामीणेभ्योऽब्रवीदद: ॥ १२७ ॥ भो भो ! वाच्यं भवत्स्वामिहयग्रीवस्य मद्वचः । गृहाण
सिंहचर्मेदं, यथेच्छं भुङ्क्ष्व चाक्षतान् ॥ १२८ ॥ ततो ग्राम्यैर्यथावृत्तो, वृत्तान्तोऽस्योदितः प्रभोः । ज्ञानिवाक्याविसंवादाद् विभाय हृदि
सोऽधिकम् ॥ १२९ ॥ ततोऽसावादिशद् दूतमुखेनाथ प्रजापतिम् । स्वपुत्रौ मुञ्च मत्पार्श्वे, पूर्वभासाभिवृद्धये ॥१३०॥ स प्राह देवपादानां,
करोम्यचलगां स्वयम् । युवानौ नो विजानीतः, सल्लीलालालसाविमौ ॥ १३१ ॥ दूतः प्राह न चेदेवं, युद्धसज्जो भवेस्तदा । भयातुरो नृपो
लक्षि, चक्रेऽस्यानेकधा पुरः ॥ १३२ ॥ दृष्ट्वा त्रिपृष्ठस्तं प्राह, याहि ब्रूहि प्रभोः पुरः । एवमेवार्पिते हस्ते, स्थास्यति हृदनिका कथम् ?
॥ १३३ ॥ गत्वा दूतस्तथैवाऽऽख्यदश्वग्रीवो मदोत्कटः । चतुरङ्गचमूयुक्तश्चलितस्तज्जिघांसया ॥ १३४ ॥ प्रजापतिरपि प्राप्त-त्रिपृष्ठा-
दिभिरन्वितः । निर्गतोऽभिमुखं तस्य, न सूरः कातरो रणे ॥ १३५ ॥ चिरयुद्धेन संहारः, सञ्जातः सैन्ययोर्द्वयोः । त्रिपृष्ठोऽथाह भो
भूप !, वैरमस्ति त्वयावयोः ॥ १३६ ॥ निरागसाममीषां कोऽधिकारो व्यपरोपणे ? । आवां युध्यावहे तेनान्योन्यमङ्गीकुरु नियति
॥ १३७ ॥ स्वीचक्रेऽसावहं वृद्धो, बालोऽयमिति सम्मदात् । चिरं युद्ध्वा मिथो भग्नसर्वशस्त्रौ बभूवतुः ॥ १३८ ॥ अश्वग्रीवोऽमुचच्चक्रं,
क्रोधाद् भाग्यमिवात्मनः । स्पृष्ट्वा हृत् तत् त्रिपृष्ठस्य, कराब्जे हंसवत् स्थितम् ॥१३९॥ ततस्तेन हयग्रीवग्रीवां कमलनालवत् । सोऽच्छिदद्
दैवदौर्बल्ये, सुरत्नोऽपि विमुखो भवेत् ॥ १४० ॥ सपुष्पवर्षमुद्घुष्टं, त्रिदशैर्व्योमवर्त्तिभिः । जयत्याद्यो दशार्हाणां, त्रिपृष्ठः स्पष्टभाग्यभूः
॥ १४१ ॥ तव भृत्याः स्म इत्युक्त्वा, प्रणेमुरखिला नृपाः । शीर्षे कोटिशिलोत्पाट्य, छत्रवत् तेन निर्मिता ॥ १४२ ॥ साधयित्वाऽर्द्धभरत-
क्षेत्रमेवं स भूपतिः । चतुरशीतिलक्षायुर्मृत्वाऽगात् सप्तमावनौ ॥ १४३ ॥ ततश्चोद्वृत्य हर्यक्षः, स मृत्वा नरकेऽगमत् । भूयो भूयो

भवान् भ्रान्त्वा, विदेहे चक्रवर्त्यभूत् ॥ १४४ ॥ श्रीधनञ्जय-धारिण्योः, प्रियमित्राभिधोऽङ्गजः । भुक्त्वा चक्रिश्रियं सोऽन्ते, प्राव्राजीत् पोट्टिलान्तिके ॥ १४५ ॥ कोटिवर्षं स चारित्रं, प्रतिपाल्यातिनिर्मलम् । त्रुटिताङ्गं च सर्वायुरन्तेऽनशनपूर्वकम् ॥ १४६ ॥ मासभक्तेन सर्वार्थसिद्धविमानमासदत् । उत्कृष्टायुर्महाशुक्रे, महाशक्रसमप्रभः ॥ १४७ ॥ [युग्मम्] जम्बूद्वीपस्य भरते, छत्राग्रा पुर्यथाभवत् । जितशत्रुः प्रिया भद्रा, तत्पुत्रो नन्दनाभिधः ॥ १४८ ॥ स बालकालसम्प्राप्तराज्यो भुक्त्वा चिरं सुखम् । चतुर्विंशत्यब्दलक्षाः, प्रान्ते (गुरु-)पोट्टिलसन्निधौ ॥ १४९ ॥ प्रव्रज्य मासक्षपणैर्वर्षलक्षं निरन्तरम् । क्षपयित्वाऽर्जयित्वा च, तीर्थकृत्कर्म निर्मलम् ॥ १५० ॥ विंशतिसागरायुष्को, विमाने कुसुमोत्तरे । उत्पन्नः प्राणते देवो, जाग्रत्पुण्योदयाद्भुतः ॥ १५१ ॥ [युग्मम्] षण्मासशेषायुर्मोहमेत्यपरः सुरः । पुण्यक्षयात् तदाधिक्यादर्हद्देवोऽतिदीप्यते ॥ १५२ ॥

इतश्च जम्बूद्वीपस्य, भरते धनुराकृतौ । भूरिभूदेवभूदेवकुण्डग्रामाभिधं पुरम् ॥ १५३ ॥ कोडालगोत्रस्तत्रर्षभदत्ताख्यो द्विजोत्तमः । जालन्धरकुलजाऽस्य, देवानन्देति पत्न्यभूत् ॥ १५४ ॥ [युग्मम्] तस्याः कुक्षौ समुत्पेदे, च्युत्वाऽर्द्धनिशि कल्पतः । आषाढसितषष्ठ्यां स, ज्ञानत्रयपवित्रितः ॥ १५५ ॥ च्योष्येऽत इति जानाति, च्युतोऽस्मि चेत इत्यपि । च्यवमानो न छद्मस्थस्यैकसामयिकत्वता ॥ १५६ ॥ सा ततस्तादृशे तल्पे, सुखसुप्ता सती सती । चतुर्दश ददर्शेमान्, स्वप्नानद्भुतदर्शनान् ॥ १५७ ॥ सिंहेभ-गो-रमा-दाम-चन्द्रार्क-ध्वज-कुम्भकाः । पद्मसरोऽब्धिर्विमानरत्नं रत्नोच्चयः शिखी ॥ १५८ ॥ दृष्ट्वैतान् हृष्टतुष्टा सा, प्रबुद्धा प्रीतमानसा । हर्षोत्कर्षोल्लसल्लोमराजी राजीवलोचना ॥ १५९ ॥ उत्थायोत्कृष्टया गत्या, राजहंसीसदृक्षया । यत्राऽऽस्ते ऋषभदत्तस्तत्रैत्य तमबोधयत् ॥ १६० ॥ सुप्ताऽद्य शयनीयेऽहं, स्वामिन्! वीक्षितवत्यमून् । तदेषां फलमाख्याहि, बुद्धि-विज्ञानपूर्वकम् ॥ १६१ ॥ स विमृश्याऽऽह देवानुप्रिये!

लाभोऽङ्गजस्य ते । भोगलाभोऽर्थलाभश्च, भावी लाभः सुरस्य च ॥ १६२ ॥ श्रुत्वेति मुदिता गेहं, गत्वा गर्भं दधत्यसौ । मुहूर्तमिव
द्वाशीतिर्वासरानत्यवाहयत् ॥ १६३ ॥ निष्प्रकम्पमभूत् कम्प्रमथ शक्रस्य विष्टरम् । स ज्ञात्वाऽवधिना जन्मार्हतश्चेतस्यचिन्तयत् ॥ १६४ ॥
नेदं भूतं भवेन्नैव, न भविष्यति कर्हिचित् । अर्हच्चक्रि-त्रिखण्डेशादयो यत् पुरुषोत्तमाः ॥१६५॥ दरिद्रादिकुलेष्वेवं, नोत्पद्येरन् कदाचन । कर्मो-
दयाद्यथोत्पन्ना, जायन्ते नेति निर्णयः ॥१६६॥ [युग्मम्] तथाऽयं भगवान् वीर उत्पन्नस्तादृशे कुले । ततो जीतमतीतानागतानां वज्रिणा-
मदः ॥ १६७ ॥ कुलेभ्यस्तादृशेभ्यो यदुद्धृत्योत्पादयन्त्यमी । अमोघादिकुलेष्वेवार्हदादीन् पुरुषोत्तमान् ॥ १६८ ॥ ममापीदमतः श्रेय इति
सञ्चिन्त्य वासवः । नैगमेषिणमादिक्षदाकार्यामरेश्वरम् ॥ १६९ ॥ भो देवानुप्रियादोऽर्हद्वैयावृत्यं कुरूत्तमम् । सद्यस्तदा तदादेशमासाद्य
मुमुदेऽसकौ ॥ १७० ॥ ततश्च वैक्रियोद्घातं, कृत्वैरेशानकूणके । चण्डादिगतिभिर्विप्रकुण्डमामाय सोऽचलत् ॥ १७१ ॥ एत्यापस्वा-
पिनीं मातुर्दत्त्वा लात्वा करद्वये । निराबाधं न्यधाद् वीरं, स कुक्षौ चेटकस्वसुः ॥ १७२ ॥ आश्विनाद्यत्रयोदश्यां, चन्द्रे हस्तोत्तरास्थिते ।
त्रिशलायां स उत्पन्नः, पत्न्यां सिद्धार्थभूपतेः ॥ १७३ ॥ देवानन्दा त्रिशला च, तस्यां निशि निजानने । निर्गच्छतः प्रविशतः, स्वप्नांस्ते
पश्यतः समम् ॥ १७४ ॥ गर्भतः सप्तमे मासे, स्वाम्यभिग्रहमग्रहीत् । उपादेयं मया मातापित्रोर्नो जीवतोर्व्रतम् ॥ १७५ ॥ नवमा-
सेऽथ सम्पूर्णे, सार्द्धसप्तदिनोपरे । चैत्रशुक्लत्रयोदश्यामिन्दौ हस्तोत्तरानुगे ॥ १७६ ॥ मनोऽनुकूलवातेपूच्चस्थानस्थग्रहेषु सः । प्रक्रीडित-
प्रमुदितावन्यां जनपदोदये ॥ १७७ ॥ कन्याराशिः सिंहलक्ष्मा, निशीथे काञ्चनद्युतिः । जात उत्पादयन् सौख्यं, क्षणं नारकिणामपि
॥ १७८ ॥ [त्रिभिः सम्बन्धः] इतश्च दिक्कुमारीणामासनानि चकम्पिरे । वितेनुः सूतिकर्माणि, स्वानि स्वान्येत्य भक्तितः ॥ १७९ ॥
ज्ञात्वाऽऽसनाकम्पवशादथोच्चैर्घण्टां सुघोषां हरिरप्यताडयत् । अभूत् तदानीं युगपन्निनादाद्वैतं समग्रेषु सुरालयेषु ॥ १८० ॥ विमानमारुह्य

महत्प्रमाणमेत्यार्हतो जन्मगृहं जनन्याः । दत्त्वा त्ववस्वापनिकां समीपे, मुक्त्वा तदाकारमुदाररूपम् ॥ १८१ ॥ सौधर्मनाथः प्रविधाय पञ्चधाऽऽत्मानं जिनं पाणिपुटे ग्रहपुलः । जन्माभिषेकं विदधे सुराचले, यथाक्रमं सर्वसुरेश्वरैः समम् ॥ १८२ ॥ [युग्मम्] आनीय पश्चादपनीय निद्रामुद्घोषणां बाढरवेण चक्रे । शृण्वन्तु भोः सर्वसुपर्वसङ्घा!, विरूपकं नेतुरथास्य मातुः ॥१८३॥ ये चिन्तयिष्यन्ति हृदा कदाचित्, तेषां शिरांस्यर्जकमञ्जरीवत् । स्फुटं स्फुटिष्यन्ति किलैवमुक्त्वा, हरिः सुरेन्द्राश्च गता यथागतम् ॥१८४॥ [युग्मम्] प्रातः प्रवर्धापनिकां प्रसिद्धसिद्धार्थराजाय प्रियंवदाऽदात् । सुतावतारं स तदा तदास्याच्छ्रुत्वा ममौ नो मनसि प्रकामम् ॥ १८५ ॥ किरीटवर्ज्या-(र्जा)मखिलामलङ्कृतिं, दास्यै ददावात्मतनोस्ततो नृपः । प्रभातकृत्यानि विधाय कृत्यविदाकार्य कौटुम्बिकपुंस इत्यवक् ॥ १८६ ॥ प्रमृज्य सिक्त्वा मञ्चातिमञ्चोञ्चोचाञ्चितं पुरम् । ऊर्ध्वीकृतोरुमुशलं, बद्धव(च)न्दनमालिकम् ॥ १८७ ॥ नैकतालाचराकीर्णं, कुरुत त्वरितं स्वयम् । सर्वं विधाय ते राज्ञः, आज्ञां प्रत्यर्पयन्त्यथ ॥ १८८ ॥ दशाहमहिमारम्भे, वर्तमाने नृपोऽकरोत् । उच्छुल्कमुत्करं मानवर्द्धनं गुप्ति(बन्दि)मोक्षणम् ॥१८९॥ धात्रीत्वं पञ्चभिर्देवीभिः कुर्वाणाभिरन्वहम् । प्रापोपचयमङ्गेन, स्वामी चामीकरच्छविः ॥१९०॥ किञ्चिदूनाष्टवर्षस्य, सुराणाममतः प्रभोः । सद्गुणोत्कीर्त्तनं शक्रः, सुधर्मा(र्म)स्थो व्यधादिदम् ॥१९१॥ बालोऽप्यबालस्वभावोऽसौ, वीरोऽबालपराक्रमः । नैन भापयितुं देवैः, सशक्रैरपि शक्यते ॥ १९२ ॥ तत्रैकस्तद्वचः श्रुत्वाऽश्रद्दधानः सुरो हृदि । एति वीरान्तिकं तूर्णं, भापनार्थं निरर्थकम् ॥ १९३ ॥ तले तिन्दुकवृक्षस्य, सर्परूपं विधाय सः । स्थितः परे भयभ्रान्ता, बाला नेशुर्दिशोदिशम् ॥१९४॥ निर्भीको भगवान् नागं, पाणिनाऽऽदाय रज्जुवत् । दयावान् दूरमुत्सृष्टवानवाम(न)मना मनाक् ॥ १९५ ॥ पुनर्विधाय बालस्य, रूपं क्रीडन् सुरो जितः । प्रभुणा तुरगीभूतः, प्रभुरप्यारुरोह तम् ॥ १९६ ॥ नमस्युत्पतितो वर्द्धमानो मानोज्झिताङ्गभृत् । सविकारं तदाकारं, विलोक्य प्रभुरप्यथ ॥ १९७ ॥

मुष्टिप्रहारं पृष्ठेऽदात्, ततः संहृत्य कैतवम् । नत्वा वीरं गुणान् गृह्णन्, स्वर्गी स्वर्गं जगाम सः ॥१९८॥ अथाधिकाष्टवर्षं तं, विज्ञाय पितरावपि । कृतकौतुकमाङ्गल्यं, वस्त्राभरणभूषितम् ॥१९९॥ गजारूढं पुरः प्रोद्यन्निनादाद्वैतबन्धुरम् । निन्यतुर्लेखशालायां, गायद्धवलमङ्गलम् ॥ २०० ॥ [युग्मम्] विज्ञायावधिना शक्र, एत्य रूपं द्विजन्मनः । कृत्वाऽऽसनं प्रभोर्योग्यं, स्वयोग्यं चाप्यचीकरत् ॥२०१॥ तत्समक्षं प्रभुं शक्रोऽपृच्छत् सिंहासनस्थितम् । शब्दस्य लक्षणं तथ्यं, सर्वं स्वाम्यपि तं जगौ ॥ २०२ ॥ अचिन्तयदुपाध्यायो, मानादपि कणो महान् । यदहो! वेत्त्ययं बालस्तन्नामापि न वेद्म्यहम् ॥२०३॥ तेनावधारितं सम्यक्, सर्वं सद्धारणावता । ततः (प्रभृति जैनेन्द्रं कृतं) प्रवृत्तमग्रादैन्द्रं व्याकरणोत्तमम् ॥ २०४ ॥ त्यक्तबालोचितावस्थं, क्रमेण प्राप्तयौवनम् । विज्ञाय पितरौ भोगसमर्थं वीरमात्मजम् ॥ २०५ ॥ महदुज्ज्वलकुल्या(ला)याः, शुभे चन्द्रबले तिथौ । राजकन्यायशोदाया, माहयामासतुः करम् ॥२०६॥ [युग्मम्] भुञ्जानः पञ्चधा भोगान्, निःस्पृहोऽपि नरोचितान् । प्रियदर्शनाभिधां(ऽऽख्यां)पुत्रीं, स्वानुरूपामजीजनत् ॥ २०७ ॥ श्रीपार्श्वोपासकीभूय, श्रीवीरपितरावथ । भूत्वाऽनशनयोगेन, माहेन्द्रं वा(चा)ऽच्युतं श्रितौ ॥२०८॥ प्रपूर्णाभिग्रहो दक्षप्रतिज्ञो ज्ञातनन्दनः । विनीतो भद्रकोऽष्टाविंशत्यब्दान्यस्थाद् गृहे विभुः ॥ २०९ ॥ पृष्टोऽथ वर्द्धमानेन, व्रतार्थं नन्दिवर्द्धनः । स्पष्टमाचष्ट मा भ्रातः!, क्षेप्सीः क्षारं क्षते क्षतम् ॥ २१० ॥ ततो वर्षद्वयं तस्थौ, गार्हस्थ्येऽस्योपरोधतः । दाक्षिण्यसेवधिर्वीरः, शुद्धसाधुरिवाधिकम् ॥ २११ ॥ अथो लोकान्तिका देवा, अभ्येत्येत्याशिषं ददुः । जय नन्द जय भद्र!, भद्रं ते क्षत्रियोत्तम! ॥ २१२ ॥ बुद्ध्यस्व भगवन्! लोकनाथ! धर्मेऽस्त्वविघ्नता । इति कृत्वा जयशब्दं, प्रयुञ्जन्ति प्रभोः पुरः ॥ २१३ ॥ [युग्मम्] चारित्रावसरं स्वामी, जानन् ज्ञानेन तु स्वयम् । ताम्रचूडैर्निशाशेषमिव तैर्बोधितः क्षणम् ॥ २१४ ॥ प्रदाय वार्षिकं दानं, मिलितैश्च चतुर्विधैः । सुपर्वराजैस्तैः सर्वैस्तीर्थाम्भोभिः कृताप्लवः ॥ २१५ ॥ सर्वाङ्गाभरणैश्चारु-

घन्दनैरर्चिताङ्गभृत् । कृतषष्ठतपाश्चन्द्रप्रभाख्यां शिबिकां श्रितः ॥ २१६ ॥ मार्गशीर्षासितदशम्यां, प्रथमे वयसि स्थितः । ज्ञातखण्डवने वीर एकाक्येवाददे व्रतम् ॥२१७॥ [ त्रिभिः सम्बन्धः ] ज्ञानत्रयधरो धीरो, गृहस्थत्वेऽभवत् पुनः । तुर्यं ज्ञानं तदोत्पेदे, मनःपर्यवसंज्ञकम् ॥ २१८ ॥ तत्रोद्यानेऽखिलान् ज्ञातीन्, पृष्ट्वाऽनस्तमिते रवौ । कुमार(र्मा)ग्राममायातः, सायं तु प्रतिमां स्थितः ॥ २१९ ॥ एकस्तत्रैत्य गोपालोऽवग् वीरं मद्वृषाविमौ । चिन्त्यौ यावद् विधायेमि, कार्यं गोदोहनादिकम् ॥२२०॥ मौनेन नावगीशोऽपि, स गत्वाऽऽगात्र पश्यति । तमो भ्रमितुमप्येतावायातावन्तिके विभोः ॥२२१॥ दृष्ट्वा रात्रिभ्रमात् क्रुद्धोऽधावतोत्पाट्य सेल्लकम् । स्तेन इत्युपसर्गार्थमथासार्षीद् जिनं हरिः ॥ २२२ ॥ कथमस्या(मुपा)त्तचारित्रः, स्वामी विहरति क्षितौ ? । तथाऽऽयान्तं तमालोक्य, द्रागेत्य स निषेधति ॥२२३॥ ततः कृताञ्जलिः प्राहोपसर्गबहुलो विभो ! । चिरं भावी विहारस्ते, पूर्वकर्मानुभावतः ॥ २२४ ॥ यद्यादिशति मां स्वामी, धारयाम्यन्तिके स्थितः । वीरोऽवादीद् हरे ! नैवं, भूतं भावि भवत्यहो ! ॥ २२५ ॥ यदन्यनिश्रयाऽर्हन्तोऽर्जयन्ति किल केवलम् । किन्तु स्ववीर्यपुरुषाकारादेव हि केवलम् ॥ २२६ ॥ सिद्धार्थव्यन्तरं स्वामिसम्बन्धिनमथो हरिः । आदिश्यादृश्यतां प्राप्तो, विद्युदुद्योतवत् क्षणात् ॥ २२७ ॥ पारणाय प्रगे प्राप्तो, बलस्य गृहिणो गृहे । परमान्नेन तेनापि, स भक्त्या प्रतिलाभितः ॥२२८॥ देवोद्घुष्टमहोदानं, नेदुर्दुन्दुभयो दिवि । चैलोत्क्षेपो रत्नवृष्टिः, पञ्च दिव्यानि जज्ञिरे ॥२२९॥ कृत्वाऽऽगं पारणं पात्रे, तत्रेशो देवदूष्यभृत् । तापसाश्रममायातो, मायातोऽत्र पराङ्मुखः ॥२३०॥ तत्र मित्रं कुलपतिः, पितुरास्तेऽर्हतः स तु । उद्वाहुर्मिलनायाऽऽगात्, पूर्वाभ्यासाद् विभुस्तथा ॥ २३१ ॥ ऊचे कुलपतिः स्वामिन् ! प्रासुकोपाश्रयाश्रयात् । अनुमाह्योऽस्त्वयं वर्षावस्थित्याऽवस्थितात्मना ॥२३२॥ दाक्षिण्येन पुनस्तत्रायातोऽस्थात् प्रतिमास्थिरः । त्रोटयन्त्युटजांस्तार्णान्, तिर्यञ्चः प्रावृडागमे ॥२३३॥ निर्दयास्ताडयन्त्यन्ये, नेशस्तान् निर्ममत्वतः । अवोचन्नपरे प्रीत्या, गुरवे सोऽप्यवक्(सोऽवक् च)प्रभुम् ॥२३४॥ देवार्य !



शलाकापुरुषाधिकारे श्रीवीरवर्णनम् ।

शकुनी नीडं, पीड्यमानं हि रक्षति । त्वत्पिता जगतीपीठं, किं भवान् नैक(व)मास्पदम् ? ॥२३५॥ अप्रीतिकारि दूरेण, स्थानं त्याज्यं तपोधनैः । विजहारेति वर्षासु, न सन्तोऽन्यासुखावहाः ॥२३६॥ व्युत्सृष्टाङ्गेन मौनेने, प्रीतिमैद्रुहवासिना । पाणिपात्रेण गृहिणोऽभ्युत्थानाद्यविधायिना ॥ २३७ ॥ भाव्यं मयेत्यसौ पञ्चाग्रहीदुग्रानभिग्रहान् । अथोपसर्गा ग्रन्थेभ्यो, विज्ञेया विबुधैरिह ॥२३८॥ [ नोच्यन्ते ग्रन्थबाहुल्यादिति ] वीरेण भ्रमताऽऽत्ते(ते)न, यत्तपस्तप्तमुत्कटम् । पक्षास्त्रयोदशाब्दानि, द्वादशेत्युच्यतेऽधुना ॥२३९॥ षण्मास्येका चतुर्मास्यो, नव द्वे च त्रिमासिके । षड् द्विमास्यश्चैकमासी, द्वादशेति तपोऽभवत् ॥ २४० ॥ अर्द्ध-द्व्यर्द्ध-सार्द्धद्विमास्यश्च द्वासप्तविद्वे द्वे । भद्राद्याः प्रतिमास्तिस्रो, द्वि-चतुर्दशवासरैः ॥ २४१ ॥ प्रतिमा द्वादशाच्छिन्ना अष्टमेनैकरात्रिकी । साभिग्रहा शराहोनां, षण्मासी वत्सपत्तने ॥ २४२ ॥ पष्ठानां द्विशतीमेकोनत्रिंशदधिकां व्यधात् । त्रिशतेकोनपञ्चाशत्, पारणाः सर्वसङ्ख्यया ॥ २४३ ॥ [ युग्मम् ] चतुर्थभक्तं नो नित्य-भक्तं कर्हिचिदप्यभूत् । अपानकं तथा सर्वं, तपोऽस्य चरमार्हतः ॥२४४॥ दीक्षाया दिनमेकं च, सर्वं निक्षिप्य मीलितम् । पूर्वोक्तमानश्छद्मस्थकाल एषोऽस्य शासितुः ॥ २४५ ॥ तुर्येऽह्नः प्रहरे राधविशुद्धदशमीदिने । शुक्लध्यानान्तरे वर्त्तमानस्यानुत्तरं प्रभोः ॥ २४६ ॥ नद्यृजुपालिकातीरे, जृम्भिकायाः पुरो बहिः । अव्यक्ताख्यस्य चैत्यस्यासन्ने श्यामाकगेहिनः ॥२४७॥ क्षेत्रान्तः शालवृक्षाधः, षष्ठेनोत्कटिकासने । स्थितस्य तस्य सम्पन्नं, केवलं जन्मभे शुभे ॥ २४८ ॥ [ त्रिभिः सम्बन्धः ] ततश्चतुर्विधैर्देवैर्निर्मिते धर्मसद्मनि । जीतमित्यकरोद् धर्मदेशनां धर्मदेशकः ॥ २४९ ॥ आश्चर्यं तत्र नो कश्चित्, साधुर्वा श्रावकोऽभवत् । ततो विहृत्य शर्वर्यां, द्वादश योजनान्यगात् ॥ २५० ॥ महसेनवने पापापुर्यां धर्मगृहे स्थितः । तत्राऽऽस्ते(स्ति)सोमिलज्योतिर्यागकर्त्ता द्विजस्तदा ॥२५१॥ एकादशाप्युपाध्यायास्तेनाहूताः क्रतूपरि । मिलिताः सन्त्यथायान्ति, नमस्कर्त्तुं जिनं जनाः ॥२५२॥ प्रसस्रुस्तन्मुखे वाचः, सर्वज्ञोऽत्रागतोऽस्ति हि । तच्छ्रुत्वाऽचि-

शलाकापुरुषाधिकारे श्रीवीरवर्णनम् ।

न्वयत् चित्ते, गौतमोऽहङ्कृतेरदः ॥२५३॥ विद्यमाने न कोऽप्यन्यः, सर्वज्ञो मयि सम्प्रति। एकस्मिन्नुदिते भानौ, किमन्यः कार्हिचिद् भवेत् ? ॥ २५४ ॥ परं कोऽपि महाधूर्त्त, इन्द्रजालिकविद्यया । विस्मापयति नून् मुग्धान्, न लोकः पारमार्थिकः ॥ २५५ ॥ अथाकाशे प्रकाशास्यां-श्चलत्कु(कु)ण्डलधारिणः। आयातो वीक्ष्य गीर्वाणान्, विमानस्थान् महस्विनः ॥२५६॥ उपाध्यायादयः प्राहुरहो! माहात्म्यमात्मनः। कृतोरायान्ति यदमी, महिमां कर्तुमुन्मुदः ॥ २५७ ॥ [युग्मम्] श्वपाकपाटकमिव, त्यक्त्वा तं यज्ञपाटकम्। ते समवसृतौ जग्मुर्न सुधीर्मुग्धमार्गगः ॥२५८॥ तद् दृष्ट्वा गौतमोऽवादीत्, मुग्धा जग्धा ह्यनेन चेत्। कथं सुरा ? वा संयोगः, सदृशो ग्राम्य–मूर्खयोः ॥२५९॥ यामि पश्यामि सर्वज्ञवादमुत्तारयामि वा । इति ध्यात्वा वृतश्छात्रैस्तत्रागाद् गौतमो रयात् ॥ २६० ॥ आगच्छ भो गौतमेति, भाषितः स्वामिनाऽऽह सः। कथं मे नाम जानाति ?, को वा वेत्ति न मामिह ? ॥२६१॥ परं ज्ञास्यति सन्देहं, हार्दं मे चेदयं तदा । सत्य इत्यवदत् तावद् वेदसत्यार्थमीशिता ॥२६२॥ ततं उत्खातमिथ्यात्वपटलं शुचिदर्शनः(म्) । स्फुरद्रूपतयाऽद्राक्षीद्, गौतमो वीरभास्करम् ॥ २६३ ॥ मुक्तमानं नमन्मौलिमर्हन्मौलिरमुं तदा। चारित्रं ग्राहयामास, च्छात्रपञ्चशतीवृतम् ॥२६४॥ एवमेवाग्निभूत्याद्या, दीक्षिताः स्वामिना तदा(दश) । सर्वे चैकादशाभूवन्, क्रमेण गणधारिणः ॥२६५॥ चतुर्दश सहस्राणि, श्रमणा गुणशालिनः(धारिणः)। षट्त्रिंशच्च सहस्राणि, श्रमण्योऽस्य परिच्छदः ॥२६६॥ लक्षमेकोनषष्टिश्च, सहस्राः श्रावकास्तथा । तेभ्यो द्विगुणमानाश्च, श्राद्ध्योऽर्कव्रतधारिकाः ॥ २६७ ॥ मनःपर्यविनां वादिनां चतुर्दशपूर्विणाम् । शतानि पञ्च चत्वारि, त्रीण्येवं स्युर्यथाक्रमम् ॥२६८॥ शतं वैक्रियलब्धीनां, सप्त केवलिनामपि । सर्वार्थसिद्ध्य(द्धा)वधिनां, शतान्यष्टौ(ष्ट) त्रयोदश ॥२६९॥ द्वयोर्द्वयोः किलैकस्या वाचनाया विशेषतः। नव गच्छास्तदीशाश्चैकादशेति यतिक्रमः ॥२७०॥ स्वशासनस्य रक्षायै, यक्षं मातङ्गसञ्ज्ञकम्। तथा सिद्धायिकां देवीमादिशदीशिताऽन्तिमः ॥२७१॥ एवं चतुर्विधं सङ्घं, संस्थाप्य



शलाकापुरुषाधिकारे श्रीवीरवर्णनम् ।

जगतां पतिः । सेव्यस्त्रिदशकोटीभिर्विजहार वसुन्धराम् ॥ २७२ ॥ दान-लाभ-वीर्य-भोगोपभोगा अन्तरायकाः । हासो रत्यरती भीतिर्जुगुप्सा शोकै-मन्मथौ ॥ २७३ ॥ मिथ्यात्वाज्ञानेता निद्राऽविरति-द्वेष-रागताः । इत्यष्टादशदोषेण मुक्तो मुक्तिसुखोन्मुखः ॥ २७४ ॥ चतुस्त्रिंशदतिशयैः, प्रातिहार्याष्टकेन च । पञ्चत्रिंशद्वचनातिशयैश्च सहितो बभौ ॥ २७५ ॥ नो भवितव्यतानाशो, गोशालस्त्वां जगत्प्रभुम् । यत्कुक्रोश हृद्दा ! तेऽत्रे, महर्षी दग्धवानपि ॥ २७६ ॥ वसन्ति सन्तो यत्रैकं, मुहूर्तं तं कृतार्थताम् । नयन्तीति शिवं देवानन्दर्षभदत्तयोरदात् ॥ २७७ ॥ दिशन् सप्तभङ्गानि, नव तत्त्वानि तत्त्ववित् । देशोनत्रिंशद्वर्षाणि, पापायां विहरन्नगात् ॥ २७८ ॥ हस्तिपालनृपालस्य, शुल्कांशौ शुल्कमण्डपे । कार्तिकामावसीरात्रौ, पष्ठेन स्वातिभे शुभे ॥ २७९ ॥ पर्यङ्कासनमासीनस्तुर्यारान्ते प्रशान्तहृत् । भवोपमाहिकर्मांशक्षयादुच्छिन्नबन्धनः ॥२८०॥ सार्द्धद्वये वर्षशते, व्यतीते पार्श्वतः प्रभोः । द्वासप्तत्यब्दसर्वायुः, करणे नागनामके(नि) ॥२८१॥ अष्टादशगणोर्वीशपुरस्ताद् धर्मदेशनाम् । षोडश प्रहरान् कुर्वन्नेकाकी शिवमाप सः ॥२८२॥ [ चतुर्भिः सम्बन्धः ] जाति-जन्म-जरा-मृत्युमुख्यबाधाऽकलङ्कितः । तत्रानन्तानन्तकालं, स्थाता त्राताऽङ्गिनां विभुः ॥२८३॥ इत्यागमारामकृतोञ्छवृत्तिना, मुग्धेन हब्धाऽस्य चरित्रमालिका । यः कण्ठपीठे लुठितामशाठ्यतस्तनोत्यनन्तां लभते रमामिमाम् ॥ २८४ ॥ इति श्रीखरतरगच्छशृङ्गारहारश्रीगुणरत्नसूरिशिष्यलेशवाचनाचार्यपद्ममन्दिरगणिविरचितायां श्रीऋषिमण्डलप्रकरणवृत्तौ श्रीवीरचरित्रं परिपूर्णम् ॥ [ ग्रन्थाग्रं ६४१ ]

अथ देवानामि(नि)व गुरूणामपि मङ्गलभूतत्वात् परमगुरून् स्तुवन्नाह—

**निम्मवियवारसंगे, निहयअणंगे विमुक्कभवसंगे । करुणामयजलनिहिणो, नमामि गणहारिणो सव्वे ॥ ३ ॥**

व्याख्या—'नमामि' नमस्करोमि, अहमिति गम्यम् । कान् ? 'गणधरान्' गणं–गच्छं धरन्तीति तान्, कतिसङ्ख्यान् ? 'सर्वान्'

शलाकापुरुषाधिकारे परमगुरुस्तवनं तदन्तर्गतमहर्षिचरित्राधिकारे आद्यभरतर्षेः स्तवनं च।

सर्वतीर्थकरसत्कान् यथा ऋषभस्य पुण्डरीकादीन् चतुरशीतिसङ्ख्यान् यावन्नेमिनो वरदत्तादीन् एकादश आवश्यक-कल्पयोरभिप्रायेण चाष्टादश। एवं पार्श्वस्याष्टौ दश च। श्रीवीरस्य चैकादश। एतन्नामसङ्ग्राहकगाथाः—*"सिरिउसहसेण पहु सीहसेण चारूरू वज्जनाहो य (हक्खा)। चमरो सुज्जोय विदब्भ दिन्नो पहुणो वराहो य ॥ १ ॥ पहु नंद कोत्थुभो वि य, सुधम्म मंदर जसा अरिट्ठो य। चक्काउह संबे कुंभ भिसय मंडी य सुं(सं)भो य ॥ २ ॥ वरदत्त अज्जदिन्ना, तहिंदभूई य गणहरा पढमा। सीसा उसहाईणं, हरंतु पावाइं पणयाणं ॥ ३ ॥" पुनः किंविशिष्टान्? "निम्मविय" त्ति 'निर्मो निम्माण-निम्मवौ' इति [ सिद्धहेम ८।४।१९ ] प्राकृतसूत्रेण निम्मवादेशः, ततश्च निर्मापितानि-निष्पादितानि द्वादशाङ्गानि-श्रीभुवनतुङ्गसूरिव्याख्यायामुत्पादादीनि, असद्व्याख्यायामाचाराङ्गादीनि यैस्तान्, तथा 'निहतानङ्गान्' निर्नाशितमन्मथान् 'विमुक्तभयसङ्गान्' त्यक्तसंसारसम्बन्धान् निर्वाणगमनात्। पुनः किंविशिष्टान् (कथम्भूतान्)? करुणैव-दयैव अमृतं-पीयूषं तस्य जलनिधय इव समुद्रास्तान् एवंविधान् नमामीति गाथार्थः ॥ ३ ॥

अथ महर्षीणां चरित्राधिकारे प्रस्तूयमाने सर्वमहर्ष्यादिभूतत्वेन प्रथमं श्रीभरतर्षेः स्तुतिमाह—

**भरहमहारायरिसिं, गिह(हि)वेसुप्पन्ननाणवररयणं। दसहिं सहस्सेहि समं, निक्खंतं वंदिमो सिरसा ॥४॥**

व्याख्या—भरतमहाराजर्षिं "वंदिमो" त्ति वन्दामहे, वयमिति गम्यम्। महांश्चासौ राजा च महाराजो भरतश्चासौ महाराजश्च

* स. छाया "श्रीऋषभसेनः (पुण्डरीकः) प्रभुः सिंहसेनश्चारूर्वज्रनाभश्च। चमरः सुघोतो विदर्भो दत्तः प्रभवो वराहश्च ॥ १ ॥
प्रभुर्नन्दः कौस्तुभोऽपि च सुधर्मा (सुभूमो) मन्दरो यशा अरिष्टश्च। चक्रायुधः शङ्खः कुम्भो भिषजो मल्लिश्च शुम्भश्च (सम्भूतः) ॥ २ ॥
वरदत्त आर्यदत्तः तथेन्द्रभूतिश्च गणधराः प्रथमाः। शिष्या ऋषभादीनां हरन्तु पापानि प्रणतानाम् ॥ ३ ॥"

भरतमहाराजो भरतमहाराजश्चासौ ऋषिश्च भरतमहाराजर्षिस्तम् । किंविशिष्टं ? गृहवेषे–गृहस्थनेपथ्ये एव उत्पन्नं–प्रादुर्भूतं ज्ञानेषु–मत्यादिषु वररत्नमिव वररत्नं केवलज्ञानं यस्य तम् । पुनः कथम्भूतं (किंविशिष्टं) ? 'निष्क्रान्तं' गृहीतसाधुवेषं, कथं ? 'समं' सार्द्धं, कैः ? सहस्रैः, कतिसङ्ख्यैः ? दशभिः प्रस्तावाद् भूभुजामिति गाथार्थः ॥ ४ ॥

अथ बाहुबलिनं(लिं) स्तौति—

**हत्थिविलग्गस्स न केवलं ति सोऊण वरिसपडिमंते । पयपउमसमुप्पाडियनाणवरो जयउ बाहुबली ॥ ५ ॥**

व्याख्या—'बाहुबलिः' सौनन्देयः 'जयतु' जयमनुभवत्विति क्रियायोगः । किम्भूतः ? "पयपउम" त्ति पदपद्मस्य–चरणकमलस्य समुत्पाटनकाले एवेत्यध्याहाराद् उत्पादितज्ञानवरः–जातकेवलः । क्व ? वर्षप्रतिमान्ते, किं कृत्वा इति ? श्रुत्वा इति, इतीति किं ? 'हत्थि' त्ति 'हस्तिविलग्नस्य' गजारूढस्य न 'केवलं' पञ्चमज्ञानमित्यर्थः । इति गाथार्थः ॥ ५ ॥

**तं जायमउज्झाए, तक्खसिलाविसयसंधिपव्वइयं । वंदे बाहुबलिरिसिं, निवुयमट्ठावए सेले ॥ ६ ॥**

व्याख्या—इयं गाथा प्रक्षेपरूपाऽपि विशेषार्थप्रतिपादिका इति व्याख्यायते । 'तं' बाहुबल्यर्षि (लिनर्षिं) 'वन्दे' अभिवादयामि । किम्भूतं तं ? 'जातं' प्राप्तजन्मानं, कस्याम् ? 'अयोध्यायां' विनीतायाम् । पुनः किंविशिष्टं ? "तक्खसिलि" त्ति तक्षशिलानाम्नी पुरी तस्या विषयः–देशस्तस्य सन्धौ–सीम्नि प्रव्रजितं–आत्तव्रतम् । तथा 'निर्वृतं' प्राप्तशिवं, क्व ? अष्टापदे शैले । इति गाथाक्षरार्थः ॥ ६ ॥

अथ भरतान्वयिनामजितनाथं यावदशेषराजर्षीणां गाथात्रयेण स्तुतिमाह—

**सुरवइणा अहिसित्ता, भरहपए अट्ठ भरहवरपहुणो । आइच्चजसप्पमुहा, अट्ठ वि सासयसुहं पत्ता ॥ ७ ॥**

शलाकापुरुषाधिकारे महर्षिचरित्राधिकारान्तर्गतबाहुबलेः स्तवनम् ।

**अन्ने वि पुहइवइणो, उसहस्स पउप्पए असंखिज्जा । जाव जियसत्तुराया, अजियजिणपिया समुप्पन्नो ॥ ८ ॥**
**उज्झित्तु रज्जलच्छि, पव्वइया के वि सिवपुरं पत्ता । सव्वट्ठविमाणवरे, अवरे ते वंदिमो सव्वे ॥ ९ ॥**

व्याख्या—'सुरपतिना' इन्द्रेण भरतकेवलोत्पत्तावेव समागत्य इति शेषः, किम् ? 'अभिषिक्ताः' राज्ये स्थापिताः । अयं भावः—यथा भरतस्य केवलज्ञानमहिमा कृतस्तथाऽऽदित्ययशसश्च राज्याभिषेकमहिमा । कस्मिन् ? 'भरतपदे' आद्यचक्रिक्रमे । "अद्धभरहवरपहुणो" त्ति प्राकृतत्वाद् भरतार्द्धवरप्रभवः स्वामिनो जिनमुकुटधारकाश्च । यदागमः—*"राया आइच्चजसे, महाजसे अइबले य बलभद्दे । बलविरिय किंत्तिविरिय, जलविरिए दंडविरिए य ॥ १ ॥ एएहिं अद्धभरहं सयलं भुत्तं सिरेण धरिओ य । जिणसंतिओ य मउडो, सेसेहि न चाइओ वोढुं ॥२॥" ते के ? आदित्ययशःप्रमुखाः पूर्वगाथोक्ता अष्टावपि, किं ? 'शाश्वतसुखं' मोक्षस्थानं प्राप्ताः । इति प्रथमगाथाक्षरार्थः ॥ ७ ॥ अन्येऽपि "पुहइवइणो" त्ति 'पृथिवीपतयः' भूभुजः "उसहस्स" त्ति 'ऋषभस्य' आदितीर्थकृतः, कस्मिन् ? "पउप्पए" त्ति 'पश्चात्पदे' पदात्पदे पश्चादन्वय इत्यर्थः, 'असङ्ख्येयाः' सङ्ख्यातीताः समुत्पन्ना इत्यध्याहार्यम् । कियत्कालं ? यावद् जितशत्रुराजा, कोऽसौ ? अजितजिनस्य-द्वितीयतीर्थकृतः पिता-जनकः अजितजिनपिता 'समुत्पन्नः' जातः । इति द्वितीयगाथाक्षरार्थः ॥ ८ ॥ तैः किं कृतम् ? इत्याह—"उज्झित्तु" त्यक्त्वा, कां ? राज्यलक्ष्मीं 'प्रव्रजिताः' गृहीतव्रताः सन्तः 'केऽपि' तेषां मध्यात् 'शिवपुरं' मोक्षपत्तनं निराबाधमिति कृत्वा 'प्राप्ताः' प्रापुः । "अवरे" त्ति 'अपरे' अवशिष्टाः 'सर्वार्थविमानवरं' पञ्चानुत्तरविमानमुख्यं च । "सव्वट्ठपत्थडवरे" इति

* स. छाया-"राजाऽऽदित्ययशा महायशा अतिबलश्च बलभद्रः । बलवीर्यः कीर्तिवीर्यो जलवीर्यो दण्डवीर्यश्च ॥ १ ॥ एतैरर्द्धभरतं सकलं भुक्तं शिरसा धृतश्च । जिनसत्कश्च मुकुटः शेषैर्न शक्तो वोढुम् ॥ २ ॥"

पाठे द्वाषष्टितमे पञ्चोत्तरविमानरूपे अपरे प्राप्ता इत्यत्राप्यावृत्त्यते। 'ते' त्ति तान् 'सर्वान्' असङ्ख्यावान् सिद्धि(द्ध)द(ग)ण्डिकोकान् राजर्षीन् वन्दामहे वयमिति सूत्रकाराभिप्रायः । इति तृतीयगाथाक्षरार्थः ॥ ९ ॥ अत्र तु सिद्धि(द्ध)द(ग)ण्डिकाधिकारो वाच्यो, नोच्यतेऽत्र ग्रन्थगौरवात् । तथाऽत्र भरत-बाहुबल्यादित्ययशःप्रभृतीनां प्रबन्ध ऋषभचरितानुगत एव वेदितव्यः ।

शेषचक्रिणां स्तुतिमाह—

**तणमिव भरहपहुत्तं, चइत्तु नरवइसहस्सपरियरिए । निक्खंते नरनाहे, नमामि नव सगरपामुक्खे ॥ १० ॥**

व्याख्या—'नमामि' नमस्करोमि, कान् ? 'नरनाथान्' नृपान्, किंनाम्नः ? 'सगरप्रमुखान्' सगरः—सुमित्रभूरादिः—प्रथमो येषां तान् । कतिसङ्ख्यान् ? नव अष्टम-द्वादशयोर्नैतानङ्गीकारात् । किंविशिष्टान् ? निष्क्रान्तान् । कथं ? नरपतिसहस्रपरिकरितान् प्राकृतत्वाद् राजन्यसहस्रपरिवारेणेत्यर्थः । किं कृत्वा ? 'त्यक्त्वा' अपहाय, किं तत् ? 'भरतप्रभुत्वं' भरतैश्वर्यं, कमिव ? 'तृणमिव' कक्षवत् । इति गाथार्थः ॥ १० ॥

भावार्थस्तु चरित्रेणोच्यते—

पुर्यामासीदयोध्यायां, जितशत्रुरितीश्वरः । यत्प्रतापजितोऽद्यापि, सविता सेवते नभः ॥ १ ॥ तदग्रमहिषी जामद्विजया विजयाह्वया । शीलरेखेन्दुलेखेव, यदीयाऽऽह्लादते न कम् ? ॥ २ ॥ तस्याश्चतुर्दशस्वप्नसूचितस्तनयोऽजनि । अजिताख्यो द्वितीयोऽर्हन्, जगन्नेत्रसुधाञ्जनम् ॥ ३ ॥ अथापरोऽनुजस्तस्य, सुमित्रविजयाभिधः । युवराड् यशोमती तस्य, प्रेमपात्रं प्रिया प्रिया ॥ ४ ॥ तस्याः सूनुरनूनश्रीरभवत् सगराभिधः । क्रमेणोद्वोढराजन्यकन्यौ तौ भ्रातरावथ ॥ ५ ॥ राज्ये न्यस्याऽजितं पुत्रं, यौवराज्येऽनुजाङ्गजम् । जितशत्रुरलाद् दीक्षां,

सानुजोऽध्या सतां श्रयम् ॥ ६ ॥ लोकान्तिकैः(क) सुरैरेत्य, समयं ज्ञापितोऽजितः(जिनः) । सगराय निजं राज्यं, दत्त्वा दानं च वार्षिकम् ॥ ७ ॥ व्रतमादाय सम्प्राप्तकेवलो व्यहरद् भुवि । सगरः साधिताखण्डषट्खण्डश्चक्रवर्त्यभूत् ॥ ८ ॥ [ युग्मम् ] षष्टिः सहस्रास्तस्यासन्, जह्नुमुख्यास्तनूद्भवाः । तोषितो जह्नुना चक्री, वरं वृण्विति तं जगौ ॥ ९ ॥ सोऽप्याख्यद् देवपादानां, प्रसादादनुजानुगः । सरत्नः कौतुकं भूमेर्यथा वीक्षे तथाऽऽदिश ॥ १० ॥ ततोऽसौ चक्र्यनुज्ञातः, सुबुद्धिसचिवादिभिः । समं चचाल वाचाल-कोलाहलितभूतलः ॥ ११ ॥ नानाराम-पुर-ग्रामरम्यां भूमिं विलोकयन् । क्रमादष्टापदं(दे) जह्नुः, प्राप पापपराङ्मुखः ॥ १२ ॥ तत्र चेतश्चमत्कारकारणं पारणं दृशोः । वीक्ष्य स्वर्णमयं चैत्यं, जह्नुः पप्रच्छ मन्त्रिणम् ॥ १३ ॥ केनेदं कारितं मन्त्रिन् !, सुबुद्धिरप्यथाब्रवीत् । आसीत् कुमार ! त्वद्वंश्यो, भरतो वृषभाङ्गभूः ॥ १४ ॥ तेन वर्द्धकिरत्नेन, कारितं चैत्यमेतकम् । कुर्वेऽस्मुर्वीं वीक्षस्व, तदित्याह स मन्त्रिणम् ॥ १५ ॥ [ युग्मम् ] सर्वां निर्वण्य सोऽप्युर्वीं कुमारं प्राह नेदृशी । भूरस्ति का(क्वा)प्यतो रक्षां, तीर्थस्यास्य विधीयताम् ॥१६॥ ततो वर्द्धकिरत्नेनाभितो गिरिमचीकरत् । सहस्रयोजनागाधां, परिखां चक्रिणोऽङ्गजः ॥१७॥ पेतुर्नागकुमाराणां, भवनेऽवकरोत्कराः । स्वस्वामिभवाज्जग्मुः ( स्वस्वामिजग्मुः ) सम्भ्रान्तास्ते ज्वलनप्रभं प्रभुम् ॥१८॥ भोः कुमार ! किमारब्धं, त्वयेति नागराड् जगौ । सोऽप्याह न पुनः कुर्वे, तीर्थभक्त्या कृतं ह्यदः ॥१९॥ नागेन्द्रो द्राग् ययौ नागलोकमेषोऽप्यचिन्तयत् । वारिणाऽन्तर्गङ्गप्राया, विलेयं परिखा खलु ॥२०॥ मित्त्वाय दण्डरत्नेन, जाह्नवीं परिखामसौ । वारिवारैरपूरिष्ट, दिष्टान्तमुपदेष्टृभिः ॥ २१ ॥ ततो गेह(हे)पयःपाताद्, भीता नागा निजेशितुः । तदाऽऽचख्युरथैषोऽपि, नागानाहानुशिष्टये ॥ २२ ॥ दृग्विषाशीविषाकारधारिणोऽभ्येत्य तेऽपि तान् । भस्मसाच्चक्रिरे सर्वान्, सम्यग्दृगवलोकनात् ॥ २३ ॥ शिविरे प्रससारोच्चैः, शोककोलाहलो रवः । अन्तःपुरस्त्रियः पेतुः, मुक्तकेशा महीतले ॥ २४ ॥ निवार्य

कथार्णवाङ्कायां वृत्तौ प्रथमो विश्रामः ।

शलाकापुरुषाधिकारे द्वितीयसगरचक्र्यधिकारः ।

मन्त्रिणः शोकं, सर्वमादाय तद्बलम् । प्रस्थाय नगराभ्यर्णं, निरानन्दाः समेयरुः ॥ २५ ॥ कथङ्कारमुदन्तोऽयं, स्वामिनो ज्ञापयिष्यते ? । यावद् विमर्शमन्योन्यं, किंकर्त्तव्यतया व्यधुः ॥२६॥ तावदेको द्विजः प्राप्तस्तानवस्थाप्य स स्वयम् । स्कन्धयोः शवमाधाय, चक्रिणो द्वारमासदत् ॥ २७॥ पूत्कुर्वंश्चक्रिणा पृष्टः, प्राहैको मे मृतः सुतः । प्रसद्योज्जीवय स्वामिन्ननेकोपायकोविद ! (दः) ॥२८॥ तत्प्रत्ययाय वैद्योऽवक्, कशाप्यमृतमर्त्यतः ( विप्र ! कस्मादमृत्युतः ) । कुलाद् भस्मानय स्वस्य, सूनोर्जीवितहेतवे ॥ २९ ॥ भ्रामं भ्राममनेकेषु, कुलेष्वाप न तत् स तु । आगतश्चक्रिणा प्रोक्तो, माऽसमाधिं विधेहि भोः ! ॥ ३० ॥ ईदृगेव स्वभावोऽस्य, संसारस्यास्थिरात्मनः । अतो देयं मनो धर्मे, सर्वशर्मनिबन्धने ॥ ३१ ॥ इत्याद्युपदिशन्तं तं, द्विजः प्राह प्रभो ! जनः । परोपदेशे(श)कुशलो, न पुनः करणे स्वयम् ॥ ३२ ॥ चक्र्याह नैवमित्युक्ते, द्विजोऽवक् तर्हि ते सुताः । षष्टिः सहस्रा नागेन्द्रैर्दृक्षा दग्धा मृतिं गताः ॥३३॥ वज्रपातमिवाकर्ण्य, कर्णक्रकचवद् वचः । तत् तदा मूर्च्छितश्चक्री, पपात क्षितिमण्डले ॥३४॥ ततः क्रमाप्तचैतन्यः, उपचारैः स शीतलैः । हाहा ! स्वच्छाशया ! वत्सा !, हा विनीताः ! सुरायहाः ! ॥ ३५ ॥ स्मारं स्मारं गुणानेवं(षां), धारं धारं वरात्मनाम् । मुक्तकण्ठं रुरोदाश्रुश्रेणिनिःश्रेणितोदरः ॥ ३६ ॥ [ युग्मम् ] द्विजोऽवक् त्वादृशाः स्वामिन् !, यदि शोकवशंगताः(वदाः) । महाविद्या महैश्वर्या(महाशूरा), मादृशां तर्हि का कथा ? ॥३७॥ यावन्निवारयेत् शोकाद्, विप्रस्तं युक्तिभिर्मनाक् । पूर्वसङ्केतितास्तावदमात्यादय ऐयरुः ॥३८॥ चक्री पप्रच्छ तान् सर्वेऽकस्मात् किं (सर्वान्, कस्मात् ते) निधनं गताः ? । तेऽपि साधुसुराः प्रोचुर्वृत्तान्तं सर्वमादितः ॥ ३९ ॥ इतश्चाष्टापदाभ्यर्णवासी तत्राऽऽययौ जनः । रक्ष रक्षेति पूत्कुर्वन्, कुतश्चक्रीति तान् जगौ ? ॥४०॥ देव ! या परिखाऽपूरि, त्वत्पुत्रैर्जाह्नवीजलैः । सा(सं-) प्लावयति नो ग्राम-पुरादीनतिविस्तृता ॥ ४१ ॥ ततो भगीरथं चक्री(पौत्रं), प्राहिणोद् जह्नुनन्दनम् । वत्स ! गच्छाऽनुनीयैषां, तन्निवारय साध्वसम् ॥ ४२ ॥ अनेनाष्टापदं

गत्वा, तपोऽष्टममनुष्ठितम् । आराधनीय नागानां, बलि-पूजादिपूर्वकम् ॥ ४३ ॥ तदादितो नागबलिर्विख्यातो जनतास्वभूत् । विज्ञायावधिनाऽऽयातं, नागेन्द्रं प्राह जह्नुसूः ॥४४॥ युष्मदादेशतो गङ्गामिमां नयामि वारिधौ । तुष्टोऽवोचदसौ कार्यं, यथेच्छं कुरु निर्भयः ॥४५॥ सर्वे निवारिताः सन्ति, नागा भरतवासिनः । दण्डरत्नेन चिक्षेप, पूर्वाब्धौ तां ततोऽसकौ ॥ ४६ ॥ यत्रासौ मिलिता वार्द्धौ(र्द्धि), गङ्गासागरनामकम् । अद्यापि यद्(अद्य यावत्)जने(ना)ख्यात, तत्र तीर्थमभूत् पुनः ॥४७॥ जाह्नवीं जह्नुनानीतेत्याख्यातेयं तथाम्बुधौ । भगीरथेन तु क्षिप्ता, तेन भागीरथीत्यपि ॥ ४८ ॥ तेनात्राप्यर्चिता नागास्तुष्टैस्तैरपि सोऽर्चितः । राज्याभिषेक चक्रेऽस्य, क्रमाच्चक्री समागतम् ॥४९॥ स्वयं जिनाजितोपान्ते, प्राव्राजीद् वृजिनोज्झितः । क्षीणाष्टकर्मा परमानन्दानन्दमवाप च ॥ ५० ॥ इति सगरचक्रि-(श्रीसगर)चरित्रम् ॥

अथ तृतीयचक्रिणश्चरितोद्देशः—

अत्रैव भारते वर्षे, श्रावस्त्यां पुरि पार्थिवः । समुद्रविजयस्तस्य, भद्रा भद्राकृतिः प्रिया ॥ १ ॥ तस्याश्चतुर्दशस्वप्नसूचितोऽजायताङ्गजः । तृतीयो मघवा नाम, चक्री शक्रपराक्रमः ॥ २ ॥ क्रमेण साधिताखण्डषट्खण्डश्चक्रिणः श्रियम् । भुक्त्वा व्यरंसीद् भोगाद् आकण्ठभुक्त इवोदनात् ॥ ३ ॥ भवभावं विभाव्यासौ, प्रव्रज्य गुरुसन्निधौ । सनत्कुमारकल्पेऽगात्, सुकृती सुकृताश्रयात् ॥ ४ ॥ इति तृतीयचक्रिचरित्रम् ॥

अथात्राभङ्गसौभाग्यभङ्गीतरङ्गीभूतपुरुहूतप्राभृतीकृतसुकृतशतप्राप्य[राज्य]राजराजचिह्नवरतराभरणश्रीतिरस्करण-नमस्करणचरणप्रवण-श्रमणगुणधरण-प्रगुणितप्रसिद्धलब्धिसमृद्धतावगणितमहोग्ररोगसम्यक्सहन-महर्षिमुख्यरेखानिकष-महासाहसिकधुरन्धरताद्यवदातावदात-श्री-

सनत्कुमारचक्रिणोऽधिकारे प्रक्षेपरूपे व्योपज्ञे इमे वृत्तगाथे पठिष्ये—

सरूवहाणिं सुणिऊण मायादियाणणाओ य सणंकुमारो । छक्खंडसामित्तमुविक्ख दिक्खं, गिण्हित्तु पत्तो म सणंकुमारे ॥११॥ वाससयसत्तसहिया लद्धिसमिद्धेण वेयणा जेण । उग्गाणं रोगाणं, तं नमिमो मुणिवरं निच्चं ॥१२॥

व्याख्या—तं 'मुणिवरं' साधुप्रधानं "नमिमो" नमस्कुर्मो वयमिति क्रियायोगः । शेषं सुगमम् । नवरम्—स्वरूपहानिं 'श्रुत्वा' निशम्य, कस्मात् ? मायारूपौ द्विजौ–विप्रौ तयोराननात्–वक्त्र एवकारार्थत्वात् मुखादेव नान्यस्माद् गुर्वादेरिति, एतदेव वैराग्यकारणमभूदित्यर्थः । 'उपेक्ष्य' इति क्षणविनश्वरं नरकानुयायि इत्युपेक्षां कृत्वा इत्यर्थः । "वाससयसत्तसहिय" त्ति वर्षसप्तशतव्याधिवेदन(ना)सहनम् उत्तराध्ययनोपदेशमालावृत्ति-सनत्कुमारचरितादिग्रन्थानुसारेणोक्तम्, प्रकीर्णकादिषु कुत्रचित् सप्तसहस्रागमप्युक्तत्वात्; तत्त्वं तत्त्वविद्भिर्विभाव्यम् । इति समासार्थः ॥ ११-१२ ॥ व्यासार्थस्तु प्रबन्धेनोच्यते—

अभीह भरतक्षेत्रे, पुरजङ्गलनीवृति । श्रीहस्तिनापुरं तत्र, कुरुवंशोऽतिविश्रु(श्रु)ते ॥ १ ॥ अश्वसेनाभिधो भूपः, सहदेवयस्य वल्लभा । तस्याः सनत्कुमाराख्यश्चतुर्थश्चक्रभृत् सुतः ॥ २ ॥ समं महेन्द्रसिंहेन, कालिन्दी-सूरसूनुना । सपांशुक्रीडितेनाऽऽससाद-तिगः स यौवनम् ॥ ३ ॥ वसन्तसमयेऽन्येद्युर्नानानागरिकावृतः । चिरं क्रीडाभिरामीक्रोडे चिक्रीड स क्रमात् ॥ ४ ॥ स्वं नामभमउश्रुतः, क्षत्रियाणां तनूद्भवाः । वार्द्धिकल्लोलनामानं, कुमारोऽप्यारुरोह तम् ॥ ५ ॥ वक्रशिक्षास्वशाल्मो, गन्तुं पञ्चमधारया । विशुद्धोतपक्षीतः, स तेगादृश्यतां क्षणात् ॥ ६ ॥ यावन्नृपोऽन्वगात् तावद्, वाताद् भग्न(भग्नः)क्रमक्रमः । महेन्द्रसिंहस्तं पश्चाद्, व्याघुट्य प्रहितः स्वयम् ॥ ७ ॥ भ्रामं भ्रामं पुरं ग्रामं, स वर्षं यावदन्यदा । दुष्टश्वापदसङ्कीर्णां, प्रविष्टो विकटाटवीम् ॥ ८ ॥ सारसानां रवं श्रुत्वाऽऽगाय

गन्धं सरोरुहाम् । हृष्टः प्रवृत्तोऽभिमुखं, तत्रापश्यत् सरः पुरः ॥ ९ ॥ शुश्राव वेणु-वीणादिवन्धुरं गीतमद्भुतम् । उत्फुल्ललोचनो यावद्,
याति तावद् ददर्श सः ॥ १० ॥ सुराङ्गनोपमस्त्रीभिः, सनत्कुमारमावृतम् । किमिन्द्रजालं ? किं सत्यमिति शङ्कां चकार च ॥ ११ ॥
[युग्मम्] पपाठ मागधस्तावदश्वसेननृपात्मज ! । जय त्वं सनत्कुमार !, ततोऽसौ निश्चिकाय तम् ॥ १२ ॥ हर्षपूर्णमनाः प्राप्तः,
स कुमारस्य दृक्पथम् । उपलक्ष्याभ्युत्थितोऽसौ, पपातैषोऽस्य पादयोः ॥ १३ ॥ उत्थाप्याऽऽलिङ्ग्य तं (ऽऽलिङ्गितः) स्नेहादासीनावासने
यमौ । निवार्य गीततुमुलं, पार्श्वेऽश्रुश्च नभश्चराः ॥१४॥ हर्षाश्रूण्यपसार्याक्ष्णोर्मित्रं प्राहाऽश्वसेनसूः । रौद्राटव्यां कथमस्यां, प्राप्तो ? मां
ज्ञातवान् कथम् ? ॥ १५ ॥ मद्वियोगे महाराजो, माता च(तु) किमु चक्रतुः ? । इत्युक्ते सर्ववृत्तान्तं, यथावृत्तं शशंस सः ॥१६॥ अथासौ
स्नापितश्चारुस्त्रीभिर्विहितभोजनः । पप्रच्छाथाहृतः कुत्र ?, प्राप्तश्चैतां श्रियं कथम् ? ॥ १७॥ श्रुत्वेति चरितं शंसन्, लज्जमानो नृपात्मजः ।
मुख्यां चकुल(विपुल)मत्याख्यामुदूढशतयोषिताम् ॥१८॥ आयाति मे प्रिये ! निद्रा, मदीयं सुहृदः पुरः । सम्बन्धं विधया ज्ञात्वाऽऽख्या-
हीत्याख्यत् निजां प्रियाम् ॥ १९ ॥ स्वयं रतिगृहं प्राप्त, इत्युक्त्वाऽथो तमाह सा । तदाऽश्वेन निवृत्तानां, भवतां प्रापितोऽटवीम् ॥ २० ॥
द्वितीयेऽपि दिने गच्छन्, मध्याह्नेऽश्वः श्रमातुरः । निष्कासितरसज्ञोऽस्थात् छायायां भूरुहस्तले ॥ २१ ॥ उत्तीर्योत्तार्य पर्याणं, यावत्ता-
र्योऽवतिष्ठते । तावदकार्यकारीति, मुक्तः प्राणैस्तुरङ्गमः ॥ २२ ॥ मुक्त्वा मृतं कुमारस्तं, जलायेतस्ततो भ्रमन् । तदनासादयन्नाकुलीभूतः
सुकुमारतः(त्वत्) ॥ २३ ॥ दूरात् सप्तच्छदं दृष्ट्वा, तत्र गत्वेक्षणद्वयम् । प्रसार्य पतितो भूमौ, निश्चेष्टः काष्ठवत् नृप ॥ २४ ॥ तावत्
तत्पुण्यनुन्नेन, यक्षेण तन्निवासिना । सर्वाङ्गे कृपया सिक्तः, आनीय शीतलं जलम् ॥ २५ ॥ पायितोऽम्भः सचैतन्यः, कस्त्वं ? चेदं
कुतस्त्वया । आनीतमिति तं प्राह, यक्षोऽवगत्रवास्यहम् ॥२६॥ मानसात् सरसो वार्यानीय त्वां सिक्तवान् पुनः । आर्य आहास्य स्नानेन,

तापो मे याति नान्यथा ॥ २७ ॥ स प्राह पूरयामीच्छां, तवेत्युत्पाट्य नीतवान्। हस्ताभ्यां तत्र कृष्णाक्षो यक्षो योद्धुमढौकत ॥२८॥ पूर्वं मुक्तो महावातो, ध्वस्तवृक्षः सशर्करः। ततो व(वा)हु(ह)लधूलीभिर्धूसरं कृतमम्बरम् ॥२९॥ मुक्ताः कृताट्टहासास्याः, पिशाचाश्चातिभीषणाः। तैरभीतो नागपाशैर्बद्धः क्रुद्धेन तेन सः ॥ ३० ॥ आटकृत्य त्रोटयित्वा तान्, जीर्णरज्जूनिवौजसा। यक्षो मुष्टिप्रहारेण, विहितोऽनेन रणवशः ॥ ३१ ॥ हतोऽयोमुद्गरेणासौ, यक्षेणोरःस्थले क्रुधा। चन्दनद्रुममुन्मूल्योर्व्या(र्वी)स्तेनाऽऽच्छोटितः सुरः ॥ ३२ ॥ छिन्नद्रुवत् पपातोर्व्यां, यक्षोऽधो नृपसूपरि। महान्तममुचच्छैलं, तेनासौ मूर्च्छितोऽपतत् ॥ ३३ ॥ तेनापि लब्धचैतन्येनाऽऽहतो दृढमुष्टिना। शतशर्करवद् जातः, सुपर्वेति मृतो न तु ॥ ३४ ॥ रसित्वा विरसं नष्टः, कौतुकार्थमिताः सुराः। खेचराश्च पुष्पवृष्टिं, कुमारस्योपरि व्यधुः ॥ ३५ ॥ अहो! यक्षः कुमारेण, जितोऽनेनेति वादिनः। यक्षं जित्वा ततोऽत्रासौ, सन्ध्यायां सरसोऽचलत् ॥ ३६ ॥ गतोऽग्राक्षीद् सुपं क्वाचित्, नन्दनोद्यानमध्यगाः। भानुवेगाङ्गजा अष्टौ, दिक्कुमारीरिवाद्भुताः ॥ ३७ ॥ सस्पृहं वीक्षितस्ताभिरार्यपुत्रोऽपि का इमाः?। पृच्छामीति वदन्तेऽगात्, पप्रच्छैकां च कन्यकाम् ॥ ३८ ॥ का भवत्यः? किमर्थं वा, तिष्ठन्ति निर्जने वने?। साऽप्याहात्रास्त्यदूरे नः, पूः प्रिय(या)सङ्गमाभिधा ॥३९॥ तत्रेहि कुरु विश्रामं, तावदुक्त्वेति किङ्करैः। दर्शिताध्वाऽस्तसमये, प्रापितस्तां पुरीमसौ ॥४०॥ ताभिः पश्चुकिमी राज्ञे, दर्शितश्चाथ भूपतिः। अभ्युत्थायाऽऽसयित्वाऽऽशु, विष्टरेऽद्योऽब्रवीन्मुदा ॥४१॥ आसां कनीनामष्टानां, दिष्टोऽर्चिर्मालिसाधुना। वरो वरस्तवं कृष्णाक्षयक्षस्य जयलक्ष्मणा ॥ ४२ ॥ अर्हस्युद्वोढुमे(-च त्वं वदित्याकर्ण्य मौनवान्।) तास्त्वमित्याकर्ण्य मौनवान्। माहितः पाणिना पाणिः(म्), स तासां बद्धकङ्कणः ॥४३॥ ताभिः सहायं (स ताभिः सह) पर्यङ्के, सुप्तो रतिगृहे निशि। सूस्थमपश्यदात्मानं, प्रबुद्धो ह्यचिन्तयत् ॥४४॥ किमाश्चर्यमिदं? बद्धकङ्कणं करमीक्ष्य सः। अविषण्णमनाः शून्यारण्ये गन्तुं प्रचक्रमे ॥४५॥

शैलोपरि महावासं, मणिस्तम्भालिशालिनम्। वीक्ष्येन्द्रजालं किमिदमपीति ध्यातवानसौ ॥ ४६ ॥ तदासन्ने स्थितो नार्याः, शुश्राव करुणं स्वरम्। निर्भीः प्रविष्टो भवनं, प्राप्तः सप्तमभूमिकाम् ॥ ४७ ॥ तत्र दिव्या कनी दृष्टा, रुदन्त्यथ वदन्त्यदः। त्वमेव सनत्कुमारः, (र!) कुरुवंशाब्धिचन्द्रमाः ॥४८॥ अन्यजन्मन्यपि स्वामीत्युदित्वा साऽरुदत् पुनः। स्वनामशङ्कितेनाऽऽश्वासनेनापृच्छि तेन सा ॥ ४९ ॥ [युग्मम्] किं त्वं सनत्कुमारस्य भवसत्र यतस्त्वया। शरणं प्रतिपन्नोऽसौ ?, श्रुत्वा साऽऽहाऽऽशया प्रियः ॥ ५० ॥ साकेतपुरनाथस्य, सुरप्रभस्य सुन्दरी। चन्द्रयशास्तयोः पुत्री, प्राणेभ्योऽस्म्यतिवल्लभा ॥५१॥ रूपं चित्रस्थमालोक्याऽऽश्वसेनेर्दूतहस्तगम्। जातानुरागा दत्ताऽहं, पित्राऽमुष्मै जनाननात् ॥ ५२ ॥ जहार खेचरस्तावन्मां कुट्टिमतलाद् युवा। विद्याविनिर्मितावासेऽमुष्मिन् मुक्त्वा गतः क्वचित् ॥५३॥ एवं वदन्त्यामेवास्यां, स एत्याऽशनिवेगसूः। आर्यपुत्रं वज्रवेगो व्योम्न्युल्लालितवान् बलात् ॥ ५४ ॥ ततो हाहारवं बाला, कुर्वाणा मूर्च्छिताऽपतत्। कुमारो मुष्टिघातेनावधीत् तं दुष्टखेचरम् ॥५५॥ एत्याक्षताङ्ग आश्वास्य तामुक्त्वोदन्तमात्मनः। उपयेमे सुनन्दाऽऽख्यं, स्त्रीरत्नं भविताऽस्य सा ॥ ५६ ॥ इतश्च वज्रवेगस्य सन्ध्यावल्यनुजाऽऽययौ। दृष्ट्वा भ्रातृवधं क्रुद्धाऽस्मार्षीच्च ज्ञानिनो वचः ॥५७॥ यद् भ्रातृहन्तुः पत्नी त्वं, भविष्यसीत्युपस्थिता। विवाहायानुमत्याऽस्याः, कुमारोऽङ्गीचकार ताम् ॥५८॥ अत्रान्तरे हरिश्च(च)न्द्र-चन्द्रसेनाख्यखेचरौ। आयातावार्यपुत्रान्ते, आहतु(स्तं निवन्धनम्)र्नतिपूर्वकम् ॥ ५९ ॥ विभो! विद्यावलो(लात्) ज्ञात्वाऽशनिवेगो नभश्चरः। पुत्रविष्टान्तवृत्तान्तं, समायाति तवोपरि ॥६०॥ चन्द्रवेग-भानुवेगाभ्यामावां प्रेषितावतः। स्वपुत्रौ रथ-सन्नाहयुतौ युष्मदुपास्तये ॥६१॥ अस्मत्तातावपि प्राप्तावेव सेवाकृते तव। एतयोर्वदतोरेयायातौ तावपि च क्षणात् ॥६२॥ ततः सन्ध्यावलीदत्तप्रज्ञप्ति(प्त्या)विद्यान्वितः। कुमारोऽशनिवेगेन, सार्धं योद्धुं प्रचक्रमे ॥ ६३ ॥ कुमाराशनिवेगौ द्वौ, भग्नयोः सैन्ययोर्द्वयोः। युयुधाते कुमारेऽसौ सर्पास्त्रममुचत् क्रुधा ॥ ६४ ॥ तदस्त्रं (ततस्तं)

आग्नेयास्त्रं वारुणास्त्रेणाहार्षीद् भूपसूरपि ॥६५॥ वायव्यास्त्रं मुमोचारिः, शैलास्त्रेण जहार सः ।
गरुडास्त्रेण, तेनाऽमुञ्च(च)द्य खेचरः । तेनापि छिन्न(छिन्ने)तन्मुष्टौ, स
विद्याभृद् धनुरादायामुचच्छरपरम्पराम् ॥ ६६ ॥ चिच्छेद कुमारस्तज्ज्यां, सोऽसिं लात्वाऽथ(प्र)धावितः । स्तूयमान-
दोर्युद्धार्थमापतत् ॥६७॥ चकर्त्त चक्री चक्रेण, शीर्षं तस्याथ तत्क्षणात् । सङ्क्रान्ता तस्य राज्यश्रीस्तस्मिन् विद्याभृतामपि ॥६८॥
श्चन्द्रवेगाद्यैर्हत्वाऽशनिवेगकम् । व्योम्नो रथेन तत्रावतीर्णः सौधावतंसके ॥६९॥ सन्ध्यावली-सुनन्दाभ्यां, हृष्टाभ्यां वीक्ष्य भाषितः ।
आर्यपुत्र! स्वागतं ते, वैताढ्येऽगादसौ ततः ॥७०॥ तत्र विद्याधरैर्वर्य(र्यो)तूर्य(भूरि)निर्घोषपूर्वकम् । सर्वविद्याधरैश्वर्याभिषेको विहितोऽस्य तु
॥ ७१ ॥ अन्यदा चन्द्रवेगेन, विज्ञप्तश्चक्रभृद् विभो! । यथा कन्याशतं तेऽदो, भानुवेगस्य चापराः ॥ ७२ ॥ अष्टौ ताः कन्यकाश्चक्री,
चतुर्थः परिणेष्यति । सनत्कुमार इत्युक्तं, पुराऽर्चिर्मालिसाधुना ॥७३॥ [ युग्मम् ] मानसाख्यसरस्तोऽसौ, मासमात्रेण चैष्यति । स्नानोत्तीर्ण-
मसिताक्षयक्षो द्रक्ष्यति तं रिपुः ॥७४॥ कथं पूर्वभवे वैरी, सोऽभूदिति मुनिर्जगौ । काञ्चनाख्यं पुरं तत्राऽऽसीद् विक्रमयशा नृपः ॥७५॥
स्त्रीणां शतानि पञ्चास्य, नागदत्तोऽत्र सार्थपः । विष्णुश्रीस्तस्य पत्न्यास्तेऽभङ्गसौभाग्यसेवधिः ॥ ७६ ॥ कथञ्चिदन्यदा राज्ञा, दृष्टा साऽन्तः-
पुरान्तरे । क्षिप्ता रागार्दितेनाथ, सार्थेशस्तद्वियोगतः ॥ ७७ ॥ प्रिये! चन्द्रानने! देहि, दर्शनं विलपन्निति । बालैर्वृतोऽभ्रमदुन्मत्तीभूतो
वासरान् ललौ ॥ ७८ ॥ जनापवादं तं राजाऽपहाय तन्मयात्मताम् । भूत्वा मुक्त्वा राज्यचिन्तां, तां सिषेवेऽधिकाधिकम् ॥ ७९ ॥
अन्यदाऽन्तःपुरस्त्रीभिर्मारिता कार्मणेन सा । नागदत्त इवोन्मत्तीभूतस्तद्रागतो नृपः ॥ ८० ॥ तद्वपुर्भस्मसात् कर्त्तुं, न ददात्यथ मन्त्रिभिः ।
राज्ञो दृष्टिं वञ्चयित्वा, छर्दितं तद् वने क्वचित् ॥ ८१ ॥ तामपश्यन्नथो राजा, त्रिदिनीं क्षुत्-तृषार्दितः । स्थितो म्रियत इत्यस्य नीत्वा सा
तत्र दर्शिता ॥ ८२ ॥ ततः सलसलत्कृम्याकुलमालोक्य तन्नृपः । कलेवरं गलत्पूति, काककृष्टेक्षणद्वयम् ॥ ८३ ॥ अहो! मम महान् मोहो,

शलाकापु-
रुषाधिकारे
चतुर्थ-
सनत्कुमार-
चक्र्य-
धिकारः ।

यत्कृते दुष्कृतं कृतम् । तस्यासारशरीरस्यावस्थेयं पश्यतेदृशी ॥ ८४ ॥ अकर्प(र्प)प्राप्तवैराग्य, इति ध्यायन्नसौ नृपः । त्यक्त्वा राज्यं सुव्रता-
चार्योपान्ते व्रतमग्रहीत् ॥ ८५ ॥ [ त्रिभिः सम्बन्धः ] चतुर्थ-पष्ठाष्टमादि, कृत्वा संलेखनां पुनः । मृत्वा सनत्कुमारेऽगात्, च्युत्वा
रत्नपुरेऽभवत् ॥ ८६ ॥ श्रेष्ठिसूर्जिनधर्माख्यः, पालयन् द्वादशव्रतीम् । सम्यग्दृष्टिर्जिनार्चां सः, कुर्वन् निनाय वासरान् ॥ ८७ ॥
इतश्च नागदत्तोऽपि, प्रियाविरहदुःखितः । आर्त्तध्यानात् मृतो जातस्तिर्यग्योनावनेकशः ॥ ८८ ॥ ततः सिंहपुरे जज्ञेऽग्निशर्माख्यो
द्विजात्मजः । व्रतमादत्त कालेन, स वैराग्यात् त्रिदण्डिनः ॥८९॥ मासद्वयोपवखेण(सेन), पारयन् रत्नपुर्यगात् । राद् भागवतभक्तोऽस्ति,
यत्र श्रीहरिवाहनः ॥ ९० ॥ यने तपस्विनं श्रुत्वा, पारणायाऽऽजुहाव राट् । सोऽप्यागतो दैवयोगाद्, जिनधर्मं ददर्श च ॥ ९१ ॥
रोपारुणेक्षणः पूर्ववैरात् स नृपतिं जगौ । पृष्ठेऽस्य पायसं तप्तं, स्थाल्यां मे परिवेपय ॥ ९२ ॥ राजाऽऽहान्यस्य पृष्ठेऽद्धि, स प्राहैत-
द्वि(द्धि)नाऽन्यथा । किंकर्त्तव्यतया मूढो, राजाऽप्येवममन्यत ॥ ९३ ॥ ततस्तथाकृत:(ते) श्रेष्ठी, केवलं कर्मजं फलम् । जानन्नसिभविद्वेषं,
दधौ धर्मधुरन्धरः ॥ ९४ ॥ समांसासृक्-त्वगुभुक्तेऽस्मिन्, स्थाल्युत्खाताऽस्य पृष्ठतः । श्रेष्ठ्यागत्य गृहं(ह)चैत्यचर्चां चक्रेऽतिभक्तितः ॥९५॥
क्षमयित्वाऽखिलं वन्धुवर्गं लात्वाऽऽर्हतं व्रतम् । निर्गत्य नगरादेत्य, गिरावनशनं व्यधात् ॥ ९६ ॥ कायोत्सर्गे(र्गे)स्थितः पक्षमेकैकां दिशमेव
(मैन्त्रां दिश्येवमेव) हि । स दक्षो दिक्षु सर्वासु, पक्षं पक्षं पृथक् पृथक् ॥९७॥ सोढप्रभूतव्यथः खाद्यमानः काक-शिवादिभिः । नमस्कारपरो
मृत्वा, सौधर्मेन्द्रो बभूव सः ॥ ९८ ॥ तपस्वी वाहनं जज्ञेऽस्याभियोगिककर्मतः । च्युत्वा भ्रान्त्वा नृ-तिर्यक्षु, जातो यक्षोऽसि-
ताक्षकः ॥ ९९ ॥ च्युत्वेन्द्रोऽसौ कुमारोऽभूदेतयोर्वैरकारणम् । एतदित्युक्तमार्चिमालिना मे ज्ञानिनर्षिणा ॥ १०० ॥ ततस्तेऽन्तरवासार्थं,
नगर्यां न्यासपूर्वकम् । भानुवेगं मया प्रेष्य, कनीनां ग्राहितः करम् ॥१०१॥ तत्रैव(तत्) कारणात् मुक्त, आरात्स्यामः क्षणे त्वि(न्वि)ति ।

क्षमस्वाऽऽगो वने मुक्तो, भीषणे यद् भवांस्तदा ॥ १०२ ॥ तेन विज्ञपयाम्येतत्, तत् कन्याशतमुद्वह । ता अपि आकना अष्टौ, पश्यन्तु
त्वन्मुखाम्बुजम् ॥ १०३ ॥ एवमस्त्वार्यपुत्रेणेत्युदि(क्ते) ता आगताः कनीः । महाविभूत्योपयेमे, गायद्धवलमङ्गलम् ॥ १०४ ॥ दशोत्तरस्त्री-
शतेन, समं विलसति स सः । प्रयाति कालस्त्वेवम्, आर्येणाऽग्योदितं यथा ॥ १०५ ॥ गन्तव्यं तत् सरो यत्र, युद्धं यक्षेण मेऽभवत् ।
आगतानां ततोऽत्राद्य, दर्शनं भवतामभूत् ॥१०६॥ अत्रान्तरे रतिगृहात् सुरसुप्तः समुत्थितः । कुमारश्चातिविस्ताराद् गतो वैताढ्यपर्वते
॥ १०७ ॥ विज्ञप्तोऽवसरं प्राप्य, महेन्द्रेण नृपात्मजः । देव ! त्वद्विरहान्माता-पितरौ स्तोऽतिदुःखितौ ॥१०८॥ ततस्तयोर्दर्शनेन, प्रसादः
क्रियतां मम । इत्यनन्तरमेवासौ, विज्ञप्तेरुत्सुकोऽभवत् ॥ १०९ ॥ नानाविमान-हस्त्यश्वारूढैर्विद्याधरैर्वृतः । नभःस्थैर्दिव्यनेपथ्यैर्गतो गजपुरं
त्वरात् ॥११०॥ जननी जनकश्चापि, पौरा भेजुर्भृशं मुदम् ।[क्रमात्]क्रमागते निजे[०]राज्ये, राज्ञा न्यस्तो निजाङ्गजः ॥१११॥ सेनानीत्वे
महेन्द्रश्च, स्थविरस्यान्तिके स्वयम् । प्रव्रज्याऽनुष्ठितं कार्यं, तीर्थे धर्मजिनेशितुः ॥ ११२ ॥ अथाश्वसेनसूर्वर्द्धमानकोश-बलो बली ।
साम्राज्यं पालयन् कालं, निनाय न्यायवत्सलः ॥११३॥ चतुर्दश च रत्नान्युत्पन्नानि निधयो नव । कृत(ता)पूजस्त(जा त)तश्चक्री, चक्रादिष्ट-
पथेऽचलत् ॥ ११४ ॥ मागध-वरदाम-प्रभास-सिन्ध्वादिभारतम् । साधयित्वा जयी वर्षसहस्रेणागतः पुरम् ॥११५॥ दृष्टश्चावधिनेन्द्रेण,
मत्समोऽत्राभवत् पुरा । अयमिति भ्रातृस्नेहेनादिष्टो नरवाहनः ॥११६॥ गत्वा सनत्कुमारस्य कुरु राज्याभिषेचनम् । हारं छत्रं वनमालां,
मुकुटं चामरद्वयम् ॥ ११७ ॥ दूष्यं कुण्डलयोर्युग्मं, पादुकायुगलं तथा । सिंहासनं पादपीठं( सपीठं च ), प्राभृतं चेदमर्पयेः(प्राभृतमिदमर्पय)
॥ ११८ ॥ [ युग्मम् ] वाच्यं च यन्महाराज ! वार्तां पृच्छति ते हरिः । एवमस्त्विति पौलस्त्यः, प्रतिश्रुत्याऽऽगतः पुरम् ॥ ११९ ॥
समर्प्य (समर्पि-) प्राभृतं चक्री, विज्ञप्तो धनदेन भोः ! । वयं तवाभिषेकाय, शक्रेण प्रेषिता अतः ॥ १२० ॥ यूयं तमनुमन्यध्वमेवमस्त्विति

चनयवक् । ततो योजनविस्तारं, मणिपीठं व्यधात् सुरः ॥ १२१ ॥ तस्योपरि रत्नमयं, स्नानमण्डपमुन्नतम् । तदन्तः पीठिका दिव्योपर्यस्याः सिंहविष्टरम् ॥ १२२ ॥ निवेश्य तत्र क्षीरोदजलैर्मणिमयैर्घटैः । अभिषिक्तः सुरैरुच्चज्जयजयारवो दिवि( रावबादिभिः ) ॥ १२३ ॥ रम्भाद्या ननृतुश्चैनं, कृत्वाऽलङ्कृत्यलङ्कृतम् ( चालङ्कृतं पुरम् ) । पुरं प्रवेश्य विच्छित्त्या, स्वर्गे(र्गे)(ततः)स्वर्गिजनोऽगमत् ॥१२४॥ [ त्रिभिर्विशेषकम् ] भुञ्जानश्चक्रिणो भोगांश्चत्यपि कालमत्यगात् । अथो(थ)सौदाम(मि)नीनाट्यं, पश्यन्नास्ते पुरन्दरः ॥ १२५ ॥ अत्रान्तरे सङ्गमाख्य, ईशानादागतः सुरः । द्युतिद्योतितदिक्चक्रः, सुधर्माधिपसन्निधौ ॥ १२६ ॥ तद्वपुस्तेजसा नष्टतेजसोऽङ्गारका इव । ग्रहा इवोदये भानोर्बभूवुरखिलाः सुराः ॥ १२७ ॥ सविस्मयैः सभादेवैर्हरिः पृष्टो विभो ! कथम् । वपुष्यमुष्य दीप्तिश्रीर्द्वादशाऽऽदित्यतोऽधिका ? ॥ १२८ ॥ सौधर्मेन्द्रोऽप्यवदत् पूर्वभवेऽनेन तपः कृतम् । आचाम्लवर्द्धमानाख्यं येनायमीदृशः सुरः(सुराः!) ॥ १२९ ॥ शक्रः पृष्टः पुनर्देवैः, स्वामिन्नन्योऽपि कोऽस्ति किम् । ईदृक्ष ? इति सोऽप्याख्यदामि(मे)त्यस्ति महीतले ॥ १३० ॥ कोऽसौ ? सनत्कुमाराख्यो, यो हस्तिना-(हास्तिन)पुरेशिता । यद्रूपरेखा लेखानां, वपुष्यतिसु(-प्यति)दुर्लभा ॥ १३१ ॥ अश्रद्दधानौ द्वौ देवौ, विजय-वि(वै)जयन्तकौ । आगतौ विप्ररूपेण, प्रतिहारप्रदर्शि(-देशि-)तौ ॥ १३२ ॥ प्रविष्टौ राजभवनं, दृष्टश्चक्री समाचरन् । अभ्यङ्गं गन्धतैलेन, रूपाधिक्येन विस्मितौ ॥ १३३ ॥ किमर्थमागतौ ? राज्ञा, पृष्टौ तावाहतुः प्रभो ! । आकर्णितं वर्णनीयं, रूपं ते त्रिजगत्यपि ॥ १३४ ॥ [illegible] द्रष्टुं कौतुकेनेवि, ततो राज्ञा वितन्वता । रूपगर्वमिमौ प्रोक्तौ, प्रतीक्षेथां क्षणं सदा ॥ १३५ ॥ आस्थानमाश्रये यावदेवमस्त्विति तौ गतौ । चक्रयपि स्नातलिप्ताङ्गो, दिव्याभरणभूषितः ॥ १३६ ॥ आस्थानमाश्रितो विप्रौ, तावाजुहाव वेत्रिणा । दृष्ट्वा तौ तद्वपुर्वाढं, विषण्णावाहतुर्मिथः ॥ १३७ ॥ अहो ! लावण्य-रूपादि, नृणां क्षणविनश्वरम् । चक्रिणोक्तौ विषण्णौ भो !, मदेहं निन्दथः कथम् ? ॥ १३८ ॥

ताभ्यामुक्तं महाराज !, देवानां रूपसम्पदः । अवस्थिताः स्युः पण्मासं, यावदायुस्ततः क्षि(क्ष)तिः ॥ १३९ ॥ मनुष्याणां पुनर्मध्य-वयो यावत् प्र(व्य)वर्द्धते । तेजो-यौवन-रूपादि, दृश्यते ते तदन्यथा ॥ १४० ॥ यद्घनैव श्रीर्नष्टा, खलमैत्रीव ते क्षणात् । युवां वित्थः कथमिति, राज्ञोक्ते तावथाहतुः ॥ १४१ ॥ सर्वं शक्रप्रशंसादिवृत्तान्तं मूलतः स्वकम् । विस्मितेन ततो राज्ञा, दोः सकेयूरमीक्षितम् ॥ १४२ ॥ उरसि(उरः स-)हारमेवं च, विवर्णं वीक्ष्य सोऽखिलम् । अचिन्तयद् भवस्याहोऽनित्यताऽसारता तनोः ॥१४३॥ रूप-यौवन-तेजांसि, निमेषादेव यद् ययुः । ततोऽज्ञानं वपुर्मोहः, प्रतिबन्धो भवे भ्रमः ॥ १४४ ॥ रूपाभिमानो मूर्खत्वमुन्मादो भोगसेवनम् । परिग्रहो(ऽममहोऽतः) ग्रहोऽतस्तत्, किञ्चित्(त्यक्त्वा)कुर्वेऽधुना हितम् ॥ १४५ ॥ [ युग्मम् ] इति सञ्चिन्त्य साम्राज्येऽभिषिक्तो निजनन्दनः । धीराभ्यामनुक्तः साधु, ताविर्युक्त्वा दिवं गतौ ॥१४६॥ चक्र्यपि तत्क्षणादेव, पटलग्रतृणाग्रवत् । त्यक्त्वा परिग्रहं राधाचार्यस्यान्तेऽग्रहीद् व्रतम् ॥१४७॥ ततश्च सर्वरत्नानि, सुनन्दाऽऽद्याः स्त्रियोऽखिलाः । आभियोगिकदेवाश्च, नरेन्द्रा निधयो नव ॥ १४८ ॥ किं बहुनाऽखिलं सैन्यं, पण्मासं यावदन्वगात् । सम्भावितं न सिंहावलोकितेनापि तेन तत् ॥ १४९ ॥ [ युग्मम् ] अथैव षष्ठतपसश्चक्रे तक्रेण पारणम् । अजा-याश्चीनकाल्नेन, पुनः षष्ठं(ष्ठ-)तपोऽकरोत् ॥१५०॥ ततः प्रभृति तद्दोषात्, प्रादुरासन् महाव्यथाः । कासः श्वासो ज्वरः कण्डूर्भक्ताछन्दोऽ-क्षि-कुक्षिरुक् ॥ १५१ ॥ सप्तैता वेदना रौद्राः, सहमानस्य तस्य तु । आमर्ष-विप्रुडौषध्यादयः स्युः सप्त लब्धयः ॥ १५२ ॥ तथाप्यङ्ग-प्रतीकारं, नाकरोद् हरिरित्यवक् । अस्याहो ! धीरता रोगार्त्तौ(र्तो)यन्नाघात् प्रतिक्रियाम् ॥ १५३ ॥ अश्रद्दधानौ तद् देवौ, तावेव पुनरागतौ किरात-वैद्यरूपेणोचतुश्चेदं वचो मुनेः ॥ १५४ ॥ चिकित्सां भगवन् ! कुर्वस्तूष्णीकोऽस्थान्महामुनिः । पुनः पुनश्च ब्रुवतोर्महात्माऽपीदम-भ्यधात् ॥ १५५ ॥ कर्मणोऽङ्गस्य वा व्याधिं, हरथस्तावथोचतुः । न कर्मणस्तनोरेव, तत् श्रुत्वा भगवानथ ॥ १५६ ॥ निष्ठ्यूतेनाङ्गुलीं

पृष्ठा म्यर्णवर्णामदर्शयत् । उवाच च वपूरोगहरणेऽहमपि प्रभुः ॥ १५७ ॥ हरतं कर्मरोगं मे, युवयोः शक्तिरस्ति चेत् । श्रुत्वा तावाहतुस्तत्र, तत्रैव प्रभुता प्रभो! ॥ १५८ ॥ उक्त्वा प्रशंसां शक्रस्य, नत्वा देवौ दिवं गतौ । सप्तवर्षशतान्येष, विषेहे विषमां व्यथाम् ॥१५९॥ वर्षलक्षं कुमारत्व-मण्डलेशत्वयोरभूत् । चक्रित्वे श्रमणत्वे च(-न), वर्षलक्षद्वयं पुनः ॥ १६० ॥ एवमायुः प्रपाल्यान्ते, सम्मेतगिरिमभ्यगात् । सम्यगालोचनापूर्वं, शिलापट्टोपरिस्थितः ॥१६१॥ स मासिकेन भक्तेन, मृत्वा स्वर्गे स्वनामके । समुत्पन्नस्ततश्च्युत्वा, विदेहे शिवमेष्यति ॥ १६२ ॥ [युग्मम्] इति श्रीसनत्कुमारचतुर्थचक्रिणश्चरितं सम्पूर्णम् ॥

अथ किञ्चित् पञ्चमस्योच्यते—

जम्बूद्वीपे पुरं रथनूपुरचक्रवालकम् । वैताढ्ये उत्तरश्रेण्यां, समस्ति स्वस्तिमज्जनम् ॥ १ ॥ तत्र राडमिततेजाः, सुताराख्या स्वसाऽस्य तु । सा श्रीविजयराज्ञोऽस्ति(जस्य), दत्ता पोतनपूष्पतेः ॥ २ ॥ अन्येद्युरमिततेजा, दर्शनाया(य)गतः स्वसुः । उत्पताकं पुरं राजसभाद्राक्षीद् विशेषतः ॥३॥ विस्मयोत्फुल्लदृग् व्योम्नोऽवतीर्णो राजमण्डपे । अभ्युत्थितः श्रीविजयेनाऽऽलिङ्गनपुरस्सरम् ॥४॥ निविष्टो विष्टरेऽतुच्छं, पप्रच्छोत्सवकारणम् । नरेन्द्रोऽमिततेजाख्यस्ततः श्रीविजयोऽवदत् ॥ ५ ॥ इतोऽष्टमे दिनेऽत्राऽऽया(गा)त्, प्रतीहारनिवेदितः । नैमित्तिकः पुमानेको, दत्तासन उपाविशत् ॥ ६ ॥ मयाऽऽगमनकार्यं किमिति पृष्टोऽथ सोऽवदत् । राजन्! मयाऽविसंवादि, निमित्तमवलोकितम् ॥ ७ ॥ यथेतः सप्तमे घस्रे, पोतनाधिपमूर्द्धनि । विद्युत्पातो महोत्पातो, मध्याह्ने भविता हहा ! ॥ ८ ॥ तत् कर्णकटुकं श्रुत्वा, मन्त्र्याह किं पतिष्यति । त्वच्छीर्षे ? सोऽवदत् कोपं, मा कृथा द्वेषता न मे ॥ ९ ॥ रैवृष्टिरुपरिष्टान्मे, दिने तस्मिन् भविष्यति । एवमुक्ते मया पृष्टं, कुत्रेदं शिक्षितं त्वया ? ॥ १० ॥ सोऽप्याख्यदचलस्वामिदीक्षाकाले स्वतीजिना । समं प्रव्रजितोऽष्टाङ्गनिमित्तं तत्र

शिक्षितम् ॥ ११ ॥ ततस्तारुण्यवान् पूर्वदत्तकन्यासुहृज्जनैः । प्रव्रज्यां त्याजितः सा तूद्वढा कर्मानुभावतः ॥ १२ ॥ ततः सर्वज्ञमज्ञातं, निमित्तमवलोकितम् । यथा पोतनपूर्नेतुर्निपातोपद्रवोऽशनेः ॥ १३ ॥ तेनोक्ते एवमेकोऽवक्, मन्त्री तर्हि विधीयताम् । प्रभुः पोते समुद्रान्तस्तत्पातस्तत्र नो भवेत् ॥ १४ ॥ अन्येनोक्तं दैवयोगो, न कर्तुं शक्यतेऽन्यथा । परेणोक्तं वधः प्रोक्तः, पोतनेशस्य न प्रभोः ॥ १५ ॥ तावत् सप्तदिनीं(नं) कश्चित्, पुराधीशोऽत्र कल्प्यते । मन्त्रयित्वेति राज्येऽभिषिक्ता(क्तो) वैश्रवणाकृतिः ॥१६॥ सप्तमेऽहनि मध्याह्ने, समुत्पन्नो घनाघनः । गर्जितं जलदेनोच्चैः, स्फुरितं विद्युताऽधिकम् ॥ १७ ॥ ततः स्फुरित्वा त्राट्कृत्य, पतित्वा विद्युताऽभितः । यक्षप्रतिकृतिर्यक्षभवनस्था विनाशिता ॥१८॥ अहं पौषधशालायां, सप्तरात्रमुपोषितः । स्थितः स्व(ततः स)मागतो गेहं, नागरैरभिनन्दितः ॥१९॥ पुना राज्येऽभिषिक्तश्च, भृशं नैमित्तिकोऽर्चितः । तदत्राऽमिततेजैवद्, वर्द्धापनककारणम् ॥ २० ॥ निशम्याऽमिततेजेन, ज(नि)गदे विस्मयादहो ! । निमित्तमविसंवादि, रक्षणोपक्रमोऽद्भुतः ॥ २१ ॥ समं सुतारयाऽन्येद्युर्गतः श्रीविजयो बहिः । सुवर्णवर्णमद्राक्षीदुद्याने मृगमद्भुतम् ॥ २२ ॥ प्रोक्तं सुतारया स्वामिन् !, क्रीडार्थममुमानय । स्वयं प्रधावितो राजा, पुरः सोऽप्यचलद् द्रुतम् ॥ २३ ॥ मृगः स्तोकां भुवं गत्वा, सहसोत्पतितोऽम्बरे । अत्रान्तरे महादेव्या, कूजितं यदहं प्रिय ! ॥ २४ ॥ दृष्टा कुर्कुटसर्पेण, रक्ष रक्ष ततो विभो ! । वचले यावदेष द्राक्, तावत् पञ्चत्वमाप सा ॥ २५ ॥ चितां प्रविष्टः शोकार्त्तस्तया सार्द्धं नृपस्ततः । जज्वाल ज्वलनो यावत्, खेचरौ तावदागतौ ॥ २६ ॥ मन्त्राभिमन्त्रिताम्भोभिः, सिक्तैकेन चिता ततः । नष्टा वैतालिनीविद्या, कृत्वा चाट्टहसस्वरम् ॥ २७ ॥ स्वस्थीभूतो नृपः प्राह, किमेतदिति खेचरौ । जल्पतुर्नन्दनावावां, स्वामिनोऽमिततेजसः ॥ २८ ॥ गतावभूव यात्रार्थमागच्छद्भ्यां श्रुतो रवः । नीयमानसुताराया, अशनिघोषभूभुजा ॥ २९ ॥ जातावावां युद्धसज्जौ, यावत् तन्मुक्तिहेतवे । तावत् सुतारया प्रोचे, युद्धेनालमिहाधुना ॥ ३० ॥

शलाकापुरुषाधिकारे पञ्चम-श्रीशान्ति-जिनचक्र्यधिकारः ।

परं वैतालिनीविद्यावञ्चितं जीवितेश्वरम् । रक्षत्वं तत्र गत्वा द्राक्, यावन्नासूंस्त्यजत्यसौ ॥ ३१ ॥ ततश्चात्राऽऽगतावावां, वैतालिन्या सहेक्षितः । चितारूढस्त्वमम्भोभिः, सिक्तः स्वस्थः समुत्थितः ॥ ३२ ॥ सा नष्टा दुष्टविद्याऽथ, हृतां ज्ञात्वा नृपः प्रियाम् । विषण्णो भणितस्ताभ्यां, भव धीरः क याति सः ? ॥ ३३ ॥ इत्युक्त्वा तौ गतौ क्षिप्रं, ज्ञातव्यतिकरः क्रमात् । समेत्याऽमिततेजोऽगात्, समं श्रीविजयेन च ॥३४॥ पुरीं चमरचञ्चाख्यामशनिघोषसंश्रिताम् । बहिःस्थैः प्रेषितो दूतो, नष्टः पापात् स शङ्कितः(पापाः स्वशङ्किताः) ॥३५॥ तावपि पृष्ठतो लग्नौ, दृष्टः केवलिनोऽन्तिके । अचलस्याऽशनिघोष, आनीतैकेन देव्यपि ॥ ३६ ॥ शान्तवैराः केवलिनो, धर्मं शृण्वन्ति सन्निधौ । ततश्चाऽशनिघोषोऽवक्, सम्प्राप्यावसरं ह्रदः ॥ ३७ ॥ न मया दुष्टभावेन, सुतारेयं हृता परम् । साधयित्वा वने विद्यामागच्छतेयमीक्षिता ॥ ३८ ॥ त्यक्तुं शक्नोमि नैवैनां, पूर्वस्नेहात् ततो नृपम् । विद्यया विप्रतार्य श्रीविजयं हृतवानिमाम् ॥ ३९ ॥ ममाऽऽगोऽदुष्टभावस्य, महात्मन् ! क्षम्यतामतः । श्रुत्वेत्यमिततेजोऽवक्, रागो(मोहो)ऽस्यां कथमस्य भोः ! ? ॥ ४० ॥ केवली भगवानाह, क्षेत्रेऽस्मिन्नेव भारते । मगधेष्वचलग्रामे, विप्रोऽभूद् धरणीजठः(टः) ॥४१॥ कपिलाख्याऽस्य चेट्यस्ति, तत्सुतः कपिलाह्वयः । अनेन शिक्षिता वेदाः, श्रुतिश्रुत्या न पाठतः ॥ ४२ ॥ गतो देशान्तरेऽन्येद्युरसौ रत्नपुरे द्विजम् । उपाध्यायं श्रितस्तेन, पृष्टो भोः ! कुत आगतः ? ॥ ४३ ॥ सोऽप्याख्यदचलग्रामाद् धरणीजठ(ट)नन्दनः । कपिलाख्योऽस्मि विद्यार्थी, भवन्तं समुपस्थितः ॥४४॥ गौरवात् स्थापितस्तेन, सत्यभामाऽर्पिताऽङ्गजा । वर्षत्यब्देऽन्यदाऽऽयातः, कृत्वा कक्षान्तरेऽम्बरम् ॥ ४५ ॥ सत्यभामाऽऽर्द्रवस्त्रोऽयमित्यादायोत्थिताऽम्बरम् । सोऽवक् प्रिये ! प्रभावोऽस्ति, न ताम्यन्त्यम्बराणि मे ॥ ४६ ॥ ततो ज्ञातं तया होप, निर्वस्त्रोऽत्रागतोऽधुना । यावन्निरूपितः सम्यक्, तत् तथैवावधारितम् ॥ ४७ ॥ नेदं युक्तं कुलीनानामकुल्यस्तदसौ ध्रुवम् । इत्यस्मिन् सत्यभामाऽभून्मन्दस्नेहा तदादितः ॥ ४८ ॥ अथाऽऽगाद्

धरणीजठो(टो)ऽसदृशं पितृ-पुत्रयोः । वीक्ष्याऽऽचारं सत्यभामा, पप्रच्छ धरणीजठ(ट)म् ॥ ४९ ॥ यथास्थितं शशंसाथो, सर्वं तस्यै द्विजाग्रणीः । तच्छ्रुत्वा सातिनिर्विण्णा, पप्रच्छ चरणाय तम् ॥ ५० ॥ स न मुञ्चत्यथो राज्ञः, श्रीषेणस्य पुरेशितुः । गत्वाऽऽचख्यौ सत्यभामा मामस्मान्मोचयेश्वर ! ॥ ५१ ॥ येन केवलिनः पार्श्वे, प्रव्रजामीति भूभुजा । पृष्टस्तदर्थमत्यर्थं, मुमोच कपिलो न ताम् ॥ ५२ ॥ स्वस्था तिष्ठेति राज्ञोक्ता, यावदेनं विबोधये । युयुधाते मिथोऽन्येद्युर्गणिकार्थे नृपात्मजौ ॥ ५३ ॥ तद् दृष्ट्वा दुःख(खि)तो राजा, ममार गरभक्षणात् । तथा शिखिनन्दिताभिनन्दितार्ये च तत्प्रिये ॥ ५४ ॥ चतुर्थी सत्यभामापि, चत्वारोऽपि मृता जनाः । उत्पद्य देवकुरुषु, कल्पे चाद्येऽभवन् सुराः ॥ ५५ ॥ च्युत्वा श्रीषेणजीवोऽत्रोऽमिततेजोऽभिनन्दिता । श्रीविजयः सत्यभामा, सुतारेत्यभवन् क्रमात् ॥ ५६ ॥ स कपिलोऽपि तिर्यक्षु, भ्रान्त्वा किञ्चित् तथाविधम् । कृत्वाऽनुष्ठानमशनिघोषः समुत्पद्यत ॥ ५७ ॥ तेनायं सत्यभामाया, जीवः पूर्वभवे(व)प्रिया । हृष्टा सुतारा स्नेहेन, हृता स्नेहो हि दुस्त्यजः ॥ ५८ ॥ पप्रच्छाऽमिततेजोऽथ, किमहं भविको न वा ? । भविष्यति भवांस्तीर्थकृदितो नवमे भवे ॥ ५९ ॥ एष श्रीविजयो भावी, प्रथमो गणभृत् तव । श्रुत्वेत्युक्तं केवलिनो, वन्दित्वा तौ गतौ पुरम् ॥ ६० ॥ [ युग्मम् ] अन्यदा विपुलमति-महामत्याख्यचारणौ । ताभ्यां वने मुनी दृष्टौ, वन्दितौ धर्ममाहतुः ॥ ६१ ॥ अथ श्रीविजयामिततेजोभ्यामायुरात्मनः । पृष्टं चा(म; पृष्टाव)वधिना ज्ञात्वाऽहां षड्विंशतिमाहतुः ॥ ६२ ॥ ततस्ताभ्यां गृहमेत्याऽष्टाहि(ह्नि)कामहिमा कृतः । सङ्क्रामितश्रियौ स्वस्वपुत्रयोस्तावथ स्वयम् ॥ ६३ ॥ जगन्नन्दनाभिनन्दनयोः पार्श्वे प्रव्रज्य च । उत्पन्नौ प्राणते कल्पे, विंशत्यब्ध्युपमायुषौ ॥ ६४ ॥ [ युग्मम् ] तत्रानुभूय सर्वायुश्च्युत्वा द्वीपे इहाऽऽदिमे । विजये रमणीयाख्ये, प्राग्विदेहविभूषणे ॥ ६५ ॥ सीताया दक्षिणे कूले, सुभगायाः(यां)पुरः (पुरि) प्रभोः । स्तिमितसागरस्या-

ऽनङ्गसुन्दरी-वसुन्धरे ॥ ६६ ॥ महादेव्यो तयोर्गर्भे, तावुत्पन्नावनुक्रमात् । श्रीविजयोऽन्योऽपि नाम्नाऽनन्तवीर्यापराजितौ ॥ ६७ ॥ [ त्रिभिः कुलकम् ] प्रतिशत्रुं क्रमाद् हत्वा, दमितारिं नभश्चरम् । बलदेव-वासुदेवत्वमवाप्ता(पदमाप्ता)वुभावपि ॥ ६८ ॥ प्रव्रज्यया तयोस्तातो, मृत्वाऽभूदसुरेश्वरः । सम्राडनन्तवीर्योऽपि, भरतार्द्धं शशास च ॥ ६९ ॥ द्विचत्वारिंशत्सहस्राब्दस्थितिः (युतः) प्रथमावनौ । स मृत्वाऽगात् तत्र तीव्रां(व्रा), भुङ्क्ते नरकवेदनाम्(ः) ॥७०॥ तच्छान्त्यै चमरश्चके, स्नेहात् तत्रेत्य तत्पिता । संविग्नः सहते सोऽपि, सम्यक् सम्यक्त्ववास(सि)तः ॥ ७१ ॥ अथापराजितः सीरी, भ्रातृदुःखाग्निजाङ्गजे । न्यस्य राज्यरमां दीक्षां, प्रपाल्याऽऽपाऽच्युतेन्द्रताम् ॥ ७२ ॥ अनन्तवीर्योऽप्युद्धृत्य, नरकात् खेचरोऽभवत् । बोधितः सोऽच्युतेन्द्रेण, प्रव्रज्याभूत् सुरोऽच्युते ॥ ७३ ॥ च्युत्वाऽपराजितो जम्बूद्वीपे पूर्वविदेहगे । विजये मङ्गलावत्यां, सीताया दक्षिणे तटे ॥ ७४ ॥ रत्नसञ्चयपुर्यस्ति, तत्र क्षेमङ्करो नृपः । रत्नमाला प्रियाऽस्याभूत्, सूनुर्वज्रायुधाभिधः ॥ ७५ ॥ [ युग्मम् ] च्युत्वानुभूय देवायुर्जीवः श्रीविजयस्य च । जातोऽस्यैवाङ्गजत्वेन, सहस्रायुधसंज्ञितः ॥ ७६ ॥ अन्येद्युः पौषधागारे, स्थितो वज्रायुधो व्रते । स्तुतः शक्रेण नो धर्माच्चाल्यतेऽसौ सुरैरपि ॥ ७७ ॥ एकः सुरोऽश्रद्दधानः, कृत्वा पारापताकृतिम् । ब्रुवन् नृपाच्च शरणमित्येत्य तमशिश्रयत् ॥ ७८ ॥ अर्पिते शरणे वज्रायुधेनासौ स्थितोऽन्तिके । तावदागतवानेकः, श्येनो वाचमुवाच च ॥ ७९ ॥ प्रभो ! मया क्षुधार्त्तेन, प्राप्तोऽयं तदमुं त्यज । नान्यथा जीवितं मेऽस्ति, तच्छ्रुत्वाऽऽख्यन्नृपात्मजः ॥८०॥ ब्रूहि भोः ! शरणाया(णे जा)तं, क्षत्रियैर्दीयते कथम् ? । तथापि हननं जन्तोर्न युक्तं विमृश स्वयम् ॥८१॥ हत्वाऽन्यासून् य आत्मानं, सप्राणं कुरुतेऽङ्गवान् । स चाल्पानां कृते ह्यद्धाऽऽत्मानं नाशयत्यहो ! ॥ ८२ ॥ तृप्तिस्ते क्षणिका मुक्तिः, प्राणानामस्य सर्वथा । तस्मात् स्फुरन्तं तं व्यापादयितुं ते न साम्प्रतम् ॥ ८३ ॥ एवमुक्तो नृपेणासौ, शकुनिर्मधुराक्षरैः । प्रत्युवाच क्षुधार्त्तोऽहं, मत्सं

धर्मो न रोचते ॥ ८४ ॥ पुनर्नृपोऽवदन्मांसमन्यं ते दापयामि भोः ! । स्वमारितस्य मांसाशी, नान्यस्येत्यूचिवान् खगः ॥ ८५ ॥ वज्रायुधोऽवदद् यावन्मात्रं तुलयति द्विजः । तावत् पलमुत्कृत्य, ददामि स्वाङ्गतस्तव ॥ ८६ ॥ इत्युक्ते मुदितः श्येनः, तुलाऽऽनीता ततो नृपः । कर्त्तं कर्त्तं क्षिपत्तस्यां, मांसं साहससेवधिः ॥ ८७ ॥ अथाधिकाधिकं पक्षी, ववृधे देवमायया । हाहारवाकुले लोकेऽध्यारुरोह नृपस्तुलाम् ॥ ८८ ॥ एवं वीक्ष्य सुरो राज्ञो, महासाहसमद्भुतम् । आविश्चक्रे निजं रूपं, मणिकुण्डलमण्डितम् ॥ ८९ ॥ वारं वारं प्रशंसंस्तं, प्रोच्याभिप्रायमात्मनः । हर्ष-विस्मयभृद् देवो, जगाम धाम नाकिनाम् ॥ ९० ॥ सहस्रायुधपुत्रेण, सार्द्धं वज्रायुधोऽन्यदा । पौत्रं शतबलं राज्येऽभिषिच्य स्वक्रमागते ॥ ९१ ॥ सम्पन्नोत्कटवैराग्यः, संवेगैकतरङ्गितः । क्षेमङ्करार्हद्गणभृत्पार्श्वे व्रतमशिश्रयत् ॥ ९२ ॥ [युग्मम्] पादपोपगमनानशनेनान्ते निजायुषः । ईषत्प्राग्भारशिखरे, मृत्वोत्पन्नावुभावपि ॥९३॥ एकत्रिंशदब्दायुष्कौ, ग्रैवेयनवमे सुरौ । अहमिन्द्रसुखं तत्र, चिरायानुबभूवतुः ॥ ९४ ॥ [युग्मम्] इतश्च जम्बूद्वीपेऽस्मिन्, विदेहे पूर्वदिक्स्थिते । विजये पुष्कलावत्यां, पूश्च पौण्डरकिण्यभूत् ॥ ९५ ॥ राजा घनरथस्तत्र, तत्पत्न्योरुदरे उभौ । पद्मावती-मनोरमयोर्जातौ तवच्युतौ ॥ ९६ ॥ मेघरथ-दृढरथौ, नामानौ (नामतो) वृद्धिमीयतुः । कलाकलापग्रहणमाचार्याच्चक्रतुः क्रमात् ॥९७॥ तयोः(ताभ्यां)पूर्वभवाभ्यासाद्, रुरुचे धर्म आर्हतः । जीवाजीवाद्यभिज्ञौ तौ, सम्पन्नौ परमास्तिकौ ॥ ९८ ॥ राज्येऽभिषिच्य धान्येद्युः, संवेगात् स्वस्वनन्दनम् । पितुस्तीर्थकृतः पार्श्वे, तावङ्गीचक्रतुर्व्रतम् ॥ ९९ ॥ तत्र मेघरथोऽधीतसूत्रार्थः स्वार्थतत्परः । विंशत्यन्यतरैः स्थानैस्तीर्थकृत्कर्म बद्धवान् ॥ १०० ॥ ततः संलेखनासंलिखितदेहौ समाधितः(ना) । कालं कृत्वा समुत्पन्नौ, सर्वार्थे(र्थं) परमायुषौ ॥ १०१ ॥ अथ मेघरथश्च्युत्वा, जम्बूद्वीपेऽत्र भारते । श्रीहस्तिनपुरे विश्वसेनराज्ञः प्रियाऽचिरा ॥ १०२ ॥ नभस्यकृष्णसप्तम्यां, तस्याः कुक्षौ सुतत्वतः । चतुर्दशमहास्वप्नसूचितश्चोदपद्यत

॥१०३॥ [युग्मम्] साधिकान् नवमा(नव मासांश्च)सान् सा, कुक्षौ धृत्वेन्द्रसंस्तुतम्। ज्येष्ठकृष्णत्रयोदश्यां, सुषुवेऽर्द्धनिशि प्रभुम् (सुतम्) ॥ १०४ ॥ ततश्च दिक्कुमारीभिः, सूतिकर्मास्य निर्ममे। जन्माभिषेकः स्वर्णाद्रौ सर्वैरिन्द्रैरपि क्रमात् ॥ १०५ ॥ गर्भस्थेऽस्मिन् रुजः शान्तिर्जातेति जनकः प्रभोः। सवर्द्धापनकं नाम, यथार्थं शान्तिरित्यदात् (दि शान्तीत्यदात्) ॥ १०६ ॥ क्रमेण प्राप्ततारुण्यं, जातपाणिमहोत्सवम्। शान्तिं न्यस्याङ्गजं राज्ये, पार्थिवोऽशिश्रयद् व्रतम् ॥ १०७ ॥ चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम्। प्रसाध्य बुभुजे भोगान्, श्रीशान्तिश्चक्रिणश्चिरम् ॥ १०८ ॥ स्वयम्बुद्धोऽपि लोकान्तिकैः(क-)सुरैरेत्य बोधितः। भव्योर्व्यां दानधाराभिरावर्षमभिवृष्य च ॥ १०९ ॥ ज्येष्ठकृष्णचतुर्दश्यां, विहाय तृणमुष्टिवत्। चक्रिभोगानुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ११० ॥ [युग्मम्] चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः। पौषशुद्धनवम्यह्नि, केवलज्ञानमाप सः ॥ १११ ॥ देवैर्धर्मगृहं चक्रे, प्रभुणा धर्मदेशना। प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ११२ ॥ क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम्। ज्येष्ठकृष्णत्रयोदश्यां, सम्मेतेऽशिश्रयच्छिवम् ॥ ११३ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वभवन् क्रमात्। पृथक् पृथक् सहस्राणि, वर्षाणां पञ्चविंशतिः ॥ ११४ ॥ वर्षलक्षमतिवाह्य यः प्रभुः, सर्वमायुरनु मोक्षमासदत्। सोऽस्तु शस्तकृदपास्तपाप्मनां, वासवस्तवनगोचरीकृतः ॥ ११५ ॥ इति श्रीशान्तिजिनपञ्चमचक्रिचरित्रम् ॥

श्रीहस्तिनापुरे सूर-श्रीदेव्योस्तनयोऽजनि। चतुर्दशाद्भुतस्वप्नसूचितात्यन्तिकोदयः ॥१॥ कुस्थो(न्थो)रत्नमयः स्तूपः, कुन्थुवद् वीक्षितः परे। गर्भस्थेऽस्मिन् जनन्येति कुन्थुराख्यां पिताऽतनोत् ॥ २ ॥ क्रमेण प्राप्ततारुण्यं, जातपाणिमहोत्सवम्। कुन्थुं न्यस्याङ्गजं राज्ये, सूरराड् व्रतमात्तवान् ॥ ३ ॥ चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम्। प्रसाध्य बुभुजे भोगान्, श्रीकुन्थुश्चक्रिणश्चिरम् ॥ ४ ॥ स्वयम्बुद्धोऽपि

लोकान्तिकैः सुरैरेत्य योधितः । भव्योर्वी दानधाराभिरावर्षमभिवृष्य च ॥ ५ ॥ वैशाखकृष्णपञ्चम्यां, विहाय तृणमुष्टिवत् । चक्रिभोगानुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ६ ॥ चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः । प्रान्ते षोडशवर्षाणां, केवलज्ञानमासदत् ॥ ७ ॥ देवैर्धर्मगृहं चक्रेऽर्हता धर्मदेशना । प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ८ ॥ क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम् । राधकृष्णप्रतिपदि, सम्मेतेऽशिश्रयच्छिवम् ॥ ९ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वभवन् समाः । त्रयोविंशसहस्राणि, सार्द्धसप्तशतानि च ॥ १० ॥ इति श्रीकुन्थुजिनषष्ठचक्रिचरित्रम् ॥

पुरे गजपुरे देवी, देवी सुदर्शनेशितुः ( सुदर्शननरेशितुः ) । तस्याः कुक्षौ समुत्पन्नो, भगवान् भुवनाद्भुतः ॥ १ ॥ सुरेन्द्रकृतजन्मोत्सवानन्तरं व्यधात् पिता । स्वप्ने जनन्या रत्नारो, दृष्ट इत्यभिधामरः ॥ २ ॥ क्रमेण प्राप्ततारुण्यं जातपाणिग्रहोत्सवम् । अरं न्यस्याङ्गजं राज्ये, प्रवव्राज सुदर्शनः ॥ ३ ॥ सम्प्राप्तचक्रवर्त्तिश्रीः, कामभोगसुखान्परः । भुक्त्वा जरत्तृणमिव, त्यक्त्वा साम्राज्यसम्पदः ॥ ४ ॥ चिकीर्षुर्धर्मचक्रित्वमङ्गीकृत्य मुमुक्षुताम् । वर्षत्रयेण सम्प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५ ॥ [युग्मम्] प्रवर्त्तितधर्मतीर्थः, प्रबोध्य भविकाङ्गिनः । महानन्दपदं प्राप, श्रीसम्मेतगिरौ वरे (रावरः) ॥ ६ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वस्य चाभवन् । एकविंशतिवर्षाणां सहस्राणि पृथक् पृथक् ॥ ७ ॥ इति श्रीअरजिनसप्तमचक्रिचरित्रम् ॥

जम्बूद्वीपेऽत्र भरते, कुरुक्षेत्रे गजाह्वयम् । पुरं तत्रर्षभस्वामिवंश्यः पद्मोत्तरो नृपः ॥ १ ॥ तस्य ज्वाला महादेवी, श्राविकाऽस्यास्तु नन्दनः । विष्णुकुमारनामाऽभूत्, पञ्चास्यस्वप्न( सिंहस्वप्नेन )सूचितः ॥ २ ॥ तथान्यश्च महापद्मो, द्विसप्तस्वप्नसूचितः । तन्या कलाकलापेन, वर्द्धितौ स्पर्द्धयेव तौ ॥ ३ ॥ पद्मोत्तरो महापद्मं यौवराज्ये न्यवीविशत् । इतश्च पुर्युज्जयिन्यां श्रीधर्माख्योऽभवन्नृपः ॥ ४ ॥

॥१०३॥ [युग्मम्] साधिकान् नवमा(नव मासांश्च)सान् सा, कुक्षौ धृत्वेन्द्रसंस्तुतम् । ज्येष्ठकृष्णत्रयोदश्यां, सुषुवेऽर्द्धनिशि प्रभुम् (सुवम्) ॥ १०४ ॥ ततश्च दिक्कुमारीभिः, सूतिकर्मास्य निर्ममे । जन्माभिषेकः स्वर्णाद्रौ सर्वैरिन्द्रैरपि क्रमात् ॥ १०५ ॥ गर्भस्थेऽस्मिन् रुजः शान्तिर्जातेति जनकः प्रभोः । सवर्द्धापनकं नाम, यथार्थं शान्तिरित्यदात् (हि शान्तीत्यदात्) ॥ १०६ ॥ क्रमेण प्राप्तवारुण्यं, जातपाणिग्रहोत्सवम् । शान्तिं न्यस्याङ्गजं राज्ये, पार्थिवोऽशिश्रयद् व्रतम् ॥ १०७ ॥ चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम् । प्रसाध्य बुभुजे भोगान्, श्रीशान्तिश्चक्रिणश्चिरम् ॥ १०८ ॥ स्वयम्बुद्धोऽपि लोकान्तिकैः(क-)सुरैरेत्य बोधितः । भव्योर्वीं दानधाराभिरावर्षमभिवृष्य च ॥ १०९ ॥ ज्येष्ठकृष्णचतुर्दश्यां, विहाय तृणमुष्टिवत् । चक्रिभोगानुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ११० ॥ [युग्मम्] चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः । पौषशुद्धनवम्यह्नि, केवलज्ञानमाप सः ॥ १११ ॥ देवैर्धर्मगृहं चक्रे, प्रभुणा धर्मदेशना । प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ११२ ॥ क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम् । ज्येष्ठकृष्णत्रयोदश्यां, सम्मेतेऽशिश्रयच्छिवम् ॥ ११३ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वभवन् क्रमात् । पृथक् पृथक् सहस्राणि, वर्षाणां पञ्चविंशतिः ॥ ११४ ॥ वर्षलक्षमतिवाह्य यः प्रभुः, सर्वमायुरनु मोक्षमासदत् । सोऽस्तु शस्तकदपास्तपाप्मनां, वासवस्तवनगोचरीकृतः ॥ ११५ ॥ इति श्रीशान्तिजिनपञ्चमचक्रिचरित्रम् ॥

श्रीहस्तिनापुरे सूर-श्रीदेव्योस्तनयोऽजनि । चतुर्दशाद्भुतस्वप्नसूचितात्मन्विकोदयः ॥१॥ कुस्थो(न्थो)रत्नमयः स्तूपः, कुन्थुवद् वीक्षितः परे । गर्भस्थेऽस्मिन् जनन्येति कुन्थुराख्यां पिताऽतनोत् ॥ २ ॥ क्रमेण प्राप्तवारुण्यं, जातपाणिग्रहोत्सवम् । कुन्थुं न्यस्याङ्गजं राज्ये, सूरराड् व्रतमात्तवान् ॥ ३ ॥ चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम् । प्रसाध्य बुभुजे भोगान्, श्रीकुन्थुश्चक्रिणश्चिरम् ॥ ४ ॥ स्वयम्बुद्धोऽपि

लोकान्तिकैः सुरैरेत्य योधितः । भव्योर्वी दानधाराभिरावर्षममिवृष्य च ॥ ५ ॥ वैशाखकृष्णपञ्चम्यां, विहाय तुषमुष्टिवत् । चक्रिभोगाननुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ६ ॥ चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः । प्रान्ते षोडशवर्षाणां, केवलज्ञानमासदत् ॥ ७ ॥ देवैर्धर्मगृहं चक्रेऽर्हता धर्मदेशना । प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ८ ॥ क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम् । राधकृष्णप्रतिपदि, सम्मेतेऽशिश्रयच्छिवम् ॥ ९ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वभवन् समाः । त्रयोविंशसहस्राणि, सार्द्धसप्तशतानि च ॥ १० ॥ इति श्रीकुन्थुजिनषष्ठचक्रिचरित्रम् ॥

पुरे गजपुरे देवी, देवी सुदर्शनेशितुः ( सुदर्शननरेशितुः ) । तस्याः कुक्षौ समुत्पन्नो, भगवान् भुवनाद्भुतः ॥ १ ॥ सुरेन्द्रकृतजन्मोत्सवानन्तरं न्यधात् पिता । स्वप्ने जनन्या रत्नारो, दृष्ट इत्यभिधामरः ॥ २ ॥ क्रमेण प्राप्ततारुण्यं जातपाणिग्रहोत्सवम् । अरं न्यस्याङ्गज राज्ये, प्रवव्राज सुदर्शनः ॥ ३ ॥ सम्प्राप्तचक्रवर्त्तिश्रीः, कामभोगसुखान्यरः । भुक्त्वा जरत्तृणमिव, त्यक्त्वा साम्राज्यसम्पदः ॥ ४ ॥ विश्वोपुर्धर्मचक्रित्वमङ्गीकृत्य मुमुक्षुताम् । वर्षत्रयेण सम्प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५ ॥ [ युग्मम् ] प्रवर्त्तितधर्मतीर्थः, प्रबोध्य भविकाङ्गिनः । महानन्दपदं प्राप, श्रीसम्मेतगिरौ वरे (रावरः) ॥ ६ ॥ बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वस्य चाभवन् । एकविंशतिवर्षाणां सहस्राणि पृथक् पृथक् ॥ ७ ॥ इति श्रीअरजिनसप्तमचक्रिचरितम् ॥

जम्बूद्वीपेऽत्र भरते, कुरुक्षेत्रे गजाह्वयम् । पुरं तत्रर्षभस्वामिवंश्यः पद्मोत्तरो नृपः ॥ १ ॥ तस्य ज्वाला महादेवी, श्राविकाऽस्यास्तु नन्दनः । विष्णुकुमारनामाऽभूत्, पञ्चास्यस्वप्न( सिंहस्वप्नेन )सूचितः ॥ २ ॥ तथान्यश्च महापद्मो, द्विसप्तस्वप्नसूचितः । तन्वा कलाकलापेन, वर्द्धितौ स्पर्द्धयेव तौ ॥ ३ ॥ पद्मोत्तरो महापद्मं यौवराज्ये न्यवीविशत् । इतश्च पुर्युज्जयिन्यां श्रीधर्माख्योऽभवन्नृपः ॥ ४ ॥

अन्येद्युः समवसृतस्तत्र श्रीसुव्रतार्हतः। शिष्यः श्रीसुव्रतो नाम, सूरिर्भूरिगुणाश्रयः ॥ ५ ॥ तद्वन्दनाय गच्छन्तं, जनं वीक्ष्याद्भुतश्रिया
(श्रियम्)। गवाक्षस्थो नृपोऽपृच्छत्, यात्येकमुखो जनः ? ॥ ६ ॥ नमुचिर्मन्त्र्यवक् स्वामिन्नत्रैयुर्मुनयो बहिः। यस्तद्भक्तः स याति
द्रागुत्कण्ठोत्कण्ठया श्रितः ॥ ७ ॥ इति श्रुत्वा नृपोऽवोचद्, यास्यामो वयमप्यथ। नमुचिः प्राह यद्येवं, तर्हि स्थेयमुपेक्षया ॥ ८ ॥ वादं
विधाय येनाहं, तांस्तनोमि निरुत्तरान्। नृपोऽगात् तत्र नमुचिर्बभाणैवं मुनीन् प्रति ॥ ९ ॥ भो भोः प्रव्रजिताः! किञ्चिद्, धर्मं चेद् वित्थ
तर्हि नः। भूतपंयोऽपि मौनेन, तस्थुः क्षुद्राः समे इति ॥१०॥ मन्त्री रुष्टोऽवदत् सूरिं, किं नु वेत्त्येष गोवृषः ?। सूरिराहोच्यते किञ्चिन्मुखं
कण्डूयतेऽत्र चेत् ॥ ११ ॥ तच्छ्रुत्वैकेन शिष्येन, क्षुल्लेन भगवन्नहम्। एनं निराकरिष्यामीत्युक्त्वा निरुत्तरः कृतः ॥ १२ ॥ कुर्वन् वितण्ड-
(तण्डा)वादं स, वहन् द्वेषं मुनीन् प्रति। तेषां यथार्थे निश्यागाद्, देव्याऽसौ स्तम्भितोऽन्तरा ॥ १३ ॥ प्रातर्वीक्ष्य तदाश्चर्यं, श्रुतधर्मो नृपो
जनः। उपशान्तो विलक्षश्च, मन्त्र्यगाद् हस्तिनापुरे ॥१४॥ महापद्मस्य बभूव(तत्राभूद्), युवराजस्य मन्त्र्यसौ। प्रत्यन्तवासी तस्याऽऽसे,
नाम्ना सिङ्घ(सिंह)बलो नृपः ॥ १५ ॥ दुर्गं दुर्गबलाद् देशं, विनाश्य प्रविशत्यसौ। महापद्मेन रुष्टेन, पृष्टो नमुचिमन्त्र्यदः ॥ १६ ॥
किञ्चिज्जानास्युपायं तद्वदे नमुचिरप्यवक्। वेद्मीत्युक्त्वा गतो दुर्गं, भङ्क्त्वाऽऽदाय तमागतः ॥ १७ ॥ ततस्तुष्टेन पद्मेन, वरं वृण्विति
जल्पितः। मन्त्र्याहावसरे देयः, कोशे तिष्ठतु साम्प्रतम् ॥१८॥ इतश्च कारितो जैनभवने ज्वालया रथः। मिथ्यात्विन्याऽन्यया लक्ष्म्या,
सपत्न्या ब्रह्मणो रथः ॥१९॥ प्रोक्तः पद्मोत्तरो राजा, पूर्वं भ्रमतु मद्रथः। पुरे जिनरथः पश्चादिति स्वामिन्! समादिश ॥२०॥ तच्छ्रुत्वा
ज्वालयाऽग्राहि प्रतिज्ञा नृपसाक्षिकम्। रथो भ्रमति मे पूर्वं, नो चेद् भुक्तिर्भवान्तरे ॥ २१ ॥ ततो राज्ञा निरुद्धौ द्वौ, रथावनर्थभीरुणा।
इति श्रुत्वा महापद्मो, गृहीतो जननीशुचा ॥ २२ ॥ निर्गतो देशयात्रायां, निद्रया मुद्रिते जने। रात्रौ ज्ञातो न केनापि, गच्छन् प्राप्तो

महाटवीम् ॥ २३ ॥ भ्रमंस्तत्राङ्घ्रिचारेण, सम्प्राप्तस्तापसाश्रमम् । तापसैः कृतसन्मानः, सुखेनास्थात् स्वसद्मवत् ॥ २४ ॥ इतश्च चम्पा-
नगर्यां, राजाऽभूद् जनमेजयः । स तु कालनरेन्द्रेण, निरुद्धो जात आहवः(वे) ॥२५॥ मृतश्चम्पाधिपो नष्टो, जनोऽभूदात्मनाऽऽत्मना ।
नष्टमन्तःपुरं सर्वमित्यभूद् विभ्रमो महान् ॥२६॥ स्वपुत्र्या मदनावल्या, समं नागवती प्रिया । चम्पेशितुः भ्रमन्त्यन्ती, प्राप्ता तं ताप-
साश्रमम् ॥ २७ ॥ आश्वासिता कुलपतिना तत्रैव स्थिता सुखम् । कुमार-मदनावल्योरनुरागो मिथोऽभवत् ॥ २८ ॥ कुलपति-नाग-
वतीभ्यां ज्ञाता(तौ) मदनावली । मात्रोक्तं(क्ता) पुत्रि ! किं वाक्यं, स्मरसि ज्ञानिनो न हि ? ॥२९॥ यथाऽऽद्या चक्रिणः पत्नी, भविष्यति
ततः कथम् । अनुरागं यत्र तत्र, कुर्वाणा किं न लज्जसे(सि) ? ॥३०॥ कुमारः कुलपतिना, प्रोक्तो भो ! यत्र वाञ्छितम् । गन्तुं तत्र प्रयाहि
त्वं, तच्छ्रुत्वा सोऽप्यचिन्तयत् ॥ ३१ ॥ आगमे नूनमेतस्याः, समस्तभरताधिपः । भूत्वाऽहं कारयिष्यामि, सर्वत्रापि जिनालयान् ॥३२॥
इत्यभिलापमालाभिराकुलो निर्गतस्ततः । गच्छन् क्रमेण सम्प्राप्तः, सिन्धुनन्दनपत्तनम् ॥ ३३ ॥ उद्यानिकोत्सवे तत्र, निर्ययुर्नगरस्त्रियः ।
क्रीडन्ति च निशम्याऽऽसां, केलीकलकलारवम् ॥ ३४ ॥ गजः प्रोन्मूलितालानो, मह(हा)सेननरेशितुः । व्यापाद्य सादिनं माद्यन्,
सद्यः प्राप्तस्तदन्तिकम्(के) ॥ ३५ ॥ [युग्मम्] तं निरीक्ष्य भयत्रस्ता, न समर्थाः पलायितुम् । आक्रन्दितुं प्रवृत्ताश्च, तत्रस्था एव ताः
स्त्रियः ॥ ३६ ॥ आसन्नस्थकुमारेण, दृष्टा(ष्टं) तं(तत्) तरुणीगणम् । कदर्थ्यमानमुन्मत्तकरिणाऽनाथवद् भृशम् ॥ ३७ ॥ ततः सम्पन्नका-
रुण्यस्तारुण्यफललिप्सया । हक्कितवान् पुरो भूत्वा, कुमारः करिणं रयात् ॥ ३८ ॥ दधावे सिन्धुरः क्रोधोद्धुरोऽभिमुखमस्य तु । तं दृष्ट्वा
भणितुं लग्ना, हाहारवमुखाः स्त्रियः ॥ ३९ ॥ अहो ! रक्षापरोऽस्माकं, दुष्टेभेन महापुमान् । विनाशयिष्यते लग्नः, कस्य पूत्कुर्महे पुरः ?
॥ ४० ॥ तासु चैवं वदन्तीषु, प्रहारः करिणा कृतः । क्षिप्ते तस्योत्तरीये का, चेतनाऽचेतनावताम् ? ॥ ४१ ॥ इतश्च मिलितो लोको, राज्ञा

शलाकापुरुषाधिकारे नवममहापद्मचक्र्यधिकारः ।

भृत्ययुजा समम् । राजाऽऽहापसरामुष्माद्, गजात् कुमा(म)र! दुष्टतः ॥४२॥ कुमारोऽप्याह भूनाथ!, भवतामेव पश्यताम् । नेष्यामि वश्यतामेनं, पश्यन्तूत्का हि कौतुकम् ॥ ४३ ॥ इत्युक्त्वा करणैः शास्त्रोक्तैस्तं खेदितवांश्चिरम् । विशुत्क्षिप्तकरणेनाऽऽरुरोह च (तं) मृगेन्द्रवत् ॥ ४४ ॥ एवं कृत्वा महापद्मस्तं गजं वशवर्त्तिनम् । दत्त्वा निषादिने पृष्ठादुत्तताराङ्गमारजित् ॥ ४५ ॥ भूभुजा नागरैः सर्वैर्जयजयार(रा)ववादिभिः । स्तुतश्चाचिन्तयद् भूपस्तद्रूप-गुणरञ्जितः ॥ ४६ ॥ कुलीनोऽयं पुमान् नूनमाकृत्याऽनणुभिर्गुणैः । सम्भाव्यते ततः कन्याशतमस्मै नृपो ददौ ॥ ४७ ॥ भुञ्जानोऽपि समं ताभिरसौ वैषयिकं सुखम् । स्मरतीव नृपो नीतिं, तथापि मदनावलीम् ॥ ४८ ॥ अन्यदोत्पाटितो रात्रौ, सुखसुप्तः स तल्पतः । वेगवत्या नभश्चर्या, प्रबुद्धः पश्यति स ताम् ॥ ४९ ॥ प्रदर्श्य मुष्टिबन्धं चोवाच मां कुत्र नेष्यसि ? । साऽप्याह शृणु वैताढ्ये, आस्ते सूरोदयं पुरम् ॥५०॥ राजाऽत्रेन्द्रधनुर्नामा, श्रीकान्ता तस्य पत्न्यभूत् । जगच्चन्द्राभिधा पुत्री, सा नरद्वेषिणी पुनः ॥ ५१ ॥ नृपाज्ञया मया चित्रपटे विलिख्य दर्शिताः । भरतस्था नृपाः सर्वे, रुरुचेऽस्यै न कोऽपि हि ॥ ५२ ॥ अन्येद्युर्दर्शितं युष्मद्रूपं निर्जितमन्मथम् । मन्मथव्यथयाऽत्यर्थं, ग्रस्ता तद्दर्शनादपि ॥ ५३ ॥ उक्ता चाहं तया चेन्मे, नैष सम्पद्यते धवः । तदा मृतिर्ममावश्यं, पुमांसो भ्रातरो(रः परे)ऽपरे ॥५४॥ माता-पित्रोर्व्यतिकरो, मयाऽस्याः कथितस्त्वयम् । ततस्ताभ्यां समानेतुं, त्वामहं प्रेषिता विभो! ॥ ५५ ॥ तस्यामविश्वसन्त्यां तु, प्रतिज्ञा विहिता मया । यथानयामि तेऽभीष्टं, नो तदाऽमो विशाम्यहम् ॥ ५६ ॥ साम्प्रतं त्वत्प्रसादेन, न भवेन्मे मृतिस्तथा । प्रतिज्ञा निर्वहेत् सर्वं, शोभनं स्यान्न चान्यथा ॥ ५७ ॥ ततस्तयाऽ(तया तद)नुमत्याऽसौ, नीतः सूरोदये पुरे । ज्ञापितः खेचरेन्द्रस्य, तेनाप्येषोऽर्चितो भृशम्(तत्वरम्) ॥५८॥ प्रधानदिवसे पाणिग्रहणं कारितोऽमुना । जगच्चन्द्राह्वया कन्या, पूजिता वेगवत्यपि ॥ ५९ ॥ मातुल-भ्रातरौ तस्या गङ्गाधर-महीधरौ । अतिप्रचण्डावायातौ, श्रुत्वा व्यतिकरं हि तम्(तु) ॥ ६० ॥

तयोरागमनं श्रुत्वा, महापद्मोऽभिनिर्ययौ। नभश्चरभटैः सार्द्धं, समभूदायोधनं मिथः ॥६१॥ न रथो न गजो नाश्वो, न भटो वैरिणोस्तयोः। यो न विद्धः कुमारेण, रणे तस्मिन्नुपस्थिते ॥ ६२ ॥ ततस्ताभ्यां निजं सैन्यं, विज्ञाय भयविह्वलम्। स्वदक्पूतीकृताः काष्ठाश्चक्री प्रत्याययौ जयी ॥ ६३ ॥ स्त्रीवर्जो(र्ज्यो)त्पन्नरत्नौघः, सम्पन्ननवसेवधिः। परिणीतैकोनचतुःषष्टिसहस्रसुखितः ॥ ६४ ॥ द्वात्रिंशत्सहस्रनृपैः, सेव्यमानपदद्वयः। गजाश्व-रथ-पादातिसमृद्धश्चक्रवर्त्त्यभूत् ॥ ६५ ॥ षट्खण्डराज्यमप्येवं, नीरसं मन्यतेऽखिलम्। जनमेजयराट्पुत्रीं, विना तां मदनावलीम् ॥ ६६ ॥ गतस्यास्याऽऽश्रमेऽन्येद्युरर्चितस्य फलादिभिः। तापसैश्चार्पिता जामिर्जनमेजयसूनुना ॥ ६७ ॥ परिणीता कुमारेण, स(म)हसा मदनावली। ततश्च चक्रिणः सम्प्रयुक्तोऽगाद् हस्तिनापुरम् ॥६८॥ प्रविष्टः पत्तनं स्तूयमानो वन्दिजनैर्घनैः। पितरौ प्रणतौ तेन, सबाष्पौ स्नेहतस्तदा ॥ ६९ ॥ इतश्च सुव्रतस्वामिशिष्याः सुव्रतसूरयः। तत्रेयुर्निरगात् पद्मोत्तरो राट् सपरिच्छदः ॥ ७० ॥ संसारासारतोक्ता तैर्निर्विण्णो राड् जगौ विभो!। प्रतीक्षध्वं क्षणं राज्यस्वास्थ्यं कृत्वैमि यावता ॥ ७१ ॥ कर्त्तव्यः प्रतिबन्धो मा, स श्रुत्वेति गुरूदितम्। वन्दित्वा पुरमागत्याऽऽकार्य मन्त्रिण इत्यवक् ॥ ७२ ॥ भो भो! मया श्रुतोऽसारः, संसारो दुःखदारुणः। इयन्तं यद्भितः कालं, यन्नैवानुष्ठितं हितम् ॥ ७३ ॥ [कार्यं परस्याद्य यावत् कृतं कुर्वेऽधुनाऽऽत्मनः ॥७३॥ पाठान्तरम्] अथ विष्णुकुमाराय, दत्त्वा राज्यं स्वसूनवे। प्रव्रजिष्यामि तच्छ्रुत्वा, सोऽप्यागत्या(विष्णुरप्य)ब्रवीददः ॥ ७४ ॥ किम्पाकफलसङ्काशैस्तात! भोगैरिमैरलम्। मार्गं तेऽनुचरिष्यामि, ज्ञात्वा तन्निर्णयं ततः ॥ ७५ ॥ व्याहृत्योक्तो महापद्मो, राज्यमादत्स्व पुत्र! मे। येनाङ्गीकुर्महे दीक्षां, तेनोक्तं विनयादिदम् ॥ ७६ ॥ तात! विष्णुकुमाराय देहि राज्यमयं पुनः। तस्याज्ञाकारको भावी, पदातिरिव सर्वदा ॥ ७७ ॥ पुनरुक्तोऽपि नो विष्णू राज्यमङ्गीकरोत्यतः। महापद्मोऽभिषिक्तोऽस्मिन्, सम्मत्याऽऽत्मानुजीविनाम् ॥ ७८ ॥ समं विष्णुकुमारेण, राजा

शिक्षाय संयमम् । कल्पद्रुमोपासने हि, कः सुधीः शिथिलो भवेत् ? ॥ ७९ ॥ विख्याताङ्गो महापद्मो, नवमश्चक्रवर्त्यभूत् । इयन्तं कालमभ्रान्तावेवाथ तौ(-त्वमेव) स्थितौ रथौ ॥८०॥ पुरान्तर्भ्रामितो जैनो(-न)रथो मातुर्महीक्षिता । तदादितो घनो लोकः, प्रपन्नो जि(जै)नशासनम् ॥ ८१ ॥ चैत्यानि सर्वभरते, पुर-ग्राम-वनादिषु । लक्षकोटिप्रमाणानि, कारितान्यमुनाऽर्हताम् ॥ ८२ ॥ पद्मोत्तरोऽपि राजर्षिः, पालिताखण्डितव्रतः । घातिकर्मक्षयात् प्राप्तकेवलोऽशिश्रयच्छिवम् ॥ ८३ ॥ विष्णोरप्युग्रतपसि विहारेऽनुत्तरे(र)व्रते । वस्तुपो वैक्रियाकाशगमाद्या लब्धयोऽभवन् ॥ ८४ ॥ स याति पक्षिवद् व्योम्नि, तुङ्गाङ्गो मेरुवद् भवेत् । बहुरूपी सुपर्वेव, कामवत् कामरूपवान् ॥ ८५ ॥ इतस्ते सुव्रताचार्या, बहुशिष्यपरीवृताः । ईयुर्गजपुरं वर्षावासार्थं कानने स्थिताः ॥ ८६ ॥ ज्ञाता नमुचिना छिद्रान्वेषिणा द्वेषिणा पुरा । राजोक्तोऽवसरं प्राप्य, पूर्वोक्तं देहि मे वरम् ॥८७॥ चक्रयाह वृणु तेनोक्तं, वेदोक्तविधिना मखम् । कर्तुमिच्छाम्यतो राज्यं, देह्येवमस्तु सोऽप्यवक् ॥ ८८ ॥ प्रविश्यान्तःपुरं तस्थौ, चक्री भूत्वा त्वसौ नृपः । यज्ञपाटे दीक्षितोऽभूत्, पुराभिर्गत्य दम्भतः ॥ ८९ ॥ तस्य राज्येऽभिषिक्तस्य, सर्वाः प्रकृतयो द्विजाः । लिङ्गिनश्चाययुर्द्रष्टुं, विना श्वेताम्बरान्नृपीन् ॥ ९० ॥ ततोऽनेनाखिला लोका, ईयुर्वर्द्धापका न तु । श्वेताम्बरा इति छिद्रं, प्रकाश्याऽऽकार्य वान् जगौ ॥ ९१ ॥ भो भो! यदा क्षत्रियो वा, द्विजो वा राज्यमश्नुते । पाखण्डिभिः स द्रष्टव्यः, सर्वत्रेयं जनस्थितिः ॥९२॥ निर्मर्यादाः पुनर्यूयं, स्तब्धाः पाखण्डदूषकाः । मन्निन्दकाश्च मद्राज्यं मुक्त्वाऽतो यान्तु(त) दूरतः ॥९३॥ सुव्रताचार्यैरथोक्तं (सुव्रतार्यैरथोक्तं नो,) न कल्प इति नागताः । न क(कि)ञ्चिदपि निन्दामः, समभावा हि साधवः ॥९४॥ ततोऽवददसौ रुष्टः, सप्ताहोपरि चेन्मुनिम् । द्रक्ष्यामि वान्ध( वं नूनं नेष्यामि तमहं मृतिम् )वमपि, नूनं नेष्यामि तं मृतिम् ॥९५॥ यतयः सायमायाता, उद्याने मिलिताः समे । अत्र किं कार्यमाचार्यैरित्युक्ते कश्चिदित्यवक् ॥ ९६ ॥ क्षवषष्टवपाः षष्टिशतवर्षाणि साम्प्रतम् । मेरौ विष्णुकुमारर्षिर्भ्राता विप्रवि चक्रिणः

॥ ९७ ॥ स आयाति तदा तस्य, वाक्याच्छाम्यत्यसौ द्विजः । यश्च स्याल्लब्धिमांस्तत्र, यात्वस्याऽऽनयनाय सः ॥ ९८ ॥ मुनिरेकोऽवद-
च्छक्तियाने मेऽस्ति न चागमे । वत्स ! गच्छेत्यवक् सूरिस्त्वां स प्रवानयिष्यति ॥ ९९ ॥ ततो नत्वोत्पपातासौ, क्षणात् मन्दरमभ्यगात् ।
तं दृष्ट्वा चिन्तितं तेन, सङ्घकार्यं ह्यभूद् गुरु ॥ १०० ॥ वर्षास्वेवागतस्तेन, तं नत्वोक्तं प्रयोजनम् । स ज्ञात्वाऽऽकाशयानेन, प्राप्तो गजपुरं
मुनिः ॥ १०१ ॥ नत्वा सूरिं ततः साधुयुतोऽगाद् विष्णुसंयुतः । नमुचेर्दर्शनार्थं तं, मुक्त्वा सर्वैर्नृपैर्नतः ॥ १०२ ॥ ततः सुखासनस्थेन,
धर्माख्यानादि(-पन)पूर्वकम् । विष्णुना प्रोक्तमावर्षाराश्रं तिष्ठन्तु साधवः ॥१०३॥ तेनोक्तं किं बहूक्तेन ?, तिष्ठन्तु पञ्च वासरान् । प्रत्याह
बहिरुद्यान, एव स्थास्यन्ति न(नो) पुरे ॥१०४॥ सोऽवक् पुरं वोद्यानं वाऽऽस्तां पितृ-मातृदूषकैः । त्याज्यं राज्यं भवद्भिर्मे, कार्यं चेज्जीवितेन वः
॥१०५॥ रोषारुणो मुनिः प्राह, देहि पादत्रयस्थितिम् । सोऽवक् दत्ता परं वध्यो, यो बहिः से(बहिरि)ति निर्णयः ॥१०६॥ ततः कोपानल-
ज्वालावली(ल्या)लीढवपुर्लतः । मृत्तिकापिण्डवच्चक्रारूढो लग्नः स वर्द्धितुम् ॥१०७॥ कृतनानाविधाकारो, लक्षयोजनमानवान् । भापयामास
(भापयमानः)फूत्कारैर्लक्षयोजनमानवान् (फूत्कारलक्षैर्योजनमानवान्) ॥ १०८॥ ग्रामाऽऽकर-पुरी(पुराऽऽ-)कीर्णं, कुर्वाणः क्रमदर्दुरम् ।
धूनयन्नवनीपीठमुच्छालय(मुच्छालय)न्नपांनिधीन् ॥१०९॥ ज्योतिश्चक्रं तिरस्कुर्वन्, गिरिशृङ्गाणि पातयन् । प्रलयकालकल्पोऽभूत्, क्षोभयन्
देव-दानवान् ॥११०॥ [ त्रिभिर्विशेषकम् ] सङ्क्षोभाद् जगतः शक्रो, ज्ञात्वा तं कुपितं मुनिम् । प्राहिणोत् तस्य शान्त्यर्थं, देवगायनसुन्दरीः
॥ १११ ॥ जगुस्ताः कर्णयोर्गीतं, क्रोधो धर्मधनापहः । स्वान्यसन्तापकश्चर्षे !, भज शान्तिमिति स्वयम् ॥ ११२ ॥ भगवान् वर्द्धमाना-
ङ्गोऽधः क्षेप्तुं नमुचिं द्विपम् । पूर्वापराब्धिदत्तांह्रिज्ञातो भीतेन चक्रिणा ॥११३॥ प्रसाद्यमानस्तेनापि, तथा सङ्घेन चामरैः । शाम्य(उपशाम्य)-
मानः कथमपि, कृपां कृत्वा न्यवर्त्तत ॥११४॥ त्रिविक्रमः स नाम्नेति, लोके ख्यातस्तदादितः । आलोचित-प्रतिक्रान्तमात्रः शुद्धो गतक्रुधः

॥ ११५ ॥ यदुक्तम्—"आयरिए गच्छम्मि य, कुल-गण-संघे य चेइयविणासे। आलोइयपडिक्कंतो, सुद्धो जं निज्जरा विउला ॥ ११६॥" निष्कलङ्कव्रतो विष्णुर्भूत्वा केवल्यगाच्छिवम्। महापद्मोऽपि संसारविरक्तो व्रतमाददे ॥ ११७ ॥ सम्यगधीतसूत्रार्थो, दुष्करव्रततत्परः। उग्रतपाः स सम्पन्नकेवलः शिवमाप्तवान् ॥ ११८ ॥ त्रिंशद्वर्षसहस्रायुः, स विंशतिधनुस्तनुः। महापद्माभिधश्चक्री, नवमो नवमोऽभवत् ॥ ११९ ॥ विष्णुकुमारचरितं, प्रसङ्गाविह दर्शितम्। शास्त्रेऽस्मिन् ब्रुवतेऽन्ये तमन्यं सोऽपीदृगेव हि ॥१२०॥ किन्तु चक्रि(क्र)द्विण्डिहीनमहापद्मनृपाग्रजः। श्रीशान्तिशिष्यः सर्वार्थे, ग(गी)तो विष्णुकुमारराट् ॥ १२१ ॥ इति महापद्मनवमचक्रिचरित्रम् ॥

हरेर्नृपस्य मेरायां, देव्यां काम्पील्यपत्तने। पुत्रोऽभूद् हरिषेणाख्यश्चक्रिणः स्वप्नसूचितः ॥१॥ चारुतारुण्यवान् पित्रा, राज्ये न्यस्तः क्रमागते। चतुर्दशासन् रत्नानि, साधिता भरतावनिः ॥ २ ॥ भुञ्जानश्चक्रिणो भोगान्, सुखेनाहानि सोऽनयत्। लघुकर्मतयाऽन्येद्युर्वैराग्यादित्यचिन्तयत् ॥ ३ ॥ ऋद्धिः प्राप्ता मयेदृक्षा, प्राक्कृत(कृत)शुभकर्मणा। कुर्वेऽधुनापि तद् येन, सुखी स्यामायतावपि ॥ ४ ॥ उक्तं च—"मासैरष्टभिरह्ना च, पूर्वेण वयसाऽऽयुषा। तत् कर्तव्यं मनुष्येण, यस्यान्ते सुखमेधते ॥ ५ ॥" चिन्तयित्वेति साम्राज्ये, पुत्रं न्यस्याऽऽददे व्रतम्। उत्पाद्य केवलं सिद्धिसौधमध्यारुरोह सः ॥ ६ ॥ दशवर्षसहस्रायुर्धनुःपञ्चदशोन्नतः। वन्दारुर्नेमिनाथस्य, हरिषेणाख्यचक्र्यभूत् ॥ ७ ॥ इति दशमचक्रिचरित्रम् ॥

पुरे राजगृहे राजा, समुद्रविजयाह्वयः। राज्ञी वप्रा सुतश्चक्रिलक्षणैर्लक्षितो जयः ॥ १ ॥ क्रमात् साधिताखण्डभरतश्चक्रवर्त्यभूत्। भुञ्जानोऽद्वैतसाम्राज्यं, विरक्तोऽभूद् भवाद् भृशम् ॥२॥ तदनु व्रतमादाय, शिवमासददव्ययम्। सोऽभूद् वर्षसहस्रायुर्धनुर्द्वादशदेह-

१ "आचार्ये गच्छे कुले गणे सङ्घे च चैत्यविनाशे। आलोचितप्रतिकान्तः शुद्धो यन्निर्जरा विपुला ॥ ११६ ॥"

भूत् ॥ ३ ॥ इत्येकादशमचक्रिचरित्रम् [ ग्रन्थाग्रं १२२६ ] ॥ अत्र (तु) "नमामि नव सगरपामुक्खे" इति गाथाचतुर्थपादसूचितनवचक्रिचरितानि लेशतो दर्शितानि ॥ अथ महाबलचरित्र(त)प्रज्ञापनागाथाद्वयमाह—

विमलजिणेसरतित्थे, थेराणं अंतियम्मि पव्वइओ। चउदसपुव्वी पत्तो, महाबलो पंचमे कप्पे ॥ १३ ॥

तत्तो चइत्तु जाओ, वाणियगामे सुदंसणो सिट्ठी। वीरसयासे पुणरवि, चउदसपुव्वी गओ सिद्धिं ॥ १४ ॥

व्याख्या—'महाबलः' इति बलाख्यराजाङ्गजः 'प्राप्तः' गतः पञ्चमे 'कल्पे' देवलोके इति कर्तृ-क्रियायोगः । किंविशिष्टोऽसौ ? प्रव्रजितः, कस्मिन् ? 'अन्तिके' समीपे, केषां ? 'स्थविराणां' श्रीधर्मघोषनाम्नां सूरीणां, क ? "विमल" इत्यादि, विमलश्चासौ जिनेश्वरश्च विमलजिनेश्वरः-त्रयोदशमजिनस्तस्य 'तीर्थे' सन्ततौ । पुनः किंविशिष्टः ? 'चतुर्दशपूर्वी' दृष्टिवादवेत्ता । अत्र पञ्चमकल्प( पञ्चमे कल्पे ) गमनं तु केनापि विस्मृतत्वादिहेतुना सम्भाव्यते । अन्यथा जघन्यतोऽपि लान्तकगमनं स्यात् । यदुक्तम्—"[1]लंतम्मि चउदपुव्विस्स" इति । प्रथमगाथार्थः ॥ १३ ॥ "तत्तो" त्ति 'ततः' (अभिमत-)पञ्चमकल्पात् "चइत्तु" प्रच्युत्य 'जातः' उत्पन्नः, कस्मिन् ? वाणिजग्रामे, किंनामा ? सुदर्शनः 'श्रेष्ठी' ग्रामवणिग्मुख्यः "वीरसयासे" त्ति श्रीमहावीरसमीपे 'पुनरपि' द्वितीयवारमपि 'प्रव्रज्येति शेषः' "चउदसपुव्वी" त्ति चतुर्दश पूर्वाण्यधीत्य 'गतः' प्राप्तः 'सिद्धिं' सिद्धस्थानम् । इति द्वितीयगाथार्थः ॥ १४ ॥ भावार्थस्तु चरित्रेणोच्यते—

श्रीहस्तिना(नी)पुरे राजा, बलो राज्ञी प्रभावती । सुप्तसुप्ताऽन्यदा स्वप्ने, प्रबुद्धा वीक्ष्य सा हरिम् ॥ १ ॥ प्रातः शशंस तं राज्ञे, चिरं विमृश्य सोऽप्यवक् । पुत्रलाभः प्रिये ! भावी, तवैतदनुभावतः ॥ २ ॥ श्रुत्वेति हृष्टतुष्टेत्य, गृहं गर्भं बभार सा । विद्युदिव पयोगर्भे,

1 "लान्तके चतुर्दशपूर्विण" इति ।

क्रमाच्च सुषुवेऽङ्गजम् ॥३॥ दासी वर्द्धापयामास, बलेन्द्रं पुत्रजन्मना । किरीटवर्ज्जां सोऽप्यस्यै, ददौ सर्वामलङ्कृतिम् ॥ ४ ॥ ततः कौटुम्बिकान् पुंसः, आकार्येत्यादिशन्नृपः । भो! मानोन्मानयोर्वृद्धिं, कुर्वन्तु बन्दिमोचनम् ॥५॥ द्वादशाह्नदे सूतिकर्म निर्वर्त्य पार्थिवः । दायादेभ्यो ददौ प्रीतिदानं सन्तोषपोषतः ॥ ६ ॥ नामास्य निर्ममे महाबल इत्यन्वयं बलः । ववृधे पञ्चधात्रीभिर्लाल्यमानः शशीव सः ॥ ७ ॥ गृह्णन् कलाकलापं स, क्रमाद्यौवनोऽभवत् । राज्ञा राजन्यकन्यानामष्टानां ग्राहितः करम् ॥ ८ ॥ कारितं वेश्म तद्योग्यमष्टप्रासादशोभितम् । पित्रा ददौ यौतके चाष्ट कोटीः स्वर्ण-रूप्ययोः ॥ ९ ॥ हार-कुण्डल-कोटीरानष्टाष्टौ च पृथक् पृथक् । अष्टौ गजान् अजानष्टौ, गोसहस्रदशान्वितान् ॥ १० ॥ दासानष्टाष्ट सद्ग्रामानष्टायुतकुलाकुलान् । यानान्यष्टाष्ट द्वात्रिंशद्-बद्धनाट्यान्यदान्नृपः ॥ ११ ॥ [युग्मम्] यच्चान्यदप्यदाद् दातुं, भोक्तुमासप्तमान्वयम्। ततोऽसौ सौधगो(ततः सौधगतो)भोगान्, भुञ्जानोऽस्ति महाद्भुतान् ॥१२॥ अन्येद्युर्धर्मघोषर्षिर्मुनिपञ्चशतान्वितः । विमलस्वामिनस्तीर्थोद्योतकोऽऽगतः पुरे ॥ १३ ॥ निर्गता जनता ज्ञातवृत्तान्त(न्तः)पार्थिवोऽपि हि । निषसादाविषादात्मा, धर्मं श्रोतुं मुनेः पुरः ॥ १४ ॥ महाबलकुमारोऽथ, धर्मं श्रुत्वा मुनेर्मुखात् । हृष्टतुष्टो नमस्कृत्य, त्रिःकृत्वो(त्वा)ऽदोऽब्रवीद् वचः ॥ १५ ॥ भगवन्! भवदादिष्टं, सर्वं मे रुचितं परम् । यावदापृच्छ्य पितरौ, प्रव्रजाम्यन्तिके विभोः ॥ १६ ॥ मा कार्षीः प्रतिबन्धोऽत्र, गुरुराह यथासुखम् । ततो नत्वा स तं प्राप्तो, गृहं पित्रोरदोऽवदत् ॥ १७ ॥ अम्ब! तात! मया,धर्मो, धर्मघोषान्तिके श्रुतः । स मेऽभिरुचितोऽत्यर्थं, ततोऽदस्तौ तमाहतुः ॥१८॥ धन्योऽसि त्वं कृतार्थोऽसि, त्वं तोके(ताते)ति ततोऽङ्गजः । प्राहेच्छाम्यभ्यनुज्ञातो, युवाभ्यां सेवितुं व्रतम् ॥ १९ ॥ ततः प्रभावती श्रुत्वाऽनिष्टां तामशुभां गिरम् । रोमकूपगलत्स्वेदक्लिन्नाङ्गा शोकविह्वला ॥ २० ॥ निस्तेजा दीनवदना, करमृ(म्र)ष्टाब्जदामवत् । विकीर्णकेशा प्रभ्रष्टोत्तरीया कुट्टिमेऽपतत् ॥२१॥ [युग्मम्] तालवृन्तानिलैः स्वर्णकुम्भाम्भोभिः

ससम्भ्रमम् । साऽऽश्वासिता क्रन्दमाना, रुदन्ती तमदोऽब्रवीत् ॥२२॥ जात ! त्वमेकः पुत्रो मे, जीवात्मा हृदयङ्गमः । निधिभूतो रत्नभूतो, दुर्लभो वटपुष्पवत् ॥ २३ ॥ तद् जाताऽऽवां वियोगं ते नेच्छावः क्षणमप्यतः । तिष्ठाऽऽवां यावज्जीवावो, मृताभ्यां तु व्रतं श्रयेः ॥२४॥ महाबलोऽप्यदोऽवादीद्, यद् यूयं ब्रूत तत् तथा । परं जाति-जरा-मृत्यु-रुजां गेहमसौ भवः ॥ २५ ॥ सन्ध्याभ्ररागतुल्येऽस्मिन्, स्वप्नदर्शनसन्निभे। को याति पूर्वं कः पश्चादिति वेत्स्यम्ब ! तात ! कः ? ॥२६॥ प्रव्रजाम्यत एवाशु, तच्छ्रुत्वाऽऽह प्रभावती । जात ! ते चारुविज्ञान-विचक्षणमिदं वपुः ॥ २७ ॥ रम्यलक्षण-रूपाढ्यं, गतरोगं सुखोचितम् । तद् भुङ्क्ष्व तत्फलं पूर्वं, पश्चात् चारित्रमाश्रयेः ॥ २८ ॥ [युग्मम्] स प्राहेदं वपुर्मातर्मृत्पात्रमिव दुर्बलम् । नवस्रोतःस्रवद्विस्रं, रुक्स्रवेति व्रतं श्रये ॥ २९ ॥ ततोऽवददिदं माता, जाताष्टौ ताः प्रिया इमाः । सत्कुलशीलशालिन्यो, हावभावविचक्षणाः ॥ ३० ॥ स्त्रीकलाकुशला मञ्जुभाषिण्यः स्नेहदीपिकाः । मनोऽनुगाः सहैताभिर्भोगान् भुक्त्वा व्रतं श्रयेः ॥ ३१ ॥ [युग्मम्] सोऽवग् मानुष्यकाः कामभोगा रोगरुजाश्रयाः(रोगाश्रयाः सदा) । दुःखानुबन्धिनस्तीव्रविपाकाः, प्रव्रजाम्यतः ॥ ३२ ॥ ऊचतुः पितरौ चैवं (पितरावेवं), पितृपर्यागतं बहु । स्वर्णं रूप्यं धनं धान्यं, भुक्त्वा पश्चाद्व्रतम् ॥ ३३ ॥ पुनर्महाबलोऽवादीत्, तत् सर्वं विद्युदध्रुवम् । चौराग्नि-नृप-दायाद-यमायत्तं त्यजाम्यतः ॥ ३४ ॥ इत्थं प्रलोभनैर्वाक्यैर्न शक्तौ तं(तौ) प्रलोभितुम् । पितरौ संयमोद्वेगवाक्यैर्वक्तुमथोचतुः ॥३५॥ वालुकाकवलास्वादनीरसेऽस्मिन् व्रतेऽङ्गज ! । क्रमणं खड्गधारायां, पातव्याऽग्निशिखोज्ज्वला ॥ ३६ ॥ यानं सर्प इवैकाग्रदृष्ट्याऽद्या आयसा यवाः । गङ्गाप्रतिस्रोतसि च, तरितव्योऽम्बुधिर्भुजैः ॥ ३७ ॥ शिरीषसुकुमाराङ्ग ! कुमार ! त्वं सुखोचितः । सहिष्यसे कथं क्षुत्-तृट्-शीतोष्णाद्यान् परीषहान् ? ॥ ३८ ॥ पालनं ब्रह्मचर्यस्य, भिक्षावृत्तिः कचोद्धृतिः । ताडना-तर्जनाऽऽक्रोशाः, सोढव्या दुष्कराः(रं) समम् ॥३९॥ तत् तिष्ठ यावद् जीवावस्तच्छ्रुत्वाऽऽह महाबलः ।;

कातराणां न धीराणां, दुष्करं सर्वसम्पदः ॥ ४० ॥ अनुमेनेऽनिच्छयैव, कृच्छ्राद् बलनृपस्ततः । आदिक्षन्नगरारक्षान्, पुरशोभाकृते
कृती ॥ ४१ ॥ निवेश्य पूर्वाभिमुखं, शताष्टैर्घटाम्बुभिः । व्रताभिषेकश्चक्रेऽस्य, सर्वतूर्यस्वनाद्भुतः ॥ ४२ ॥ करौ संयोज्य पितरावूचतु-
र्वत्स ! किं प्रियम् । कुर्वो ? द्व्रोऽथ केनार्थस्तवाख्याहीति सोऽप्यवक् ॥ ४३ ॥ इच्छामि नापिताह्वानं, लक्षेण तद्वयेन तु । पात्रं धर्मध्वजं
दिव्यं, पितरौ ! कुत्रिकापणात् ॥ ४४ ॥ लक्षद्वयेन भूपेन, स्वपुंसाऽऽनायितं द्वयम् । नापितश्चाभ्यनुज्ञातः, स्नात्वाऽष्टगुणवाससा ॥ ४५ ॥
बद्धास्योऽकल्पयत् केशांश्चतुरङ्गुलवर्जितान् । मुञ्चन्त्यश्रूणि तांस्तत्वोच्छीर्षकेऽस्थापयत् प्रसूः ॥४६॥ [ युग्मम् ] ततः सरसगोशीर्षचन्दनालिप्त-
विग्रहः । सहस्रवाहशिबिकाऽऽरूढोऽलङ्कृतलङ्कृतः(लक्षितः) ॥ ४७ ॥ वीजितश्चामरैर्द्वाभ्यां, धृतछत्रः स्त्रियैकया । अन्वितः पितृ-मातृभ्यां,
युताभ्यां सचिवादिभिः ॥४८॥ धन्यः सुलब्धजन्माऽयं, विषवद् विषयानमून् । विहायाऽऽश्ववयस्येव, कुमारः प्रव्रजिष्यति ॥४९॥ पौरैरिति
स्तूयमानो, दर्श्यमानोऽङ्गुलिव्रजैः । विकीर्यमाणो मुक्ताद्यैर्वीज्यमानोऽम्बराञ्चलैः ॥ ५० ॥ याचकेभ्यो ददद् दानं, निर्गच्छन् नगरान्तरम् ।
तूर्यैर्बधिरयन्नाशा, धर्मघोषान्तिकं(के) ययौ ॥ ५१ ॥ [ पञ्चभिर्विशेषकम् ] ततस्तौ (पितरौ तं) पुरस्कृत्योचतुर्गुरुमदो मुदा । भगवन् !
भवभीतोऽयं, प्रव्रजिष्यति योऽन्तिके ॥ ५२ ॥ तदेनां पुत्रभिक्षां वो, द्व्रोऽङ्गीकुरुतर्षयः !(स्वयम्) । यथेच्छं प्रतिबन्धोऽत्र, न कार्य इति
तेऽभ्यधुः ॥ ५३ ॥ अथैष सूरिणा प्रोक्तः, कुमारो हृष्ट-तुष्ट(रस्तुष्टहृष्ट-)हृत् । नत्वैत्येशानदिक्कोणेऽलङ्कारान् मुमुचेऽङ्गतः ॥५४॥ स्थूलमुक्ता-
फलाभानि, मुञ्चन्त्यश्रूणि देव्यपि । निजोत्तरीयवस्त्रेणालङ्कारानाददेऽखिलान् ॥ ५५ ॥ उवाच चाङ्गजार्थेऽस्मिन् मा(त्र)प्रमाद्यं प्रयत्नतः ।
इत्युक्त्वाथ(इत्युक्त्वर्षीन्) नमस्कृत्य, पितरौ जग्मतुर्गृहम् ॥ ५६ ॥ अथो महाबलो लोचं, कृत्वा नत्वाऽवदद् गुरुम् । प्रदीप्ते भगवल्लोके,
जरसा मृत्युनाऽपि च ॥ ५७ ॥ यूयं स्वयं व्रतं दत्त, तथा शिक्षामपि स्वयम् । ततः प्रव्राजयत्येनं, सूरिः शिक्षयति स्वयम् ॥ ५८ ॥ जातो

महाबलः पञ्चसमित्या समितो मुनिः । त्रिगुप्तश्च चतुर्दशपूर्वधार्यभवत् पुनः ॥ ५९ ॥ चतुर्थ-षष्ठाष्टमाद्यैरात्मानं भावयन् घनैः । तपोभिर्द्वादशाब्दानि प्रपाल्य सोऽक्षतं व्रतम् ॥ ६० ॥ संलेखनया मासिक्या, कालं कृत्वा समाधिना । उत्पन्नः पञ्चमे कल्पे, दशाब्ध्यायुर्महासुरः ॥ ६१ ॥ [युग्मम्] च्युत्वेतो वाणिजग्रामे, पुत्रोऽभूत् श्रेष्ठिनः कुले । सुदर्शनाभिधो वीरपार्श्वे सिद्धो व्रताश्रयात् ॥ ६२ ॥ इति श्रीमहाबलचरितम् ॥

अथाष्टबलचरित्राण्याह—

पयरयमिव रज्जसिरिं, उज्झिय गहियवए अयलपमुहे । अट्ठ वि बलदेवरिसी, थुणामि निव्वाणमणुपत्ते ॥ १५ ॥

व्याख्या—अष्टावेव 'अपेः एवार्थत्वाद्' अष्टसङ्ख्याका एव न नवमः, तस्य पृथग् भणनात् निर्वाणागमनाच्च इति अपेरर्थः । 'बलदेवर्षीन्' बलदेवाश्च ते ऋषयश्च बलदेवर्षयः चारित्रापेक्षया तान् 'स्तवीमि' स्तुतिगोचरीकरीमीति क्रियायोगः । किंनाम्नः(मानः) ? 'अचलप्रमुखान्' प्राजापत्यादीन् । किंविशिष्टान् ? 'गृहीतव्रतान्' आश्रिताईतदीक्षान्, किं कृत्वा ? "उज्झिय" त्ति त्यक्त्वा, कां ? 'राज्यश्रियं' त्रिखण्डैश्वर्यलक्ष्मीं, किमिव ? 'पदरज इव' चरणरेणुरिव यथा चरणरेणुरसारतयाऽकिञ्चित्करत्वाद् दूरतस्त्यज्यते तथा त्रिखण्डाधिपश्रीस्त्यक्ता इति भावः । पुनः किंविशिष्टान् ? 'निर्वाणं' मोक्षं 'अनुप्राप्तान्' सम्प्राप्तान् । अनु—पश्चाद् राज्यत्यागानन्तरं वा प्राप्तान् । इति गाथार्थः ॥ १५ ॥ भावार्थस्तु विशेषार्थिना त्रिषष्टिशलाकापुरुषचरित्रेभ्योऽवसेयः । स्थानाशून्यार्थं किञ्चिदुच्यते—

राज्ञः प्रजापतेः पत्नी, भद्रा पोतनपूष्पतेः । चतुःस्वप्नाङ्कितस्तस्या नन्दनोऽनुत्तरात् च्युतः ॥ १ ॥ नाम्नाऽचलः स तु भ्रातुस्त्रिपृष्ठ-

शलाकापुरुषाधिकारे अष्टबलदेवर्षिस्तवनम् ।

स्वार्जितां श्रियम् । भुञ्जानोऽनु मृतेस्तस्य, शिवाय संयमश्रियम् ॥ २ ॥ स पञ्चाशीतिलक्षायुरशीतिधनुरुन्नतः । प्रथमो बलदेवानां, सिद्धिसौधाध्वगोऽभवत् ॥ ३ ॥ इति प्रथमः ॥

द्वारकायाममूत् पुण्यां, ब्रह्मराज-सुभद्रयोः । हली द्वितीयो विजयाख्यः पुत्रोऽनुत्तरच्युतः ॥ १ ॥ उमापत्यद्विपृष्ठस्य, ज्येष्ठभ्राताऽर्द्धचक्रिणः । मृतेरनन्तरं तस्य, जग्राहाभिग्रहं मुनेः ॥ २ ॥ आयुः प्रपाल्य लक्षाणि, वर्षाणां पञ्चसप्ततिः । धनुःसप्ततिदेहोच्चः, सिद्धिसौधममासदत् ॥ ३ ॥ इति द्वितीयः ॥

द्वारकायां नृपो रुद्रः, सुप्रभा सुप्रभा प्रिया । भद्रो भद्रोपमस्तस्या, नन्दनोऽनुत्तराच्युतः ॥ १ ॥ प्रव्रज्य पृथिवीसूनुस्वयम्भुवो मृतेरनु । लक्षान्दायुःपञ्चषष्टिर्धनुःषष्टिरगाच्छिवम् ॥ २ ॥ इति तृतीयः ॥

द्वारकायां नृपः सोमः, प्रिया तस्य सुदर्शना । सुप्रभाख्यो हली तुर्यो, महाशुक्राच्युतोऽङ्गजः ॥ १ ॥ पञ्चपञ्चाशल्लक्षाब्दायुः पञ्चाशद्धनुस्तनुः । प्रव्रज्य सिद्धः सीताभूपुरुषोत्तमवान्धवः ॥ २ ॥ इति चतुर्थः (तुर्यः) ॥

श्रीमदश्वपुरे राजा, शिवोऽभूद् विजया प्रिया । सुदर्शनाख्यस्तत्सूनुर्महाशुक्रच्युतो हली ॥ १ ॥ पञ्चचत्वारिंशच्चापोच्चो, लक्षसप्तदशाब्दभृत् (वान्) । अम्बाभूपुरुषसिंहभ्राता सिद्धो प्रव्राश्रयात् ॥ २ ॥ इति पञ्चमः ॥

वैजयन्तीपतिश्चक्रपुरे राजा महाशिराः । आनन्दो नन्दनोऽस्याभून्महाशुक्रच्युतः सुतः ॥ १ ॥ पञ्चाशीतिसहस्राब्दायुरेकोनत्रिंशदखभृत् । सिद्धो लक्ष्मीवतीभूपुरुषपुण्डरीकात्मजः ॥ २ ॥ इति षष्ठः ॥

राजाऽग्निशिखो वाराणस्यां जयन्तीपतिः सुतः । ब्रह्मलोकच्युतो नाम्ना, नन्दनः सप्तमो हली ॥ १ ॥ शेषवत्यङ्गभूदत्तभ्रातुः सिद्धो मृतेरनु । पञ्चषष्टिसहस्राब्दायुः षड्विंशतिधनुस्तनुः ॥ २ ॥ इति सप्तमः ॥

राजा दशरथो राजगृहे पत्न्यपराजिता । ब्रह्मलोकच्युतः पद्मस्तयोः पुत्रोऽष्टमो हली ॥ १ ॥ कैकेयीसूनुनारायणभ्रातुरनु मृत्युतः । पञ्चदशसहस्रायुः षोडशाङ्गोऽगमच्छिवम् ॥ २ ॥ इत्यष्टौ बलदेवर्षयः ॥

नवमबलदेवचरितमुच्यते—

**जेणुग्गं तवं तत्तं, अवराहं दट्ठु निययरूवस्स । तुंगियगिरिवरसिहरे, सो राममहामुणी जयउ ॥ १६ ॥**

व्याख्या—'सः' प्रसिद्धः 'राममहामुनिः' कृष्णज्येष्ठभ्रातृमहर्षिः 'जयतु' जयमनुभवतु इति क्रियायोगः । यत्तदोर्नित्याभिसम्बन्धाद् येन राममहामुनिना आर्षत्वादनुस्वारलोपाद् 'उग्रम्' उत्कटं 'तपः' पक्षाष्टमादि 'तप्तम्' आसेवितम्, किं कृत्वा ? 'दृष्ट्वा' वीक्ष्य, किम् ? 'अपराधं' आगः, कस्य ? 'निजकरूपस्य' आत्मीयाकृतेः । कस्मिन् ? तुङ्गिकाख्यप्रधानपर्वताग्रे । इति गाथापदार्थः ॥ १६ ॥तथा—

**रामो तवप्पभावा, सुपत्तदाणाउ झत्ति रहकारो । अणुमोयणाउ हरिणो, संपत्ता बंभलोगम्मि ॥ १७ ॥**

व्याख्या—रामः 'तपःप्रभावात्' तपोमाहात्म्यात्, 'सुपात्रदानात्' राममहामुनिप्रतिलाभनात् 'झत्ति' शीघ्रं रथकारः, 'अनुमोदनातः' भावनाया 'हरिणः' भद्रकमृगः, एते त्रयोऽपि 'सम्प्राप्ताः' जग्मुः 'ब्रह्मलोके' पञ्चमकल्पे । एतेनोल्लेखेन कविना दान-तपो-भावनानां समानं फलं दर्शितम । इति गाथार्थः ॥ १७ ॥ भावार्थस्तु कथानकेनोच्यते—

अस्तीह भरतक्षेत्रे, द्वारि(र)काख्या महापुरी । देवनिर्मितसौवर्णवप्र-प्रासादसुन्दरा ॥ १ ॥ तत्रार्द्धभरताधीशो, वासुदेवो महानृपः ।

शलाकापुरुषाधिकारे सप्तम-अष्टम-नवम-नन्दन-पद्म-रामबलदेववर्णनम् ।

वसुदेवसुतो भ्राता, बलदेवस्य सीरिणः ॥ २ ॥ साध्युष्टकोटिकुमारो, भूरिभिर्भीरुभिः समम् । भुङ्क्ते भोगान् शास्ति राज्यं, परिपूर्णमनोरथः ॥ ३ ॥ [युग्मम्] अन्येद्युः समवसृतोऽरिष्टनेमिर्जिनो वने । कृतं समवसरणं, सुरैरेत्य चतुर्विधैः ॥ ४ ॥ निर्ययुर्यदवो लोका, वन्दनायाऽच्युतोऽपि च । उक्तो भगवता धर्मस्तदन्ते नतिपूर्वकम् ॥५॥ पप्रच्छ स्वामिनं कृष्णोऽमुष्याः पुर्यास्तथा च मे । यदूनां च क्षयः कस्माद् , भवितेत्यादिशेश्वर ! ॥ ६ ॥ स्वाम्याह शृणु दाशार्ह ! मद्योन्मत्तैस्तवाङ्गजैः । धर्षितो द्वीपायनर्षिर्धक्ष्यति द्वारकापुरीम् ॥ ७ ॥ बहिः सूर्यपुरः पूर्वं, तापसस्तापसाश्रमे । पारासरोऽभूत् तेनाऽऽप्ता, दुर्विनीतैकका कनी ॥ ८ ॥ तां लात्वा जह्नुकन्याया, द्वीपमागत इत्यसौ । ख्यातो द्वीपायनो नाम्ना, कचित् स्थानानुगं हि तत् ॥ ९ ॥ स तत्र वसति ब्रह्मचारी पप्ततपश्चरन् । पुर्याः श्रुतो यदूनां च, क्षयस्तेनोदितोऽर्हता ॥ १० ॥ हा ! दुष्टिदमिति ध्यात्वा, तत् त्यक्त्वाऽगाद् वनान्तरम्(रे) । स्वाम्याह यः पुनः पृष्टः, स्वमृत्युस्तमथो शृणु ॥ ११ ॥ मृत्युर्जराकुमारात् ते, जरासूनोः स्वबान्धवात् । ततो यदूनां युगपत्, सकोपाऽसिन् पपात हक् ॥ १२ ॥ मृत्युर्मत्तोऽपि मद्भ्रातुर्हा ! धिग् ध्यात्वेत्यगाद् वनम् । नत्वा प्रभुं निरानन्दा, यदवोऽप्यविशन् पुरीम् ॥ १३ ॥ पुरं प्रविश्य कृष्णेनाऽऽदिष्टमादेशवर्तिनाम् । कादम्बवनगुहाया, सुरा सर्वा त्यजन्तु भोः ! ॥ १४ ॥ नेमिना स्वामिनोक्तं यत्, कुमारैर्मदिरोन्मदैः । कोपितो द्वीपायनर्षिः, पुरीदाहं विधास्यति ॥ १५ ॥ कादम्नसानुकुण्डेषु, भृत्यैः क्षिप्ता सुराऽखिला । कादम्बाच्छादिता दर्युच्यते कादम्बरीति सा ॥ १६ ॥ इतश्च सात्वतभ्राता, स्नेहादस्यैव सारथिः । सिद्धार्थः स्वार्थसिद्ध्यर्थं, बभाषेऽदः स्वबान्धवम् ॥ १७ ॥ रोग-शोकाकुलोऽसारः, संसारः स्वप्नसन्निभः । भ्रातर्भगवताऽऽदिष्टस्तं त्यक्तुं प्रव्रजाम्यतः ॥ १८ ॥ ज्ञात्वा तन्निर्णयं रामः, प्रतिबोध्यस्त्वयाऽऽपदि । विसृष्टवानिति प्रोच्य, प्राव्राजीत् सोऽर्हतोऽन्तिके ॥ १९ ॥ तपश्चरणमासेव्य, षण्मासान् स्वर्गमाप सः । इतः पक्करसा साऽभूत्, मदिरा शिशिरादिना ॥ २० ॥ अथो शाम्ब-

गुणाढ्य, तत्रागात्तृषकः पुमान् । भ्रमन् कर्दमनच्छायामद्राक्षीत् सुन्दरां सुराम् ॥ २१ ॥ पपावञ्जलिभिस्तुष्टः, स सुस्वादुरसां सुराम् । रससं च सुराम्भःपुष्टान् निर्भीकृगानपि ॥ २२ ॥ ततः शाम्बाय तेनोक्तं, सोऽपि पीतोऽत्यचिन्तयत् । विना कुमारैर्नेदृशा, पातुं युक्तं सुरा मम ॥ २३ ॥ आहूताम्ते तनस्तेन, दुर्दान्ता भ्रातरः समे । तां दृष्ट्वा तैरयाच्दिष्टा (-चोदिष्टा), भृत्या ! आनीयतामियम् ॥ २४ ॥ तैरानीता गताः सर्वे, रमणीयोद्यानभूमिकाम् । शाम्बेनोक्तं कुमारा ! भोः, षण्मासैरीक्षिता सुरा ॥ २५ ॥ तद् यथेच्छं पिबन्त्येनां, तैः पीता रसगानगैः । तस्या मदेन गायन्त्यालिङ्गन्ति नृत्युर्मिथः ॥ २६ ॥ [युग्मम्] कोऽन्यत्र गताः शैलं, भ्रमद्भिस्तैरिहेक्षितः । द्वीपायनस्तपः कुर्वन्, मिथोऽप्योचमिदं क्रुधा ॥ २७ ॥ भो भोः ! नैष दुरात्मा योऽर्हन्तोक्तः पूर्विनाशकः (कृत्) । ताडयामस्तदेनं नो, किं निष्कारणवैरिणम् ? ॥ २८ ॥ लत्ता-मुष्टि-चपेटाभिर्दन्त(-न्तैर्दे)ष्टाधरोष्ठकाः । निरपराधं तमृषिं, प्रजघ्नुः(हुः)कोपदुर्धराः ॥ २९ ॥ यावत् कण्ठगतप्राणं, मूर्छितं पतितं क्षितौ । तं(ते)त्वरया स्वाश्रयं जग्मुः, कुमारा जितकाशिनः ॥ ३० ॥ मर्त्यो व्यतिकरः पुम्भिरुक्तः शार्ङ्ग्यप्यचिन्तयत् । दुर्दान्तता कुमाराणामहो ! हाऽद्यापि दर्शिता ॥ ३१ ॥ किं पुनर्जीवभूतानाममीषां क्रियतेऽधुना ? । ततो द्वीपायनोपशमायागाद् वलयुग् हरिः ॥३२॥ दृष्टो द्वीपायनस्तत्र, कोपेन स्फुरिताधरः । सन्मान्योचितपूजाभिस्तं प्रत्याहेदमच्युतः ॥३३॥ भो भो ! महातापसर्षे !, कोपः सर्वगुणापहः । दमे(म)रता महासत्त्वा, नातो यान्ति वशं क्रुधः ॥३४॥ तथाऽपराधं नाज्ञान-बाल-मदोन्मदात्मनाम् । गणयन्ति महात्मानः, क्षमस्वैषामपीह तम् ॥ ३५ ॥ इत्युक्तोऽप्यमुनाप्येष, कोपं यावत् ततो हली । प्रोचे जनार्दनं भ्रातः !, प्रयत्नेनालमत्र ते ॥ ३६ ॥ अनेन चिन्तितं किञ्चिद्, यत् तदयं विधास्यति । वचो हि नान्यथा जैनं, तच्छ्रुत्वा सोऽप्यदोऽवदत् ॥ ३७ ॥ भो ! मया ताड्यमानेन, प्रतिज्ञा महती कृता । युवयोः(?) भवन्तौ पूर्दाहे, नास्ति मुक्तिः शुनोऽपि हि ॥ ३८ ॥ नालीकं वचनं जैनं, प्रतिज्ञा नान्यथा च मे । तद् यातं

शाम्बकु-
माराधिकारे
नवनराम-
वलदेव-
मयन्यः ।

कि बहूक्तेन ?, नतम्नौ दुःखितौ गतौ ॥ ३९ ॥ द्वीपायनवचः पुर्यां, विस्तृतं खलगुह्यवत् । ततो द्वितीये दिवसेऽच्युतोऽद उदघोषयत् ॥४०॥ पुष्प-धूप-बलिव्यग्रकरास्तपसि तत्पराः । जिनार्चा-चन्दन-नमस्कृत्युत्सुका भवन्तु भोः ! ॥४१॥ इतश्च पुनरप्या(रथा-)गाद्, रैवते विहरन् विभुः । तत्रोपविष्टा यदवो, विहिता देशनाऽर्हता ॥ ४२ ॥ प्रद्युम्न-शाम्ब-निसढ-सारणाद्या ललुर्व्रतम् । रुक्मिण्यपि पूर्वभवभयोद्विग्ना हरिं जगौ ॥ ४३ ॥ संसारस्येदृशः स्वामिन् !, परिणामो विशेषतः । यदुवंशस्य तन्मुञ्च, प्रव्रजाम्यन्तिकेऽर्हतः ॥ ४४ ॥ विसृष्टा साऽतिकष्टेन, बाष्पपूर्णदृशाऽमुना । राजपुत्रीभिरन्याभिः, सार्द्धं श्रितवती व्रतम् ॥ ४५ ॥ नत्वेशं तीव्रशोकार्त्ता यदवो विविशुः पुरीम् । गतश्रीकमिवात्मानं, स मेने रुक्मिणीं विना ॥ ४६ ॥ पुर्यां तु हरिणोद्घुष्टं, यदवो ! भोः पुरीजनाः ! । महत्युपस्थिता भीतिर्विशेषात् स्म यूयोद्यताः ॥४७॥ चतुर्थ-षष्ठाचाम्लादियुक्ता गुरु-जिनार्चकाः । यावज्जीवं जीवघात-मृषावादादिवर्जकाः ॥ ४८ ॥ [ युग्मम् ] तथेति प्रतिपन्नं तैर्हरेर्वचनमुत्सुकैः । घोरं बालतपश्चक्रे, द्वीपायनोऽपि दुर्मतिः ॥ ४९ ॥ पूर्वोद्दिष्टकृतनिदानो, मृत्वा भवनवास्यभूत् । स्मृत्वा यदूनां तद् वैरं, पूर्विनाशाय चागमत् ॥ ५० ॥ सर्वं जनं तपो-मन्त्र-जाप-देवार्चनोद्यतम् । वीक्ष्यात्राशक्नुवन् हन्तुमास्ते छिद्रं विलोकयन् ॥ ५१ ॥ द्वादशाब्दान्यगुश्चैवं, ततो लोकेन चिन्तितम् । हतप्रतापो निस्तेजा, जातो द्वीपायनो मुनिः ॥ ५२ ॥ रत्यासक्तो मदोन्मत्तः, पुनश्चिक्रीड पूर्जनः । विनाशयितुमारेभे, छिद्रं प्राप्य पुरीमसौ ॥ ५३ ॥ उत्पद्येरन् बहूत्पाताः, प्रलयान्ताभवायुना । उत्पाट्य क्षिप्तास्तेनान्तः, काष्ठ-पत्र-तृणोत्कराः ॥ ५४ ॥ जज्वाल ज्वलनो ज्वालावलीभिर्व्याप्नुवन् नभः । चिक्षेप काननोद्यानादीनि पापः पुनः पुनः ॥ ५५ ॥ गृहाद् गृहान्तरं धूमाग्निना गन्तुं न शक्यते[पुनः] । तेन क्षिप्ताग्निनाऽनाथा दह्यते सर्वतः पुरी ॥५६॥ नानामणि-रत्नमया, दिव्यप्रासादपङ्क्तयः । त्रटत् त्रटत् स्फुटन्त्यन्तु, पेतुः पर्वतशृङ्गवत् ॥ ५७ ॥ खरोष्ट्र-मेष-महिष-वृष-हस्त्यश्व-पक्षिणाम् । दारुणो दह्यमानानां, भृशमुच्छलितो रवः ॥ ५८ ॥

ज्वलन्तो यदवोऽन्यात्मप्रियाऽऽलिङ्गितमूर्त्तयः । हाहारवं प्रकुर्वन्ति, रुदन्ति यदुयोषितः ॥५९॥ ततो रामाच्युतौ वीक्ष्य, दह्यमानां पुरीं पितुः । गत्वा गृहं माता(तृ)-पितॄन्, समारोहयतो रथे ॥ ६० ॥ योजिता वृषभाश्वाश्वा, दग्धा दुष्टेन भूरिशः । यावत् तौ गोपुरद्वारं, कर्षन्तौ स्वयमागतौ ॥६१॥ रुद्धौ तत्रेन्द्रकीलेन, तं पदाऽचूर्णयद् ह(ब)ली । तावत् स ज्वलितुं लग्नः, सुरपाशार्पिताग्निना ॥ ६२ ॥ अत्रान्तरे सुरेणोक्तं, भो ! वृथोपक्रमैरलम् । मुक्त्वा भवन्तौ कस्यापि, मुक्तिर्नेत्युदितं पुरा ॥ ६३ ॥ कपाटमेकं कृष्णेन, लत्तयाऽऽहत्य पातितम् । द्वितीयं बलभद्रेण, ज्वालया ज्वा(ज्व)लितं क्षितौ ॥६४॥ रोहिणी देवकी वुन्दुः, मोचुर्यातां हि नन्दनौ ! । जीवद्भ्यां यदुवंशस्य, भवित्री पुनरुन्नतिः ॥ ६५ ॥ रुदन्तौ करुणं माता(तृ)-पितृवाचा विनिर्गतौ । भग्नोद्यानस्थितौ दह्यमानां तां पश्यतः स्म तौ ॥ ६६ ॥ इतश्च रामसूर्यालकुमारः कुब्जवा(वा)रकः । आरुह्याऽऽवासशिखरे, प्रोचे चरमदेहभृत् ॥६७॥ सुराः शृण्वन्तु पार्श्वस्थाः, शिष्योऽहं नेमिनोऽर्हतः । श्रमणो निर्ममो दान्तः, सर्वभूतदयापरः ॥६८॥ यदि सत्यं विभोर्वाक्यं, यथा त्वं चरमाङ्गवान् । तत् किमेतदिति प्रोक्ते, उत्क्षिप्तो जृम्भि(म्भ)कामरैः ॥ ६९ ॥ नीतश्च प्रह्लवे देशे, जिनान्तेऽथाऽग्निनाकिना । शक्त्या दत्त्वा कपाटानि, विशेषाद् ज्वालिता पुरी ॥ ७० ॥ हा कृष्ण ! हा महाराज !, हा राम ! पुत्र ! वत्स ! हा । हा स्वामिन् ! करुणोल्लापाः, प्रवृत्ताः सर्वसद्मसु ॥७१॥ षोडशसहस्रस्त्रीभि(स्त्रीणां षोडशसाहस्रै-)र्हरेरनशनं कृतम् । वह्निभीताऽभयत् प्रायस्तदा सर्वयदुस्त्रियाम् ॥७२॥ षष्टिर्द्वासप्ततिश्चैवं, ज्वा(ज्व)लिताः कुलकोटयः । दग्धैवं तेन षण्मासैः, सा पुनः प्लाविताऽब्धिना ॥ ७३ ॥ दह्यमानां शुचाऽऽक्रान्तौ, पश्यन्तौ सीरि-शार्ङ्गिणौ । चिन्तयन्तौ च संसारानित्यतां चेष्टितं विधेः ॥ ७४ ॥ कृष्णेनोक्तं क गच्छावो, भ्रातृ-पुत्र-प्रियोज्झितौ ? । रामोऽवगावयोः सन्ति, बान्धवाः पाण्डुसूनवः ॥ ७५ ॥ तद् यावो दक्षिणाम्भोधिसंस्थितां मथुरापुरीम् । कृष्णोऽयोचन्मया कृष्णाऽऽनयनावसरे पुरा ॥ ७६ ॥ गङ्गोत्तारे पुरः प्राप्तैस्ते रथः प्रेषितो न मे । सर्व-

म्यहरणं कृत्वा, देशान्निर्द्धाटिताः क्रुधा ॥ ७७ ॥ कथं तदधुना तेषां, पुरीं यावोऽवदद् हली । महापुमांसो नेदानीं, ते स्मरिष्यन्ति विक्रियाम् ॥ ७८ ॥ निष्ठुरं नीचकर्मापि, न चरेद् गृहमागते । एवमस्त्वच्युतेनोक्ते, प्रत्यपाचीं प्रचेलतुः ॥ ७९ ॥ सुराष्ट्रादेशमुल्लङ्घ्य, गूहमानौ तनुश्रुतिम् । सम्प्राप्तौ पादचारेण, हस्तिकल्पपुराद् बहिः ॥ ८० ॥ कृष्णोऽवदद् भृशं भ्रातर्बाधन्ते क्षुत्-तृषो मम । हल्याह भक्त-पानार्थं, यामि स्थेयं त्वयोपशमात् ॥ ८१ ॥ गतस्य तत्र मे कस्मिन्नपाये शब्दसंज्ञया । आगन्तव्यं त्वयेत्युक्त्वा, तं स्मरन् सोऽगमत् पुरीम्(रम्) ॥ ८२ ॥ धृतराष्ट्राङ्गजस्तत्राऽच्छदन्तो नाम पार्थिवः । वस्त्रेणाऽऽच्छाद्य श्रीवत्सं, प्रविष्टोऽन्तःपुरं बलः ॥ ८३ ॥ जनवादोऽभवत् तत्र, यथोत्पाताग्निना पुरी । सराम-केशव-यदुवंशा दग्धा समन्ततः ॥ ८४ ॥ मान-रूपाधिकं वीक्ष्य, बलं लोकोऽब्रवीददः । अहो! रूपमहो! मानमहो! निस्सीमसोमता ॥ ८५ ॥ सैवं वर्ण्यैर्वर्ण्यमानो गतः कान्दविकापणे(णम्) । दत्त्वोर्मिकामलाद् भक्ष्यं, कटकं च सुरां वराम् ॥ ८६ ॥ निर्गच्छन् गोपुरद्वारं, यावदागतवान् बलः । पूर्द्वाररक्षकैस्तावद् विज्ञप्तं भूपतेरदः ॥ ८७ ॥ दिव्यरूपधरः स्वामिन्!, पुमान् कोऽपि बलाकृतिः । वितृष्णश्चौरवद् दत्त्वाऽलङ्कृतीर्भक्ष्यमग्रहीत् ॥ ८८ ॥ दन्तच्छदमच्छदन्तश्चर्वन्नखर्वगर्वतः । त्वरितत्वरितं सैन्यं, प्राहिणोत् तज्जिघांसया ॥८९॥ शब्दरूपां हरेर्युद्धसंज्ञां कृत्वा विमुच्य तत् । बलस्तचूर्णितुं लग्न, आरुह्याऽऽसन्नहस्तिनम् ॥९०॥ तावद् जनार्दनोऽप्यागाद्धत्वा कपाटपेटकम् (-पट्टकम्) । अच्छदन्तबलं चूर्णीचक्रे चक्रेण चूर्णवत् ॥ ९१ ॥ वशीकृत्योचतुस्तं रे, दुराचार! किमावयोः । दोष्णोरपि बलं नष्टं?, स्वं(स्व)राज्यं भुङ्क्ष्व याहि तत् ॥९२॥ विसृष्टं वैरमावाभ्यामित्युक्त्वाऽऽदाय जेमनम् । जग्मतुस्तदसङ्कीर्णं(र्ण)वनं जेमनहेतवे ॥९३॥ अर्हद्भ्यो नम इत्युक्त्वा, गलद्बाष्पाविलेक्षणौ । भोक्तुं लग्नाविमौ भक्तं, चिन्तयन्तौ भवस्थितिम् ॥९४॥ अहो! यत! तथा भुक्त्वा, भुज्यते चेत्थमप्यहो! । परं हि दुर्द्धरा क्षुत् तदत्र शोकेन वा किमु? ॥ ९५ ॥ भवेऽस्मिन् सर्वभावानाम-

निस्तरं यदर्हता । उक्तमिति ततो भुक्त्वाऽऽचमन(नं)कर्म चक्रतुः ॥९६॥ दक्षिणाभिमुखं यान्तौ, कौ(कै)शाम्बारण्यमीयतुः । ततः क्षारो-
शनात् मद्यपानाद् ग्रीष्मर्तुतस्तथा ॥ ९७ ॥ मार्गखेदात् महाशोकातिशयात(श) श्रेयसः क्षयात् । वासुदेवो महातृष्णागृहीतो हलिनं जगौ
॥ ९८ ॥ [ युग्मम् ] तृष्णया मन्मुखं भ्रातः!, परिशुष्यति साम्प्रतम् । न शीतलवनं गन्तुं, समर्थोऽस्म्यवदद् बलः ॥ ९९ ॥ प्राण-
वल्लभ ! विश्रामं, कुर्वाणो भूरुहस्तले । तिष्ठात्र यावत् पानीयमानयामि कृते तव ॥ १०० ॥ ततः कौक्षे(शे)यवस्त्रेणाऽऽत्मानमाच्छाद्य
केशवः । जानूपरि पदं कृत्वा, सुष्वाप तृषयाऽर्दितः ॥१०१॥ सीर्याहाप्रमत्तेन, स्थेयं हृदयवल्लभ! । उक्त्वा वनस्था(स्थ-)देव्यश्च, भ्रातेष
विश्ववल्लभः ॥ १०२ ॥ विशेषाद् दुःखितात्यन्तहृदो मे हृदयङ्गमः । मुक्तोऽस्ति शरणे रक्ष्य, इत्याख्याय गतो बलः ॥ १०३ ॥
इतश्च व्याधवेषानुकारी धन्व-पृषत्कभृत् । व्याघ्रचर्मवृतस्तत्र, भ्रमन्नागाद् जराङ्गजः ॥ १०४ ॥ तेनाऽऽरोप्य धनुर्बाणमाकृष्य दूरतोऽच्युतः ।
तिष्ठत्येष मृग इति, विद्धोऽङ्घ्रितलमर्मणि ॥ १०५ ॥ सोऽप्युत्थाय रयादूचे, भोः! केनाहं विनाऽऽगसा । विद्धोऽङ्घ्रौ? न मयाऽज्ञातवंशः
कोऽपि हतः पुमान् ॥ १०६ ॥ तत् शीघ्रमात्मनो गोत्रं, निवेदयतु सोऽत्र मे । वंशजाल्यन्तरे(रं) श्रुत्वा, जरासूरित्यचिन्तयत् ॥ १०७ ॥
नायं मृगयुया किन्तु, पुंविशेषो ममान्वयम् । पृच्छतीति कथयामि जरासूनुस्ततोऽवदत् ॥ १०८ ॥ हरिवंशोद्भवोऽहं भो!, वसुदेव-
जराङ्गजः । जरा(रत्कु)कुमारो गोत्रेण, ज्येष्ठभ्राताऽस्मि शार्ङ्गिणः ॥ १०९ ॥ श्रुत्वाऽर्हतो वचो मृत्युर्जरासूनोर्हरेरिति । यत्नाद् वने
जनं हित्वा, भ्रमामि भ्रमवर्जितः ॥ ११० ॥ गतानि द्वादशाब्दानि, कथय त्वं त्वमप्यहो! । कृष्णोऽवदत् प्रियभ्रातरेहेह्यहं स तेऽनुजः
॥ १११ ॥ रक्षार्थं मे त्वमत्राऽऽगा, मुधैषोऽभूत् परिश्रमः । तदेहि त्वरि(भि)तं शङ्कमानः सोऽप्याययौ हरिम् ॥ ११२ ॥ दृष्ट्वा तथास्थितं
पार्श्वं (कृष्णं), ततोऽसावश्रुपूर्णदृक् । चक्रे हाहारवं रौद्रं, धिग् दैवं! हा! हतोऽस्म्यहम् ॥ ११३ ॥ कुतः पुरुषशार्दूलाऽऽयातोऽवस्था

क्रिमीदृशी ? । द्वीपायनेन दग्धा पूः, किं ? नष्टा यदवो न वा ? ॥११४॥ ततः कृष्णेन कथितं, सर्वं तस्मै(तस्मै)यथाश्रुतम् । प्रलापान् कर्तुमारेभे, तन्निशम्य जरात्मजः ॥ ११५ ॥ अहो ! कृतं मयाऽऽतिथ्यं, जिष्णोर्यामि क साम्प्रतम् ? । गतः स्वां सुगतः कुत्र ?, को मां शक्नोति वीक्षितुम् ? ॥ ११६ ॥ यावत् त्वन्नाम(वचनं)लोकेऽस्मिन्, जागर्त्ति(विख्यातं)जगतीपते ! (:) । गर्हामि तावदात्मानं, महापातककारि(र)णम् ॥ ११७ ॥ कुर्वे भ्रातुः प्रियमिति, वनवासः श्रितो मया । विपरीतं समाचीर्णं, निर्घृणेन पुनस्तव ॥ ११८ ॥ विलासिनीसहस्राणि, [illegible] तानि ? कुत्र ते नृपाः ? । कुमाराश्च क ते ? कृष्ण !, गोविन्दोऽप्यब्रवीददः ॥११९॥ भ्रातर्भगवताऽरिष्टनेमिनोक्तं यदङ्गिनाम् । व्यसनानां सहस्राणि, सुलभानि स्वकर्मतः ॥ १२० ॥ यदुक्तम्—"[1]जं जेण किं पि विहियं, सुहं च दुक्खं च पुव्वजम्मम्मि । तं सो पावइ जीवो, वचइ दीवंतरं जइ वि ॥ १ ॥" तद् भ्रातर्मा कुरूद्वेगं, नाऽऽगस्ते किं तु कर्मणाम् (णः) । नान्यथा भाषितं जैनं, कल्पान्तेऽपि कचिद् भवेत् ॥ १२१ ॥ वक्षःस्थं(स्थ)कौस्तुभं तन्मे, लात्वा गच्छोपपाण्डवान्(वम्) । वक्तव्यश्चैष वृत्तान्तो, वाच्या मद्वचनेन ते ॥ १२२ ॥ कृष्णाऽऽनयनकाले भोः !, समायातैः पुरः पुरा । मत्सामर्थ्यपरीक्षार्थं, रथो न प्रेषितस्त्विति ॥ १२३ ॥ सर्वस्वहरणं कृत्वा, यूयं निर्द्धाटिताः क्रुधा । क्षन्तव्यमिदमागो मे, सन्तो हि स्युः क्षमोत्तराः ॥ १२४ ॥ [युग्मम्] यावन्नेच्छत्यसौ सुष्ठु, गन्तुं तावद् हरिर्जगौ । भ्रातस्तीव्रानुरक्तं मां, प्रति जानासि सीरिणम् ॥ १२५ ॥ मदर्थं जलमादायाऽऽगतोऽवस्थागतं तु माम् । ईदृशीं वीक्ष्य निःशङ्कं, स त्वां व्यापादयिष्यति ॥१२६॥ तद् गच्छ त्वरितं पादैरेभिरेव ततोऽसकौ । उद्धृत्यांह्रेः शरं जिष्णोर्जरासूनू रुदन् ययौ ॥ १२७ ॥ स वेदनासमुद्घातं, गतश्चक्रे नमस्कृतिम् । पूजार्हेभ्यो नमोऽर्हद्भ्यः, सिद्धेभ्योऽपि नमो मम (नमः) ॥ १२८ ॥

1 "यद् येन किमपि विहितं, सुखं च दुःखं च पूर्वजन्मनि । तत् स प्राप्नोति जीवो व्रजति द्वीपान्तरं यद्यपि ॥ १ ॥"

पञ्चा(पञ्चविधा)चाररतेभ्यश्च, सूरिभ्योऽपि नमस्त्रिधा । स्वाध्यायध्यानरतेभ्यः, पाठकेभ्यो नमो मम(नमः) ॥१२९॥ मोक्षसाधकसाधुभ्यो, नमश्चारिष्टनेमिने । सर्वसङ्गपरित्यागाद् ( सर्वं सङ्गं परित्यज्य ), यो व्रतं द्रुतमाश्रितः ॥ १३० ॥ स्वाङ्गमाच्छाद्य वस्त्रेण, संस्तीर्य तृणसंस्तरम् । वीरशय्या(य्या)गतः कृष्णश्चेतसीदमचिन्तयत् ॥१३१॥ धन्याः कुमारास्ते शाम्ब-निरुद्ध-सारणादयः । रुक्मिण्याद्याश्च ता धन्या, धन्या वृष्णिसुताश्च ते ॥ १३२ ॥ शिश्रियुर्ये व्रतं सर्वसङ्गं त्यक्त्वाऽर्हतोऽन्तिके । अहं पुनरनाचीर्णधर्मकर्मा म्रियेऽधुना ॥ १३३ ॥ अत्रान्तरे स्मृतो द्वीपायनो हा! तेन मम पाप्मना । कथं द्वारा(र)वती दग्धा, हा! निष्कारणवैरिणा ? ॥१३४॥ तद् वध्योऽयं महापाप, इति ध्यायन् ममार सः । सहस्राब्दं प्रपाल्याऽऽयुस्तृतीये नरकेऽगमत् ॥ १३५ ॥ बलदेवोऽपि वेगेन, वार्यानीयाब्जिनीपुटे । पदे पदे स्खल्यमानोऽशकुनैस्तमुपागमत् ॥ १३६ ॥ सुप्तोऽसाविति संस्थाप्य, पयः सीरीत्यचिन्तयत् । जागरूकाय दास्यामि, पयः शेतामसौ क्षणम् ॥१३७॥ स्नेहाकुलमना रामो, न जानाति मृतस्ततः । किञ्चित् कालं प्रपाल्याथाऽऽसन्नमेत्यैक्षते स तम् ॥१३८॥ तं कृष्णं(कृष्ण) मक्षिकाव्याप्तं, वीक्ष्योद्घाटितमाननम् । भीतो हा! मृत इत्युर्व्यां, धसिति मूर्च्छितोऽपतत् ॥ १३९ ॥ क्रमात् तेनाऽऽप्य चैतन्यं, सिंहनादः कृतो महान् । चकम्पे ध्वनिना तेन, वनं च श्वापदव्रजम् ॥ १४० ॥ ऊचे च येन मे भ्राता, निर्घृणेन दुरात्मना । व्यापादितः स चेत् सत्यं, सू(शू)रोऽर्पयतु दर्शनम ॥ १४१ ॥ सुप्ते प्रमत्ते व्यग्रे वा, प्रहरन्ति न साधवः । नूनं नराधमोऽयं तद्, ब्रुवन्नित्यभ्रमद् वनम् ॥ १४२ ॥ समन्तात् कानन(ने) भ्रान्त्वा, पुनरेत्याऽच्युतान्तिकम् । हा महारथ! हा भ्रातर्हा सुभट! हरीन्द्र! हा ॥ १४३ ॥ किं रोदिमि बलं रूपं, सौभाग्यं वा धृतिं तव ? । प्रियोऽयमित्यभाणीस्तत्, कूटं वाचं ददासि नः ॥ १४४ ॥ किं चैकाकी त्वया हीनो, मन्दभाग्यः करोम्यहम् ? । क गच्छामि ? क तिष्ठामि ?, शरण्यं(ण्यं) कस्य वा श्रये ? ॥ १४५ ॥ समाप्तो जीवलोको मे, भो भोः काननदेवताः ! । किं वः

समर्पिते विष्णौ युक्तमेवमुपेक्षितुम् ? ॥१४६॥ तवापराद्धं किं भ्रातर्माऽऽकर्ण्याऽ(र्मा कर्णा)कर्णितं कुरु । प्रसादयन्त्वमुं रुष्टं, वनदेव्यो ममोपरि ॥१४७॥ उत्तिष्ठ रविरप्येष, यात्यस्तं भ्रातरच्युत ! । सन्ध्योपासनवेलेयं(लायां), महान्तोऽस्यां न शेरते ॥१४८॥ क्षणमात्रे गते प्राह, घनध्वान्ता निशाऽऽगमत् । क्रूरसत्त्वा भ्रमन्तीहाऽऽरटन्ति भीषणं शिवाः ॥ १४९ ॥ एवं प्रलपतस्तस्य, प्रभाता रजनी पुनः । प्राह भ्रातः ! समुत्तिष्ठ, भगवानुदितो रविः ॥१५०॥ यावन्नोत्तिष्ठति स्नेहमोहितस्तावदच्युतम् । बलः स्कन्धे समारोप्य, बभ्रामाऽद्रि-वनादिषु ॥ १५१ ॥ अत्रान्तरे स देवत्वं, प्राप्तः सिद्धार्थसारथिः । वर्षाकाले बलं प्रेक्ष्य, स्नेहार्द्रं ह्यचिन्तयत् ॥ १५२ ॥ अहो ! स्नेहानुरागेण, कथं कृष्णं वहत्यसौ ? । तद् बोधयामि तं भ्रातृवत्सलं स्नेहविह्वलम् ॥ १५३ ॥ रथमुत्तारयन्नद्रौ, पुमांस्तेनास्य दर्शितः । न भग्नोऽसौ रथस्तत्र, समोर्व्यां शर्करीभवत् ॥१५४॥ पुनस्तं योजयन्नुक्तो, बलेनासौ रथस्तव । न भग्नोऽद्रितटे तूर्व्यां, शतशर्करतां गतः ॥१५५॥ कथं त्व(त)मध्वनाखण्डीभूतं सन्धातुमिच्छसि ? । सोऽवग् युद्धसहस्रेषु, न मृतस्तं विनाप्यथ ॥ १५६ ॥ यदा प्राणिष्यति भ्राता, तवायं मे रथस्तदा । भावी पुनर्नवो भद्र !, किमत्र कथनेन ते ? ॥ १५७ ॥ [त्रिभिः सम्बन्धः] मृणालिनीः शिलापट्टे, पुनरारोपयन् पुमान् । उक्तो मुशलिनात्रैताः, किमारोहन्ति बालिश ! ? ॥१५८॥ जीविष्यति यदाऽयं ते, तदैता अपि सोऽप्य(सेत्य)वक् । पुनर्दग्धं द्रुमं सिञ्चन्, दृष्टस्तेन नरोऽम्भसा ॥१५९॥ तं प्राह कथमेष द्रुः, सिक्तः सन् पल्लविष्यति ? । देवेनोक्तं तवांसस्थो, जीविष्यति शवो(बं)यदि ॥१६०॥ मृताया गोः(गोकरोटेः) पुनर्गोपं, ददानं हरिताङ्कुरान् । गतः कांश्चिद् भुवं रामोऽपश्यदुच्चैरुवाच च ॥ १६१ ॥ किं धेनुरस्थिभूतैभिर्जीविष्यति ? सुरोऽवदत् । यदा स्कन्धस्थितः कृष्णो मृतोऽयं बान्धवस्तव ॥१६२॥ ततः स लब्धचैतन्योऽचिन्तयद् वा(हा)मृतो हरिः । वनस्थो येन मे कोऽपि, वदत्येवं पुनः पुनः ॥ १६३ ॥ ततः सिद्धार्थरूपं स, कृत्वा देवोऽब्रवीददः । भो ! मयाऽर्हत्प्रसादेन, प्राप्ता देवर्द्धिरुत्तमा ॥ १६४ ॥ आपत्सु

प्रतिबोध्योऽहं, त्वयेत्युक्तं पुराऽभवत्। अतस्त्वां प्रतिबोधायाऽऽगतोऽस्मि तत् शवं(शुचं) त्यज ॥१६५॥ यतः—"तुम्हारिसा वि पुरिसा, जइ वि हु रज्जंति दुहसोएण । ता कत्थ थिरं होही, धीरत्तमणिंदियं भुवणे ? ॥ १ ॥" अन्यच्च स्वामिना पूर्वमेवोक्तं यन्मृतिर्हरेः । जराकु(त्कु)मारतो जातं, तत् तथैव विधेर्वशात् ॥ १६६ ॥ बलेनोक्तं कदा तेन, कृष्णो व्यापादितः पुनः ? । देवेन तद्व्यतिकर, उक्तस्यादितोऽखिलः ॥ १६७ ॥ यावज्जराङ्गजः पाण्डुपुत्राणां प्रेषितोऽन्तिके । ततः सिद्धार्थमालिङ्ग्य, तेनोक्तं कार्यमत्र किम् ? ॥ १६८ ॥ देवोऽवक् सर्वसम्बन्धं, त्वस्त्वेदानीं व्रतं श्रय । वाक्यं स्मराईतो नेमेः, प्रपन्नं सुष्ठु सेत्यवक् ॥ १६९ ॥ परं हरेः कथङ्कारं करिष्यावः कलेवरम् ?! देवोऽवोचद् द्वयोर्नद्योर्धक्याचोऽन्तःस्वसैकवे ॥१७०॥ अर्हच्चक्र्यर्द्धचक्र्याद्याः, पूजार्हाः कुर्वहे तु(नु)ताम् । ततस्तत्सङ्गमे नद्योर्दग्ध्वं पूजापुरस्सरम् ॥ १७१ ॥ इतश्च नेमिना ज्ञात्वा, व्रतावसरमस्य तु । प्रेषितः खेचरमुनिर्बलोऽस्यान्ते व्रतं श्रितः ॥ १७२ ॥ उग्रं तपस्तुङ्गिकाद्रिशृङ्गे चक्रे बलो मुनिः । रक्षां स्नेहेन सिद्धार्थः, कुर्वंस्तत्रैव तिष्ठति ॥ १७३ ॥ अथो जराङ्गजो याम्यमथुरायां गतोऽर्पितः । कौस्तुभः पाण्डुपुत्राणां, पूर्दाहाद्युदितं समम् ॥ १७४ ॥ तेऽपि कृत्वा महाक्रन्दमाघर्यं च मृति(त)क्रियाम् । राज्यं जरत्कुमाराय, दत्त्वा चेलुर्जिनं प्रति ॥ १७५ ॥ इतश्च धर्मघोषाख्यश्चतुर्ज्ञान्यृषिभिर्वृतः । प्रेषितो नेमिना सूरिस्तदन्ते ते श्रिता व्रतम् ॥ १७६ ॥ कुर्वाणाः षष्ठाष्टमादि-षण्मासादितपांस्यमी । तावद् ययुर्यावदर्कयोजनैर्भगवानभूत् ॥ १७७ ॥ द्रक्ष्यामः प्रातरित्यस्थुस्तत्र रात्रिं पुनः प्रगे । श्रुतं जनाननात् नेमिस्वाम्यगाद् रैवते शिवम् ॥ १७८ ॥ ततः प्राप्ता महादुःखं, ते सिद्धाचलमूर्द्धनि । पादपोपगमनेन शिश्रियुः श्रेयसः शिवम् (श्रियम्) ॥ १७९ ॥ गजसुकुमालदीक्षाकाले प्रव्रज्य नेमिनः । पितरौ जग्मतुः स्वर्गमष्टा-



1 "युष्मादृशा अपि पुरुषा यद्यपि खलु रज्यन्ते दुष्टशोकेन । तत् कुत्र स्थिरं भविष्यति धीरत्वमनिन्दितं भुवने ? ॥ १ ॥"

ऽक्षोभ्यादयः शिवम् ॥ १८० ॥ प्रव्रज्य नेमिनः पार्श्वे, रुक्मिण्याद्या ययुः शिवम् । प्रव्रज्य ब्रह्मलोकेऽगान, कृष्णोग्रसेनजाऽन्तिके ॥ १८१ ॥ पूर्वोह्ने जग्मतुः स्वर्गं, पितरौ राम-कृष्णयोः । अथो बलर्षिरप्यद्रावुग्रमास्ते तपश्चरन् ॥ १८२ ॥ सप्तसप्तमिकाद्यं तदाद्य-(दि)प्रतिकृताविह । प्रथमे सप्तके दत्तिरेकैका भक्त-पानयोः ॥ १८३ ॥ स्वरूपमासां ग्रन्थेभ्यो, विज्ञेयं विस्तरार्थिना । एवं स भगवान् भक्तं, पक्षे वा मासि वाऽश्नुते ॥ १८४ ॥ अथो राज्ञां जनैरुक्तं, तृण-काष्ठहरैर्यथा । दिव्यरूपी महासत्त्वो, वनेऽस्त्युग्रं तपश्चरन् ॥ १८५ ॥ तत् श्रुत्वा चिन्तितं भूपैरस्माकमुपरि स्फुटम् । कश्चिदेवंविधाकारो, राज्यकाङ्क्षी तपस्यति ॥१८६॥ तद् गत्वा तत्र तं हन्मो, मिलितास्ते(-स्त्वेयुस्) ततो नृपाः । नानायानाधिरूढात्तशस्त्राः सन्नद्धकङ्कटाः ॥१८७॥ ततः सिद्धार्थदेवेनाऽऽविश्चक्रे सिंहसंहतिः । तीक्ष्णदंष्ट्रा बलोपेता(-पान्ते) वैभराटोपभीषणा ॥ १८८ ॥ तां दृष्ट्वाऽचिन्त्यमाहात्म्यं, तं नत्वा तेऽगुराश्रयम् । लोके ख्यातिं गतो रामो, नरसिंहस्तदादितः ॥१८९॥ एवं तस्योपशान्तस्योपशान्ता(वक्तो) धर्मवार्चया । शश-शम्बर-शरभ-व्याघ्र-सिंह-मृगादयः ॥ १९० ॥ केचित् प्राप्ताः श्रावकत्वं, केचिद् भद्र-कतामगुः । प्रपन्नाः केचन प्रायं, तत्यजुः केचिदामिषम् ॥ १९१ ॥ सेवन्ते केचिदासीनमूर्ध्वस्थं तेष्वथैकऽः । मृगो जातिस्मरः पूर्वस्नेहात् तमनुगच्छति ॥ १९२ ॥ गच्छन् भिक्षार्थमन्येद्युर्मासपारणके मुनिः । दृष्टः कूपोपकण्ठस्थतरुण्या प्रविशन् पुरम्(रे) ॥१९३॥ कट्युत्तारितपाकस्य, तद्रूपाक्षिप्तचित्तया । कण्ठेऽर्पितस्तया पाशः, कूपे क्षिप्तो घटभ्रमात् ॥ १९४ ॥ दृष्ट्वाऽसौ तमनाचारमहो! मेऽनिष्टदं वपुः । वनस्थ एव तद् भक्ष्यं, लब्धं भोक्ष्ये न चान्यथा ॥ १९५ ॥ गृहीत्वाऽभिग्रहं सैवं, निवृत्याऽगाद् वनं ततः । ईयू रथकृतस्तत्र, चारुदारुकृतेऽन्यदा ॥१९६॥ भोक्तुं तेषूद्यतेष्वागाद्, भिक्षार्थं मासपारणे । मृगोऽप्यनुगतो(-ऽन्वग् ययौ)रामं, दृष्ट्वा तत्स्वाम्यचिन्तयत् ॥१९७॥ अहो! पुण्योदयः कल्पतरुः प्राप्तो मरावपि । पूर्णकामः कृतार्थोऽहं, यदत्रागादसौ मुनिः ॥ १९८ ॥ तदसौ भिक्षादानेनात्मानं कुर्वे निरेनसम् । ध्यात्वेति

मसारे(क)न्यसहस्त्रो लात्योत्थितोऽशनम् ॥ १९९ ॥ ज्ञात्वा द्रव्यादिना शुद्धं, मुनिरप्येतदाददे । रथकारेण दानेन, तेनाऽऽयुर्बद्धमाम-
रम् ॥२००॥ मृगोऽपि साधुसद्भक्तिगलद्बाष्पाविलेक्षणः । दातृदत्तद्वयार्थं, स्नेहादेवमचिन्तयत् ॥२०१॥ धन्यः सुलब्धजन्माऽयं, येनर्षिः
प्रतिलाभितः । तिर्यग्जातो तु (नु) जातोऽहं, कुर्वेऽधन्योऽधुना किमु ? ॥२०२॥ अत्रान्तरे महावातादर्द्धच्छिन्नो द्रुमोऽपतत् । त्रयाणामुपरि
मृत्योत्पन्नास्ते पञ्चमे दिवि ॥ २०३ ॥ तेषु सोऽधिकरूपादिः, शताब्दव्रतपालनात् । स्नेहादवधिनाऽपश्यत् सात्त्वतो नरकेऽच्युतम् ।
॥२०४॥ कृत्वाऽऽशु(सु-)वैक्रियं देहं, स ययौ कृष्णसन्निधौ । दिव्यप्रभाप्रभावेनानुभवन् दुःखमीक्षितः ॥ २०५ ॥ बलेनोक्तमतिभ्रातृवत्स-
लात्र करोमि किम् ? । कृष्णोऽवग् भुज्यते कर्म, स्वार्जितं नात्र कोऽप्यलम् ॥२०६॥ उत्पाट्य बाहुनोद्दध्रे, चा(ऽथाऽऽ,भया)तपेनेव म्रक्षणम् ।
गालं गालं पपाताधस्ततः कृष्णोऽब्रवीद् बलम् ॥ २०७ ॥ मुञ्च मुञ्च मम भ्रातस्तीव्रमुत्पद्यतेऽसुखम् । तद् गच्छ भारतं वर्षं, मानम्ला-
निमपाकुरु ॥२०८॥ शङ्ख-चक्र-गदा-खड्गधारिणं पीतवाससम् । गरुडध्वजं मां त्वं च, तालाङ्कं नीलवाससम् ॥२०९॥ सर्वत्र दर्शयेत्युक्ते,
स्वीकृतं तेन तत् तथा । एत्य दिव्यविमानस्थस्तत् सर्वमकरोद् बलः ॥ २१० ॥ ऊचे विशेषतोऽरीणां, पुरः कुरुत नः पुनः । त्रिकचतुष्क-
चत्वरादिषु रूपं शुभार्थिनः ॥२११॥ आगच्छामो वयं स्वर्गात्, सृष्टि-संहारकारिणः । नानाप्रकारैः क्रीडामो, गच्छामस्त्रिदिवं पुनः ॥२१२॥
निर्मिता द्वारकाऽस्माभिः, संहृताऽस्माभिरेव च । क्षिप्ताऽब्धौ साऽव एवात्र, निमित्तपुरुषा वयम् ॥२१३॥ लोकैः ससम्भ्रमात् सर्वं(र्वैः)
सर्वत्राङ्गीकृतं कृतम् । एवैवं परम्परया, प्रसिद्धिरभवज्जने ॥२१४॥ कृत्वैवं स्वर्गाद् रामस्ततः प्रच्युत्य(तः) सेत्स्यति । तीर्थे श्रीकृष्णजीवस्य,
द्वादशस्याऽममार्हतः ॥२१५॥ इति राममहामुनेरिदं चरितं शान्तरसैककेतनम् । श्रवणश्रवणातिथीकृतं, भविनां स्याद् भविकाभिवृद्धये ॥२१६॥
इति श्रीखरतर[गच्छ]शृङ्गारहारश्री[कीर्त्तिरत्नसूरिशिष्य]गुणरत्नाचार्यवर्यशिष्य-वाचनाचार्य—पद्ममन्दिरगणिविरचितायां कथार्णवा-
ङ्कायां श्रीऋषिमण्डलप्रकरणवृत्तौ शलाकापुरुषाधिकारे महाबलसम्बन्धवर्णनाधिकारः प्रथमो विश्रामः ॥ [ ग्रन्थाग्रं १५९६।१६ ]

# अथ द्वितीयो विश्रामः ।

अथ श्रीमल्लिजिन-षण्मित्राणि वर्णयन्ति—

इक्खागु(ग)रायवसहो, पडिवुद्धी नाम कोसलासामी। तह नेया अंगाए, चंदच्छाए निरुवमाए ॥ १८ ॥
संखो कासीराया, कुणालदेसाहिवो तहा रुप्पी। कुरुवइ अदीणसत्तू, पंचालपह य जियसत्तू ॥ १९ ॥
संजायजाइसरणा पव्वइया छप्पि मल्लिजिणपासे । चउदसपुव्वी एए, जयंतु अपुणब्भवं पत्ता ॥ २० ॥

व्याख्या—आसां तिसृणां गाथानां भावार्थः कथानकादेवावसेयः । अक्षरगमनिका तु स्वबुद्ध्या कार्या । नवरम्–"निरुवमाए" त्ति निर्गतोपमानः 'एकारः प्राकृतत्वात्' "एहोइ अयारंते" इति वचनात्। "छप्पि" त्ति षडपि मित्राणि, न पुनः–द्वितीयवारं भवः–संसारो यत्र तम् अपुनर्भवं मोक्षमित्यर्थः । तत्कथा चेयम्—

मिथ्यात्वतिमिरं यस्यापहर्त्तुमिव वर्ष्मणः । नीलच्छविः सुदृष्टीनां, भाति मल्लिः श्रियेऽस्तु नः ॥ १ ॥ विदेहे सलिलावत्यंभिधाने विजयेऽभवत् । सत्यार्थां वीतशोका पूस्तां वलः शास्ति पार्थिवः ॥ २ ॥ कृपणस्य कृपाणस्य, द्वयोर्यस्य करग्रहः । परेषामेव दानार्थमुपकारापकारवः ॥ ३ ॥ प्राणप्रिया प्रिया तस्य, धारिणी शीलधारिणी(शालिनी)। लक्ष्मीकान्त इव लक्ष्मीकान्तः पुत्रो महाबलः ॥ ४ ॥ कमलश्र्याविराजन्यकन्यापञ्चशतीमसौ । उपयेमे महानन्दकन्दकन्दलताम्बुदाम्(दः) ॥५॥ सौधपञ्चशती रत्न-स्वर्ण-रूप्यादिकं बहु । पार्थिवः पुत्रपाञ्जभ्यात्, वद्यौतकपदे ददौ ॥ ६ ॥ वलो महावलायादाद्, राज्यं प्राज्यं क्रमागतम् । स्वयं जग्राह चारित्रं, क्रमान्मोक्षमवाप च ॥ ७ ॥ अचलो धरणश्चैवाभिचन्द्रः पूरणो वसुः । वैश्रवणश्च मित्राण्यभूवन् महाबलस्य षट् ॥ ८ ॥ पालयन् राज्यमन्येद्युर्धर्मं

श्रुत्वाऽन्तिके गुरोः । दत्त्वा भद्राय राज(ज्य)र्द्धिं, समित्रोऽलाद् व्रतं नृपः ॥९॥ पेठुरेकादशाङ्गानि, ते सप्तापि महर्षयः । गुरुपादप्रसादो
हि, कस्य नोन्नतिकारकः(नौन्नत्यकारणम्) ? ॥ १० ॥ यत् तपो विदधात्येकः, तत् कार्यमखिलैरिति । कृत्वा प्रतिज्ञामन्योन्यं, तपस्ते तेपिरे
महत् ॥११॥ महाबलोऽधिक(क)तपश्चिकीः पारणका(केऽ-)हनि । शिरोऽर्त्यादिमिषं कृत्वोपवासं माययाऽकरोत् ॥१२॥ तन्मायाप्रत्ययं कर्म,
ततः स्त्रीगोत्र्युपार्जितं (तेन स्त्रीवेदमर्जितम्) । विंशतिस्थानकैश्चान्यत्, तीर्थकृत्कर्म शर्मकृत् ॥ १३ ॥ सिंहनिष्क्रीडितं नामारेभिरे
ते तपो लघु । पारणे विकृतिप्रत्याख्यानं श्रेणाविहाद्रिमे ॥ १४ ॥ द्वितीयायां निर्विकृतिस्तृतीयायामलेपकृत् । आचामाम्लं चतुर्थ्यां
तु, दिनमानमिदं पुनः ॥ १५ ॥ वर्षद्वयं दिनान्यष्टाविंशतिः सर्वसङ्ख्यया । सम्पूर्यते महासिंहनिष्क्रीडितं तपो व्यधुः ॥ १६ ॥
मासद्वयेन षड्वर्षैरष्टादशदिनैरिदम् । प्रपूर्य मासक्षपणादिकं चक्रुस्तपः पुनः ॥ १७ ॥ पल्योपयसैस्ते प्रान्ते, कृत्वा सलेखनां पुनः( ततः ) ।
पूर्वलक्षाः सहस्राश्चाब्दाना चतुरशीतिकाम् ॥ १८ ॥ आयुः प्रपाल्य सप्ताप्युत्पेदिरे परमर्द्धयः । द्वात्रिंशत्सागरायुष्का, जयन्ते जय-
शालिनः ॥ १९ ॥ [ युग्मम् ] च्युत्वाऽऽद्यस्तेष्वयोध्याया, प्रतिबुद्ध्याख्यराडभूत् । द्वितीयश्चन्द्रछायाख्यश्चम्पायामङ्गनीवृति ॥ २० ॥
काश्यां तृतीयः शङ्खाख्यः, श्रावस्त्यां तुर्य(र्यो)रुक्म्यभूत् । कुरुष्वदीनशत्रुश्च, काम्पील्ये जितशत्रुराट् ॥२१॥ जीवो महाबलस्याथ,
मिथिलापुरि कुम्भराट् । प्रिया प्रभावती जाग्रत्पुण्यप्राग्भारभासुरा ॥ २२ ॥ तस्या चतुर्दशस्वप्नसूचितोऽर्हन्नवातरत् । जन्माभून्मार्ग-
शुद्धैकादश्यां भेऽश्वयुजि प्रभोः ॥ २३ ॥ [ युग्मम् ] चतुःषष्टिसुराधीशैः, कृतजन्ममहोत्सवः । अर्हन्नपि सम्प्राप्तः, स्त्रीत्वं ही(हा !)
कर्मचेष्टितम् ॥ २४ ॥ मल्लीति नामतः ख्याता, प्राप्ताऽसौ यौवनं क्रमात् । पुण्य-लावण्य-सौभाग्यप्रवररत्नकरण्डिका ॥ २५ ॥ इतश्चा-
वधिनाऽज्ञासीन्नृपानन्यान्यपत्तने । पाश्चात्यभवमित्राणि, मल्लीस्वामिन्यनुक्रमात् ॥ २६ ॥ युगपत्प्रतिबोधार्थं, तेषामेषा कृपार्णवा । अवी-

करद् रत्नगृहं, स्वाशोकवनिका( वाटिका )न्तरे ॥ २७ ॥ षडपवरिकाकीर्णे, तस्मिंश्च जालमण्डपे । रत्न-स्वर्णमयीं स्वस्य, शिरश्छिद्रां तथाऽऽकृतिम् ॥ २८ ॥ रत्नोत्पलपिधानायां, तस्यां मूर्तौ स्वपाणिना । भक्तपिण्डीं किलैकैकां, क्षिपत्यनुवासरम् ॥ २९ ॥ इतश्च साकेतपुराधीशः सुप्रतिबुद्धिराट् । वीक्ष्य पद्मावतीदेव्याः, श्रीदामात्यन्तमद्भुतम् ॥ ३० ॥ दूतानपृच्छदीदृक्षं, काप्यस्तीत्युदितं च तैः । अधिकश्रीकमस्तीति मल्लीकन्या इतोऽपि तत् ॥ ३१ ॥ तत् श्रुत्वा प्राहिणोत् मल्लीकन्याया याचनाय सः । जामत्रामहरप्राच्यप्रेमस्थेममना जनम् ॥ ३२ ॥ इतश्चम्पामहापुर्यां गम्भीरपोतपत्तनम् । गत्वा प्रचेलुररहन्नकाद्या व्यवसायिनः ॥ ३३ ॥ पोतेन गच्छतां तेषां, वार्द्धौ द्वीपान्तरं प्रति । उत्पेदिरे महोत्पाताः, पृथुवेपथुदायिनः ॥ ३४ ॥ रुद्रादीन् सस्मरुश्चान्ये, श्रद्धालुस्त्वरहन्नकः । साकारानशनेनास्थात्, क्षोभयामास तं सुरः ॥ ३५ ॥ न च चुक्षोभ सोऽम्भोधिरिव गम्भीरिमास्पदम् । प्रत्यक्षीभूय देवोऽपि, तं प्रत्याह वणिग्वरम् ॥ ३६ ॥ हंहो ! शक्रोदितं धर्मदार्ढ्यं श्रुत्वा तवाहकम् । अत्रागामसहमानः, खला ह्यन्ययशोऽसहाः ॥ ३७ ॥ त्वं धीरः सात्त्विकस्तुष्ट(श्रेष्ठ)स्तवाहं करवाणि किम् ? । अनिच्छवेऽस्मै दत्त्वाऽगात्, स कुण्डलचतुष्टयम् ॥ ३८ ॥ लक्ष्मीमुपार्ज्य सर्वेऽपि, प्राप्ता गम्भीरपत्तनम् । क्रमाच्च मिथिलां राजधानीं कुम्भनरेशितुः ॥ ३९ ॥ तत्रास्यायुपदी(दां)चक्रे, श्रेष्ठीशः कुण्डलद्वयम् । मुक्त्वाऽस्य शुल्कं तद् दत्तं श्रीमल्ल्यै कुम्भभूभुजा ॥ ४० ॥ जग्मुस्ततस्ते, चम्पायां, चन्द्रच्छायनृपाय च । स्वामिनेऽत्यन्ततोषार्थं, प्रददुः कुण्डलद्वयम् ॥ ४१ ॥ देशवार्त्ताधिकारे तैः, श्रीमल्लेर्वर्णितं वपुः । तत् श्रुत्वा प्रेषितो, दूतस्तेनास्या याचनाकृते ॥ ४२ ॥ कुण्डलं भग्नमन्येद्युः, श्रीमल्लेः कुम्भभूभुजा । सन्धानाय समादिष्टः, स्वर्णकारोऽब्रवीददः ॥ ४३ ॥ देव ! देवकृतं ह्येतत्, सन्धातुं खलचित्तवत् । न शक्यते ततो राज्ञा, देशान्निर्वासितः क्रुधा ॥ ४४ ॥ वाराण(णार)स्यां गतः शङ्खराजोऽन्येद्युः सदस्यसौ । श्रीमल्लेर्वर्णयामास, रूपं सोऽपि तथाऽकरोत्

॥ ४५ ॥ अथ रुक्मिनृपेणापि, स्वाङ्गजामज्जनाधिकम् । मल्लेर्मज्जनकं श्रुत्वा, वदर्थं प्रेषितो जनः ॥ ४६ ॥ इतश्च कुम्भपुत्रेण, मल्ल-
दिन्नेन कारिता । चित्रा चित्रकरैश्चित्रसभा चैवेशिकैः शुभैः(भा) ॥ ४७ ॥ क्रीडया सह भार्याभिस्तत्र चित्रकृता कृतम् । वीक्ष्य साक्षा-
रियाकारं, स मल्लेर्लज्जितः स्मगुः ॥ ४८ ॥ रुषा निर्वासितश्चित्रकरोऽगाद् हस्तिनापुरम् । अदीनशत्रुस्तद्रूपं, श्रुत्वा प्रेषीन्निजं जनम्
॥ ४९ ॥ परिव्राजिकया धर्मचर्यायां जितया तया । रुष्टया दुष्टयाऽदर्शि, जितशत्रोस्तदाकृतिः ॥ ५० ॥ दर्शनादेव काम्पील्यपुरे-
वासन्मयालयाम् । सम्प्राप्तः प्राहिणोद् दूतं, मल्लेः पाणिमहेच्छया ॥ ५१ ॥ दूताः षडपि भूपेन, ते कुम्भेनापमानिताः । ततस्तेऽयरुः
सैन्ययुक्ताः षडपि पार्थिवाः ॥ ५२ ॥ तैः कुम्भभूभुजोऽभञ्जि, सैन्यं सोऽथाविशत् पुरीम् । प्रेष्य दूतान् सुतावाक्यात्, ततस्तानाजु-
हाव सः ॥ ५३ ॥ प्राप्ता रत्नगृहं सर्वेऽप्यवरिकासु षट्स्वपि । पृथक् पृथक् प्रविष्टाश्चाध्युपपन्नास्तदाकृतौ ॥ ५४ ॥ तावत् तत्राययौ
मल्ली, जहाराम्याः पिधानकम् । तीव्र उच्छलितोऽशक्यो, दुर्गन्धोऽन्नविकारजः ॥ ५५ ॥ यद्घ्राणपुटाश्चीरैर्नेशुः शुध्विवति कारिणः । नृपाः
षडप्येषां सा, प्रबोधायेदमब्रवीत् ॥ ५६ ॥ हंहो ! आहारसंसर्गादस्यां रत्नाकृतावपि । यदीदृशोऽभवद् गन्धो, युष्माकमसुखावहः
॥ ५७ ॥ तत् स्वाभाविकदुर्गन्धधामासु वनितासु च (वः) । प्रतिबन्धः किमेतावान् ?, रागान्धा यदिहाभवन् ॥ ५८ ॥ प्रबोध्य
प्राग्भवाख्यानाद्, दत्त्वा दानं तथाऽऽब्दिकम् । त्रिशतीराजपुत्रीभिः, सार्धं मल्लिरदाद् व्रतम् ॥ ५९ ॥ तस्मिन्नेव दिने ज्ञानमुत्पन्नं दीक्षि-
ताश्च ते । मल्लेः षडपि मित्राणि, लेभिरे क्रमशः(तः) शिवम् ॥ ६० ॥ इति श्रीमल्लिजिनोपलक्षितषण्मित्रचरित्रम् ॥

अथ विष्णुकुमारं स्तुवन्नाह—

सट्ठिं वाससयाइं, जेण छट्ठेण भाविओ अप्पा । बहुविहलद्धिसमिद्धं, विण्हुं वंदामि अणगारं ॥ २१ ॥

श्रीमल्लिनाथस्य षण्मित्राणां प्रबन्धः ।

व्याख्या—गाथेयं प्रक्षेपरूपाऽपि विशेषार्थप्रतिपादिकेति व्याख्यायते—'विण्हुं' नवमचक्रिमहापद्मज्येष्ठभ्रातरं 'वन्दामि' स्तवीमि इति क्रियायोगः। तं कं? 'येन' विष्णुना 'पष्ठिः' त्रिविंशतिर्वर्षाणाम्—अब्दानां शतानि पट् सहस्रवर्षाणीति यावत्। 'पष्ठेन' उपवस(वास)द्वयेन 'भावितः' वासितः 'आत्मा' जीवोऽभूत्। पुनः किम्भूतं? बहुविधाभिः—अनेकाभिर्लब्धिभिः—वैक्रियादिभिः समृद्धं—दीप्तम्। पुनः कथम्भूतम्? 'अनगारं' न विद्यते परकृतालयवासित्वाद् अगारं—गृहं यस्येति 'यत्तदोर्द्वन्द्वचरत्वात्' तं वन्दामि। इति गाथार्थः ॥ २१ ॥

**जो तित्थस्स पभावणमकासि वेउव्विदेहलद्धीए। तं विण्हुं गयतिण्हं, नमामि पत्तं सिवपुरम्मि ॥ २२ ॥**

व्याख्या—'तं' पूर्वोक्तं विष्णुं 'नमामि' नमस्करोमि। कोऽसौ? यः 'तीर्थस्य' चतुर्वर्णसङ्घस्य जिनशासनस्य वा 'प्राकृतत्वाद् अकारलोपात्' 'प्रभावनाम्' उन्नतिम् ''अकासि' त्ति 'अकार्षीत्'' चक्रे वैक्रियदेहलब्धितो लब्ध्या वा इत्यपि व्याख्येयम्। किंविशिष्टं? 'गततृष्णं' गता—नष्टा तृष्णा—लोभो यस्मादसौ गततृष्णस्तम्। पुनः किंविशिष्टं? प्राप्तं, कस्मिन्? ''सिवपुरम्मि'' मोक्षपत्तने। इति गाथाक्षरार्थः ॥२२॥ भावार्थस्तु नवमचक्रिचरित्राधिकार एव दर्शितः ॥



अथ स्कन्दकसूरिशिष्याः स्तूयन्ते—

**एगूणे पंचसए, खंदगसीसाण कुंभकारकडे। पालयकयउवसग्गे, पत्ते पणमामि अपवग्गे ॥ २३ ॥**

व्याख्या—'स्कन्दकशिष्यान्' स्कन्दकाचार्यविनेयान् 'प्रणमामि' प्रह्वीभवामि अहमिति क्रियासम्बन्धाद् गम्यम्। कतिसङ्ख्यान्? एकेनोनान् एकोनान् 'पञ्चशतान्' अर्द्धसहस्रान्, क्व? 'कुम्भकारकटे' पुरे। किंविशिष्टान्? पालकेन—अभव्यधिग्जातिना कृतोपसर्गान्—विहितोपद्रवान्। पुनः किंविशिष्टान्? प्राप्तान्, किं? 'अपवर्गं' मोक्षम्। इति गाथाक्षरार्थः ॥ २३ ॥ भावार्थस्तु अयम्—

स्कन्दक-सूरिशिष्याणां वर्णनम्।

तथाहि पुर्यां श्रावस्त्यां, जितशत्रुर्नृपोऽभवत्। यस्यासिधेनुश्चरति, शत्रूणां शीर्षगोचरम्(रे) ॥ १ ॥ तस्यामममहिषी शीलधारिणी
धारिणीत्यभूत्। पुरन्दरयशा पुत्री, तनयः स्कन्दकाभिधः ॥ २ ॥ सा दत्ता दण्डकीशस्य, कुम्भकारकटेशितुः। परेषामेव भोग्याः
स्युः, पुत्र्यो वह्नीः सुमाति च ॥ ३ ॥ अन्येद्युः समवसृतः, श्रावस्त्यां मुनिसुव्रतः। धर्मं श्रुत्वाऽभवत् श्राद्धः, स्कन्दकोऽस्यार्हतोऽ-
न्तिके ॥ ४ ॥ इतश्च दूतकार्याय, श्रावस्त्यामागतोऽन्यदा। मरुकः पालको नाम, दण्डकिनः पुरोहितः ॥ ५ ॥ वदन्नवर्णं साधूनामसौ
स्थितो हि (स्कन्देन) पर्षदि। कृतो निरुत्तरो द्वेषमापन्नः स्कन्दकोपरि ॥ ६ ॥ जनैः पञ्चशतैः स्कन्दो, बालावलगकैः समम्। प्रात्रा-
जीत् सुव्रतस्वामिपार्श्वे जातो बहुश्रुतः ॥ ७ ॥ अनुज्ञाताऽस्य शिष्यत्वे, सैव पञ्चशती नृणाम्। स्कन्दोऽन्यदाऽपृच्छदीशं, यामि पार्श्वे
स्वसुः प्रभो! (?) ॥ ८ ॥ स्वाम्याह भविता तत्रोपसर्गो मारणान्तिकः। स्कन्दोऽवददिमे नाथाऽऽराधका? वा विराधकाः? ॥९॥ मुक्त्वा
भवन्तं सर्वेऽप्याराधका इत्यवग् विभुः। स्कन्दो दध्यौ मयैकेनर्तेऽमी आराधका वरम् ॥ १० ॥ ततः स तत्र सम्प्राप्तः, कुम्भकारकटं
मुनिः। पालकोऽस्त्राणि चिक्षेप, साधूपाश्रयभूमिषु ॥ ११ ॥ नृपं व्युद्ग्राहयामास, त्वां निपात्य यथा ह्ययम्। स्वीकरिष्यति ते राज्यं, परीष-
हपराजितः ॥ १२ ॥ यदि सत्यं न चेत् तर्हि, विलोकय तदाश्रयम्। ततस्तथाकृतेऽद्राक्षीन्नृपोऽस्त्राणि भूरिशः ॥ १३ ॥ दत्ता वध्यर्पय-
त्तस्य, राज्ञीतोरिव गोरसम् (दत्ता वधार्थं तत्सर्प-यो राज्ञा पशुवत् स्वयम्)। नरपीडनयन्त्रं स, कारयामास पापधीः ॥ १४ ॥
वितीर्णाऽऽलोचनाः सम्यग्, गुरुभिः सर्वसाधवः। धृतासन्नशुभध्यानाः, क्षामिताखिलजन्तवः ॥ १५ ॥ सहन्तो वेदनां तीव्रां,
पीडितास्तेन पाप्मना। सम्पन्नकेवलज्ञाना, महानन्दं प्रपेदिरे ॥ १६ ॥ [युग्मम्] स्कन्दकोऽपि धृतः पार्श्वे, तेषां रुधिरविन्दुभिः।
भृतः सर्वावमं क्षुल्लं, वीक्ष्याऽऽयातमदोऽवदत् ॥ १७ ॥ शिरीषसुकुमाराङ्गं, रेऽनुकम्प्यममुं शिशुम्। पीड्यमानं न शक्नोमि, द्रष्टुं दृष्ट्वा-

ऽऽनयाऽऽत्मनः ॥ १८ ॥ तन्मां पूर्वममुं पश्चात्, पीडयेत्युदितं कुरु । सोऽपि तद्गुरुदुःखार्थं, प्रागेव तमपीडयत् ॥ १९ ॥ ततः क्रोधारुणः कृत्वा, निदानं तेन पीडितः । जगामाग्निकुमारेषु, सूरिर्वाग् नान्यथाऽर्हतः(ऽऽर्हती) ॥ २० ॥ तस्य धर्मध्वजो हस्त, इति कृत्वा हृतः खगैः । व्योम्नः पपात रक्ताक्तः, पुरन्दरयशापुरः ॥ २१ ॥ तस्मिन् दिनेऽधृतिं चक्रे, दृश्यन्ते साधवो न यत् । तया स प्रत्यभिज्ञातो, निषद्याछन्नकम्बलः ॥२२॥ ज्ञातं यथा मारितास्ते, सा ततो नृपमब्रवीत् । रे पापात्मन्! विनष्टोऽसि, पाप्मना कर्मणाऽमुना ॥ २३ ॥ प्रव्रजामीति सानीता, देवैरुत्पाट्य सन्निधौ । सुव्रतस्वामिनः स्वार्थं, प्रव्रज्यासाधयत् सुधीः ॥ २४ ॥ अथो स्कन्दकदेवेन, सदेशं ज्वालितं पुरम् । अद्यापि दण्डकारण्यं, भीषणं तद्धि भण्यते ॥ २५ ॥ क्रोधाध्मातः पुमान् किं न, कार्यं कुर्यादनार्यकम् ? । कार्य आर्यैरतो नासौ महानन्दपदार्थिभिः ॥ २६ ॥ इति श्रीस्कन्दकसूरिशिष्यसम्बन्धः ।

अथ कार्त्तिकश्रेष्ठिमुनिमाह—

**दट्ठूण अन्नतित्थियपराभवं भवभयाउ निव्विण्णो । नेगमअट्ठसहस्सेण परिवुडो कत्तिओ सेट्ठी ॥ २४ ॥**
**पव्वइओ मुणिसुव्वयसामिसगासम्मि धारसंगविऊ । बारससमपरियाओ, सोहम्मे सुरवई जाओ ॥ २५ ॥**

व्याख्या—कार्त्तिकश्रेष्ठी 'सौधर्मे' प्रथमस्वर्गे 'सुरपतिः' इन्द्रः 'जातः' उत्पन्न इति क्रियासंस्कारः । किम्भूतः ? 'प्रव्रजितः' गृहीतव्रतः, कस्मिन् ? 'मुनिसुव्रतस्वामिसकाशे' विंशतितमार्हत्सन्निधौ, किं कृत्वा ? 'दृष्ट्वा' वीक्ष्य, किम् ? 'अन्यतीर्थिकपराभवं' परदर्शनिकृततिरस्कारम् । पुनः किंविशिष्टः ? 'निर्विण्णः' उद्विग्नः, कस्मात् ? 'भवभयात्' संसारभीतेः । पुनः किंविशिष्टः ? 'परिवृतः' अन्वितः, केन ? 'नैगमाष्टसहस्रेण' साष्टदशशतवणिग्भिरिति हृदयम् । कचिदावश्यकादौ सहस्रमेव दृश्यते, अत्र तु साष्टसहस्रमुक्तं यथाऽस्ति तथा प्रमाणम् ।



स्कन्दकसूरिशिष्याणां वर्णनं कार्त्तिकश्रेष्ठिमुनेर्वर्णनं च ।

॥ ४६ ॥

पुनः किंविशिष्टः ? द्वादशाङ्गवित् । पुनः किंविशिष्टः ? द्वादश समाः—वर्षाणि पर्यायः—व्रतपालनं यस्य सः । ननु द्वादशाङ्गवेदीत्युक्तं, तत् कथं तस्य सौधर्मे उत्पात उक्तः ?, जघन्यतोऽपि लान्तके गमनात् । उच्यते—केनापि विस्मृतत्वादिकारणेन तत् सम्भाव्यते । अथवा द्वादशाङ्गवेदीति "परिकम्मं सुत्ताइं"[1] इति प्रस्थानद्वयाद्यध्ययनेऽपि द्वादशाङ्गवेदी एकदेशेनोच्यते। पूर्वाणि तु न सम्पूर्णान्यधीतानि भविष्यन्तीति हेतोर्वा सौधर्मे उत्पातः सम्भाव्यत इति श्रीभ(भु)वनतुङ्गसूरिवृत्तिकाराभिप्रायः । श्रीस्थूलभद्रवत् सूत्रतो नार्थतोऽमेतनपूर्वाण्यधीतानि भविष्यन्तीत्यस्मदभिप्रायः । तत्त्वं पुनः केवलिगम्यम् । इति गाथाद्वयार्थः ॥ २४—२५ ॥ भावार्थस्तूच्यते—

जितशत्रुरभूद् भूपः, कुरुषु हस्तिनापुरे । सहस्राष्टवणिक्श्रेष्ठः, श्रेष्ठ्यासीत् तत्र कार्त्तिकः ॥१॥ श्राद्धः श्रद्धाधरः श्राद्धप्रतिमानामसौ शतम् । चकाराद्वैतसम्यक्त्वो, जीवाजीवादितत्त्ववित् ॥ २ ॥ तत्राऽऽगादन्यदा मासोपवासी गैरिकाभिधः । गतानुगतिको लोकस्तं कार्त्तिकमृतेऽर्चति ॥ ३ ॥ मृगयत्यस्य छिद्राणि, सोऽनन्यगतिकोऽन्यदा । निमन्त्रितः पारणार्थं, राज्ञे वीक्ष्याह स क्षणम् ॥ ४ ॥ पारयामि तदा राजन्!, परिवेषयति कार्त्तिकः । यदा मां नान्यथाऽवश्यं नृपोऽज्ञासीत् तदाग्रहम् ॥ ५ ॥ ततः समस्तसामन्तसमेतस्तद्गृहं गतः । ससम्भ्रमः समुत्थाय, तं श्रेष्ठीति व्यजिज्ञपत् ॥ ६ ॥ देवपादैः कथं पादैरद्य मत्सद्म पावितम् ? । समादिश ममादेशं, महानुग्रहसद्ग्रहम् ॥ ७ ॥ पार्थिवः स्वार्थसिद्ध्यर्थमूचे श्रेष्ठिन्! पुरं मम । प्रकाश्यते त्वयैकेन, रविणेवाब्जमण्डलम् ॥ ८ ॥ परिवेषय मद्गेहे, भुञ्जानस्य तपस्विनः । गैरिकस्येति मे कृत्यं, परं त्वय्येव तिष्ठति ॥९॥ श्रेष्ठ्याहास्माकमाचारो, नायमाचारकोविद ! । परं त्वत्पुरवासित्वात्, करिष्येऽद्यो हृदो विना ॥ १० ॥ तपस्वी पारणायाऽऽगादुत्सुको नृपमन्दिरे । उ(औ)त्सुक्यं पारणे हि स्याद्, विशेषे तादृशे किमु ? ॥११॥

[1] "परिकर्म सूत्राणि" इति ।

कार्त्तिकश्रेष्ठिमुनेर्वर्णनम् ।

ऽन्यथाऽऽत्मनः ॥ १८ ॥ तन्मां पूर्वममुं पश्चात्, पीडयेत्युदितं कुरु । सोऽपि तद्गुरुदुःखार्थं, प्रागेव तमपीडयत् ॥ १९ ॥ ततः क्रोधारुणः कृत्वा, निदानं तेन पीडितः । जगामाग्निकुमारेषु, सूरिर्वाग् नान्यथाऽर्हतः(ऽऽर्हती) ॥ २० ॥ तस्य धर्मध्वजो हस्त, इति कृत्वा हृतः खगैः । व्योम्नः पपात रक्ताक्तः, पुरन्दरयशापुरः ॥ २१ ॥ तस्मिन् दिनेऽधृतिं चक्रे, दृश्यन्ते साधवो न यत् । तया स प्रत्यभिज्ञातो, निपधाछन्नकम्बलः ॥२२॥ ज्ञातं यथा मारितास्ते, सा ततो नृपमब्रवीत् । रे पापात्मन्! विनष्टोऽसि, पाप्मना कर्मणाऽमुना ॥ २३ ॥ प्रव्रजामीति सानीता, देवैरुत्पाट्य सन्निधौ । सुव्रतस्वामिनः स्वार्थं, प्रव्रज्यासाधयत् सुधीः ॥ २४ ॥ अथो स्कन्दकदेवेन, सदेशं ज्वालितं पुरम् । अद्यापि दण्डकारण्यं, भीषणं तद्धि भण्यते ॥ २५ ॥ क्रोधाध्मातः पुमान् किं न, कार्यं कुर्यादनार्यकम् ? । कार्ये आर्यैरतो नासौ महानन्दपदार्थिभिः ॥ २६ ॥ इति श्रीस्कन्दकसूरिशिष्यसम्बन्धः ।

अथ कार्त्तिकश्रेष्ठिमुनिमाह—

**दट्ठूण अन्नतित्थियपराभवं भवभयाउ निव्विण्णो । नेगमअट्ठसहस्सेण परिवुडो कत्तिओ सेट्ठी ॥ २४ ॥**
**पव्वइओ मुणिसुव्वयसामिसगासम्मि वारसंगविऊ । बारससमपरियाओ, सोहम्मे सुरवई जाओ ॥ २५ ॥**

व्याख्या—कार्त्तिकश्रेष्ठी 'सौधर्मे' प्रथमस्वर्गे 'सुरपतिः' इन्द्रः 'जातः' उत्पन्न इति क्रियासंस्कारः । किम्भूतः ? 'प्रव्रजितः' गृहीतव्रतः, कस्मिन् ? 'मुनिसुव्रतस्वामिसकाशे' विंशतितमार्हत्सन्निधौ, किं कृत्वा ? 'दृष्ट्वा' वीक्ष्य, किम् ? 'अन्यतीर्थिकपराभवं' परदर्शनिकृततिरस्कारम् । पुनः किंविशिष्टः ? 'निर्विण्णः' उद्विग्नः, कस्मात् ? 'भवभयात्' संसारभीतेः । पुनः किंविशिष्टः ? 'परिवृतः' अन्वितः, केन ? 'नैगमाष्टसहस्रेण' साष्टदशशतवणिग्भिरिति हृदयम् । कचिदावश्यकादौ सहस्रमेव दृश्यते, अत्र तु साष्टसहस्रमुक्तं यथाऽस्ति तथा प्रमाणम् ।



स्कन्दकसूरिशिष्याणां वर्णनं कार्त्तिकश्रेष्ठिमुनेर्वर्णनं च ।

पुनः किंविशिष्टः ? द्वादशाङ्गवित् । पुनः किंविशिष्टः ? द्वादश समाः—वर्षाणि पर्यायः—व्रतपालनं यस्य सः । ननु द्वादशाङ्गवेदीत्युक्तं, तत् कथं तस्य सौधर्मे उत्पात उक्तः ?, जघन्यतोऽपि लान्तके गमनात् । उच्यते—केनापि विस्मृतत्वादिकारणेन तत् सम्भाव्यते । अथवा द्वादशाङ्गवेदीति "परिकम्मं सुत्ताइं"[1] इति प्रस्थानद्वयाद्यध्ययनेऽपि द्वादशाङ्गवेदी एकदेशेनोच्यते । पूर्वाणि तु न सम्पूर्णान्यधीतानि भविष्यन्तीति हेतोर्वा सौधर्मे उत्पातः सम्भाव्यत इति श्रीभ(भु)वनतुङ्गसूरिवृत्तिकाराभिप्रायः । श्रीस्थूलभद्रवत् सूत्रतो नार्थतोऽमेतनपूर्वाण्यधीतानि भविष्यन्तीत्यस्मदभिप्रायः । तत्त्वं पुनः केवलिगम्यम् । इति गाथाद्वयार्थः ॥ २४–२५ ॥ भावार्थस्तूच्यते—

जितशत्रुरभूद् भूपः, कुरुषु हस्तिनापुरे । सहस्राष्टवणिक्श्रेष्ठः, श्रेष्ठ्यासीत् तत्र कार्त्तिकः ॥१॥ श्राद्धः श्रद्धाधरः श्राद्धप्रतिमानामसौ शतम् । चकाराद्वैतसम्यक्त्वो, जीवाजीवादितत्त्ववित् ॥ २ ॥ तत्राऽऽगादन्यदा मासोपवासी गैरिकाभिधः । गतानुगतिको लोकस्तं कार्त्तिकवर्जेऽर्चयति ॥ ३ ॥ मृगयत्यस्य छिद्राणि, सोऽनन्यगतिकोऽन्यदा । निमन्त्रितः पारणार्थं, राज्ञे वीक्ष्याह स क्षणम् ॥ ४ ॥ पारणाभि मम राजन्!, परिवेषयति कार्त्तिकः । यदा मां नान्यथाऽवश्यं नृपोऽप्यासीत् तदाग्रहम् ॥ ५ ॥ ततः समस्तसामन्तसमेतस्तद्गृहं गतः । ससम्भ्रमः समुत्थाय, तं श्रेष्ठीति व्यजिज्ञपत् ॥ ६ ॥ देवपादैः कथं पादैरद्य मत्सद्म पावितम् ? । समादिश समादेशं, महदनुग्रहस्तव ॥ ७ ॥ पार्थिवः स्वार्थसिद्ध्यर्थमूचे श्रेष्ठिन्! पुरं मम । प्रकाश्यते त्वयैकेन, रविणेवाब्जमण्डलम् ॥ ८ ॥ परिवेषय मद्गेहे, भुञ्जानस्य तपस्विनः । गैरिकस्येति मे फलं, परं त्वय्येव तिष्ठति ॥९॥ श्रेष्ठ्याहास्माकमाचारो, नायमाचारकोविद ! । परं त्वत्पुरवासित्वात्, करिष्येऽसौ ह्यो निशा ॥ १० ॥ तपस्वी पारणायाऽऽगादुत्सुको नृपमन्दिरे । उ(औ)त्सुक्यं पारणे हि स्याद्, विशेषे तादृशे किमु ? ॥११॥

[1] "परिकर्म सूत्राणि" इति ।

धृष्टोऽसीति वदन् दुष्टश्चालयत्यङ्गुलीं निजाम् । ददन् राजाभियोगेन, चित्ते श्रेष्ठीत्यचिन्तयत् ॥ १२ ॥ प्रागेव प्राव्रजिष्यं चेन्नाभविष्यत् पराभवः । ममायमिति निर्वेदास्पदीचक्रे निजं मनः ॥ १३ ॥ सद्यौत्पात्यन्तसंवेगात्, श्रीमुनिसुव्रतान्तिके । नैगमाष्टसहस्रेण, सार्द्धं श्रेष्ठी श्रितो व्रतम् ॥ १४ ॥ पपाठ द्वादशाङ्गानि, द्वादशाब्दानि च व्रतम् । प्रपाल्य कल्पे प्रथमे (सौधर्मे), सौधर्मेन्द्रो बभूव सः ॥ १५ ॥ तपस्वी वाहनं जज्ञेऽस्याभियोगिककर्मणा । तं ज्ञात्वाऽवधिनाऽनश्यद्, वक्त्राऽऽनीतोऽङ्गरक्षकैः ॥ १६ ॥ तमारूढो हरिर्नागं, सोऽमर्षात् स्वं द्विधाऽकरोत् । चक्रे द्वे(द्वि)रूप्य(प)मिन्द्रोऽपि, द्वे(द्वि)रूप्ये(पे)णाऽऽरुरोह च ॥ १७ ॥ चक्रे यावन्ति रूपाणि, तावन्त्येव हरिर्व्यधात् । आहतो मुष्टिनाऽनश्यद्, वज्रिणा वज्रपाणिना ॥ १८ ॥ स्वकर्म चिन्तयंस्तस्थौ, पश्चात् पश्चात्कृतीभजन् । तपस्वी वासवोऽपीत्थं(द्व), भुञ्जानौ स्तः सुखं दिवि ॥ १९ ॥ इति कार्त्तिकश्रेष्ठिसम्बन्धः ॥

अथ सुकोशलमुनिमाह—

**मुग्गिल्लगिरिम्मि सुकोसलेण वग्घीकओवसग्गेण । पत्तं परमं ठाणं, कित्तिधरेण वि वरं नाणं ॥ २६ ॥**

व्याख्या—'सुकोशलेन' नाम्ना महर्षिणा प्राप्तं 'परमं स्थानं' मोक्षलक्षणमिति क्रियायोजना । किंविशिष्टेन ? 'व्याघ्रीकृतोपसर्गेण' व्याघ्र्या–पूर्वभवजनन्या कृतः–विहित उपसर्गः–उपद्रवो यस्य तेन, कस्मिन् ? 'मुग्गिल्लगिरौ' चित्रकूटगिरौ 'कीर्त्तिधरेण' तज्जनकेनापि 'वरं' प्रधानं 'ज्ञानं' केवलज्ञानमित्यर्थः । सिंहावलोकनन्यायेन प्राप्तमित्यत्रापि योज्यम् । इति गाथार्थः ॥ २६ ॥

भावार्थस्तु किञ्चिदुच्यते—

पूर्वदेशेऽस्ति साकेतपुरे विजयभूभुजः । हिमचूला प्रिया पुत्रौ, वज्रबाहु-पुरन्दरौ ॥ १ ॥ उत्तरस्यां ततो( मितो ) नागपुरे राड्



कार्त्तिकश्रेष्ठिमुनेर्वर्णनं सुकोशलमुनेर्वर्णनं च ।

सुकोशल-मुनेर्वर्णनम् ।

हरिवाहनः । तस्य चूडामणी राज्ञी, पुत्रश्चोदयसुन्दरः ॥२॥ पुत्री मनोह(-रिण्यस्)रा तस्य, नाम्ना धाम्नापि चात्मनः । तस्याः स्वयंवरे
दूरादीयुर्नृपाः परःशताः ॥ ३ ॥ वज्रबाहुकुमारोऽपि, तत्रागाद् विजयाङ्गजः । ततः स्वयंवरे कन्याऽपृच्छद् राज्ञामिदं पुरः ॥ ४ ॥ को
देवः ? को गुरुः ? तत्त्वं, किं ? ततो राड्भिरुत्तरम् । नान्यैर्दत्तमथो वज्रबाहुरुद्बाहुरूचिवान् ॥ ५ ॥ देवदेवो जिनो देवो, गुरुः साधु-
गुंरु(रोः) गुणैः । तत्त्वं जिनोक्तं मुत्त्यङ्गं, धर्मो जीवदयामयः ॥ ६ ॥ प्रीतया न्यस्ता ततस्तस्य, वरमाला गलेऽनया । स्वर्ण-मण्योरिव
विधेर्वैदुष्यं योग्ययोजने ॥ ७ ॥ वज्रबाहुर्बहुस्फीत्या, परिणीय कनीमिमाम् । चचाल चालयन्नुर्वी, स्वपुराय बलैरलम् ॥ ८ ॥ चतुर्विंशति-
रुदयसुन्दराद्या नृपात्मजाः । स(त)म्प्रेषणोपचारार्थमनुजग्मुर्नृपाज्ञया ॥ ९ ॥ सरणौ गच्छतां तेषां वसन्तगिरिरागमत् । दृत्त्वाऽऽयामां-
स्तदेऽस्याग्रुरत्राक्षुर्ध्यानगं मुनिम् ॥ १० ॥ तद्वन्दनाय गच्छन्तं वज्रबाहुं हसोक्तिभिः । इत्यूचुः स्यालकाः शिष्यः, किममुष्य भविष्यसि ?
॥११॥ सोऽप्योचद् दर्शनं श्रेष्ठं, साधूनां किमुपासना(नम्) ? । तैरुक्तमेवमस्माकं पुरस्तादेव जल्पसि ॥१२॥ गत्वा नत्वोपविष्टास्ते, ख्यातो
धर्मो महर्षिणा । तं श्रुत्वोत्पन्नवैराग्यो, वज्रबाहुरदोऽवदत् ॥ १३ ॥ भगवन् ! भवपाथोधितरीं दीक्षां प्रयच्छ मे । मुनिना दीक्षितः
सद्यो, स्यालो कः प्रमाद्यति ? ॥ १४ ॥ चिन्तितं स्यालकैरित्थमेनं कृत्वा कथं वयम् । यास्याम ? इति तैर्व्रीडाद् व्रतस्ते व्रतमाददे ॥ १५ ॥
कश्चिद् वर्धापयामास, साकेते विजयं पुमान् । यद् वज्रबाहुना सार्थों व्रतेनानुष्ठितः प्रभो ! ॥ १६ ॥ सुतं पुरन्दरं राज्येऽभिषिच्य
विजयो नृपः । क्रमाद् जगाद चारित्रमेकैव विदुषां हि धीः ॥ १७ ॥ पुरन्दरः कीर्त्तिधरं, राज्ये न्यस्य क्रमागते । व्रतमादत्त साकेत-
राज्यं कीर्त्तिधरोऽकरोत् ॥ १८ ॥ गवाक्षस्थोऽन्यदा वीक्ष्य, क्षितीशो ग्रहणं रवेः । अचिन्तयदवस्थाऽहो ! सूर्यस्यापीदृशी भवेत् ॥ १९ ॥
किं पुनर्गर्भुजाङ्गेषु, मलमूत्राविलेष्विति । व्रतं जिघृक्षुर्वैराग्याद् रक्षितो मन्त्रिणाऽऽसुतम् ॥२०॥ पञ्चदशस्विनैरेष सुतोत्पत्तेरनन्तरम् । साधो-

सुकोशलमुनेर्वर्णनम् ।

रध्वाध्वनीनोऽभूद् नभोऽध्वग इवार्यमा ॥२१॥ सहदेवीप्रियोत्पन्नः, पुत्र(सुत)स्तस्य सुकोशलः । राज्यं करोति साकेते, बालो बालेन्दुसुन्दरः ॥ २२ ॥ धर्मं शृणोतु कस्मान्वे, मेति वप्रत्रयं पुरे । विधाप्य कारयत्तम्वा, राज्ञोऽन्ता राजपाटिकाम् ॥ २३ ॥ इतश्चावधिना ज्ञात्वा, प्रबोधावसरं मुनिः । सूनोः षोडशवर्षेण, भ्रमन् साकेतमीयिवान् ॥२४॥ दृष्ट्वा दुष्टा मुनिं राज्ञी, प्रविशन्तं पुरं प्रति । निष्कास्यतां विडम्ब्यायमित्यादिष्टवती नरान् ॥ २५ ॥ गत्वा नत्वा निवृत्तास्ते, उपलक्ष्य निजेश्वरम् । किं नु(न)निष्कासित इति, राज्योक्तास्तेऽवदन् विभुम् ॥२६॥ तयोक्तं शाश्वतीशश्चेदकाण्डे प्रव्रजिष्यति । अविलम्ब्य विडम्ब्यैनं, तेन निष्कासयन्तु भोः ! ॥२७॥ ततस्ते तं मुनिं यष्टिमुष्ट्यादिभिरुपाद्रवन् । धात्र्या धात्रीपतेरग्रे, तदुक्तं सर्वमादितः ॥२८॥ वैराग्यान्नृपतिर्दध्यावहो ! मन्मात(संस्तुति)चेष्टितम् । सर्वः स्वार्थपर इति, प्राव्राजीत् पितुरन्तिके ॥ २९ ॥ पुत्रशोकात् ममारास्या, झम्पापाताद् गवाक्षतः । व्याघ्र्यभूत् चित्रकूटाद्रौ, पुत्रस्नेहो हि दुर्धरः ॥ ३० ॥ तेपाते तौ तपस्तीव्रं, पितृ-पुत्रौ महामुनी । चक्रतुश्च चतुर्मासीं, चित्रकूटगुहाश्रये ॥ ३१ ॥ पारणायान्यदा यान्तौ, पितेत्याह सुतं प्रति । भवितोपद्रवो मे त्वमाराधनं(नां) विधापयेः ॥ ३२ ॥ तव चेत् कारयिष्येऽहं, ततः पुत्रेण चिन्तितम् । ममैवोपद्रवो भावी, मोहात् तातो न जल्पति ॥ ३३ ॥ दृष्टौ यान्तौ तया व्याघ्र्या, इतः पुत्रोऽभगः सुधीः (क्षुधा) । भक्षयन्त्या रदास्तस्य, दृष्टाः काञ्चनसंरद्वाः ॥ ३४ ॥ ऊहापोहाभ्यां सा जातिस्मृतिमाप तपस्विनी । पश्चात्तापेन जग्राहानशनं व्यसनापहम् ॥ ३५ ॥ सुकोशलमुनिः पित्राऽऽराधनां कारितः सुधीः । अन्तकृत्केवली भूत्वा, ससाद पदमव्ययम् ॥ ३६ ॥ व्याघ्री पञ्चदशाहानि, साधुना बोधिताऽधिकम् । प्रपाल्यानशनं स्वर्गेऽष्टमे देवत्वमासदत् ॥३७॥ केवलज्ञानमुत्पाद्य, कीर्त्तिधरोऽपि निर्वृतः । अन्तरे सुव्रतस्वामि-नम्योरेतौ बभूवतुः ॥३८॥

इति श्रीसुकोशलमहर्षिप्रबन्धः ॥ इति श्रीखरतर[गच्छ]शृङ्गारहार[श्रीकीर्त्तिरत्नसूरिशिष्य]श्रीगुणरत्नाचार्यशिष्यलेश-वाचनाचार्यपद्ममन्दिरगणिविरचितायां कथार्णवाङ्कायां श्रीऋषिमण्डलप्रकरणवृत्तौ द्वितीयो विश्रामः ।

# अथ तृतीयो विश्रामः ।

अथ श्रीनेमिजिनतीर्थोत्पन्नमहर्षीन् स्तौति—

**काउं गुणरयणतवं, अट्ठ वि अक्खोभ-सागरप्पमुहा । वण्हिसुया संपत्ता, सिद्धिं एक्कारसंगधरा ॥ २७ ॥**

व्याख्या—अष्टावप्यक्षोभ्याद्याः सिद्धिं सम्प्राप्ता इति क्रियायोगः । ते के ? "वण्हिसुय" त्ति भीमो (मे) भीमसेन इति न्यायाद् अन्धकवृष्णेः सुताः–पुत्रा अन्धकवृष्णिसुताः, किं कृत्वा ? कृत्वा, किं तत् ? "गुणरयणतवं" त्ति पदैकदेशे पदसमुदायोपचाराद् गुणरत्नसंवत्सरं नाम तपः । अक्षोभ्यः–द्वितीयो दशार्हः, सागरः–चतुर्थः प्रमुखः–आद्यो येषां ते तथा । पुनः किंविशिष्टाः ? एकादशाङ्गधारिणः । इति गाथार्थः ॥ २७ ॥ भावार्थस्तु विशेषार्थिना नेमिचरित्रतो ज्ञेयः । स्थानाशून्यार्थं किञ्चिदुच्यते—

कुशार्त्तदेशे श्रीसूर्यपत्तनेऽन्धकवृष्णिराट् । सवितेव प्रतापाढ्यः, सुभद्राख्याऽस्य पत्न्यभूत् ॥ १ ॥ अक्षोभ्य[ः]स्तिमितोऽब्धिश्च, हिमवान् धरणोऽचलः । पूरणश्चाभिचन्द्रश्च, तयोरेतेऽष्ट नन्दनाः ॥ २ ॥ क्रमाद् गजसुकुमार(ल)साधोः सिद्धेरनन्तरम् । वैराग्यात् नेमिनः पार्श्वे, तेऽष्टापि शिश्रियुर्व्रतम् ॥ ३ ॥ पेठुरेकादशाङ्गानि, ते विशिष्टफलार्थिनः । गुणरत्नशरत्संज्ञमिदं चारेभिरे तपः ॥ ४ ॥ मासे चतुर्थस्तत्राद्ये, कार्यः षष्ठो द्वितीयके । तृतीये चाष्टमो मासे, तुर्येऽस्मिन् दशमो भवेत् ॥ ५ ॥ मासि मास्येवमेकैकस्योपवासस्य वृद्धितः । यावत् षोडशमे मासेऽत्रोपवासाणि षोडश ॥ ६ ॥ न्यूनान्यत्र दिनानि स्युर्यस्मिन् मासेऽष्टमादिना । तत्राग्रेतनमासस्य, क्षिप्यन्तेऽह्नानि कानिचित् ॥ ७ ॥ शेषाणि चाग्रिमे(-मग्रे) मासे, क्षिप्यैवं सर्वसङ्ख्यया । तपःकालो दिनान्यत्र, सप्ताधिकचतुःशती ॥ ८ ॥ पारणान्यत्र तपसि, सप्ततिः स्यात् त्र्याधिका । एवं षोडशभिर्मासैः, पूर्णीभवत्यदस्तपः ॥ ९ ॥ उत्कटिकासने स्थेयं, सूर्येन्यस्तदृशा दिवा ।

विना प्रावरणं रात्रौ वीरासनपरिग्रहात् ॥ १० ॥ तपः समाप्य पर्यन्ते, ते समुत्पाद्य केवलम् । घातिकर्मक्षयात् सिद्धिमासदन् परमर्षयः ॥ ११ ॥ इत्यक्षोभ्यादीनां प्रवन्धः (समाप्तः) ॥

| मास | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तपांसि | १५ | २० | २४ | २४ | २५ | २४ | २१ | २४ | २७ | ३० | ३३ | २४ | २६ | २८ | ३० | ३२ |
| पारणानि | १५ | १० | ८ | ६ | ५ | ४ | ३ | ३ | ३ | ३ | ३ | २ | २ | २ | २ | २ |

इति गुणरत्नसंवत्सरतपोयन्त्रकम् । [तपोदिन ४०७ । पारणा ७३ । मास १६ सर्वतपः]

**तं वंदे रहनेमिं, चउरो वच्छरसयाइ जस्स गिहे । जो वरिसं छउमत्थो, पंचसए केवली जाओ ॥ २८ ॥**

व्याख्या—'तं' प्रसिद्धं 'रथनेमिं' शैवेयं वन्देऽहमिति क्रियायोगाद् गम्यम् । यस्य चत्वारि "वरिससयाइं" वर्षशतानि 'गृहे' गृहस्थावासे, यो वर्षं यावत् छद्मस्थः, पञ्चशतानि 'केवली' केवलज्ञानवान् 'जातः' अभवत् । इति गाथार्थः ॥ २८ ॥ भावार्थस्तूच्यते—

द्वारकायां महापुर्यां, समुद्रविजयाङ्गजः । रथनेमिः शिवासूनुः, सोदरोऽरिष्टनेमिनः ॥१॥ स व्रतानन्तरं नेमेर्वीक्ष्य राज(जी)मतीं कनीम् । स्मरार्त्तो(र्त्यो)पाचरत् चारुप्राभृतप्रेषणादिना ॥ २ ॥ तद्गृहं याति स भ्रात(तुर्)जायादम्भेन नित्यशः । निर्ममे नर्म चान्येद्युस्तामूचेऽदो रहःस्थिताम् ॥ ३ ॥ मृगाक्षि ! मुख्यो मुग्धानां, मद्भ्राता प्रतिभाति मे । जगल्लावण्यनिस्यन्दभूतां त्वां योऽत्यजन्मुधा ॥ ४ ॥



गुणरत्न-
संवत्सर-
तपोयन्त्रकं
रथनेमि-
प्रवन्धश्च ।

तत् त्वां परिणयाम्येहि, मा मुधा नय यौवनम् । तत् श्रुत्वा कर्णकटुकं, सा दूना तमदोऽब्रवीत् ॥ ५ ॥ मनोरथपथं नेमिनाथं रूपातिमन्मथम् । नीत्वा नाभिलषाम्यन्यं, वाङ्-मनः-कर्मभिर्नरम् ॥ ६ ॥ पद्मिनी पद्मिनीनाथे, कौमुदी कौमुदीपतौ । नदी नदीपतावेव रज्यतेऽहं तथा प्रभौ ॥ ७ ॥ तस्मात् मां मा मुधा मुग्ध ! वादीः पुनरिदं वचः । इत्युक्तो व्यरमन्नैषोऽध्यवसायात् ततस्ततः ॥ ८ ॥ पीत्वा राजीमती क्षीरमाकण्ठं रथनेमिनम् । ऊचे च काञ्चनं स्थालं, सुभगाऽऽनय मेऽन्तिकम् ॥ ९ ॥ आघ्राय मदनफलं, वान्त्वा सा तत्र तं जगौ । पिबेदं सोऽवदत् श्वाऽस्मि, किमहं ? यत् पिबाम्यदः ॥ १० ॥ साऽब्रवीत् किमिदं वेत्सि ?, सोऽवग् बालोऽपि वेत्त्यदः । तर्हि त्वं नेमिना वान्तां, किं मामापातुमिच्छसि ? ॥ ११ ॥ तूष्णीकस्तद्गिरा हीणः, क्षीणकामः शिवाऽऽत्मजः निवृत्तस्तदभिलाषाद् वासरानत्यवाहयत् ॥ १२ ॥ प्रतीक्षमाणाऽर्हद्ज्ञानसमयं राज(जी)मत्यपि । तस्थौ सद्मनि कुर्वाणा, चारित्राभिमुखं मनः ॥ १३ ॥ विहृत्य क्ष्मां चतुःपञ्चाशद्दिनीं संयमाद् विभुः । सहस्राम्रवणे प्राप, केवलं रैवताचले ॥ १४ ॥ बहुभी राजपुत्रीभिः, सार्द्धं राज(जी)मती सती । निष्क्रान्ता भववैराग्याद्, रथनेमिरपि क्रमात् ॥ १५ ॥ वर्षितो ( ववर्ष ) वारिदोऽन्येद्युरकस्माद् दैवयोगतः । चचाल प्रभुमुद्दिश्य, भिक्षां भ्रान्त्वा शिवाऽऽत्मजः ॥ १६ ॥ मार्गे विराधनाभीतोऽविशदेकां गुहां गिरेः । राज(जी)मत्यपि तत्कालं, प्रभुं नत्वा न्यवर्त्तत ॥ १७ ॥ अन्यास्तत्सहचारिण्यः, साध्व्य ईयु(-स्तेयु-)रितस्ततः । राज(जी)मत्यविशद् दैवाद्, रथनेमिश्रितां गुहाम् ॥ १८ ॥ तमसा तमजानाना लमोद्वापयितुं सिचः । वीक्ष्यात्र तां यथाजातां, रथनेमिर्हृदाऽक्षुभत् ॥ १९ ॥ भद्रे ! सोऽहं रथनेमिस्त्वत्सङ्गमसमुत्सुकः । प्रागेवाभवमेकान्ता(न्तो)ऽधुना प्राप्ता चिरार्थिता(प्राप्तश्चिरार्थितः) ॥ २० ॥ तदेहि सरतसं मां, कुरु शीतलमात्मनः । सङ्गामृतच्छटाच्छोटान्न सन्तो निष्फलार्थनाः ॥ २१ ॥ अस्पृष्टपुरुषायास्ते, नातिपीडाऽपि भाविनी । पूर्णाभिलाषावनु च, श्रयिष्यावो व्रतं हिवम् ( हि वत् ) ॥ २२ ॥

स्वरानुसारतो ज्ञात्वा, रथनेमिं महासती। कृत्वाऽङ्गाच्छादनं दोर्भ्यां, सकम्प्रो(म्पो)पाविशद् भुवम् ॥ २३ ॥ स्वशीलरत्नरक्षार्थं, मोक्षार्थमुग्रसेनजा। धभापे नेदृशं युक्तं, कुल्यानां नरकाय यत् ॥ २४ ॥ चैत्यद्रव्यव्यये साध्वीशीलभङ्गर्षिघातने। तथा प्रवचनोड्डाहे, मूलाग्निर्बोधिशाखिनः ॥ २५ ॥ श्रीनेमेरनुजो भूत्वा, भूत्वाऽस्यैवान्तिषत् ( व्रती ) तथा। केयमद्यापि दुर्बुद्धिर्लोकद्वयविरोधिनी ? ॥ २६ ॥ प्रस्कन्दन्ति ज्वलज्ज्योतिर्धूमकेतुं दुरासदम्। नेच्छन्ति वान्तमा( वान्तिमद् )भोक्तुं, कुले जाता अगन्धने ॥ २७ ॥ धिगस्तु ते यशस्कामिन् !, यस्त्वं जीवितकारणात्। पातुमिच्छसि भो ! वान्तं, श्रेयस्ते मरणं खलु ॥ २८ ॥ भोजवृष्णेरहं पुत्र्यन्धकवृष्णेः सुतो भवान्। मा कुले गन्धनेऽभूव संयमं निभृतश्चर ॥ २९ ॥ त्वं करिष्यसि चेद् भावं, या या द्रक्ष्यसि योषितः। वाताविद्धो हठ ( द्रुम ) इव, चा( ह्य )स्थितात्मा भविष्यसि ॥ ३० ॥ एवं तस्या वचः श्रुत्वा, महासत्या महामुनिः। अङ्कुशेन यथा नागः, प्रत्यागात् संयमाध्वनि ॥ ३१ ॥ स्वदुश्चरितमालोच्य, प्रभोरग्रे पटूक्तिभिः। छद्मस्थो वत्सरं स्थित्वा, स मुनिः प्राप केवलम् ॥ ३२ ॥ शतानि नव सैकानि, वर्षाणामायुरात्मनः। प्रपाल्यर्षी रथनेमिर्जगाम पदमव्ययम् ॥ ३३ ॥ इति श्रीरथनेमिसम्बन्धः।

अथ गाथाद्वयेन दशर्षिसम्बन्धमाह—

**जालि-मयालि-उवयालि-पुरिससेणे य वारिसेणे य। पज्जुन्न-संब-अणिरुद्ध-सच्चनेमी य दढनेमी ॥ २९ ॥**
**पन्नासं पन्नासं, भज्जाउ चइउ(य) बारसंगधरा। सोलससमपरियाया, सिद्धा सि(स)त्तुंजए दस वि ॥३०॥**

व्याख्या—दशापि 'शत्रुञ्जये' पुण्डरीके 'सिद्धाः' निष्ठितार्था बभूवुरिति क्रियायोगः। ते के ? जालिर्मयालिरुपजालिः पुरुषसेनश्च वारिसेनश्च एते पञ्चापि वसुदेवपुत्राः। 'प्रद्युम्नः' रुक्मिणीपुत्रः। 'शाम्बः' जाम्बवतीपुत्रः। 'अनिरुद्धः' प्रद्युम्न-वैदर्भ्योः पुत्रः।

'सत्यनेमिश्च दृढनेमिः' शिवाऽङ्गजौ । इति प्रथमगाथावयवार्थः ॥ २९ ॥ पञ्चाशत् पञ्चाशत् 'भार्याः' प्रथमविवाहपरिणीताः । अपरास्तु यास्ता न भण्यन्ते । यतः शाम्बेनाष्टोत्तरं शतमेकवेलायामपि परिणीतमिति । कृष्णदत्त( प्रदत्ताः )पञ्चाशद्दाययुक्तास्ताः 'त्यक्त्वा' विहाय, किंविशिष्टाः ? द्वादशाङ्गधारिणः "सोलस" त्ति षोडशवर्षव्रतपर्यायाः सिद्धाः। इति द्वितीयगाथार्थः ॥३०॥ शेषाः सर्वेऽपि प्रसिद्धा एव ।

प्रद्युम्न-शाम्बानिरुद्धानामुच्यते—

अतिमुक्तर्षिरन्येद्यू रुक्मिणीगृहमागमत् । तं दृष्ट्वा सत्यभामाऽपि, तत्राऽऽगतवती द्रुतम् ॥ १ ॥ रुक्मिण्यपृच्छद् भगवन्!, भविता मे सुतो ? न वा ? । मुनिराह हरि(रेस्तु)तुल्यो, भविता ते सुतोऽचिरात् ॥ २ ॥ तत् श्रुत्वा सत्यभामाऽऽख्यत्, कृष्णाभो भविता स मे( मम) । रुक्मिण्याह मुनेर्वाक्यं, न क्वापि फलति च्छलात् ॥ ३ ॥ एवं विवदमाने ते, कृष्णोपान्तमुपेयतुः । तदा तत्रागतो दुर्योधनो भामानुजो नृपः ॥ ४ ॥ भामाऽऽख्यत् मम पुत्राय, त्वया देया स्वकन्यका(स्वका कनी) । रुक्मिण्यप्याह मे देया, सूनवे स्वकनी नृप ! ॥५॥ दुर्योधनोऽवदत् पूर्वं, या सुतं प्रसविष्यति( ते ) । तस्मै देया स्वकन्येति, किमक्ष्णोरन्तरं द्वयोः ? ॥ ६ ॥ भामाऽवदत् सुतो यस्याः, प्रथमं परिणेष्यति । तद्विवाहेऽन्यया केशाः, प्रदेयाः शिरसोऽत्र तु ॥ ७ ॥ साक्षिणः प्रतिभुवश्च, रामपादाश्च केशवः । दुर्योधनश्चेत्युक्त्वा ते, द्वे अपि जग्मतुर्गृहम् ॥ ८ ॥ अन्यदाऽपश्यदात्मानमारूढं गौरगोस्थिते । विमाने रुक्मिणी स्वप्ने, जागरूकाऽभवत् पुनः ॥ ९ ॥ तदानीमेव प्रच्युत्य, महाशुक्रात् महासुरः । रुक्मिण्युदरकासारेऽवातरद् राजहंसवत् ॥१०॥ प्रातः शशंस तं स्वप्नं, सा पत्युर्व्याकरोत् पतिः । प्रिये ! सुतोऽद्भुतो भावी, विश्वैकसुभगस्तव ॥ ११ ॥ तदा तत्रागता भामादासी व्याख्यां निशम्य ताम् । गत्वाऽऽख्यत् सत्यभामायै, तत्कर्णगरलोपमम् ॥ १२ ॥ तत् श्रुत्वा साऽप्यमुं स्वप्नं, कल्पयित्वाऽऽह केशवम् । स्वप्नेऽद्य ददृशे स्वामिन् !, हस्तिमल्लोपमो गजः ॥ १३ ॥ तत्कूट-

मिङ्क्तैर्जानन्, कुपत् मैत्यच्युतोऽवदत्। भावी तव सुतो रम्यः, सुरक्कद्वचनो हि सन् ॥ १४ ॥ दैवात् तदैव गर्भोऽभूद्, ववृधेऽस्यास्तथोदरम्। यथावस्योदरा रुक्मिण्यभूदुत्तमगर्भतः ॥१५॥ तां तथा वीक्ष्याह भामा, रहः कृष्णं तव प्रिया। मृषैषा गर्भमाख्याति, वीक्ष्स्योदरमावयोः ॥१६॥ तदैवावर्द्धयद् दासी, कृष्णं यद् देव! रुक्मिणी। पुत्ररत्नं प्रसूताऽस्ति, प्राचीव रविमण्डलम् ॥१७॥ तत् श्रुतौ(श्रवो-)दुःश्रयं श्रुत्वा, भामा यान्त्येव सद्मनि। भाग्यं फलति सर्वत्र, सुषुवे भानुकं सुतम् ॥१८॥ पुत्रेक्षणोत्सुकः कृष्णः, सद्योऽगाद् रुक्मिणीगृहे। अर्वागानाय्य तनयं, विष्टरस्थो दृशा पपौ ॥ १९ ॥ प्रद्योतन इव प्रद्योतयत्येषोऽखिला दिशः। उल्लापनेऽयं प्रद्युम्न इत्याख्यां शार्ङ्ग्यदात् मुदा ॥२०॥ धूमकेतुः सुरो वैराद्, रुक्मिणीवेषमायया। लात्वा बालं हरेर्हस्तात् तदा वैताढ्यमभ्यगात् ॥ २१ ॥ प्राप्तश्च भूतरमणोद्यानं दध्यौ सुराधमः। इपधारफाल्य हन्म्येनं, नैवं स्याद्‌तिदुःखितः ॥ २२ ॥ परं परिहराम्येनं(तं), शिलायां यत् क्षुधाऽऽतुरः। क्रन्दन् स्वयं म्रियेतैवं, स्यान्मे वैरप्रतिक्रिया ॥२३॥ ततस्तं सोऽत्यजद् व्योम्नोऽनुपक्रमायुरेप तु(नु)। बहुपर्णास्तृते देशे, पपातान्तिमदेहतः ॥ २४ ॥ अग्निज्याल(ला)पुरात् प्रातः, कालसंवरखेचरः। अपश्यत् स्खलितं यानं, तत्र गच्छन् निजं पुरम् ॥२५॥ स्खलना मद्विमानस्य, किमिति चिन्तयन् खगः। उत्ततार नभस्तोऽर्भं, तं ददर्शाद्भुताकृतिम् ॥ २६ ॥ ईदृगद्भुतमाहात्म्यो, महात्मेत्येष चिन्तयन्। पत्न्यै कनकमालायै, पुत्रत्वेन ददौ खगः ॥२७॥ मेघकूटपुरेऽथैत्य, जनेष्वेवं खगोऽवदत्। कनकमालया सूनुः, सुषुवे गूढगर्भया ॥२८॥ पुत्रजन्मोत्सवं बाढं, विधाय सुदिने नृपः। प्रद्योतनाद् दिशां चाऽऽख्यां, तस्य प्रद्युम्न इत्यदात् ॥ २९ ॥ इतश्च रुक्मिणी कृष्णमेत्याऽऽख्यत् स क तेऽङ्गजः?। त्वयाऽधुनैव नीतोऽसावित्याह विस्मितो हरिः ॥ ३० ॥ मुधा प्रतारयस्येवं, किं नाथेत्याह रुक्मिणी। घृ(धृ)घृ(मु)ष्टः केनापि शार्ङ्गीति, सर्वत्रान्वेषयत् सुतम् ॥ ३१ ॥ वद्वार्त्ताप्रातितो देवी, मूर्च्छिता भूतलेऽलुल(ठ)त्। लब्धसंज्ञा रुरोदोच्चैरुरस्ताडनपूर्वकम् ॥ ३२ ॥ शोकाद्वैतमयं

जज्ञेऽखिलं यदुकुलं तदा । भामां भामापरीवारं, विनैकं द्वारकापुरि ॥ ३३ ॥ नाद्याप्युदन्तो मत्सूनोः, का विष्णोः प्रभविष्णुता ? ।
इति ब्रुवाणा रुक्मिण्यदाद् दुःखं दुःखि(स्थि)नो हरेः ॥ ३४ ॥ दुःखितस्य हरेस्तत्र, समस्तैर्यदुभिः समम् । नारदर्षिः सदस्यागात्,
पप्रच्छैतत् किमित्यहो ! ? ॥३५॥ जगाद यदुनाथोऽथ, रुक्मिणीसूः करात् मम । जातमात्रो हृतः कैश्चित्, तच्छुद्धिं किं न वेत्सि भोः ! ?
॥ ३६ ॥ नारदोऽवददत्रासीत्, पुरा ज्ञान्यतिमुक्तकः । स साम्प्रतं शिवं प्राप्तः, कोऽपि ज्ञानी न भारते ॥ ३७ ॥ परं सीमन्धरः
प्राच्यविदेहेष्वधुना जिनः । अस्ति सन्देहसन्दोहच्छेदी पृच्छामि तं हरे ! ॥ ३८ ॥ ततश्च यदुभिः सर्वैरभ्यर्च्याभ्यर्थितो भृशम् । जगाम
नारदमुनिः, प्राग्विदेहे(हं) स्वविद्यया ॥ ३९ ॥ तत्रेशं धर्मसद्मस्थं, नत्वा पप्रच्छ नारदः । तनयः कृष्ण-रुक्मिण्योः, प्रद्युम्नः क्वाधुना
विभो ! ? ॥ ४० ॥ स्वाम्याह द्युसदा पूर्ववैरिणा धूमकेतुना । हृतश्च तेन(श्छलेन) वैताढ्यशिलायां सोऽर्भ उज्झितः ॥ ४१ ॥ न मृतोऽ-
न्तिमदेहत्वात्, प्रातर्दृष्टः खचारिणा । लात्वाऽर्पितोऽङ्गजत्वेन, पत्न्यै तत्रैधते सुखम् ॥ ४२ ॥ नारदः पुनरप्याह, धूमकेतोः सहामुना ।
कथं पूर्वभवे वैरमासीद् ? विश्वेश्वरादिश ॥ ४३ ॥ स्वाम्याख्यद्, जम्बूद्वीपस्य, भारते मगधावनौ । शालिग्रामेऽस्त्युपवनं, नाम्ना ख्यातं
मनोरमम् ॥ ४४ ॥ तस्याधिष्ठायको यक्षो, नाम्नाऽभूत् सुमना इति । तत्र ग्रामे द्विजः सोमदेवो भार्याऽग्निलाह्वया ॥४५॥ अग्निभूति-
वायुभूती, तत्पुत्रौ विद्ययोन्मदौ । भुञ्जानौ यौवने भोगांस्तत्थतुर्वेदकोविदौ ॥ ४६ ॥ तस्मिन्नेव वनेऽन्येद्युर्नन्दिवर्द्धनसूरिराट् । सशिष्यः
समवासार्षीत्रेमुर्द्रागेत्य तं जनाः ॥४७॥ तदा तत्रैत्य तौ विप्रपुत्रौ विद्यामदोत्कटौ । ऊचतुर्वेत्सि भोः किञ्चिद्, यदि तद् वद कद्वद ! ॥४८॥
सत्यार्थस्तस्य सत्याख्यः, शिष्योऽवोचत् कुतो युवाम् । आयातावूचतुस्तौ नु, शालिग्रामात् कुतोऽन्यतः ? ॥ ४९ ॥ सत्यो ऽब्रवीन्नु मानुष्यं,
भोः ! सम्प्राप्तौ कुतो भवात् ? । पृच्छामीत्यसि तद् ब्रूतं, जानीथो यदि किञ्चन ॥ ५० ॥ तत् श्रुत्वाऽधोमुखौ ज्ञानहीनौ तौ तस्थतुर्ह्रिया ।

मुनिराहास्मि जल्पामीत्युक्त्वा वक्तुं प्रचक्रमे ॥ ५१ ॥ विप्रौ! पूर्वभवेऽभूतां, युवां ग्रामेऽत्र जम्बुकौ। मांसाशिनौ वनस्थल्यामथैकेन कुटुम्बिना ॥ ५२ ॥ स्वक्षेत्रे चर्मरज्ज्वादि, शुकमार्द्रीकृतं च तत्। वृष्ट्या निश्यन्यदा सर्वं, भवद्भ्यां वीक्ष्य भक्षितम् ॥ ५३ ॥ अत्याहाराद् युवां मृत्वा, सोमदेवाग्निलागृहे। उत्पन्नावङ्गजत्वेन, भो द्विजौ! निजकर्मणा ॥ ५४ ॥ प्रातः स हालिकः क्षेत्रे, गतस्तद् वीक्ष्य भक्षितम्। गृहं गतो मृतः कालाद्, दैवाद् जातः स्नुषासुतः ॥ ५५ ॥ जातिस्मरत्वं सम्प्राप्तः, पुत्रं तातं स्नुषां प्रसूम्। जल्पामि कथमित्येष, जन्ममूकोऽभवच्छलात् ॥ ५६ ॥ युवयोः प्रत्ययश्चेन्नाकार्य तं पृच्छतं यथा। मद्वाचा मूकतां मुक्त्वा, स सर्वं वक्ति वां पुरः ॥ ५७ ॥ तत् श्रुत्वा कौतुकोत्तालैः, कृतकोलाहलैर्जनैः। हालिकः शीघ्रमानीतः, साधुस्तं प्रत्यदोऽवदत् ॥ ५८ ॥ भो! भवेऽस्मिन् पिता पुत्रः, स्नुषा माता प्रिया प्रसूः। भवेत् कर्मानुभावेन, तत् किं मौनं? त्रपा च का? ॥ ५९ ॥ आत्मसंवादि तत् श्रुत्वा, हालिको मुदितो मुनिम्। नत्वाऽऽख्यत् शृण्वतां तेषां, यथोक्तं प्राग्भवं निजम् ॥ ६० ॥ प्रबुद्धो हालिकस्तत्र, प्राव्रजन् बहवो जनाः। हास्यमानौ जनैर्विप्रौ, विलक्षौ जग्मतुर्गृहम् ॥ ६१ ॥ मुनौ वैरायमाणौ तौ, सखड्गौ हन्तुमागतौ। रात्रौ सुमनोयक्षेण, स्तम्भितौ दम्भितौकसौ ॥ ६२ ॥ ददृशुश्च जनाः प्रातः, क्रन्दन्तौ पितरौ तयोः। यक्षः प्रत्यक्षीभूयाऽऽख्यद्, भो! मया स्तम्भिताविमौ ॥ ६३ ॥ दीक्षां विना(नै)नयोर्मुक्तिर्नेति यक्षेण जल्पिते। ऊचतुर्दुष्करा दीक्षा, श्राद्धधर्मोऽस्तु नौ परम् ॥६४॥ चक्रतुर्निरतिचारं, जिनधर्मं तदादि तौ। न तयोः पितरावर्हद्धर्मे मिथ्यात्ववासितौ ॥ ६५ ॥ अग्निभूति-वायुभूती, मृत्वाऽभूतां क्रमेण तौ। सुरौ सौधर्मकल्पे पट्पल्यायुष्कौ ततश्च्युतौ ॥ ६६ ॥ जातौ तौ गजपुरेऽर्हद्दासस्य वणिजोऽङ्गजौ। पूर्णभद्र-माणिभद्रौ, श्रावकौ प्राग्भवक्रमात् ॥ ६७ ॥ तत्रान्येद्युर्महेन्द्राख्यो, मुनीन्द्रः समवासरत्। धर्मं श्रुत्वाऽन्तिके तस्याऽर्हद्दासः शिश्रिये व्रतम् ॥ ६८ ॥ पूर्णभद्र-माणिभद्रौ, यान्तौ तं वन्दितुं मुनिम्। चण्डालं कुर्कुरीं

मार्गे, वीक्ष्य सिस्निहतुस्तराम् ॥ ६९ ॥ गत्वा पप्रच्छतुर्नत्वा, चण्डालं शुनिकामिमाम् । पश्यतोरावयोः स्नेहो, जागर्त्ति भगवन्! कथम् ? ॥ ७० ॥ प्रत्याह पितरौ यौ वां, सोमदेवाग्निलाभिधौ । मृत्वा शङ्खपुरे वातो, जितशत्रुर्नृपोऽभवत् ॥ ७१ ॥ ब्राह्मणी रुक्मिणी नाम्ना, मृत्वाऽत्रैव पुरेऽग्निला । सोमभूतेः प्रिया जज्ञे, केशवस्येव रुक्मिणी ॥७२॥ जितशत्रुर्नृपोऽन्येद्युस्तां स्वगृ(गे)हाङ्गणस्थिताम् । निरीक्ष्य जज्ञे कामार्त्तः, परस्त्रीलम्पटो हि सः ॥ ७३ ॥ सोमभूतेर्मुधोत्पाद्यापराधं स्वावरोधने । चिक्षेप रुक्मिणीं भूपो, विप्रोऽभूद्-भ्रिममयत् ॥७४॥ जितशत्रुः सहस्राब्दं, भोगान् भुक्त्वा तया सह । नरकेऽगात् त्रिपल्यायुर्जा(रि)त्वादविदुःखभाक् ॥७५॥ तत उद्धृत्य घातायुर्हतो मृगयुणा स तु । मायी श्रेष्ठिसुतो जातो, मृत्वा सोऽप्यभवत् करी ॥७६॥ दैवात् जातिस्मरः प्रायं, कृत्वाऽष्टादशमेऽहनि । मृतो (त्वा) वैमानिको जज्ञे, त्रिपल्यायुः सुरः करी ॥७७॥ ततश्च्युत्वैष चा(च)ण्डालः, सोऽभवद् रुक्मिणी त्वियम् । शुन्यभूत् संसृतिं भ्रान्त्वा, स्नेहस्तेनैतयोर्हि वाम् ॥७८॥ इति श्रुत्वा वणिक्पुत्रौ, जातिस्मृत्याऽऽप्तया तया । प्रत्यबोधयतां प्रीत्या, चण्डालं, शुनिकां च ताम् ॥ ७९ ॥ मासप्रायेण चाण्डालः, सुरो नन्दीश्वरोऽभवत् । शुनी शङ्खपुरे प्रायाद्, राजपुत्री सुदर्शना ॥८०॥ पृष्टस्ताभ्यां स एवर्षिः, पुनः प्राह वयोर्गतिम्(तम्) । बोधिता राजपुत्राभ्यां, प्रव्रज्य त्रिदिवेऽगमत् ॥ ८१ ॥ तौ श्राद्धधर्ममाराध्य, शुद्धं सौधर्ममीयतुः(मापतुः) । च्युत्वा गजपुरेऽभूतां, विष्वक्सेननृपात्मजौ ॥८२॥ मधु-कैटभनामानौ, सोऽथ नन्दीश्वरोऽमरः । भवं(वे) भ्रान्त्वा वटपुरे, राजाऽभूत् कनकप्रभः ॥ ८३ ॥ साऽपि च्युत्वा भवान्(वं) भ्रान्त्वा, चन्द्राभाख्याऽस्य पत्न्यभूत् । राजा राज्ये यौवराज्ये, मधुं च कैटभं न्यधात् ॥ ८४ ॥ शास्ति संयमसाम्राज्यं विष्वक्सेनोऽपरं मधुः । इन्द्रोपेन्द्राविवान्योन्यमनुत्तरसुखैषिणौ ॥ ८५ ॥ मधु-कैटभयोर्देशं, भीमः पल्लीपतिश्छ-(वे)लात् । उपाद्रवत् स च(श्चवत्) क्रूरश्चालोदिश्य तं मधुः ॥८६॥ मधुं वटपुरे मार्गे, सेवकः कनकप्रभः । भोजनान्ते सचन्द्राभ

उपतस्थे सदोकनः ॥ ८७ ॥ चन्द्राभा वीक्ष्य चन्द्राभाननां कामातिपीडितः । गृह्णन् बलान्निषिद्धोऽस्थात्, कथञ्चिन्मन्त्रिणा मधुः ॥ ८८ ॥ चन्द्राभाऽगात् स्वशुद्धान्ते, जित्वा पल्लीपतिं मधुः । प्रत्यावृत्तोऽर्चितोऽत्यर्थं, कनकेनोपदाऽऽदिभिः ॥८९॥ लज्जां मुक्त्वा मधुः प्राह, प्राभृतैररिलैरलम् ! । चन्द्राभामर्पयैकां मे, मन्मनोमृगवागुराम् ॥ ९० ॥ याच्यमानां(नो)ददौ नैष, यावत् तां कनकप्रभः । आच्छिद्यापि बलात् तावदनैषीत् स्वपुरे मधुः ॥ ९१ ॥ तद्दुःखदुःखितोऽत्यन्तं, मूर्च्छितः पतितः क्षितौ । उत्थाय विलपन्नुच्चैर्बभ्राम कनकप्रभः ॥९२॥ चन्द्राभासदनेऽन्येद्युश्चिरेण मधुरागतः । चिरायितं किमद्येति, तया पृष्टोऽब्रवीदद: ॥ ९३ ॥ पारदारिकवादेऽस्थां, सहामात्यैर्न निर्णयः । तस्य कृत इति श्रुत्वा, चन्द्राभा स्माह सस्मितम् ॥९४॥ स पारदारिकः पूज्य एव किं बहुचर्चया ? । कथं ? पूज्यो(ज्या)हि भो ! (ते) राज्ञां, निग्राह्य(ह्या) इत्यवग् मधुः ॥९५॥ तत् श्रुत्वाऽऽह चन्द्राभा, यद्येवं न्यायवान् भवान् । न जानाति(सि) किमात्मानं, तदाद्यं पारदारिकम् ? ॥ ९६ ॥ तत् श्रुत्वाऽरुन्तुदं व्रीडादस्थान्मधुरधोमुखः । इतश्चोन्मत्तवद्भ्राम्यन्, गायन्नागात् स तत्पतिः ॥ ९७ ॥ राजमार्गे रजोदिग्धं, बालैर्मुग्धमुखै ( मुग्धदुग्धमुखै- )र्वृतम् । तं वीक्ष्य दध्यौ सा धिङ् मामसेदृग्दुःखदायिनीम् ॥ ९८॥ ततस्तं मधवे चन्द्राभाऽदर्शयत् तथास्थितम् । सोऽप्यन्वतप्यतात्यर्थं, स्वेन दुष्कर्मणेक्ष्य तम् ॥ ९९ ॥ ततो बन्धुसुतं राज्ये, न्यस्य कैटभयुङ् मधुः । व्रतं जग्राह वैराग्याद्, विमलवाहनान्तिके ॥ १०० ॥ बहुवर्षसहस्राणि, तेपाते तत्र तौ तपः । द्वादशाङ्गधरौ वैयावृत्यकर्मोद्यतौ सदा ॥ १०१ ॥ आलोचित-प्रतिक्रान्तौ, कृत्वाऽन्तेऽनशनं च तौ । मृत्वा सामानिकौ देवौ, महाशुक्रे बभूवतुः ॥ १०२ ॥ सहस्रत्रयमब्दानां, क्षपयित्वा क्षुदादिभृत् । ज्योतिष्के धूमकेत्वाख्य उत्पन्नः कनकप्रभः ॥ १०३ ॥ ममार्ग मधुजीवं स, पूर्ववैराद् ददर्श न । महर्द्धित्वादथो प्राप्य, मर्त्यत्वं तापसोऽभवत् ॥ १०४ ॥ कृत्वा बालतपो घोरं, मृत्वा वैमानिकः सुरः । मधुं महर्द्धिकं द्रष्टुं, तत्राप्यलमभून्न सः ॥ १०५ ॥

ततश्च्युत्वा भवं भ्रान्त्वा, किञ्चित् सुकृतकर्मणा । ज्योतिष्केषु सुरो धूमकेतुनामा बभूव सः ॥ १०६ ॥ प्रच्युत्य सप्तमस्वर्गात्, मधुजीवोऽपि साम्प्रतम् । रुक्मिण्याः केशवस्याग्रमहिष्यास्तनयोऽभवत् ॥ १०७ ॥ धूमकेतुर्मधुं पूर्ववैरिणं जातमात्रकम् । जह्रेऽक्षैप्सीद् जिघांसुस्तं थालं टङ्कशिलोपरि ॥ १०८ ॥ अक्षताङ्गोऽन्तिमाङ्गत्वाद्, जगृहे संवरेण सः । मातुः षोडशवर्षाणां, प्रान्ते भाव्यस्य सङ्गमः ॥ १०९ ॥ इति श्रुत्वा प्रभुं नत्वोत्पत्याऽऽगात् नारदो मुनिः । मेघकूटपुरे तत्र, संवरेणार्चितो भृशम् ॥ ११० ॥ दिष्ट्याऽभूत् तेऽङ्गज इत्यृषिणोक्तेऽदर्शि भूभुजा । प्रद्युम्नोऽस्यानुसारेण, निश्चिकाय स तत्सुतम् ॥ १११ ॥ कालसंवरमापृच्छयोत्पत्याऽऽगाद् द्वारकां मुनिः । उन्मुखैर्यदुभिर्दृ(ःपृ)ष्टः, स्पष्टमाचष्ट तत् समम् ॥११२॥ तत् श्रुत्वा रुक्मिणी जाग्रत्पुलका सुतवार्त्तया । सीमन्धरं नमश्चक्रे, तत्रस्थाऽस्थाच्च सुस्थिता ॥ ११३ ॥ इतश्च कनकमाला, प्रद्युम्नं प्राप्तयौवनम् । शस्त्राभ्यस्तकलं वीक्ष्य, कामव्याप्तेत्यचिन्तयत् ॥ ११४ ॥ मन्ये क्वापि न हीदृक्षा, देवेषु खे(ख)चरेषु वा । विश्वातिशायिरूपश्रीर्यादृक्षाऽमुष्य वीक्ष्यते ॥ ११५ ॥ स्वयं प्रवर्द्धितस्यास्य, तत् तरोरिव चेत् फलम् । न गृह्णामि मुधा जन्म, ममेत्यालोच्य साऽऽह तम् ॥ ११६ ॥ शृणु भो ! इह वैताढ्ये, उत्तरश्रेणिमण्डनम् । नाम्नाऽनलपुरं तत्र, गौरीवंशोद्भवो नृपः ॥ ११७ ॥ निषधाख्यः सुतस्तस्य, नैषधिः पुत्रिका त्वहम् । प्राणेभ्यो वल्लभा मेऽदाद्, गौरीविद्यां पिताऽन्यदा ॥११८॥ प्रज्ञप्तिं संवरो विद्यामुपयेमे प्रदाय माम् । सिद्धविद्याद्वयाया मे, महिम्नाऽस्य जगत् तृणम् ॥११९॥ नान्यां कन्यामसौ रक्तो, मयीच्छति तवेदृशी । वृणोम्यस्मि भज त्वं मां, त्वत्कर्मेह फलेग्रहि ॥१२०॥ प्रद्युम्नोऽवददाः ! शान्तं, पापं किं च ब्रवीष्यदः ? । त्वं माताऽहं सुतस्तेऽदो, नरकाय द्वयोरपि ॥ १२१ ॥ साऽप्याख्यत् मेऽङ्गजो नासि, किन्त्वायान् कालसंवरः । अग्निज्वाल(ला)पुरात् प्राप, त्वां मुक्तं केनचिद् वने ॥१२२॥ पालनायार्पितो मह्यं, मयैव(वं)पालितो भवान् । परापत्यमतो भोगभुक्तौ दोषो हि नावयोः ॥१२३॥ इति श्रुत्वाऽवदत् कार्ष्णी,

मावः ! सत्यमिदं परम् । संवरात् तत्सुतेभ्यश्च, कुर्वन्नित्थं विभेम्यनु ॥ १२४ ॥ पुनः सा साह, मा भैषीर्महाविद्ये उभे तव । दास्यामि गौरीप्रज्ञप्त्यौ, भवाजय्यस्तयोर्बलात् ॥ १२५ ॥ नाकार्यं सर्वथा कार्यमित्यालोच्याऽऽह कृष्णसूः । तर्हि देहि महाविद्ये, करिष्ये त्वद्वचस्ततः ॥ १२६ ॥ तया कामान्धया तस्मै, दत्ते विद्ये उभे अपि । प्रद्युम्नोऽसाधयत् सद्यो जाग्रत्प्राचीनपुण्यवान् ॥ १२७ ॥ कामार्थं प्रार्थयमानां, पुनस्तामाह कृष्णसूः । पुराऽभूद् वर्द्धनात् माताऽधुनाऽऽचार्या तदर्पणात् ॥ १२८ ॥ नाभ्यर्थ्योऽतस्त्वयेत्युक्त्वा, प्रद्युम्नोऽगाद् बहिः पुरात् । चिन्तयंश्चेष्टितं स्त्रीणां, तस्थौ कालम्बुकातटे ॥१२९॥ नखैर्विदार्य पृष्ठके, स्वमुचैः संवरप्रिया । किमेतदिति सम्भ्रान्तास्तस्यास्तत्रै(त्रे-)युरात्मजाः ॥१३०॥ भोः पुत्रास्त्वत्पितुः पुत्रकेणानेन दुरात्मना । विदारिताऽस्मि कामार्त्या, पिण्डदानीवदोतुना ॥१३१॥ ततो मिलित्वा ते सर्वे, सन्नद्धोदायुधाः क्षुधा । प्रद्युम्ने प्राहरन् वाप्यां, पाप ! पापेति भाषिणः ॥१३२॥ विद्याद्वयानुभावेन, लीलयैव जघान तान् । प्रद्युम्नो हर्यक्ष इव, संवरान्(दुर्द्धरः)संवरात्मजान् ॥ १३३ ॥ तद्वधादधिकं क्रुद्धो, युद्धायेयाय संवरः । प्रद्युम्नेन जितः सद्यो, विद्योत्पादितमायया ॥ १३४ ॥ सानुतापः शशंसास्मै, मातुर्वृत्तान्तमादितः । ज्ञातव्यतिकरः सोऽपि, प्रद्युम्नं पर्यपूजयत् ॥१३५॥ प्रज्ञप्त्या ज्ञापितं तत्रायातमानर्च नारदम् । प्रद्युम्नोऽप्यपरिप्याख्यद्, जिनोक्तं प्राक्तनं भवम् ॥१३६॥ किं च प्रद्युम्न ! ते मातुः, प्रतिज्ञा भामया सह । अस्ति पुत्रस्य वीवाहेऽन्यया देयाः स्वमूर्द्धजाः ॥ १३७ ॥ भामासूनुरिदानीं तद्, भानुकः परिणेष्यति । तत्रार्पणीयास्त्वन्मात्रा, हारिताः पणतः कचाः ॥१३८॥ त्वद्वियोगेन च कचविप्लवेन तव प्रसूः । मरिष्यति सति सुते, लप्स्यपीति त्रजाऽऽशु तत् ॥१३९॥ ततः संवरमामन्त्र्य, प्रद्युम्नो मुनिना समम् । कृतं विमानं प्रज्ञप्त्याऽध्यारुह्याऽऽगात् पितुः पुरीम् ॥ १४० ॥ प्रद्युम्नं नारदस्तत्र, प्राहेयं त्वत्पितुः पुरी । यां स्वर्ण-दिव्यमाणिक्यपूरितां धनदो व्यधात् ॥१४१॥ प्रद्युम्नोऽप्याह यानेऽस्मिन्, स्थेयमत्रैव तावता । पुर्यां कुर्वे चमत्कारं, किञ्चिद् यावत् स्वशक्तिजम् ॥ १४२ ॥ आमेति

नारदेनोक्ते, भानुकोद्वाह(ह)कन्यकाम् । यज्ञयानामध्यगतां, वीक्ष्य जह्रेऽच्युताऽऽत्मजः ॥ १४३ ॥ मुमोच नारदान्ते ता, भयात्
कम्प्रवपुर्लताम् । कृष्णाऽऽत्मजोऽयमित्युक्त्वाऽऽश्वासयामास नारदः ॥ १४४ ॥ स वानरो नरो भूत्वा, गत्वाऽऽहाऽऽरामपालकान् ।
फलानि ददतात्यन्तक्षुधितस्यास्य मत्कपेः ॥ १४५ ॥ तेऽवोचन् रक्ष्यते यत्नाद्, भानुकोद्वाहहेतवे । द्रव्यैः प्रलोभ्य कपिनाऽऽरामो
रिक्तीकृतः फलैः ॥ १४६ ॥ तथैव वाजिना हट्टास्तृणशून्यांश्चकार सः । सुस्वादुसलिलस्थानान्यशेषाण्यप्यशोषयत् ॥ १४७ ॥ जात्यवाजि-
वणिग् भूत्वा, वाह्याल्यां वाहयन् हयम् । पृष्टोऽसौ भानुकेनाऽश्वः, कस्यायं ? सोऽप्यवक् मम ॥ १४८ ॥ भानुकः स्माह मे देहि, मूल्यं
दास्यामि याचितम् । प्रद्युम्नोऽवददादत्स्व, परीक्ष्याऽऽगो भवेन्न मे ॥ १४९ ॥ भानुकोऽश्वं समारूढः, पश्यन् रंहोऽपतद् भुवि ।
तद्देहिकमथाऽऽरुह्य, हस्यमानः सदस्यगात् ॥ १५० ॥ प्रद्युम्नोऽपि पठन् वेदं, द्विजीभूयाभ्रमत् पुरि । भामादासीं व्यधात् कुब्जां,
सरलां वेत्रयष्टिवत् ॥ १५१ ॥ तं नत्वाऽपृच्छदेषा क चेलुः ? सोऽप्याह मुक्तये । साऽवग्गावान्तु दास्यामि, मोदकान् स्वामिनीगृहे
॥ १५२ ॥ विप्रस्तया समं भामाधाम नाम जगाम सः । तोरणद्वारि तं मुक्त्वा, गृहान्तर्दास्यगादथ ॥ १५३ ॥ अनुपलक्षयन्ती सा,
भामाऽऽह न वेत्सि माम् ? । दासी ते कुब्जिका साऽहं, केनासि सरलीकृता ? ॥ १५४ ॥ दास्याचष्टे द्विजोदन्तं, देव्यूचे क्वास्ति स
द्विजः ? । साऽऽह मुक्तोऽस्ति ते द्वारे, शीघ्रमानय तं हले ! ॥ १५५ ॥ तत्रानीतस्तया विप्रो, दत्त्वाऽऽशिषमुपाविशत् । भामाऽऽह ब्रह्मन् !
रुक्मिण्या, मां रूपेणाधिकां कुरु ॥ १५६ ॥ विप्रोऽब्रवीत् तवाप्रतिरूपं रूपं जगत्यपि । भामाऽऽह सत्यं विप्रैतत्, तथाप्यधिकमस्तु तत्
॥ १५७ ॥ तन्निर्बन्धाद् द्विजोऽप्रोचद्, यद्येवं तर्हि सर्वथा । विरूपा भव वैरूप्ये, रूपं ह्यारोप्यतेऽधिकम् ॥१५८॥ किं करोमीति देव्योक्ते,
सोऽवग् मुण्डय मस्तकम् । मष्या लिम्प वपुर्जीर्णस्यूतखण्डाम्बरं भज ॥१५९॥ करोम्यधिक(उत्पादयेऽधि-)लावण्यं, कृत्वैवं भव मेऽग्रतः ।

लोभार्थिन्या कृतं सर्वं, लोभोऽन्धङ्करणं हि यत् ॥ १६० ॥ विप्रः प्राह क्षुधाक्रान्तः, किञ्चित् कर्तुं क्षमोऽस्मि न । तद्भोजनार्थमादिष्टास्ततो देव्याऽन्नपाचकाः ॥ १६१ ॥ रुड्ड बुड्ड रुड्ड बुड्ड, मन्त्रोऽयं यावदद्म्यहम् । जप्योऽग्रे कुलदेवीनां, प्रविश्याऽऽख्यत् स तच्छ्रुतौ ॥ १६२ ॥ स्मरन्त्येवं तया विप्रः, सर्वां रसवतीं रयात् । पूर्णीचकार भुञ्जानः, स्वशक्त्या प्रेत-भूतवत् ॥ १६३ ॥ भामातः सूपकारीभिः, सोऽम्भः(ऽपः)करकपाणिभिः । उत्तिष्ठोत्तिष्ठ भो विप्र! (धृष्ट!) विभ्यतीभिरभाण्यत ॥१६४॥ तृप्तिर्नाद्यापि मे जाता, याम्यन्यत्र ब्रुवन्निति । उत्थाय रुक्मिणीगेहं, गतो क्षुल्लकवेषभृत् ॥ १६५ ॥ सोत्थायान्तर्गृहं दृष्ट्वा, प्रविष्टा विष्टराय तम् । तदा(तावत्) सिंहाभवत् सोऽथोपविष्टो विष्टरे हरेः ॥१६६॥ नेत्रोत्सवं रुक्मिणी तं, पश्यन्त्याहान् विष्टरे । कृष्णात् कृष्णाऽऽत्मजाद् वाऽन्यं सहते नामरी स्थितम् ॥ १६७ ॥ क्षुल्लोऽब्रवीत् तपःशक्त्या, किञ्चित्कर्तुमलं न सा । ब्रूहि तर्हि किमायातः ?, सोऽप्याख्यत् पारणाकृते ॥ १६८ ॥ निराहारं तपस्तप्तं, मयाऽब्दानीह षोडश । पीतं पयोऽपि नो मातुः, श्रुत्वा स्मित्वाऽऽह रुक्मिणी ॥१६९॥ षोडशाब्दं तपोऽश्रावि, न क्वापि जिनशासने । चतुर्थादि वर्षान्तं, श्रूयतेऽथावदन्मुनिः ॥१७०॥ एतया चिन्तया किं ते?, यदि दित्ससि देहि तत् । नो चेत् तदोत्तरं देहि, यामि भामागृहे(-हं) यथा ॥१७१॥ रुक्मिण्यूचे, मयोद्वेगादद्य किञ्चिन्न पाचितम् । क्षुल्लोऽयोचत् तवोद्वेगकारणं किं? वदानघे! ॥१७२॥ इयत्कालमहं क्षुल्लाऽऽराधयं कुलदेवताः । मिलनोत्कण्ठया सूनोरेकतानेन चेतसा ॥१७३॥ इदानीं प्राहरं यावद्, ग्रीवायां स्वं शिरोबलिम् । तासां दातुमयेताभिरुक्तं मा साहसं कुरु ॥ १७४॥ पुष्पिष्यति यदाऽऽम्रोऽयं, तदैष्यति तदाऽऽत्मजः । अथा(द्या)यं पुष्पितोऽकाले, स सूनुर्न ममागतः ॥१७५॥ होरां त्वं पश्य तत् साधो!, सोऽवक् सैवं फलाय न । रिक्तपाणेरयोचे सा, ब्रूहि तुभ्यं ददामि किम्? ॥१७६॥ सोऽवक् पेयां तपःक्षामकुक्षेर्मे देहि साऽप्यथ । गवेषयन्ती द्रव्याणि, तद्योग्यान्यापि न क्वचित् ॥१७७॥ प्राक्सिद्धै(द्ध)र्मोदकैः कर्तुमारेभेऽग्निर्न चाज्वलत् ।

क्षुल्लोऽवक् मोदकानेव, क्षुधितस्यार्पयाऽऽस्तिके ! ॥ १७८ ॥ रुक्मिण्यूचे हरेरेते, मोदका दुर्जराः परैः । करिष्ये नर्पिहत्यां ते, दत्त्वैतान् क्षशवर्मणे ॥१७९॥ सोऽवादीदखिलं भस्मीभवेन्मम तपोऽग्निना । ततोऽस्मै सा सशङ्काऽदादेकैकं मोदकं मुदा ॥१८०॥ दत्तान् दत्तानभू-नेनं, भुञ्जानं रङ्कवद् द्रुतम् । वीक्ष्याऽऽख्यद् रुक्मिणी साक्षात्, पिशाचोऽसीति हास्यतः ॥ १८१ ॥ इतश्च भामामेत्याऽऽख्यंस्तत्तद्-क्षाधिकारिणः । आरामा विफला हट्टास्तृणशून्या जलाश्र(श)याः ॥१८२॥ निर्जला भानुकश्चाश्वात्, पातितः केनचिद् विशा । स्वामिन्येतत् कृतं सर्वमचिन्त्यमन्त्रशक्तिना ॥ १८३ ॥ [ युग्मम् ] तद् दग्धोपरि गण्डाभं, श्रुत्वा भामाऽऽह हे हलाः ! । क द्विजो रूपदायी मे ?, प्रोचुस्तास्तस्य चेष्टितम् ॥ १८४ ॥ ततो विषादात् चामर्पाद्, दासीः पटलिकाकराः । केशार्थं प्राहिणोद् भामा, त्वरितं रुक्मिणीगृहे ॥ १८५ ॥ ऊचुस्ताः स्वामिनी नस्ते, केशानिच्छति यच्छ तान् । क्षुल्लः स्मित्वाऽऽह दास्यामि, स्वामिन्यै यो बहूनमून् ॥१८६॥ मुण्डयित्वा शिरस्तासां, भृत्वा पटलिकां कचैः । दासीः स प्राहिणोत् पश्चाद्, भामोचे किमिदं ? हलाः ! ॥१८७॥ स्मित्वोचुः स्वामिनि ! स्वामी, यादृक् तत्र हि तादृशम् । भामोद्भामा च केशार्थं, नापितांस्तद्गृहेऽमुचत् ॥ १८८ ॥ मुण्डयित्वा त्वगुत्पाटं, शिरस्तेषां मुमोच सः । तान् मुण्डानागतान् प्रेक्ष्येर्ष्यया भामाऽब्रवीद् हरिम् ॥ १८९ ॥ त्वं साक्षी प्रतिभूश्चाऽऽसीर्मुण्डां कारय रुक्मिणीम् । हसित्वा हरिरप्यूचे, किं नालं मुण्डया त्वया ? ॥ १९० ॥ मायिन् ! हास्येन पर्याप्तं, तत्केशान् मम दापय । ततो हरिर्बलं प्रैषीत्, केशार्थं रुक्मिणीगृहे ॥ १९१ ॥ आयान्तं हलिनं वीक्ष्य, रूपं चक्रे हरेर्मुनिः । तं वीक्ष्यात्र विलक्षास्यस्तदैव ववले बलः ॥ १९२ ॥ भ्रातर्भव्यो जनाचारो, मां प्रेष्यागाः स्वयं पुनः । वधू(वन्धो !)र्वयं भृशं तत्र, ह्रेपिता इत्यवग् बलः ॥१९३॥ हरिरूचे न तत्रागामत्रार्थे शपथो ध्रुवम् (वयम्) । सर्वा माया तवैवेति, प्रोच्य भामाऽगमद् गृहे (-हम्) ॥ १९४ ॥ कृष्णोऽनुनयितुं भामां, गृहेऽगाद्थ नारदः । रुक्मिणी-

मब्रवीत् पुत्र एष श्रेयो हृदुत्सवः ॥ १९५ ॥ ततो ननाम सोऽम्बांह्री, प्रद्युम्नः सहजाकृतिः । माताऽपि प्रक्षरत्स्तन्या, बाहुभ्यामालिलिङ्ग तम् ॥ १९६ ॥ आनन्दाद्वैतभूताङ्गी तां हर्षाश्रुप्लुतेक्षणाम् । स स्माह किञ्चिदाश्चर्यं, कुर्वे श्लाघ्यो न तावता ॥ १९७ ॥ अनाददानां हर्षेण, किञ्चित् प्रत्युत्तरं प्रसूम् । प्रतस्थे रथमारोप्य, प्रद्युम्नो युद्धदुर्द्धरः ॥ १९८ ॥ दध्मौ शङ्खमुवाचोच्चैर्हराम्येषोऽस्मि रुक्मिणीम् । बली रक्षतु कृष्णश्चेत्, तत् श्रुत्वाऽचिन्तयद् हरिः ॥ १९९ ॥ कोऽयं मुमूर्षुर्मूर्खाणां, शेखरश्चेत्यमर्षतः । तं स(विश्व)सैन्योऽन्वधाविष्ट, शार्ङ्गी शार्ङ्गं वहन् करे ॥ २०० ॥ प्रद्युम्नो विद्यया सैन्यं, वातस्तूलमिवाक्षिपत् । चक्रे वैकुण्ठं कुण्ठास्त्रमुद्धृताशीमिवोरगम् ॥ २०१ ॥ अत्रान्तरे विषण्णस्य, हरेर्दोर्दक्षिणोऽस्फुरत् । शशंस हलिने सोऽपि, यावत् चिन्तयतः स्म तौ ॥२०२॥ तत्रैत्य नारदस्तावदवादीद् गृह्यतां हरे ! । प्रद्युम्नो रुक्मिणीयुक्तः, पुत्रोऽलं युद्धचेष्टया ॥ २०३ ॥ कृष्णं बलं च प्रद्युम्नो, ननाम चरणान् स्पृशन् । सस्वजे बाढमेताभ्यां चुम्बद्भ्यामसकृच्छिरः ॥२०४॥ साम्बं प्रद्युम्नमादाय, सहैव जा(या)तयौवनम् । उत्तोरणामुत्पताकां, द्वारकां प्राविशद् हरिः ॥२०५॥ हरिणा दीयमानां तां, भानुकोद्वाह्यकन्यकाम् । नाऽग्रहीत् मे क्षुपेतीयं, प्रद्युम्नोऽनिच्छुरप्यथ ॥ २०६ ॥ भूचरीः खेचरीः कन्याः, पितृभ्यां परिणायितः । नारदश्चार्चितः पुत्रानयनोपकृतित्वतः ॥ २०७ ॥ भामा सभामा ताम्यन्ती, प्रद्युम्नस्याद्भुतश्रिया । सद्मैत्य जर्जरे मञ्चे, शिश्येऽदो लक्ष्म दुःखिनाम् ॥ २०८ ॥ तत्रागतश्च कृष्णोऽवक्, किं ताम्यसि प्रियेऽधिकम् ? । केनापमानिताऽस्यद्य ?, भामोचे कथमप्यदः ॥ २०९ ॥ त्रिखण्डाखण्डदोर्दण्ड !, न कोऽपि कोपयेत् परम् । प्रद्युम्नाभसुताप्राप्त्या, मरिष्यामि प्रियाऽपि ते ॥२१०॥ ततस्तदामहं ज्ञात्वाऽऽरराध पौषधं हरिः । प्रपद्याष्टमभक्तेन, निर्जरं नैगमेषिणम् ॥ २११ ॥ आविर्भूय स सन्तुष्ट आचष्टे स्पष्टमच्युतम् । स्मृतः किमर्थमेषोऽभ्यक्, भामायै देहि सत्सुतम् ॥ २१२ ॥ सुरः स्माहामुमामोच्य, हारं सेविष्यसे यकाम् । तस्याः सुतोऽद्भुतो भावी,

प्रोच्यैवं स्वरगात् सुरः ॥ २१३ ॥ गतेऽस्मिन् वासकं भामादेव्यै हरिरदान्मुदा । प्रज्ञप्त्या ज्ञापितं तच्च, प्रद्युम्नस्याथ सोऽवदत् ॥ २१४ ॥
मातर्गृहाण तं हारं, मत्तुल्यसुतकाङ्क्षया । रुक्मिण्याह कृतार्थाऽस्मि, त्वयैवैकेन सूनुना ॥ २१५ ॥ क्षीरनं वा सुतं सिंही, प्रसूते कापि किं
पुनः ? । ब्रूहि तर्हि सपत्नीषु, का सपत्नी तव प्रिया ? ॥ २१६ ॥ ददे येन सुतं तस्यै, तत् श्रुत्वा प्राह रुक्मिणी । वत्स ! जाम्बवती
तुल्यदुःखाऽभूद् विरहे तव ॥ २१७ ॥ तस्याः स्यात् त्वत्समः सूनुः, प्रद्युम्नोऽम्बाज्ञया ततः । विचक्रे विद्यया भामारूप(पा)माकार्य तत्र
तत् (ताम्) ॥२१८॥ रुक्मिणी तां तदाख्याय, प्राहिणोत् कृष्णसद्मनि । भामारूपं(पां) गले न्यस्य, हारं तत् (तां) बुभुजे हरिः ॥२१९॥
तदैव सप्तमस्वर्गात्, स च्युत्वा कैटभामरः । सिंहस्वप्नाङ्कितः कुक्षौ, जाम्बवत्या अवातरत् ॥ २२० ॥ मुदिता सा गता गेहं, तं स्वप्नं
चाऽऽह शार्ङ्गिणे । तदर्थं व्याकरोत् सोऽपि, शाम्बाह्वोऽभूत् क्रमात् सुतः ॥२२१॥ दारुको जयसेनश्च, सारथेर्मन्त्रिणः पुनः । सुबुद्धिरेते
तनयाः, समं शाम्बेन जज्ञिरे ॥ २२२ ॥ गृह्णन् कलाकलापं तैः, सार्द्धं शाम्बो व्यवर्द्धत । इ(त)वश्च रुक्मिणी रुक्मिनृपं प्रत्यसुचभरम्
॥ २२३ ॥ भोजकटपूर्लांथं, गत्वा नत्वाऽऽह रुक्मिणम् । वैदर्भीं तेऽङ्गजां देव !, पुत्रार्थेऽर्थयते स्वसा ॥ २२४ ॥ योग्ययोगः पुरा
विष्णोर्मम चाभूद् विधेर्वशात् । स तु प्रद्युम्न-वैदर्भ्योः, स्यादिदानीं भवत्कृतः ॥ २२५ ॥ प्राच्यवैरं स्मरन् रुक्मी, आह तं (प्रोचेऽहं)
स्वकनीं परम् । च(चा)ण्डालेभ्योऽपि दास्यामि, न कदाऽपि हरेः कुले ॥ २२६ ॥ उक्तं तदुक्तं दूतेन, गत्वा श्रुत्वाऽथ रुक्मिणी । म्लाना-
मिवाब्जिनीं रात्रौ, वीक्ष्याऽऽख्यदिदमङ्गजः ॥ २२७ ॥ मातः ! किमर्थमत्यर्थं, ताम्यस्यस्मै शशंस सा । तद्(तं)वृत्तं स्वमनःशल्यतुल्यं
सोऽप्यब्रवीत् प्रसूम् ॥ २२८ ॥ मातुलो मे न सामार्हः, कृत्वा कर्मोचितं ततः । परिणीयास्मि(स्य) वैदर्भीमेष्यामि भव निश्चला ॥२२९॥
इत्युक्त्वा शाम्ब-प्रद्युम्नौ, गतावुत्पत्य तत्पुरे । किन्नरस्वरचण्डालौ, भूत्वा गीतानि गायतः ॥ २३० ॥ तौ ज्ञात्वाऽऽजूहवद् रुक्मी,

तद्गीतान्यशृणोत् मुदा। दत्त्वा दानमपृच्छच्च, भो! युवामागतौ कुतः? ॥ २३१ ॥ तावूचतुर्विभो! स्वर्गादायातौ द्वारकां पुरीम्। वासुदेवकृते देवैर्निर्मितद्धर्शाऽलकेव या ॥ २३२ ॥ वैदर्भ्यपृच्छदुत्सङ्गगता वपुर्निशम्य तौ। जानीथ तत्र प्रद्युम्नं, रुक्मिणी-केशवाङ्गजम् ॥ २३३ ॥ शाम्बोऽवग् रूपप्रद्युम्नं, प्रद्युम्नं को न वेद तम्। भ्रमर्योऽब्जमिवेच्छन्ति, सौभाग्यं यस्य योषितः ॥ २३४ ॥ वैदर्भी रागगर्भाऽभूत, प्रद्युम्नेऽत्रान्तरे करी। आलानस्तम्भमुन्मूल्योन्मत्तः पुरमुपाद्रवत् ॥ २३५ ॥ योऽमुं वशीकरोतीभं, तस्मै यच्छामि वाञ्छितम्। पटहोऽवादि राज्ञेति, दध्रे केनापि नैव सः ॥ २३६ ॥ धृतः स पटहस्ताभ्यां, गीत्या कृत्वा वशं गजम्। आरुह्य शाम्ब-प्रद्युम्नौ, तमालाने(नं) ययन्धतुः ॥ २३७ ॥ चित्रीयमाणौ पौराणामाहूयोक्तौ नृपेण तौ। यद् रोचते तद् याचेथां, ददामि तावथोचतुः ॥२३८॥ तर्हि देहीश! वैदर्भी, नास्त्यत्रपाचिकाऽऽवयोः। तत् श्रुत्वा रुक्मिणा तौ तु, देशान्निर्वासितौ क्रुधा ॥२३९॥ प्रद्युम्नोऽथाब्रवीत् शाम्बं, भ्रातर्माताऽतिताम्यति। तद् विलम्बो विवाहेऽस्या, न युक्तोऽथाऽऽगमन्निशि(शा) ॥ २४० ॥ प्रद्युम्नो विद्यया शुभ्ररात्रौ सुप्ते जने सति। सौधसप्तमभूमिस्थवैदर्भ्यभ्यर्णमभ्यगात् ॥ २४१ ॥ रुक्मिण्याः कृतकं लेखलेखं तस्या ददौ मुदा। किमर्प्पयामि ते भद्र!?, सोचे रोमाञ्चकञ्चुका ॥ २४२ ॥ प्रद्युम्नोऽवददात्मानं, देहि लावण्यदीर्घिके!। यदर्थे याचिताऽसि त्वं, प्रद्युम्नोऽयागतोऽस्ति(स्मि) सः ॥२४३॥ दैवात् सुघटितं कार्यं, जातं तातं विनाऽपि मे। इति ब्रुवाणा तमाख्यत् (तं साऽऽख्यत्), तुभ्यमात्माऽर्पितो मया (मयाऽर्पितः) ॥२४४॥ उपयेमे ततः सोऽग्निं, साक्षीकृत्याऽऽत्मविद्यया श्वेतवासो वसानां तां, वर्द्धिवृद्धिकङ्कणाम् ॥ २४५ ॥ रेमे तया सह स्वैरं, प्रद्युम्नो बहुभङ्गिभिः। निशाशेषेऽब्रवीच्चैवं, यामि शाम्बान्तिकं प्रिये! ॥ २४६ ॥ मया कृताऽस्ति मन्त्रेण, वपूरक्षा तवानघे!। तन्त्रेण पितृमातृभ्यां, पृच्छ्यमानाऽपि मा वदेः ॥२४७॥ इत्युक्त्वाऽगाद् हरेः सूनुः, शिश्ये वैदर्भ्यपि स्फिर(स्फुट)म्। रतिश्रमाच्च जागर्याः, प्रबुद्धाऽभूत्

प्रगेऽपि न ॥ २४८ ॥ धात्री तत्राऽऽगताऽद्राक्षीत्, तद्धस्ते कङ्कणादिकम् । विवाहचिह्नमुत्थाप्य, साशङ्का साऽन्वयुङ्क ताम् ॥ २४९ ॥
यावन्न किञ्चिदूचे सा, तावद् धात्री निजागसः । छिदे गत्वाऽऽह तत्पित्रोस्तावेताप्रच्छतां च ताम् ॥२५०॥ नैषाऽऽचख्यौ ततो वीक्ष्य,
सम्भोगोद्वाहलक्षणम् । रुक्मी दध्याविमं कन्या, नूनं मत्कुलपांसना(पांसुला) ॥ २५१ ॥ रेमे स्वैरमदत्ताऽपि, केनचित् सह तद् वरम् ।
चण्डालाभ्यामभूद् दत्तेत्याजुहाव नरेण तौ ॥ २५२ ॥ लात्वा यातं कनीमेतां, तत्र यत्र न वां सुखम् । पश्यामि इयामिकाकारीत्यदात्
तामेतयोः क्रुधा ॥२५३॥ तत्रोचतुस्तौ वैदर्भीं, चर्मोपानज्जलौकसाम् । राजपुत्रि! गृहेऽस्माकं, किं करिष्यसि विक(वैक्रि)यम्? ॥ २५४ ॥
साऽप्यूचे भव(भाव)भावज्ञा, कारयिष्यति यद् विधिः । करिष्यते ह्यवश्यं तद्, दुर्लङ्घ्यं दैवचेष्टितम् ॥ २५५ ॥ ततस्तौ शाम्ब-प्रद्युम्नौ,
तामादायान्यतो गतौ । रुक्मिराजो रुरोदोच्चैः (राड् रुरोद सदस्युच्चैः), पश्चात्तापवशंवदः ॥ २५६ ॥ मया वैदर्भि! सन्दर्भः, कोऽयं
तेऽनुचितः कृतः? । क्षिप्ताऽसि श्वपचद्वारे, गौरिव क्रूरकर्मणा ॥ २५७ ॥ सत्यं हि श्वपचः क्रोधः, क्रोधोऽन्धङ्करणं ध्रुवम् । दत्ता चण्डा-
लयोः कन्या, यदायत्ततया मया ॥ २५८॥ सूनोरर्थेऽर्थिताऽत्यर्थं, रुक्मिण्या प्राक् पटूक्तिभिः । मयैषा कल्पिता नास्मै, हा! दैवोपहता-
त्मना ॥ २५९ ॥ क्रन्दश्चैवं स शुश्राव, वेणु-वीणादिबन्धुरम् । पुराद् बहिर्बृहद्ध्वानं, किमिति? पृष्टवान् नरान् ॥ २६० ॥ ऊचुस्ते देव!
प्रद्युम्नो वैदर्भी-शाम्बयोः समम् । विमानतुल्ये सौधेऽस्ति, सङ्गीतं कारयन् सुखम् ॥ २६१ ॥ श्रुत्वा जहर्ष तां रुक्मी, रुक्मिणी-
तनयश्रियम् । आकार्याऽऽनर्च जामेयं, जामातृस्नेहतोऽधिकम् ॥ २६२ ॥ रुक्मिणं रुक्मिणीसूनुरापृच्छ्य द्वारकां क्रमात् । आ(अ)गाद्
वैदर्भी-शाम्बाभ्यां, सममन्वेक्षणक्षणः ॥ २६३ ॥ रममाणः सुखं तस्थौ, प्रद्युम्नः सार्द्धमेतया । सुहिरण्याख्यया शाम्बो, नार्या
(वेश्या)हेमाङ्गदोद्भुवा ॥२६४॥ अथ प्रद्युम्न-वैदर्भ्योरनिरुद्धाह्वयोऽङ्गजः । पावनं यौवनं प्राप, मृगाक्षिमृगवागुरम्(राम्) ॥२६५॥ पुरे

शुभनिवासाख्ये, तदाऽभूद् वाणखेचरः। कन्यकाऽमुष्य चोषाऽऽख्या, रूपरेखाकपोपला ॥२६६॥ विद्यां साऽऽराधयद् गौरीं, विशिष्टवर-लिप्सया। सा तुष्टाऽऽचष्ट ते पौत्रो, हरेरस्तु वरो वरः ॥ २६७ ॥ वाणेनाऽऽराधितो गौरीरमणः शङ्करामरः। प्र(तु)ष्टस्तस्मै वरमदादजय्यस्त्वं रणाङ्गणे ॥ २६८ ॥ प्रियं प्रियाऽऽह सर्वत्राजय्यस्त्वं नाथ! नोचितम्। यद् दत्तं गौर्या चो(यन्मयो-)षाया, अनिरुद्धोऽर्पितो वरः ॥ २६९ ॥ सुरस्त्वमूचेऽजय्यस्त्वं, भावी स्त्रीकार्यतोऽन्यतः। खेचरैर्भूचरैश्चोषा, प्रार्थिता नाऽऽर्पयत् पिता ॥२७०॥ अनिरुद्धमुषा प्रेप्य, चित्रलेखां नभश्चरीम्। आनाययद् गृहे स्नेहाद्, देहाद्वैतसुखार्थिनी ॥ २७१ ॥ तां गान्धर्वविवाहेनोद्वाह्याऽऽदाय चचाल सः। ऊचे चोच्चैरनिरुद्धो, हराम्येष सुषमुषाम् ॥ २७२ ॥ वाणो वाणासनी वाणैरनिरुद्धं निरुद्धवान्। शुनकैर्व्याधवत् सिंहं, क्रोधान्धीकृतचेतनम् (:) ॥ २७३ ॥ पाठसिद्धां ददौ विद्यां, तदोषा पत्युरात्मनः। तद्बलाद् वर्धितौजस्कोऽनिरुद्धो युयुधेऽधिकम् (तराम्) ॥ २७४ ॥ बद्धोऽनिरुद्धो वाणेन, नागपाशैरिभारिवत्। प्रज्ञप्त्या विद्यया सद्यो, ज्ञापितं तत् मुरारये ॥ २७५ ॥ सराम-शाम्ब-प्रद्युम्नः, शीघ्रमागाद् जनार्दनः। तुत्रुटुर्नागपाशास्ते, तार्क्ष्याङ्केक्षणात् क्षणात् ॥ २७६ ॥ क्रुद्धो रुद्धोऽनिरुद्धेन, वाणोऽवक् शार्ङ्गपाणिनम्। किं न श्रुतं ममाद्यापि, गोपकोपफलं बलम्? ॥ २७७ ॥ सङ्क्रामन्ति पितुर्दोषाः, सुते तत् सत्यमीरितम्। कन्याचौर्यं त्वयाऽऽरब्धं, सङ्क्रान्तं तत् सुतादिषु ॥ २७८ ॥ तत्फलं दर्शयाम्यद्य, श्रुत्वा शार्ङ्ग्यब्रवीदरे!। कन्याऽन्येभ्यो हि दातव्या, दोषस्तद्धरणेऽस्ति कः? ॥ २७९ ॥ भृकुटीभीषणो वाणो, वाणैर्वर्षन् मुरारिणा। निरस्त्रीकृत्य निःकृत्य, प्रापितः प्रेतराड्गृहम् ॥ २८० ॥ उषायुतं पौत्रमादाय मुदितो हरिः। सराम-शाम्ब-प्रद्युम्नो, द्वारकां पुनरायय़ौ ॥ २८१ ॥ शाम्बानिरुद्ध-प्रद्युम्नाः, पूर्वाह्ने नेमिनोऽन्तिके। प्रव्रज्य पुण्डरीकाद्रौ, त्रयोऽप्यापुः शिवालयम् ॥ २८२ ॥ इति प्रद्युम्न-शाम्बानिरुद्धानां प्रबन्धः ॥

अथ षडपि देवकीसुता उच्यन्ते—

**बत्तीसपुरंधिवई, देवइपुत्ता अणीयजसपमुहा। छप्पि य नेमिसुसीसा, चउदसपुव्वी गया सिद्धिं ॥ ३१ ॥**

व्याख्या—'षडपि' देवकीपुत्राः—सुताः 'गताः' प्राप्ताः 'सिद्धिं' मुक्तिमिति कर्तृ-कर्म-क्रियायोगः। किंविशिष्टाः? द्वात्रिंशत्पुरन्ध्रीणां—कुटुम्बिनीनां पतयः—भर्त्तारः। किंनामानः? अनीकयशःप्रमुखाः—प्रभृतयः। पुनः किंविशिष्टाः? नेमेः—द्वाविंशार्हतः सुशिष्याः—शोभनविनेयाः। पुनः किंविशिष्टाः? चतुर्दशपूर्विणः। इति गाथावयवार्थः ॥ ३१ ॥ भावार्थस्त्वयम्—

श्रीवसुदेव-देवक्योः, कंसेनोपयमोत्सवः। सुहृद्-भगिन्योः स्नेहेन, प्रारब्धो मथुरापुरि ॥ १ ॥ तत्र कंसानुजः कंसस्याऽऽगादतिमुक्तकः। विहरन् पारणाहेतोः, पूर्वोपात्तव्रतो व्रती ॥२॥ जरासन्धसुता जीवयशा कंसप्रियाऽऽह तम्। साधो! साधूत्सवाहेऽस्मिंस्त्वमागा देवरोऽसि मे ॥ ३ ॥ एहि सार्द्धं मया नृत्य, हस गाय पिबाऽऽसवम्। लगित्वोन्मत्तया कण्ठे, सोऽकदर्थि गृहस्थवत् ॥ ४ ॥ स मुनिर्ज्ञानवानूचे, मुग्धे! माद्यसि किं मुधा?। देवक्याः सप्तमाद् गर्भात्, पति-पित्रोस्तव क्षयः ॥ ५ ॥ वज्रपातमिवासह्यं, तत् श्रुत्वा कंसपत्न्यसौ। द्विधोत्तीर्णमदावस्थाऽवस्थां पत्ये शशंस ताम् ॥ ६ ॥ कंसः साशङ्क आचख्यौ, प्रिये! प्रकृतिभाषिणाम्। अपि मोघीभवेद् वज्रं, महर्षीणां वचो न च ॥ ७ ॥ परं वाच्यं न कस्यापि, यतिष्ये यावदस्मि न। अस्मिन् कार्ये यतो मन्त्रः, षट्कर्णो भिद्यते बहिः ॥ ८ ॥ इत्युक्त्वा मदिरावस्थां, नाटयन् निर्मदोऽपि सः। वसुदेवान्तिकं दूराद्, रचिताञ्जलिरागमत् ॥९॥ अभ्युत्थाय जगादैनं, वसुदेवः ससम्भ्रमम्। प्राणप्रियसुहृत्! किञ्चिद्, वक्तुकाम इवेक्ष्यसे ॥ १० ॥ ब्रूहि यच्छामि किं तुभ्यं?, ततः कंसोऽब्रवीत् प्रिय!। कृतार्थोऽहं कृतो जीवयशादापनतः पुरा ॥११॥ इदानीं देवकीजातमात्रसप्तार्भकार्पणात्। कृतार्थयेति तेनोक्ते, प्रपेदे शौरिरप्यृजुः(प्यदः) ॥१२॥ भावानभिज्ञा कंसस्य,

देवकी-षट्सुत-वक्तव्यता।

देवक्यपि जगाद भोः ! । किं कथ्यं मेऽत्र पुत्राणामन्तरं त्वद्-दशार्हयोः ? ॥ १३ ॥ विधिना विधिनेवात्राऽऽवयोर्योगस्त्वया कृतः । सर्वका-
र्याधिकारी त्वं, किं नृपेऽनधिकारिवत् ? ॥ १४ ॥ किं देवकि ! बहूक्तेनाऽऽयत्ता गर्भास्तवास्य ते । सत्येत्युक्ते दशार्हेण, पत्न्यपि प्रत्यपद्यत
॥ १५ ॥ महाप्रसाद इत्युक्त्वा, कंसः क्षीवा(बा)पदेशतः । दशार्हेण समं पीत्वा, सुरां स्वाश्रयमाश्रयत् ॥ १६ ॥ वाक्शूरः शौरिरश्रौपी-
दापं वाक्यं दुरायति । दम्भिना च्छलितोऽस्मीति, सुतरां चान्वतप्यत ॥ १७ ॥ इतश्च भद्दिलपुरे, श्रेष्ठी नागाह्वयोऽभवत् । सुलसाऽन-
लसा धर्मे, तत्पत्नी तौ महाऽऽस्तिकौ ॥ १८ ॥ शैशवे सुलसाश्राद्धा आचख्यावतिमुक्तकः । चारणर्षिरसौ बाला, भवित्री निन्दुरेव यत्
॥१९॥ तपसाऽऽराधितो नैगमेष्याख्यः परिणीतया । तया पुत्रार्थमित्यूचे, तां ज्ञात्वाऽवधिना सुरः ॥२०॥ अहं धार्मिके(कि) ! देवक्या,
गर्भान् कंसेन याचितान् । मार्यमाणान् पराहृत्य, निन्दोर्दास्यामि तांस्तव ॥ २१ ॥ इत्युक्त्वा पुष्पवत्यौ ते, देवकी-सुलसे समम् । स्वशक्त्या
स सुरश्चक्रे, गुर्विण्यौ च तथा समम् ॥ २२ ॥ सुषुवाते समं दिव्यप्रभावादमरः पुनः । सुलसायै ददौ गर्भान्, देवक्याः षडपि क्रमात्
॥२३॥ देवक्यै सौलसान्(सुलासा-)गर्भान्, मृतानर्पितवान् सुरः । दृषद्यास्फालयत् कंसो निस्त्रंशो(शैः) भिन्नवत्स्रवत् ॥२४॥ षडेवं देवकी-
गर्भाः, सुलसाया गृहे सुखम् । तस्या एव ववृधिरे, स्तनन्धयाः स्तनन्धयाः ॥ २५ ॥ नाम्नाऽनीकयशोऽनन्तसेनावजितसेनकः ।
निहतारिर्देवयशाः, शत्रुसेनश्च ते त्वमी ॥ २६ ॥ क्रमादुद्यौवनाः कन्याः, पितृभ्यां परिणायिताः । द्वात्रिंशतं ते प्रत्येकं, भोगान्
बुभुजिरे चिरम् ॥ २७ ॥ इतश्च पावयन् पादैः, श्रीनेमिरवनीतलम् । ईयिवान् भद्दिलपुरं, सेव्यस्त्रिदशकोटिभिः ॥ २८ ॥ श्रुत्वाऽन्ते
तेऽर्हतो धर्मं, जगृहुः षडपि व्रतम् । तपस्यन्तस्तपस्तीव्रं, विजह्रुरर्हता समम् ॥ २९ ॥ विहरन् नेमिनाथोऽथ, द्वारकां पुनराययौ । तस्थौ
सहस्राम्रवणोपवने देवसंस्कृते ॥३०॥ षडपि भ्रातरः षष्ठपारणकं(क) चिकीर्षवः । त्रिधा युगलिनो भूत्वा, विविशुर्द्वारकां पुरीम् ॥३१॥



देवकी-
षट्सुत-
वक्तव्यता।

॥ ५९ ॥

देवकी-षड्सुत-वक्तव्यता।

आद्येऽनीकयशोऽनन्तसेनौ युगलके मुनी। आयातौ देवकीसद्म, तौ दृष्ट्वा साऽत्यमोदत ॥ ३२ ॥ प्रत्यलाभयदेतौ सा, मोदकैः सिंहकेसरैः। जग्मतुस्तौ ततश्चान्यौ, भ्रातरावागतौ मुनी ॥ ३३ ॥ अजितसेन-निहताख्यावपि प्रतिलाभितौ। पुनर्मुमुक्षोस्ताद्दक्षं, तृतीयं युग्ममागतम् ॥ ३४ ॥ देवयशः-शत्रुसेनाभिधं पप्रच्छ देवकी। दिङ्मोहो भगवन्! किं वो, यत् त एवाऽऽगताः पुनः? ॥ ३५ ॥ किमेत एवेति मतिभ्रमो यूयं परे पुनः?। पुर्यां वा स्वर्गकल्पायां, भैक्ष्यं नर्षिभिराप्यते ॥ ३६ ॥ ऊचतुस्तौ न दिङ्मोहः (दिङ्मोहो न), किन्तु षड् सोदरा वयम्। सुलसा-नागयोः पुत्रा, भद्दिलद्रङ्गवासिनोः ॥३७॥ प्राव्रजामो वयं धर्मं, श्रुत्वाऽन्ते नेमिनो हि षड्। भवद्गृहे त्रियुग्मेन, पारणार्थमिताः पृथक् ॥३८॥ देवक्यचिन्तयत् साम्यं, कृष्णस्यैष्वीक्ष(वेक्ष्य)ते कियत्। तिलस्यापि तिला नैयं, तत्किं नामी ममाऽऽत्मजाः? ॥३९॥ जीवदष्टसुताऽऽख्याता, पुरा(रो)ऽतिमुक्तसाधुना। साऽधुना मे मनोभ्रान्तिरेषु पृच्छामि तद् विभुम् ॥४०॥ ततः प्रावर्द्धितीयेऽह्नि, सन्देहापोहहेतवे। ननाम नेमितं गत्वा, देवकी धर्मसद्मगम् ॥४१॥ तद्भावं भगवान् जानन्नूचे देवक्यमी सुताः। तवेति सुलसाया(यै) ये, प्राग् दत्ता नैगमेषिणा ॥ ४२ ॥ देवकी तान् षडप्यृषीन्, पश्यन्त्युत्प्रस्रव(त्प्रक्षर)स्तनी। ववन्दे चाऽऽह जीवन्तो, दिष्ट्या दृष्टाः स्वसूनवः ॥४३॥ राज्यं वा व्रतसाम्राज्यं, प्राज्यं मत्कुक्षिजन्मनाम्। मुदेऽदः किन्तु खेदाय, स्वयं(मया)नैकोऽपि लालितः ॥ ४४ ॥ प्रभुरप्यभ्यधादेवं, मुधा मा ताम्य (ताम्यसि) देवकि!। स्वार्जितं भुज्यते कर्म, न परः कोऽपि कारणम् ॥ ४५ ॥ अहार्षीः सप्त रत्नानि, सपत्न्यास्त्वं(त्व) पुरा भवे। रुदन्त्या अर्पितं चैकं, तस्येदं कर्मणः फलम् ॥ ४६ ॥ प्राग्जन्मकर्म निन्दन्ती, नत्वेशं गृहमागता। दुःस्थावस्थेव सा तस्थौ, पुत्रलालनलालसा ॥ ४७ ॥ विमना दृश्यसे मातः!, किमित्युक्ताऽच्युतेन सा। ऊचे किं जीवितव्येन?, ममान्तर्गडुनाऽमुना ॥४८॥ वार्द्धितो नन्दगेहे त्वं, नागागारे(नागगेहे)ऽवाग्रजाः। पालितं न मयाऽपत्यं, किमपीवान्यपुण्यया ॥४९॥ तद् वत्स! वत्सकं स्त्री(त्वं)यं, धन्या गौरपि

[प्रति] पालयेत्। दूयेऽहं नितरामात्मापत्यलालनलालिशा ॥५०॥ पूरयाम्यम्ब! ते,वाञ्छामित्युक्त्वाऽगाद् गृहं हरिः। हरेराराधयामास, सेनान्यं नैगमेषिणम् ॥ ५१ ॥ सन्तुष्टः सष्टमाचष्टाष्टमो भ्राता हरे! तव। भावी परं स तारुण्य एवाऽऽशु प्रव्रजिष्यति ॥ ५२ ॥ तद्व-चोऽनन्तर कश्चित्, स्वर्गात् च्युत्वा सुरोत्तमः। उत्पेदे देवकीकुक्षौ, शुक्त्यामिव सुमौक्तिकम् ॥ ५३ ॥ क्रमाद् जज्ञेऽङ्गजो गजसुकुमाला-ऽङ्गयोऽद्भुतः। लालयन्ती स्वयं कृष्णकल्पं तं मुमुदे प्रसूः ॥ ५४ ॥ पित्रोर्नेत्रोत्सवो भ्रातृप्रीतिपात्रमसौ क्रमात्। उद्यौवन उपयेमे, द्रुमपुत्रीं प्रभावतीम् ॥ ५५ ॥ क्षत्रियाणीभवां सोमां, सोमशर्मद्विजात्मजाम्। मातृ-भ्रातुपरोधेनानिच्छन् गज उपायत ॥ ५६ ॥ तदैव समवा-सार्षीत्, श्रीनेमिस्तदुपान्तिके। धर्मं गजसुकुमालः, सभार्यो विधिना(ऽयहितो)ऽशृणोत् ॥ ५७ ॥ आमन्त्र्य माता-पित्रादिवर्गं वैराग्य-रङ्ग(ङ्गि)तः। गजः सभार्यः प्राव्राजीद्, वृजिनव्रजवर्जितः ॥५८॥ ततो रुरुदुरत्यन्तं, तद्वियोगासहिष्णवः। पितरौ भ्रातरो ज्येष्ठा, गजे प्रव्रजिते सति ॥ ५९ ॥ सायं पृष्ट्वा प्रभु तस्थौ, गजः प्रतिमया निशि। स्मशानभूमौ दृष्टश्च, ब्रह्मणा सोमशर्मणा ॥ ६० ॥ स दध्यौ यदि पाखण्डचिकीरेष दुराशयः। उपयेमे कथङ्कारं, मम पुत्रीं तपस्विनीम्? ॥ ६१ ॥ एवं विचिन्त्य चितायाः ज्वलदङ्गारपूरितम्। अतिक्षिपत् घटीखण्डं(कण्ठं), स तन्मूर्ध्नि विरुद्धधीः ॥ ६२ ॥ दह्यमानोऽग्निना तेन, सहमानः परीषहम्। दग्धकर्मेन्धनोऽभ्रकेवलोऽगाद् गजः शिवम् ॥ ६३ ॥ [ इति देवकीषद्सुतसम्बन्धः ॥ ]

एतदेवाह—

**वंदामि नेमिसीसं, वयदिणगहिएगराइचरपडिमं। सोमिलकयउवसग्गं, गयसुकुमालं सिवं पत्तं ॥ ३२ ॥**

व्याख्या—'गजसुकुमालं' कृष्णलघुभ्रातरं वन्देऽहमिति गम्यम्। तं कं? नेमिशिष्यं, किंविशिष्टं? प्रतदिन एव गृहीतैकरात्रि-



देवकी-
षट्सुत-
वक्तव्यता।

कवरप्रतिमं—कायोत्सर्गम्। पुनः किंविशिष्टं ? "सोमिल" इत्यादि सोमशर्मद्विजविहितोपसर्गं ततश्च 'शिवं' मोक्षं प्राप्तम्। इति गाथापर्यायार्थः ॥ ३२ ॥ अत्र केचित् प्रक्षेपत्वामिमामपि गाथां पठन्ति—

**जो गेविज्जाउ चुओ, आयाओ जउकुले विसालम्मि। तं देवईअवच्चं, गयसुकुमालं नमंसामि ॥ ३३ ॥**

व्याख्या—तं 'गजसुकुमालं' पूर्वोक्तं, "नमंसामि" नमस्करिष्यामि। तं कं ? देवक्याः 'अपत्यं' न पतन्ति येन जातेन पूर्वजा नरकावनौ तदपत्यमित्येतल्लक्षणम्। यो ग्रैवेयकात् च्युतः 'विशाले' विस्तीर्णे यदुकुले 'आयातः' आययौ। इति गाथापर्यायार्थः ॥ ३३ ॥ भावार्थो दर्शित एव ॥

अथ ढण्ढणर्षिं स्तौति—

**जो वासुदेवपुरओ, पसंसिओ दुक्करं करेइ त्ति। सिरिनेमिजिणवरेणं, तं ढंढरिसिं नमंसामि ॥ ३४ ॥**

व्याख्या—तं ढण्ढर्षिं नमस्करोमीति क्रियायोगः। कोऽसौ ? यः 'वासुदेवपुरतः' कृष्णाग्रे 'प्रशंसितः' श्लाघितः, केन ? 'श्रीनेमिजिनवरेण' द्वाविंशतमतीर्थकृता। कथं ? दुष्करं करोतीति। इति गाथापर्यायार्थः ॥ ३४ ॥ भावार्थस्त्वयम्—

हरेः पत्न्यां ढण्ढणायां, पुत्रोऽभूद् ढण्ढणाह्वयः। उपायतोद्यौवने(नो)ऽसौ, बह्वी राजन्यकन्यकाः ॥१॥ पद्मिनीनामसौ प्रेमरसमास्वादयन्नपि। सुमनस्सु स्थितिं चक्रे, विशेषात् चञ्चरीकवत् ॥ २ ॥ अन्येद्युर्नेमिनः पीत्वा, ढण्ढणो देशनामृतम्। प्राव्राजीत् वद्भ्वा-(वद्धदा-,च शिवा-)ज्ञया, पित्रा कृतव्रतोत्सवः ॥३॥ सर्वस्य सम्मतस्यास्यार्हता विहरतः समम्। तदोदियाय प्राग्जन्माचीर्णं कर्मोऽऽन्तरायिकम् ॥ ४ ॥ स याति यत्र यत्रापि(प), तत्र तत्र न किञ्चन। मुनयो ये ययुस्तेन, सहाऽऽपुस्तेऽप्यपोऽपि न ॥५॥ ततः पप्रच्छुर्भैपयत्त्रैलोक्य-



गजसुकुमालमहर्षिस्तवनम्। ढण्ढणमहर्षिवर्णनम्।

स्वामिनस्तव । शिष्यः पुत्रो हरेः सर्वगुणानामेकमास्पदम् ॥ ६ ॥ पुर्यस्यां धार्मिकोदार-धनाढ्यायां भ्रमन्नपि । भिक्षामात्रमपि कथं, मुनिर्नाप्नोति ढण्ढणः ? ॥ ७ ॥ [ युग्मम् ] स्वाम्याख्यत् मगधेषु प्राग्, ग्रामेऽभूद् धान्यपूरके । विप्रः परासरो नाम्ना, नृपायुक्तो विवि(यु)-कधीः (विवेकधीः) ॥ ८ ॥ सोऽन्यदावापयद् ग्राम्यै राज(ज्य)क्षेत्राण्यनेकशः । मध्याह्नेऽप्यागते भक्ते, नामुञ्च(च)त् तांस्तपस्विनः ॥९॥ क्षुधितैस्तृषितैः श्रान्तैर्घर्मार्तैर्हालिकैर्वृषैः । स्वक्षेत्रेऽकर्षयत् सीता(मा)मेकां तेभ्यः पृथक् पृथक् ॥१०॥ तत्राऽऽन्तरायिकं कर्मार्जित्वा भ्रान्त्वा भवं स सः । जातोऽयं ढण्ढणः कर्म, जन्मनीहोदियाय तत् ॥ ११ ॥ तत् श्रुत्वोत्पन्नवैराग्यो, ढण्ढणर्षिर्जिनान्तिके । नाहं भोक्ष्येऽन्य-लब्ध्येत्यग्रहीदुग्रमभिग्रहम् ॥ १२ ॥ सहमानो मुनिः सम्यक्, तमलाभपरीषहम् । न भुञ्जानोऽन्यलब्ध्या सः, कियन्तं कालमत्यगात् ॥१३॥ समास्थितं प्रभुं नत्वाऽन्यदाऽपृच्छद् जनार्दनः । महर्षीणाममीषां कः स्वामिन् ! दुष्करकारकः ? ॥ १४ ॥ स्वाम्याख्यत् मुनयः सर्वे, राजन् ! दुष्करकारकाः । यावं सोढा ढण्ढणर्षियेस्त्वलाभपरीषहम् ॥ १५ ॥ इति श्रुत्वा प्रभुं नत्वा, प्रत्यागच्छन् पुरीं हरिः । यान्तं गोचरचर्यायामद्राक्षीद् ढण्ढणं मुनिम् ॥१६॥ गजादुत्तीर्य गोविन्दो, भक्तितस्तं नमोऽकरोत् । दृष्ट्वैकश्रेष्ठिनाऽचिन्ति, धन्यो यो(ऽयं) हरिणा न(नु)तः ॥ १७ ॥ तस्यैव श्रेष्ठिनो गेहे, विहरन् ढण्ढणोऽप्यगात् । कृष्णार्च्य इति तं सोऽपि, मोदकैः प्रत्यलाभयत् ॥ १८ ॥ शीघ्रमेत्य जिनं नत्वा, मुनिरेवं व्यजिज्ञपत् । किं मेऽ(किमाऽऽ)न्तराय(यि)कं कर्म, क्षीणं भिक्षां यदाप्नुवम् ? ॥ १९ ॥ स्वाम्याचख्यौ न तत् क्षीणं, किन्तु लब्धिर्हरेरियम् । ततोऽसि तेन तेन त्वां स श्रेष्ठी प्रत्यलाभयत् ॥ २० ॥ परलब्ध्या न भोक्ष्येऽहं, चिन्तयन्नित्यभिग्रहम् । परिष्ठापयितुं भिक्षां, प्रारेभे स्थण्डिलावनौ ॥२१॥ अज्ञानाऽऽचीर्णकर्माणि, दुःक्षयाण्यङ्गिनामहो ! । इति चिन्तयतस्तस्योत्पेदे केवलमुज्ज्वलम् ॥ २२ ॥ प्रभुं प्रदक्षिणीकृत्य, तत्र केवल(लि)पर्षदि । ढण्ढणर्षिरुपाविक्षत्, सुरेन्द्रैरप्युपासितः ॥ २३ ॥ इति श्रीढण्ढणमहर्षिसम्बन्धः ॥



ढण्ढणमहर्षिवर्णनम् ।

थावच्चापुत्र-शुक्र-सेलक-महर्षि-प्रबन्धः ।

अथ गाथात्रयेण थावच्चापुत्रादीनां सम्बन्धमाह—

इब्भकुलबालियाओ, सुपरिचत्ताओ जेण बत्तीसं । जस्स य निक्खमणमहं, दसारकुलनंदणो कासी ॥ ३५ ॥
जो पुरिससहस्सजुओ, पव्वइओ नेमिपायमूलम्मि । सो थावच्चापुत्तो, चउदसपुव्वी सिवं पत्तो ॥ ३६ ॥

व्याख्या—'सः' वक्ष्यमाणः थावच्चापुत्रः 'शिवं' मोक्षं प्राप्त इति द्वितीयगाथान्ते क्रियायोगः । स कः ? येन "इब्भ" त्ति इभं-गजमर्हन्तीति इभ्याः—धनिनस्तेषां कुलं—वंशस्तस्य बालिकाः—कुमार्यस्ताः, किं ? "सुपरिचत्ताउ" त्ति सुष्ठु इति—सिंहसाहसतया परि—सामस्त्येन त्यक्ताः—परिहृताः, कतिसङ्ख्याकाः ? द्वात्रिंशत् 'चः' (तु) पुनः यस्य 'निष्क्रमणमहं' व्रतोत्सवं, "दसार" इत्यादि नारायण इत्यर्थः "अकासि" त्ति अकार्षीत् । इति प्रथमगाथार्थः ॥ ३५ ॥ यः पुरुषसहस्रयुतः प्रव्रजितः, कस्मिन् ? नेमिपादमूले । पुनः किंविशिष्टः ? 'चतुर्दशपूर्वी' तद्वान् (-द्वेत्ता) इति द्वितीयगाथार्थः ॥ ३६ ॥ तथा—

सहसजुओ तस्सीसो, चउदसपुव्वी सुओ गओ सिद्धिं । इक्कारसंग सुयसीस सेलओ तह य पंचसए ॥ ३७ ॥

व्याख्या—'शुकः' परिव्राजको गतः सिद्धिमिति क्रिया । कोऽसौ ? 'तच्छिष्यः' थावच्चापुत्रविनेयः, कथं ? "सहसजुओ" त्ति सहस्रनरैः सार्द्धमिति गम्यम् (-त्यर्थः) । चतुर्दशपूर्वधारी जातश्च । तथा शुकशिष्यः 'सेलकः' सेलकनामाऽऽचार्यः "पंचसए" त्ति पञ्चशतैर्नरैः सार्द्धमिति गम्यम् । किंविशिष्टोऽसौ ? "एक्कारंग(-रसगि)" त्ति एकादशाङ्गवेदी गतः सिद्धिमित्यत्रापि योज्यम् । इति गाथार्थः ॥ ३७ ॥ भावार्थोऽप्ययम्—

द्वारि(र)कायां महापुर्यां, सार्थनाथप्रिया पुरा । थावच्चाऽऽख्याऽभवद् भूरिभूरि-माणिक्यरोहणा ॥ १ ॥ पुत्रो मातृसुतत्वेन,

थावच्चासुत इत्यभूत् । तस्याः कस्याश्चिदम्बाया, नाम्ना स्यात् तनयाह्वया ॥ २ ॥ स तु द्वात्रिंशतं कन्या जनन्या परिणायितः । महेभ्यानां महाभूत्या, तारुण्ये युगपन्मुदा ॥ ३ ॥ ताभिरभङ्गसौभाग्यसुभगो भोगभङ्गिभिः । दोगुन्दुकामर इवानैषीत् स(सु)समयं सुखम् ॥ ४ ॥ अन्येद्युर्नेमिनः श्रुत्वा, पेशलाऽऽवेशदेशनाम् । मोहनिद्रागमोन्निद्रः, थावच्चासूः प्रसूमवक् ॥ ५ ॥ मातर्मया श्रुतोऽसारः, संसारः स्वामिनोऽन्तिके । अन्यत्र चारुचारित्रात्, सारमीक्षे न किञ्चन ॥ ६ ॥ तद् देह्यनुमतिं मातः !, प्रव्रजाम्यन्तिकेऽर्हतः । कारागारानुकारेऽस्मिन्, संसारे कः सुधीर्वसेत् ? ॥ ७ ॥ श्रुत्वाऽऽह माता मा जा(ता)त !, मां मुक्त्वैकाकिनीं व्रज (जेः) । मृतं पतिं प्रव्रजितं, त्वां सेहे युगपत् कथम् ? ॥ ८ ॥ पत्या विनोपविष्टाऽस्मि, प्रागेव दैवदण्डिता । तवात्मयष्ट्याधारेण, का स्थितिस्त्वद्विनाऽधुना ? ॥ ९ ॥ तत् श्रुत्वा सूनुरप्यूचे, संसारे कोऽपि कस्य न । कः पतिः ? कोऽङ्गजः ? काऽम्बा ?, सर्वे(र्वो)ऽपि स्वार्थतत्परा:(रः) ॥ १० ॥ ज्ञात्वा तन्निर्णयं माताऽनिच्छन्त्यपि प्रपद्य तत् । व्रतोत्सवाय कृष्णान्ते, राजचिह्नार्थमाययौ ॥ ११ ॥ थावच्चा स्माह हे राजन् !, राजचिह्नानि मेऽर्पय । कुर्वे यैरात्मजस्याहं, महानिष्क्रमणोत्सवम् ॥१२॥ हरिरागत्य तद्गेहं, थावच्चासुतमब्रवीत् । भोगान् भुङ्क्ष्वाधुना भद्र !, प्राव्राजीर्वार्द्धे(र्द्धि)के पुनः ॥१३॥ सोऽवक् त्वदन्ते नो राजन् !, भोगा भीविभ्रुतात्मनाम् । हरिणोक्तं कुतो भीतिर्ब्रूहि मे वारयामि ताम् ॥१४॥ मृत्योर्भीतिरनेनोक्ते, तूष्णीकोऽस्थाद् जनार्दनः । ततश्चोद्घोषयामास, पुर्यामारक्षकैरिदम् ॥ ॥ १५ ॥ भो भो ! यः कश्चिदादत्ते, दीक्षां तस्योत्सवं हरिः । करोतीति ततोऽभूवन्, घना दीक्षोत्सुका जनाः ॥ १६ ॥ सहस्रवाह्यशिबिकामारूढो हरिणा स्वयम् । कृतो(त)व्रतोत्सवोऽत्यर्थं, राजचिह्नैरलङ्कृतः ॥ १७ ॥ हृद्यवाद्यनिनादोद्यदुद्यमः सार्थवाहसूः । सहस्रमनुजैः सार्द्धं, प्राव्राजीत् नेमिनोऽन्तिके ॥ १८ ॥ [युग्मम्] स चतुर्दश पूर्वाणि, पपाठाशठमानसः । चक्रे सेलकपुरेशं, श्रावकं सेलकं नृपम् ॥१९॥ पुरीं सौगन्धिकां प्राप्तः, थावच्चासूः

सुदर्शनम् । भक्तं शुकपरिव्राजः, श्रेष्ठिनं प्रत्यबोधयत् ॥ २० ॥ थावच्चासूनुना वादे, परिव्राड् विजितः शुकः । साकं शिष्यसहस्रेण निष्क्रान्तोऽस्यैव सन्निधौ ॥ २१ ॥ क्षपयित्वाऽष्टकर्माणि, थावच्चासूरनुक्रमात् । शिवं शत्रुञ्जये शैले, शिश्रिये श्रेयसः फलम् ॥ २२ ॥ पन्थकप्रमुखामात्यपञ्चशत्या समन्वितः । शुकेन सेलकक्ष्मापो, दीक्षितः शिक्षितः क्रमम्(क्रमात्) ॥२३॥ पठित्वैकादशाङ्गानि, शिष्यैर्विहरतः समम् । रोगा रूक्षारसाहारैः, सेलकार्यस्य जज्ञिरे ॥ २४ ॥ स्वपुत्रमण्डुकक्ष्मापयानशालास्थितस्ततः । सेलकोऽचीकरद् वैद्यैश्चिकित्सामात्मवर्ष्मणः ॥ २५ ॥ लुब्धोऽतिमधुराहारैर्विजहे नीरुजोऽपि न । बहुधोक्तोऽपि गीतार्थैः, सेलकः सुरसशीतलः ॥ २६ ॥ नियुज्य पन्थकं तेषां, वैयावृत्येऽन्य(न)साधवः । विजहुश्चालसायन्ते, नैवोद्यतविहारिणः ॥२७॥ सूरयः कार्त्तिकचतुर्मासकाह्ने यदृच्छया । भक्तं भुक्त्वा पयः पीत्वा, सायमेव स शेरते ॥ २८ ॥ अथाऽऽवश्यकवेलायां, क्षामणावसरे गुरोः । चरणौ घट्ट(ट)यामास, पन्थकः शिरसाऽऽत्मनः ॥ २९ ॥ कश्चक्रे क्रूरकर्मा मे, निद्राच्छेदमकाण्डतः । इत्युक्ते सूरिणा कोपात्, मधुरं स्माह पन्थकः ॥ ३० ॥ भगवन्! भाग्यहीनेन, पूज्या आशातिता मया । क्षामणा(ण)या द्वितीयेन, ममाऽऽगः क्षम्यतामदः ॥ ३१ ॥ श्रुत्वेत्यचिन्तयत् शान्तो, धिङ् मामाहारलम्पटम् । न ज्ञातं यन्मयाऽज्ञानात्, पर्याप्येतत् महत्तमम् ॥ ३२ ॥ विजहार ततोऽन्यत्र, मिलिताः साधवोऽखिलाः । सिद्धः शत्रुञ्जये शैले, सेलकः सपरिच्छदः ॥ ३३ ॥ इति श्रीथावच्चासुत-शुक-सेलकानां प्रबन्धः ॥

थावच्चापुत्र-शुक-सेलक-महर्षि-प्रबन्धः ।

**जो य पर(रि)क्कमइ तवं, छिन्नं लूहं च देहमगणंतो । सिद्धं विहुयरयमलं, सेलगपुत्तं तयं वंदे ॥ ३८ ॥**

व्याख्या—इयमपि प्रक्षेपरूपा गाथा यथाज्ञाता किञ्चिद् व्याख्यायते—तं कं? सेलकपुत्रं 'वन्दे' अभिवादयामि इति क्रियायोगः । तं कं? यश्च प्रक्रमते 'तपः' चतुर्थादि, किं कुर्वन्? अगणयन्, किं? 'देहं' शरीरं, किंविशिष्टं? 'छिन्नं' छेदितं 'चः' पुनः 'रूक्षं' स्नान-स्नि-

सेलकपुत्र-सारणर्षि-स्तवनम् ।

ग्धाहारपरिहारेण । पुनः किंविशिष्टं ? 'सिद्धं' निष्ठितार्थं, तथा वि–विशेषेण धुतं–कम्पितं रजो बद्ध्यमानं(द्धं)कर्ममलं येन तं वन्दामि इति गाथार्थः ॥ ३८ ॥ भावार्थोऽत्र [विशिष्ट]सम्प्रदायाभावात् सेलकपुत्रो मड्डुकोऽन्यो वेति सम्यग् न ज्ञायते । समयज्ञैर्यथांज्ञातो वाच्यः । अथात्र केचिद् गाथात्रयमिदमपि पठन्ति—

असुरसुरपन्नगिंदा, जंता पडिमागयं नमंसंति । उज्जिंतसेलसिहरे, तं सिरसा सारणं वंदे ॥ ३९ ॥
बारस भिक्खूपडिमा, जेणऽणुचिन्ना महाणुभावेणं । वाससया नियमेणं, अट्ठमछट्ठाइं जो कासी ॥ ४० ॥
तं खवियपेम-दोसं, वंदे जर-मरण-सोगमुत्तिन्नं । अउलसुहसागरगयं, निव्वाणमणुत्तरं पत्तं ॥ ४१ ॥

व्याख्या—तं 'सारणं' सारणर्षिं यदुकुमारमन्यं वा 'सिरसा' मस्तकेन वन्दे । तकं यं 'प्रतिमागतं' कायोत्सर्गस्थं "नमंसंति" नमस्कुर्वन्ति, के ? "असुर" इत्यादि असुराः–दानवाः सुराः–देवाः पन्नगाः–सर्पास्तेषाम् इन्द्राः–परमैश्वर्यभाजः, कस्मिन् ? "उज्जिंतसेलसिहरे" गिरि(र)नाराद्रिशृङ्गे । किंविशिष्टाः ? 'यान्तः' गच्छन्तो यात्रादिकार्ये इति गम्यम् । इति प्रथमगाथार्थः ॥ ३९ ॥ तथा 'येन' सारणर्षिणा भिक्षुप्रतिमाः "मासाईसत्तंता" इत्यादिकाः । कतिसङ्ख्याः ? द्वादश, किं ? 'अनुचीर्णाः' सेविताः । किंविशिष्टेन ? 'महानुभावेन' अचिन्त्यशक्तिना । यः पुनर्वर्षशतात् 'नियमेन' निश्चयेन "अट्ठम" इत्यादि प्राकृतत्वात् षष्ठाष्टमानि "अकासि" त्ति 'अकार्षीत्' चकार । इति द्वितीयगाथार्थः ॥ ४० ॥ तं वन्दे, पुनर्वन्दनक्रियाभिधानम् अत्यन्तादरख्यापनार्थम् । किंविशिष्टं ? क्षपितौ–क्षयं नीतौ प्रेम-द्वेषौ येन तम् । पुनः किंविशिष्टं ? जरा-मरण-शोकोत्तीर्णं प्राकृतत्वात् मकारोऽलाक्षणिकः । पुनः किंविशिष्टं ? अतुलसुखानां सागरः–

समुद्रस्तत्र गतं-प्राप्तम् । पुनः किंविशिष्टं ? निर्वाणं' मोक्षं, कीदृक्षं(शं) ? 'अनुत्तरं' सर्वोत्कृष्टम् । इति तृतीयगाथार्थः ॥ ४१ ॥ भावार्थस्तु सम्यक्सम्प्रदायाभावान्न ज्ञायते । यथाज्ञातः समयज्ञैः स्वयमत्र वाच्यः ॥

अथ नवमनारदर्षिं स्तौति—

**सुच्चा जिणिंदवयणं, सच्चं सोयं ति पभणिओ हरिणा । किं सच्चं ति पवत्तो, चिंतंतो जायजाइसरो ॥ ४२ ॥**
**संबुद्धो जो पढमं, अज्झयणं सच्चमेव पन्नवई । कच्छुल्लनारयरिसिं, तं वंदे सुगइमणुपत्तं ॥ ४३ ॥**

व्याख्या—तं कच्छुल्लनारदर्षिं 'वन्दे' स्तवीमि इति द्वितीयप्रक्षेपगाथान्ते योज्यते। कोऽसौ ? यः 'हरिणा' कृष्णेन इति प्रकर्षेण भणितः प्रभणितः, इतीति किं ? शौचं सत्यमिति। किं कृत्वा ? श्रुत्वा, किं तत् ? जिनेन्द्रवचनं, कीदृक्षं ? किं सत्यमिति प्रवृत्तश्चिन्तितुमिति गम्यते । चिन्तयंश्च जातजातिस्मृतिः । इति प्रथमगाथार्थः ॥ ४२ ॥ 'सम्बुद्धः' प्रत्येकबुद्धोऽभूदिति गम्यते। यः प्रथममध्ययनं 'सत्यमेव' सत्यनामकमेव 'प्रज्ञापयति' प्ररूपितवान्, सूत्रस्य त्रिकालविषयत्वात्। किंविशिष्टं ? 'सुगतिम्' अर्थात् मोक्षमनुप्राप्तम्। इति द्वितीयप्रक्षेपगाथार्थः ॥४३॥

भावार्थश्चायम्—

श्रीवीरस्वामिनो धर्मघोष-धर्मयशोऽभिधौ । शिष्यावशोकवृक्षाधः, सूत्रं गु(ग)णयतोऽन्यदा ॥ १ ॥ अपराह्णेऽपि तच्छायां, निश्चलां वीक्ष्य विस्मितौ । एकोऽब्रवीद् भवंल्लब्धिर्द्वितीयोऽप्याह ते पुनः ॥ २ ॥ एको गतो बहिर्भूमौ, तथाऽन्योऽपि तथैव सा । कस्येयं भगवंल्लब्धिः ?, पृच्छतः स्मैत तं विभुम् ॥ ३ ॥ स्वाम्याख्यत् शौ(सौ)र्यपुर्यासीत्, समुद्रविजयो नृपः । यज्ञयशास्तापसश्च, सोममित्राऽस्य पत्न्यभूत् ॥ ४ ॥ यज्ञदत्तः सुतो जज्ञे, स्नुषा सोमयशास्तयोः । नवमो नारदः सूनुर्दम्पत्योरभवत् तयोः ॥ ५ ॥ भुञ्जते

नारदर्षिवक्तव्यता ।

तेऽह्नि चैकस्मिन्, स्युर्द्वितीयेऽह्नुपोषिताः । उञ्छार्थं यान्ति दिवसे, द्रुमांह्नावबलम्ब्य तम् ॥ ६ ॥ इतश्च तत्र वैताढ्याद्, धनदादेशकारिणः । गच्छन्तोऽवधिनाऽपश्यंस्तमभं जृम्भकामराः ॥ ७ ॥ च्युतो निकायतोऽस्माकमयमित्यनुकम्पया । तच्छायां स्तम्भयामासुर्मो मूरस्याऽऽतपव्यथा ॥ ८ ॥ प्रत्यावृत्ता (त्य) गृहीत्वा तं, प्रद्युम्नवदपाठयन् । प्रज्ञप्तिप्रमुखा विद्याः, प्राक्स्नेहाद् जृम्भकामराः ॥ ९ ॥ स स्वर्णकुण्डिकाधारी, मणिमण्डितपादुकः । भ्रमन् व्योम्ना गतोऽन्येद्युर्द्वारकाख्यां हरेः पुरीम् ॥ १० ॥ कृतार्थो हरिणा पृष्टः, किं शौचमिति नारदः । तदर्थमविदन् वार्त्तांव्याक्षिप्तं केशवं व्यधात् ॥ ११ ॥ ततश्च प्राग्विदेहेऽगात्, तत्र सीमन्धरं जिनम् । युगबाहुर्वासुदेवोऽपृच्छत् किं शौचमित्यथ ॥ १२ ॥ सत्यं शौचमिति प्रोचेऽर्हताऽथ नारदर्षिणा । पदेनैकेन तत् सर्वं, पर्यायैरवधारितम् ॥ १३ ॥ ततोऽपरविदेहेऽगात्, मुनिस्तत्र युगन्धरम् । महाबाहुर्वासुदेवस्तमेवार्थं स पृच्छति ॥ १४ ॥ तदेवोत्तरमासाद्य, सम्यग् निर्णीय तन्मुनिः । पुरीमेत्य हरिमूचे, पृष्टं भोः ! किं तदा त्वया ? ॥ १५ ॥ किं शौचमिति तेनोक्ते, तत् सत्यमित्यवक् मुनिः । कृष्णोऽब्रवीत् तत् सत्यं किं ?, नारदो नोत्तरं ददौ ॥१६॥ हरिः स्मित्वाऽऽह यत्रैतत्, पृष्टमेतन्न तत्र किम् ? । तत् श्रुत्वा नारदोऽवोचत्, सत्यं पृष्टो जिनो न तत् ॥१७॥ ततश्चिन्तितुमारब्धो, जातिस्मृतिमवाप्तवान् । प्रत्येकबुद्धो भगवान्, सम्पन्नोऽतीव शोचयन् ॥ १८ ॥ देवतादत्तलिङ्गोऽथ प्राव्राजीत् नारदो मुनिः । आद्यमध्ययनं सत्याभिधं कृत्वा शिवं ययौ ॥ १९ ॥ इति श्रीनवमनारदर्षिसम्बन्धः ॥

अथ तीर्थङ्करत्रयतीर्थोत्पन्नप्रत्येकबुद्धसङ्ख्यामाह—

नारयरिसिपामुक्खे, वीसं सिरिनेमिनाहतित्थम्मि । पन्नरस पासतित्थे, दस सिरिवीरस्स तित्थम्मि ॥ ४४ ॥
पत्तेयबुद्धसाहू, नमिमो जे भासिउं सिवं पत्ता । पणयालीसं इसिभासियाइं अज्झयणपवराइं ॥ ४५ ॥

पञ्चचत्वारिंशत्-प्रत्येकबुद्ध-नामानि ।

व्याख्या—प्रत्येकबुद्धसाधून् "नमिमो" त्ति प्राकृतत्वात् नमामो वयमिति क्रियायोगाद् गम्यम्। किंविशिष्टान् ? नारदर्षिः—पूर्वोक्तः प्रमुखः—आद्यो येषां तान्, ते के ? श्रीनेमिनाथतीर्थे विंशतिः । श्रीपार्श्वतीर्थे पञ्चदश । तथा श्रीवीरस्य तीर्थे दश । इति प्रथमगाथार्थः ॥ ४४ ॥ पुनः किंविशिष्टाः ? 'शिवं' मोक्षं 'प्राप्ताः' प्रापुः । किं कर्तुं ? 'भापितुं' प्राकृतत्वाद् उक्त्वेत्यर्थः । कानि ? अध्ययनेषु—शास्त्रविशेषेषु प्रवराणि—प्रधानानि, किंनामानि ? ऋषीणां—नारदादीनां भाषितानि—वचांसि ऋषिभाषितानि, कतिसङ्ख्यानि ? "पणयालीसं" ति पञ्चचत्वारिंशत् । ऋषिनामानि च वक्ष्यापितसूत्रगाथाभिरेव दर्श्यन्ते—*नारय वज्जियपुत्ते, असिए (दविले) अंगि(ग)रिस(सि) पुप्फसाले य । वक्कल कुम्मा(जस्स) केयलि कासव तह तेयलिसुए य ॥१॥ मंखलि जण्ण स(ग)याली, वाहुय महु सोरिणो(याण)य विदू वि य । वरिसे कण्हे आरिय, उक्कलवाइ य वरुणे य ॥२॥ गद्दभ (दगभाल) रामे य तहा, हरिगिरि अंबड मयंग वारत्ते । वत्तो य अद्दए वद्धमाण वाऊ य तीस इमे ॥ ३ ॥ पासे पिंगे अरुणे, इसिगिरि अद्दालए य वित्ते य । सिरिगिरि साईयपुत्ते, संजय दीवायणे चेव ॥ ४ ॥ वत्तो य इंदनागे सोमे जमे चेय होइ वरुणे य । वेसमणे य महप्पा, चत्ता पंचेव नामाइं ॥ ५ ॥ इति द्वितीयगाथार्थः ॥ ४५ ॥

* "नारदो वज्रि(जिं)पुत्रोऽसित(दविलः)मङ्गर्षिः पुष्पशालश्च । वल्कलचीरी कूर्मापुत्रः केतलिः काश्यपस्तथा तेतलिसुतश्च ॥ १ ॥ मङ्खली यज्ञो भयालिर्बाहुको मधुरायणः शौर्यायणः । विदुरपि च वर्षवकृष्ण आर्य उत्कलवादी च तरुणश्च ॥ २ ॥ गर्दभो रामश्च तथा हरिगिरिः अम्बडो मातङ्गो वारत्तः । वत्तश्च आर्द्रो वर्द्धमानो वायुश्च त्रिंशदिमे ॥ ३ ॥ पार्श्वः पिङ्गः अरुण ऋषिगिरिः आर्द्रालकश्च वित्तश्च । श्रीगिरिः स्वातिकपुत्रः संयतो द्वीपायनश्चैव ॥ ४ ॥ वत्तश्च इन्द्रनागः सोमो यमश्चैव भवति वरुणश्च । वैश्रमणश्च महात्मा पञ्चचत्वारिंशदेव नामानि ॥ ५ ॥"

अथ दमदन्तर्षिं दर्शयन्ति—

**पहरिज्जंतो दुज्जोहणेण तह पंडवेहिं थुव्वंतो । समसत्तुमित्तभावो, दमदंतमहारिसी जयउ ॥ ४६ ॥**

व्याख्या—दमदन्तमहर्षिः 'जयतु' जयमनुभवतु । किम्भूतः ? समशत्रुमित्रभावः, कथं ? "पहरिज्जंतो" त्ति प्रह्रियमाणः, केन ? 'दुर्योधनेन' गन्धारीपुत्रेण, तथा 'पाण्डवैः' पाण्डुपुत्रैः स्तूयमानोऽपीति गम्यम् । इति गाथा(संस्कारा-)र्थः ॥ ४६ ॥ भावार्थस्त्वयम्—

हस्तिशीर्षपुरे राजा, दमदन्ताभिधोऽभवत् । सेवन्ते यत्प्रतापार्त्ता, गुहां घूका इवारयः ॥ १ ॥ इतो गजपुरे राज्यं, कुर्वते पाण्डुसूनवः । दमदन्त-पाण्डवानां, जज्ञे वैरं परस्परम् ॥ २ ॥ जरासन्धस्य सेवायै, दमदन्तो गतोऽन्यदा । पाण्डवैरेत्य तद्देशो, विध्वस्तो ज्वालितो भृशम् ( वस्तराम् ) ॥ ३ ॥ सद्याऽऽगाद् दमदन्तोऽथ, वीक्ष्य देशं विनाशितम् । सैन्यावेशेन महता, रुरोध हस्तिनापुरम् ॥ ४ ॥ पुरान्तः पाण्डवा भीता, विविशुर्निर्ययुर्न हि । ग्रहाणां महिमा तावद्, यावन्नोदेति भास्करः ॥ ५ ॥ ज्ञापितं दमदन्तेन, दासेरा जम्बुका इव । क्रीडिता विषये शून्ये, निर्गच्छत यदीश्वराः ॥ ६ ॥ निर्ययुः पाण्डवा नैवमुक्तेऽपि दमदन्तराट् । प्रत्यावृत्तः स्वराज्यर्द्धिं, बुभुजे भामिनीमिव ॥ ७ ॥ निर्विण्णकाम-भोगोऽथ, प्रव्रज्याऽन्ते गुरोः क्रमात् । प्रपन्नो दमदन्तर्षिरेकाकिप्रतिमां स्थिरः(वः) ॥८॥ प्रतिमामाददेऽन्येद्युर्मुनिर्गजपुराद् बहिः । अत्रान्तरे तु यात्रार्थं, निर्ययौ राड् युधिष्ठिरः ॥९॥ मार्गे निरीक्ष्य तमृषिं, ववन्दे मुदितो नृपः । भीमाद्यैरनुजैश्चैवं, वन्दितश्च स्तुतो भृशम् ( वस्तराम् ) ॥ १० ॥ ततो दुर्योधनोऽप्यागात्, तस्योक्तमनुजीविभिः । स्वामिन् ! स दमदन्तोऽयं, यूयं प्राग् येन हेपिताः ॥ ११ ॥ आहतो मातुलिङ्गेन, राज्ञाऽन्यैश्चानुजीविभिः । क्षिप्त्वा दृषदमेकैकं, दृषद्राशीकृतो मुनिः ॥ १२ ॥ प्रत्यावृत्तः पुनर्धर्मपुत्रोऽपृच्छत् स्वसेवकान् । स मुनिः केक्षितो यः प्राग् ?, राज्ञे ते तमदर्शयन् ॥ १३ ॥

निर्मिताऽऽशातनाऽमुष्य, महर्षेः केन पापिना ? । पृष्टे युधिष्ठिरेणेति, शशंसुले सुयोधनम् ॥ १४ ॥ कृत्वेर्ष्यां धर्मपुत्रेण, याढं दुर्योधनोपरि । निष्कास्याभ्यर्चितः साधुस्तेन क्षामितस्ततः ॥ १५ ॥ निर्विशेषमनोवृत्तिर्धर्मपुत्रे सुयोधने । भगवान् दमदन्त-र्षिर्विजहार वसुन्धराम् ॥ १६ ॥ इति श्रीदमदन्तर्षिप्रवन्धः ॥

दमदन्त-राजर्षि-प्रवन्धः ।

**जलणाउ नेमिसीस त्ति भणंतो जंभि(भ)एहिं उक्खित्तो । सिरिकुज्जवारयमुणी, रामसुओ जयउ सिद्धिं गओ ४७**

व्याख्या—श्रीकुब्जवारकमुनिः 'जयतु' जयमनुभवतु । कोऽसौ ? 'रामसुतः' वलदेवपुत्रः, किम्भूतः ? 'उत्क्षिप्तः' उत्पाटितः, कैः ? 'जृम्भकैः' तिर्यग्जृम्भकामरैः, किं कुर्वन् ? इति 'भणन्' गृणन्, इतीति किं ? नेमिशिष्योऽहमिति गम्यम् । कस्मात् ? 'ज्वल-नात्' द्वारका[दहन]दहनतो भयेनेति गम्यम् । तथा 'सिद्धिं' शिवं प्राकृतत्वादनुस्वारलोपः, 'गतः' प्राप्तः । इति गाथार्थः ॥ ४७ ॥ भावार्थस्तु नयमवलसम्बन्धाधिकारे दर्शित एव ॥

कुब्जवारक-मुनिसम्ब-न्धः, पञ्च-पाण्डवसि-द्धिगमन-वर्णनं च ।

अथ पाण्डवान् दर्शयन्ति—

**पंच वि निवपंडुसुया, चउदसपुव्वी जुहिट्ठिलप्पमुहा । दोमासियसंलेहणपुव्वं सित्तुंजए सिद्धा ॥ ४८ ॥**

व्याख्या—'पञ्चापि' पञ्चसङ्ख्याका अपि नृपस्य–राज्ञः पाण्डोः–पाण्डुनाम्नः सुताः–पुत्राः शत्रुञ्जये सिद्धा इति क्रिया । ते के ? युधिष्ठिरः–धर्मपुत्रः प्रमुखः–आदिर्येषां ते, किंविशिष्टाः ? 'चतुर्दशपूर्विणः' उत्पादादिविदः, कथं ? द्विमासिकसंलेखनापूर्वं सिद्धाः । इति गाथार्थः ॥४८॥ भावार्थस्तु वलदेवसम्बन्धाधिकारे दर्शित एव । विस्तरस्तु पाण्डवचरित्रादिभ्योऽवसेयः । ग्रन्थगौरवभयान्नात्र दर्शितः ॥ इति श्रीखरतरगच्छशृङ्गारहार[श्रीकीर्त्तिरत्नसूरिशिष्य]श्रीगुणरत्नाचार्यशिष्यवर्य–वाचनाचार्य–पद्ममन्दिरगणिविरचितायां श्रीऋषि-

मण्डलप्रकरणवृत्तौ श्रीनेमितीर्थोत्पन्नाक्षोभ्याघष्टदशार्हसंक्षेपकथा-रथनेमिकथा-जालि-मयाल्यादि-प्रद्युम्न-शाम्बानिरुद्धदशमहर्षिकथा-षड्देवकीपुत्र-गजसुकुमालमहर्षिकथा-ढण्ढणर्षिकथा-थावच्चासुत-शुक-सेलककथा-सेलकपुत्र-सारणर्षिस्तवनं-नारदर्षिकथा-पञ्चचत्वारिंशत्प्रत्येकबुद्धनामगाथा-दमदन्तराजर्षिकथा-श्रीकुञ्जवारककुमार-पञ्चपाण्डवसिद्धिगमनवर्णनाधिकारस्तृतीयो विश्रामः ॥

विश्राम-समाप्तिः ।

---

## अथ चतुर्थो विश्रामः ।

अथ श्रीपार्श्वजिनतीर्थोत्पन्न(न्नान्)कांश्चिदृषीन् स्तुवन्नाह—

**पडियोहियप्पएसिं, केसिं वंदामि गोयमसमीवे । वियलियसंसयवग्गं, अंगीकयचरमजिणमग्गं ॥ ४९ ॥**

केशिमुनि-वर्णनम् ।

व्याख्या—"केसिं" केशिकुमारश्रमणं वन्देऽहमिति क्रियायोगाद् गम्यम् । किंविशिष्ट(भूतं) ? "पडियोहिय" इत्यादि प्रतिबोधितः—नास्तिकमतनिराकरणेन जिनधर्माभिमुखीकृतः प्रदेशिनामा राजा येन स तम् । एतद्विशेषणदर्शनेनान्येषां केशिनामोपलक्षितकुमाराणां निषेधमाह । पुनः किंविशिष्टं ? "वियलिय" इत्यादि विगलितो विदलितो वा संशयवर्गः—सन्देहसन्दोहो यस्य स तम् । पुनः किंविशिष्टम् ? अङ्गीकृतः—स्वीकृतः चरमजिनस्य—श्रीवीरस्य मार्गो येन स तम्, कस्मिन् ? गौतमसमीपे । इति गाथार्थः ॥ ४९ ॥ भावार्थश्चायम्—

भवापवपनोऽत्यन्तं, तपत्यथापि यत्प्रभोः । दोषाकरोदयध्वंसी, स श्रीपार्श्वः श्रियेऽस्तु वः ॥ १ ॥ तस्य शिष्यशिरोरत्नं, केशिनामा महामुनिः । अवधिज्ञानवान् ग्रामानुग्रामं विहरन्नगात् ॥२॥ पुर्यां श्रावस्त्यामन्येद्युर्बुद्धः शिष्यपरीवृतः । शुद्धोर्व्यां समवासार्षीत् चोद्याने

॥ ६६ ॥

केशिमुनि-वर्णनम्।

तिन्दुकाभिधे ॥ ३ ॥ [ युग्मम् ] इतश्च धर्मतीर्थस्य, कर्त्ता हर्त्ताऽखिलापदाम् । भगवान् वर्द्धमानोऽभूद्, जगन्नेत्रसुधाञ्जनम् ॥ ४ ॥
शिष्यमुख्योऽभवत् तस्य, गौतमो द्वादशाङ्गवित् । शिष्यसङ्घसमाकीर्णः, श्रावस्त्यां सोऽप्यथागमत् ॥ ५ ॥ उद्याने समवसृतः, कोष्ठके
प्रासुकावनौ । द्वयोर्गणभृतोर्दैवादेवं तत्राऽऽगमोऽभवत् ॥६॥ तयोर्गोचरचर्यायां, शिष्याणां भ्रमतां द्वयोः । वीक्ष्यान्योन्यमियं चिन्ता, चेत-
स्याविरभूत् तदा ॥७॥ कीदृग् धर्मोऽयमस्माकं ? तेषां वा कीदृशस्त्वयम् ? आचारधर्मप्रणधिरयं वा नु(तु) कीदृशः ? ॥ ८ ॥ चातुर्या-
मश्च यो धर्मो, यश्चायं पञ्चशिक्षितः । देशितो वर्द्धमानेन, पार्श्वेन च महार्हता ॥ ९ ॥ अचेलकश्च यो धर्मो, यश्चायं सान्तरोत्तरः ।
कार्यमेकं प्रपन्नानां, विशेषे किं नु कारणम् ? ॥ १० ॥ अथ तौ तत्र शिष्याणां, विज्ञाय प्र(-याथ)वितर्कितम् । समागमे कृतमती, अभूतां
केशि-गौतमौ ॥ ११ ॥ गौतमः प्रतिरूपज्ञः, शिष्यसम्पत्समन्वितः । कुलज्येष्ठतया केशिसंश्रितं शिश्रिये वनम् ॥ १२ ॥ कुमारश्रमणः
केशिर्वीक्ष्य गौतममागतम् । प्रतिरूपां प्रतिपत्तिं, सम्यक् सम्प्रतिपद्यते ॥ १३ ॥ पलालं प्रासुकं शुष्कमदभ्रदर्भगर्भितम् । गौतमस्य निष-
द्यायै, क्षिप्रमर्पयति स्म सः ॥१४॥ केशिः कुमारश्रमणो, गौतमश्च महायशाः । उभौ निषण्णौ शोभाते, चन्द्र-सूर्यसमश्रियौ ॥१५॥ ईयुः
पाषण्डिनस्तत्र, बहवः कौतुकार्थिनः । गृहस्थानामनेकाश्च, साहस्र्यः सहसाऽऽययुः ॥१६॥ देव-दानव-गन्धर्व-यक्ष-किन्नर-रक्षसाम् । अदृ-
श्यानां च भूतानामासीत् तत्र समागमः ॥ १७ ॥ पृच्छामि त्वां महाभाग !, केशिर्गौतममब्रवीत् । एवं तेनर्षिणा प्रोक्ते, गौतमोऽप्य-
ब्रवीदिदः ॥१८॥ यथेच्छं पृच्छ भोः स्वच्छ ! गौतमः केशिमब्रवीत् । एवं केशिरनुज्ञातः, पप्रच्छेदं च गौतमम् ॥१९॥ च(चा)तुर्यामश्च
यो धर्मो, यश्चायं पञ्चशिक्षितः । देशितो वर्द्धमानेन पार्श्वनाथेन चार्हता ॥२०॥ कार्यमेकं प्रपन्नानां, विशेषे किं नु कारणम् ? । मेधाविन् !
ऋषि० १२ द्विविधे धर्मे, कथं विप्रत्ययो न ते ? ॥२१॥ केशिमेवं ब्रुवाणं तु, तं चेदं प्राह गौतमः । प्रज्ञा समीक्षते धर्मतत्त्वं तत्त्वविनिश्चयम् ॥२२॥

केशिमुनि-
वर्णनम् ।

पूर्वेषैयस्त्वृजु-जडा, वक्र-जडाश्च पश्चिमाः । मध्यमास्तु ऋजु-प्र(प्रा)ज्ञास्तेन धर्मो द्विधा कृतः ॥ २३ ॥ पूर्वर्षीणां दुर्विशोध्योऽन्त्यानां दुरनुपालकः । कल्पो मध्यमकानां तु, सुविशोध्यः सुपालकः ॥ २४ ॥ इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । संशयोऽन्यमपि ब्रूहि, तं महाप्राज्ञ ! गौतम ! ॥ २५ ॥ अचेलकश्च यो धर्मो, यश्चायं सान्तरोत्तरः। देशितो वर्द्धमानेन, पार्श्वेन च महात्मना ॥२६॥ कार्यमेकं प्रपन्नानां, विशेषे किं नु कारणम् ? । मेधाविन्! द्विविधे लिङ्गे, कथं विप्रत्ययो न ते ? ॥ २७ ॥ ब्रुवाणमेवं तं केशिमुवाचेदं च गौतमः। विज्ञानेन समागम्य(त्य), तदिदं धर्मसाधनम् ॥२८॥ प्रत्ययार्थं च लोकानां, नानाविधविकल्पनम् । यात्रार्थं ग्रहणार्थं च, लोके लिङ्गप्रयोजनम् ॥ २९ ॥ इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । संशयोऽन्यमपि ब्रूहि, तं महाप्राज्ञ ! गौतम ! ॥ ३० ॥ बहुशत्रुसहस्राणां, मध्ये तिष्ठसि गौतम !, जेतुं त्वां तेऽभिगच्छन्ति, कथं ते निर्जितास्त्वया ? ॥ ३१ ॥ पञ्चैकस्मिन् जिते शत्रौ, जितास्ते(स्तैः) पञ्चभिर्दश । दशप्रकारास्तान् जित्वा, सर्वशत्रून् जयाम्यहम् ॥३२॥ केऽत्रोक्ताः शत्रवश्चेति, केशिर्गौतममब्रवीत् । केशिना पृष्ट इत्याख्यद्, गौतमोऽपीदमुत्तरम् ॥ ३३ ॥ एक आत्माऽजितः शत्रुः, कषाया इन्द्रियाणि च । तान् जित्वाऽहं यथान्यायं, विहरामि महामुने ! ॥३४॥ इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । संशयोऽयं(य) परमपि, तं ब्रूहि प्राज्ञ ! गौतम ! ॥३५॥ दृश्यन्ते बहवो लोके, पाशबद्धाः शरीरिणः । मुक्तपाशो लघू(घु)भूतः, कथं विहरसे मुने ! ? ॥३६॥ छित्त्वा सर्वांश्च तान् पाशानुपायतो निहत्य तान् । मुक्तपाशो लघू(घु)भूतो, विहरामि यथासुखम् ॥३७॥ पाशा अत्र च के उक्ताः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमाख्यत ॥ ३८ ॥ राग-द्वेषादयस्तीव्राः, स्नेहपाशा भयङ्कराः । तान् छित्त्वाऽहं यथान्यायं, विहरामि यथाक्रमम् ॥ ३९ ॥ साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ४० ॥ अन्तर्हृदयसम्भूता, लता तिष्ठति

केशिमुनि-
वर्णनम् ।

गौतम ! ? फलानि विषभक्ष्याणि, सूते सा तूद्धृता कथम् ? ॥ ४१ ॥ लतां तां सर्वतश्छित्त्वा, समुद्धृत्य समूलिकाम् । विहरामि यथा-
न्यायं, मुक्तोऽस्मि विषभक्षणात् ॥ ४२ ॥ का लतेह पुनः प्रोक्ता ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत्
॥ ४३ ॥ भवतृष्णा लता प्रोक्ता, भीमा भीमफलोदया । तामुद्धृत्य यथान्यायं, विचरामि यथासुखम् ॥ ४४ ॥ साधु गौतम ! ते
प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ४५ ॥ सम्यक् प्रज्वलिता घोरास्तिष्ठन्ति गौतमामयः । ये
दहन्ति शरीरस्थाः, कथं विध्यापितास्त्वया ? ॥ ४६ ॥ स्रोतसो गुरुमेघोत्थाद्, गृहीत्वा जलमुत्तमम् । सिञ्चामि सततं तास्तु, सिक्तास्ते न
दहन्ति माम् ॥ ४७ ॥ अग्नयश्चेह के प्रोक्ताः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ४८ ॥ कषाया
अग्नयः प्रोक्ताः, श्रुत-शील-तपोजलम् । श्रुतधाराभिहताः सन्तो, भिन्नास्ते न दहन्ति माम् ॥ ४९ ॥ साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं
संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ५० ॥ अयं साहसिको भीमो, दुष्टाश्वः परिधावति । यस्मिन्न गौतमाऽऽरूढस्त्वं
नापह्रियसे कथम् ? ॥ ५१ ॥ प्रधावन्तं निगृह्णामि, श्रुतरश्मिसमाहितम् । न गच्छति ममोन्मार्गं, मार्गं च प्रतिपद्यते ॥ ५२ ॥ कश्चाश्वः
पुनरुक्तः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ५३ ॥ मनः साहसिको भीमो, दुष्टाश्वः परिधावति ।
तं निगृह्णाम्यहं सम्यक्, कविका(कन्थकं)धर्मशिक्षया ॥ ५४ ॥ साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं,
संशयं वद गौतम ! ॥ ५५ ॥ कुपथा बहवो लोके, येभ्यो नश्यन्ति जन्तवः । वर्तमानोऽध्वनि कथं, त्वं न नश्यसि गौतम ! ?
॥ ५६ ॥ ये च मार्गेण गच्छन्ति, कुमार्गे प्रस्थिताश्च ये । विदिता मम ते सर्वे, तन्न नश्याम्यहं मुने ! ॥ ५७ ॥ कुमार्गश्च कः
प्रोक्तः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ५८ ॥ पाखण्डिनोऽलीकवाचः, सर्वेऽप्युन्मार्गगा-

मिनः । सन्मार्गस्तु जिनाख्यात, एष मार्गो ह्यनुत्तरः ॥ ५९ ॥ साधु गौतम! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम! ॥ ६० ॥ प्राणिनां वाह्यमानानां, महावेगेन वारिणा(णः) । शरणं गतिं प्रतिष्ठां द्वीपं कं (किं) मन्यसे मुने! ? ॥ ६१ ॥ अस्ति चैको महाद्वीपो, वारिमध्ये महालयः । महावेगस्य पयसो, गतिस्तत्र न विद्यते ॥ ६२ ॥ इह द्वीपश्च कः प्रोक्तः ?, केशिगौतममब्रवीत् । । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ६३ ॥ प्राणिनां वाह्यमानानां, जरा-मरणवेगतः । धर्मो द्वीपः प्रतिष्ठा च, गतिः शरणमुत्तमम् ॥ ६४ ॥ साधु गौतम! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम! ॥ ६५ ॥ बृहत्प्रवाहे पाथोधौ, वेडा विपरिधावति । यस्यां त्वं गौतमाऽऽरूढः, कथं पारं गमिष्यसि ? ॥ ६६ ॥ आश्राविणी तु नौर्यत्र, न सा पारस्य गामिनी । या निराश्राविणी नौर्भोः! सा पुनः पारगामिनी ॥ ६७ ॥ का प्रोक्ता नौरिह मुने!?, केशिगौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ६८ ॥ शरीरं नौरिति प्राहुर्नाविको जीव उच्यते । संसारो वारिधिः प्रोक्तो, यं तरन्ति महर्षयः ॥ ६९ ॥ साधु गौतम! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं संशयं वद गौतम! ॥ ७० ॥ अन्धकारे महारौद्रे, तिष्ठन्ति बहवोऽङ्गिनः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं कः करिष्यति ? ॥ ७१ ॥ उद्गतो विमलो भानुः, सर्वलोकप्रभाकरः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं स करिष्यति ॥ ७२ ॥ भानुश्च क इह प्रोक्तः ?, केशिगौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ७३ ॥ उद्गतः क्षीणसंसारः, सर्वज्ञो जिनभास्करः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं स करिष्यति ॥ ७४ ॥ साधु गौतम! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम! ॥ ७५ ॥ प्राणिनां वाध्यमानानां, दुःखैः शारीर-मानसैः । क्षेमं शिवमनाबाधं, स्थानं किं मन्यसे मुने!? ॥ ७६ ॥ लोकाग्रेऽस्ति दुरारोहं स्थानमेकं ध्रुवं ध्रुवम् । यत्र नास्ति जरा-मृत्युर्व्याधयो वेदना-

स्तथा ॥ ७७ ॥ स्थानमत्र किमुक्तं भोः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ७८ ॥ निर्वाणमित्यनाबाधं सिद्धिर्लोकाग्रमेव च । क्षेमं शिवमनाबाधं, यच्चरन्ति महर्षयः ॥ ७९ ॥ लोकाग्रेऽस्मिन् दुरारोहं, तत् स्थानं शाश्वताश्रयम् । यत् सम्प्राप्ता न शोचन्ति, भवौघान्तकरर्षयः ॥ ८० ॥ साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । नमस्ते संशयातीत !, सर्वसूत्रमहोदधे ! ॥ ८१ ॥ एवं तु संशये छिन्ने, केशिर्घोरपराक्रमः । कृताञ्जलिपुटो नत्वा, गौतमं गणभृद्वरम् ॥ ८२ ॥ पञ्चमहाव्रत(तं) धर्मं भावतः प्रति(त्य)पद्यते(त) । पूर्वार्हतो मते मार्गे, तत्रासौ पश्चिमार्हतः ॥ ८३ ॥ [ युग्मम् ] केशि-गौतमयोर्नित्यं, तस्मिन्नासीत् समागमे । श्रुत-शीलसमुत्कर्षो, महार्थार्थविनिश्चयः ॥ ८४ ॥ तोषिता परिषत् सर्वा, सन्मार्गं समुपस्थिता । प्रसीदतां भगवन्तौ, संस्तुतौ केशि-गौतमौ ॥८५॥ इत्युत्तराध्ययनानुसारात् केशिगुरोरयम् । सम्बन्धो दर्शितोऽस्माभिर्भव्यानां भविकेच्छु(प्सु)भिः (भविकः शुभः) ॥ ८६ ॥ इति केशिप्रबन्धः ॥ [ ग्रन्थाग्रं २५००।१७ ] अथ—

कालियपुत्ते मेहलियेरे आणंदरक्खिए तइए । कासव एए चउरो, पासावच्चिज्ज मुणिपवरा ॥ ५१ ॥
अकहिंसु तुंगियाए, सरागतव-संजमेहिं समणा वि । कम्मावसेसपडिबंधओ य देवा हविज्जंति ॥ ५२ ॥

व्याख्या—स्पष्टैव । नवरम्—"पासावच्चिज्ज" त्ति 'श्रीपार्श्वतीर्थकृदपत्यानि' तत्तीर्थसाधव इत्यर्थः । "अकहिंसु" त्ति अकथयन्, कस्यां ? तुङ्गिकायां पुर्याम्, किं तत् ? सरागतपः-संयमैरपि 'श्रमणाः' तपस्विनः, अपेः व्यस्तयोगः—व्यस्तसम्बन्धः प्राकृतत्वात् । अवशेषकर्मप्रतिबन्धतश्च तृतीया-पञ्चम्योरर्थं प्रत्यभेदाद् अवशेषकर्मप्रतिबन्धेन च देवाः "हविज्जंति" त्ति भवेयुः । अन्यथा श्रमणा मुक्तौ यान्ति । इति गाथार्थः ॥ ५०-५१ ॥ भावार्थश्चायम्—

केशिमुनिवर्णनसमाप्तिः ।
कालिकपुत्रादिस्थविरचतुष्टयवक्तव्यता ।

कालिकपुत्रादिऋषिचतुष्टयवक्तव्यता।

अत्रैव भरतक्षेत्रे, तुङ्गिकाऽऽख्याऽभवत् पुरी। ईशानकूणके तस्याश्चैत्यं पुष्पवदस्ति सत् ॥ १ ॥ वसन्ति बहवस्तत्र, श्रावकाः परमर्द्धयः। विस्तीर्णविपुलाऽऽगार-यानासन-परिग्रहाः ॥२॥ बहुसुव(वर्णस्व)र्ण-दुर्वर्णा, दास-दासीभिराश्रिताः। गो-महिष्येडकाकीर्णा, नान्यगेहप्रवेशकाः ॥३॥ सदोद्घाटितकपाटा, प्रसृतभक्त-पयश्रयाः। जीवाजीवादितत्त्वज्ञा, ज्ञातसत्पुण्य-पापकाः ॥४॥ संवराऽऽश्रवनिष्णाताः, कुशला जिनशासने। नैर्ग्रन्थ्यप्रवचनाग्नो, चाल्याः सुरासुरैरपि ॥ ५ ॥ देव-गुर्वनुरागेण, रक्तान्तःसप्तधातवः। बहुभिर्भावितात्मानः, शील-व्रत-गुणव्रतैः ॥ ६ ॥ चतुर्दश्यष्टमी-राकाऽमावास्याऽऽदिषु पर्वसु। पालयन्तोऽखिलं सम्यक्, पौषधं शुद्धचेतसः ॥७॥ प्रासुकाशन-पानीय-वस्त्र-पात्रासनौषधान्। तथाविधश्रमणेभ्यो, ददाना लाभमिच्छवः ॥ ८ ॥ [ सप्तभिः कुलकम् ] विहरन्तोऽन्यदा पार्श्वापत्यानि स्थविरर्षयः। बहिः पुष्पवदुद्याने, नगर्याः समवासरन् ॥९॥ तदागममभी श्राद्धा, निशम्योचुः परस्परम्। नाम्नोऽपि श्रवणं भो भो!, महर्षीणां महाफलम् ॥ १० ॥ किं पुनस्तदभिगमन-नमस्या-पर्युपासनाः ?। आगमना तत्र तद् याम, एवमित्यूचिरेऽखिलैः ॥ ११ ॥ ततः स्वगृहमेत्यामी, स्नाताः कृतबलिक्रियाः। कृतकौतुकम(मा)ङ्गल्याः, कृतशुद्धाङ्गवाससः ॥१२॥ महर्घ्या(र्घ्या-)भरणाश्लिष्टाः, स्वस्वगेहाद् विनिर्ययुः। मिलित्वैकत्र पूर्मध्यात्, पादचारेण निर्गताः ॥१३॥ [ युग्मम् ] गत्वा पुष्पवदुद्याने, पञ्चाभिगमपूर्वकम्। ते पादान् मुनिपादानां, नत्वा तस्थुर्यथाऽऽस्पदम् ॥१४॥ तवस्तैर्मुनिभिश्च(चा)तुर्यामो धर्मो निवेदितः। यथा केशिगुरोः श्राद्धा, भूत्वाऽऽस्ताऽऽराधका इति ॥१५॥ निर्णीतार्थास्ततः श्राद्धाः, पप्रच्छुः स्थविरानिति। संयमः किंफलः ? पूज्याः!, किं वा, पूज्यास्तपःफलम् ? ॥ १६ ॥ अनाश्रवफलः श्राद्धाः!, संयमो हि तथा तपः। व्यवदानफलं वे(वे)ति, स्थविरा ददुरुत्तरम् ॥ १७ ॥ पप्रच्छुस्ते पुनः श्राद्धाः, स्वर्गे किंप्रत्ययात् सुराः। उत्पद्यन्तेऽथ, कालिकपुत्रस्तत्रेदमब्रवीत् ॥ १८ ॥ आर्याः पूर्वतपोयोगादुत्पद्यन्ते सुरा दिवि। ऊचे च मेखलिमुनिः, पूर्वसंयमतस्तथा ॥ १९ ॥ तथाकार्मिकतया साधुरुचे

चाऽऽनन्दरक्षितः । तथासङ्ग(ङ्गि)तया देवोत्पत्तिमाहर्षिकाश्यपः ॥ २० ॥ एवं पूर्वतपः-पूर्वसंयमाभ्यां सुरालये । तथाकार्मिकतया सङ्ग(ङ्गि)तयोत्पत्तिश्च नाकिनाम् ॥ २१ ॥ ततस्तान् स्थविरान् नत्वा, श्राद्धास्ते च्छिन्नसंशयाः । स्वं स्वं स्थानं ययुः सर्वेऽन्यत्र ते मुनयोऽपि हि ॥ २२ ॥ इति श्रीपञ्चमाङ्गोक्तानुसारेण चतुर्मुनिसम्बन्धः ॥ तथाऽत्र केषुचित् नवीनादर्शेषु प्रक्षेपरूपं(प)गाथात्रयमिदमपि दृश्यते—

जंतंतपंचरत्तं(त्तिं)पाओवगयं तु खायइ सियाली । मुग्गिल्लसेलसिहरे, वंदे कालासवेसरिसिं ॥ ५२ ॥

धम्मे दढसन्नाहो, जो निच्चं मंदरो इव अकंपो । इहलोगनिप्पिवासो, परलोगगवेसओ धीरो ॥ ५३ ॥

जो सोमेण जमेण य, वरुणेण वेसमणेण य महप्पा । मुग्गिल्लसेलसिहरे, नमंसिओ तं नमंसामि ॥ ५४ ॥

व्याख्या—तिसृणां गाथानामक्षरार्थः सुगम एव ॥ ५२-५३-५४ ॥ भावार्थस्त्वप्रसिद्धत्वात् नोक्तः । यथाज्ञातः समयज्ञैः स्वयं ज्ञेयः ॥

अथ कालास्यवैशिकसुतर्षिमाह—

कालासवेसियसुओ, आया सामाइय त्ति थेराणं । वयणं सोउं पडिवन्नपंचजामो गओ सिद्धिं ॥ ५५ ॥

व्याख्या—कालास्यवैशिकसुतः सिद्धिं 'गतः' प्राप्त इति क्रिया । किं कृत्वा ? श्रुत्वा, किं तद् ? वचनं, केषां ? स्थविराणां, तत् किंलक्षणम् ? 'आत्मा' जीवः सामायिकमिति । किंविशिष्टः ? 'प्रतिपन्नपञ्चयामः' अङ्गीकृतपञ्चमहाव्रतः । इति गाथार्थः ॥५५॥ भावार्थश्चायम्—

पार्श्वापत्यमभूत् कालास्यवैशिकसुतो मुनिः । सोऽन्यदा स्थविरान् वीरशिष्यानेवमुवाच च ॥ १ ॥ सामायिकं तदर्थं च, स्थविरा नैव जानते । प्रत्याख्यानं तदर्थं च, स्थविरा नैव जानते ॥ २ ॥ संवरं संवरार्थं च, संयमं च तदर्थकम् । विवेकं च विवेकार्थं, व्युत्सर्गं तत्प्रयोजनम् ॥ ३ ॥ जानन्ति स्थविरा नैतत्, तत् श्रुत्वा स्थविरा जगुः । सामायिकादि पूर्वोक्तं जानीमः सम्यगार्य ! भोः ॥ ४ ॥

कालास्य-वैशर्षिस्तवनं कालास्य-वैशिक-सुतमुनि-वर्णनं च ।

कालास्यवैशिकसुतोऽपृच्छत् सामायिकं हि किम् ? । आत्मा सामायिकं चाऽऽत्मा, व्युत्सर्गश्चेति तेऽवदन् ॥ ५ ॥ पप्रच्छासौ पुनर्गर्हा; गर्हा वा संयमे किमु ? । ऊचुस्तेऽसंयमे गर्हा, न गर्हा चाऽऽर्य! संयमे ॥ ६ ॥ इत्याद्यनेकपृच्छायां, सम्यग्दत्तोत्तरः स तैः । कालास्यवैशिकसुतो, नत्वा तानिदमब्रवीत् ॥७॥ आर्याः! सम्यक्श्रुततथा, बोध्यनभिगमत्वतः । अर्थोऽवधारितो नायमिदानीं त्ववधारितः ॥ ८ ॥ इदानीं श्रद्दधामीदं, ततो भगवदन्तिके। पञ्चयामं प्रपद्येऽस्मि, सप्रतिक्रमणं वृषम् ॥ ९ ॥ तेऽप्यूचुः प्रतिबन्धोऽत्र, मा कार्य आर्य! भोस्ततः । सोचक्रेऽसौ पञ्चयामं, सप्रतिक्रमणं वृषम् ॥ १० ॥ कालास्यवैशिकसुतः, श्रामण्यं बहुवत्सरान् । प्रपाल्य चान्तिमोच्छ्वासनिःश्वासैः शिश्रिये शिवम् ॥ ११ ॥ भगवत्यनुसारेणाऽयं सम्बन्धोऽस्य दर्शितः । व्यासार्थिनाऽन्यतः शास्त्रान्तराद् ज्ञेयो विपश्चिता ॥ १२ ॥ इति श्रीखरतरगच्छशृङ्गारहारश्रीगुणरत्नाचार्यशिष्यवर्य-वाचनाचार्य-पद्ममन्दिरगणिविरचितायां श्रीऋषिमण्डलप्रकरणवृत्तौ चतुर्थो विश्रामः ॥

## अथ पञ्चमो विश्रामः ।

पुक्खलवई(ए) विजए सामी पुंडरीगिणीए नयरीए । दट्ठूण कंडरीयस्स कम्मदुविलसियं घोरं ॥ ५६ ॥

सिरिपुंडरीयराया, निक्खंतो काउ निम्मलं चरणं । थोवेण वि कालेणं, संपत्तो जयउ सवट्ठे ॥ ५७ ॥

व्याख्या—श्रीपुण्डरीको राजा 'जयतु' जयमनुभवतु इति द्वितीयगाथान्ते क्रियायोगः । किंविशिष्टः ? 'सम्प्राप्तः' गतः, कस्मिन् ? "सवट्ठ" त्ति सर्वार्थसिद्धि(द्ध)विमाने, किं कृत्वा ? कृत्वा, किं तत् ? 'चरणं' चारित्रं, किंविशिष्टं ? 'निर्मलं' निरतीचारम् । पुनः किंविशिष्टः? 'निष्क्रान्तः' राज्यादेः, 'प्राकृतत्वात् पञ्चम्यर्थे तृतीया' स्तोकादपि कालात् । इति द्वितीयगाथार्थः ॥ पुनः किंविशिष्टः ? स्वामी, कस्याः ?



कालास्यवैशिकसुतमुनिवर्णनसमाप्तिर्विश्रामसमाप्तिश्च । पुण्डरीककण्डरीकसत्कनम् । ॥ ७० ॥

'नगर्याः' पुर्याः, किंनाम्न्याः ? पुण्डरीकिण्याः, कस्मिन् ? पुष्कलावतीविजये, किं कृत्वा ? दृष्ट्वा, किं तत् ? 'कर्मदुर्विलसितं' कर्मणो दुश्चेष्टितं, कीदृक्षं ? 'घोरं' रौद्रं, कस्य ? 'कण्डरीकस्य' राजकुलाङ्गारस्य। इति प्रथमगाथार्थः ॥५६-५७॥ भावार्थस्तु कथानकगम्यः। तच्चेदम्—

पुष्णातु परमानन्दं, श्रीवीरः परमेश्वरः। यन्नामतोऽभिगच्छन्ति, विघ्नव्राता दिगन्तरम् ॥ १ ॥ एकाऽप्यनेकधीभूय, यद्गौश्चित्रं क्षमाभृताम्। त्रस्तत्रासा चरत्यन्तः, स श्रीवीरः पिपर्त्तु शम् ॥ २ ॥ पुरी पुराऽभवत् पृष्ठचम्पाऽऽख्याऽत्रैव भारते। युवराजमहाशालभ्राता शालोऽत्र पार्थिवः ॥ ३ ॥ पिठरेण महीभर्त्रा, परिणीता यशोमती। तयोः स्वसा सुतस्तस्या गागलिर्नामतोऽभवत् ॥ ४ ॥ इतश्च धर्मचक्रेण, दिव्येनाऽऽकाशगामिना। धृतच्छत्रत्रयो देवैर्वालव्यजनवीजितः ॥ ५ ॥ पुरः स्फुरत्सुरश्रेष्ठचालितस्फटिकासनः। स्फुरद्भामण्डलज्योतिरुद्योतितदिशाननः ॥६॥ प्रोत्तुङ्गेन्द्रध्वजभ्राजी, बहुकोटिसुराश्रितः। चतुर्दशसहस्रैश्च, सेव्यमानस्तपोधनैः ॥७॥ चतुस्त्रिंशदतिशयैर्युतो भव्याम्बुजाऽर्यमा। जगच्चिन्तामणी(णि)कल्पो, भवाम्बुधिवहित्रकः ॥८॥ दीप्ततेजा रविरिव, सोमलेश्यो मृगाङ्कवत्। सर्वंसहो धरित्रीव, शौण्डीरः सिंहवद् विभुः ॥ ९ ॥ गम्भीरो वारिधिरिव, स्वच्छात्मा सागराम्बुवत्। पारीन्द्र इव दुर्धर्षो, निष्प्रकम्पः सुराद्रिवत् ॥ १० ॥ निरञ्जनः शङ्ख इवाप्रतिबद्धः समीरवत्। व्योमेव निरुपलेपः, कूर्मवद् गोपितेन्द्रियः ॥ ११ ॥ अष्टोत्तरसहस्रामनरलक्षणलक्षितः। सुरसञ्चारितस्वर्णपद्मेषु स्थापयन् क्रमान् ॥ १२ ॥ विहरन् क्रमयोगेन, ग्रामानुग्राममीयिवान्। पृष्ठचम्पां पुरीं वीरस्तद्वने समवासरत् ॥ १३ ॥ [ नवभिर्विशेषकम् ] महाशालयुतः शालो, नृपः श्रुत्वाऽर्हदागमम्। केकीव जलदध्वानं, ननर्त्ताऽऽनन्दनर्त्तनैः ॥ १४ ॥ निर्गतो भगवद्वन्दनार्थं शालोऽनुजानुगः। ववन्दे भक्तितोऽर्हन्तं, गत्वा दत्त्वा प्रदक्षिणाः ॥ १५ ॥ उपविष्टो यथास्थानमारब्धा देशनाऽर्हता। वर्णिता मर्त्त्यजन्माद्या, सामग्री दुर्लभाऽङ्गिनाम् ॥ १६ ॥ निर्दिष्टाः कर्मबन्धस्य, मिथ्यात्वाद्यास्तु हेतवः।

महारम्भादिकं चो(वो)क्तं, नरकायुर्निबन्धनम् ॥१७॥ भवभ्रमणहेतुत्वं, कषायाणामुदाहृतम् । मोक्षसौख्यावहो मार्गो, दर्शितो दर्शनादिकः ॥१८॥ निशम्य सम्यगुर्वीशो, नत्वेशं प्राह सोदरम् । यावद् राज्येऽभिषिच्यैमि, प्रव्रजाम्यन्तिके तव ॥ १९ ॥ ततः शालो महाशालं, गृहमेत्याऽऽह सोदर ! (-रम्) । गृहाण राज्यमादास्ये, प्रव्रज्यामन्तिकेऽर्हतः ॥ २० ॥ नरकान्ते(न्त्ये)न राज्येन, सृतमित्याह सोऽनुजः । भ्रातर्मुख्यो यथा राज्ये, व्रतेऽपि भव मे तथा ॥ २१ ॥ ततो गागलिरानाय्य, काम्पील्याद् भगिनीसुतः । राज्येऽभिषिक्त एताभ्यां, यद्वपट्टोऽभवत् नृपः ॥२२॥ आरुह्य शिबिकां शालो, राज्ञा नीतः ससोदरः । व्रतं जग्राह वीरान्ते, श्राविकाऽभूद् यशोमती ॥ २३ ॥ पपाठैकादशाङ्गानि शालर्षिर्बन्धुना समम् । ततश्च भगवानागात्, पुना राजगृहे पुरे ॥ २४ ॥ पप्रच्छतुर्मुनी चम्पापुरीं यान्तं जगद्गुरुम् ( चम्पां, पुरीं यावस्त्वदाज्ञया ) । पृष्ठिचम्पां पुरीं यावः ( गागल्याद्याः सगीना नौ ), स्यात् कश्चित् तेषु बुध्यते ॥ २५ ॥ ज्ञानवानादिदेशैवो, गौतमेन समं ततः । जग्मुस्त्रयोऽपि ते पृष्ठ(ष्ठि)चम्पायां समवासरन् ॥ २६ ॥ निर्ययौ गागली राजा, पिठरश्च यशोमती । तद्वन्दनाय नत्वैतानुपविष्टा यथाश्र(श्रि)यम् ॥ २७ ॥ देशनां गौतमश्चक्रे, प्रबुद्धो गागलिर्नृपः । पप्रच्छ पितरौ दीक्षाकृते ताविदमूचतुः ॥ २८ ॥ भवोद्विग्नो भयान् वत्स !, यथाऽऽवामप्यहो तथा । स्यावावो भवकारायां, नैवाऽऽकर्णितदेशनो ॥ २९ ॥ ततो राज्येऽभिषिच्याऽऽत्मपुत्रं ज्ञात्वा तदाशयम् । गागलिः पितृ-मातृभ्यां, समं संयममाददे ॥ ३० ॥ चचाल प्रभुमुद्दिश्याऽऽत्मपञ्चो गौतमो मुनिः । सर्वत्रापि फलप्राप्तिर्भवेद् भाग्याद्भुतात्मनाम् ॥ ३१ ॥ भव्यं(वयं) निस्तारिता एते(-तैः), चिन्तयन्ताविति स्थितिम् ॥ मार्गे शाल-महाशालौ, केवलज्ञानमापतुः ॥ ३२ ॥ निदध्युस्ते त्रयोऽप्येवमेताभ्यां राज्यसम्पदम् । प्रापिताः प्रागिदानीं तु, स्थापिताः संयमाध्वनि ॥३३॥ ऐहिकामुष्मिकसुखप्रापकौ तदिमाविति । शुभध्यानजुपामेषामुत्पेदे केवलं पथि ॥ ३४ ॥ जातकेवलिन(सञ्जातकेवला)श्चम्पां, पञ्चाप्येवं

पुरीमगुः । ववन्दे गौतमो वीरं, चिराद् दृष्टमिवोत्सुकः ॥ ३५ ॥ प्रभुं प्रदक्षिणीकृत्य, प्रति केवलिपर्षदम् । तीर्थं नत्वा गच्छतस्तान्, मुनीन् वीक्ष्याऽऽह गौतमः ॥ ३६ ॥ भद्रा' आयात वन्दध्वं, वीरमित्युदितेऽमुना । स्वाम्याह माऽत्र केवल्याशातनां कुरु गौतम ! ॥३७॥ आयुक्तः क्षमयामास, गौतमः सरलाशयः । न सेत्स्यामीति सन्देहं, चक्रे चेतसि चाऽऽत्मनः ॥ ३८ ॥ इतश्च सुरसंलाप इत्यभूदुक्त-मर्हता । वन्दतेऽष्टापदे देवान्, यः स्वशक्त्या स सिद्ध्यति ॥ ३९ ॥ तद्वन्दनकृते वीरं, गौतमोऽपृच्छदुत्सुकः । तपस्विबोधः स्थिरता, स्यादस्येत्यादिशद् विभुः ॥४०॥ निशम्य जनवादं तं, प्रत्येकं तापसास्त्रयः । शतपञ्चपरीवारा उपाष्टापदमैयरुः ॥४१॥ कृत्वादि-चतुर्थं कौण्डि(कोडि)न्याः, कन्दमूलादिपारणम् । कुर्वाणा आद्यसोपानारोहणे शक्तिमासदन् ॥ ४२ ॥ दिन्नाद्याः षष्ठमाधाय, जीर्णपर्णपारणम् । चक्रुर्द्वितीयसोपानारोहणे लेभिरे बलम् ॥ ४३ ॥ सैवालितापसाश्चक्रुरष्टमं पारणं पुनः । चक्राणाः शुष्कसेवालैस्तृतीयां मेखलां ययुः ॥ ४४ ॥ हृष्ट(ः)तुष्टः प्रभुं नत्वाऽऽदेशमासाद्य गौतमः । चचालोद्दिश्य कैलासमुद्गच्छदरुणच्छविः ॥ ४५ ॥ दूरादायान्तमा-लोक्य, तापसास्तं तपोधनम् । गर्जद्गजाकृशाकारं, वारंवारमिदं जगुः ॥ ४६ ॥ हंहो! यतिरसौ स्थूलः, कथमद्रिं चटिष्यति ? । शुष्काः कृशा अपि वय, नाऽऽरोढुं शक्नुमो हि यम् ॥४७॥ लूतातन्तूनिवार्कस्य, करान् चाऽऽश्रित्य गौतमः । आरूढवान् गिरेः शृङ्गं(ङ्गे), जङ्घाचारणलब्धिमान् ॥ ४८ ॥ ब्रुवतामयमायाति, तेषामुत्पश्यतामपि । अदृश्यो भगवान् जज्ञे, विद्युद्द्योतवत् क्षणात् ॥ ४९ ॥ भवि-ष्यामोऽमुष्य शिष्याः, प्रत्यायातस्य वेत्स्यमी । उन्मुखास्तापसास्तस्थुः पश्यन्तो गौतमाऽऽगमम् ॥ ५० ॥ स्वस्ववर्णप्रमाणाङ्कयुक्तार्हद्बि-विम्बमण्डितम् । उच्चैःसिंहनिषद्याख्य, प्रासादं मुनिरासदत् ॥ ५१ ॥ अष्टापदशिरोरत्नं, भरताधीशकारितम् । नृणामहोरात्रमात्रवासेन शिवसौख्यदम् ॥ ५२ ॥ ववन्दे प्रतिमास्तत्र, सूत्रोक्तविधिना मुनिः । गम्भीरार्थां स्तुतिं चक्रे, हर्षाश्रुप्लावितेक्षणः ॥ ५३ ॥ प्रणिधानं विधा-

तैर्यथासुखमित्युक्ते, गत्वा भूपस्तदन्तिकम्। अनैषीद् यानशालायामभ्यर्थ्योपावहेतवे ॥ ९२ ॥ पथ्यैस्तत्रागदङ्कारैर्मुनिर्नीरुगभूत् क्षणात्। मूर्छितो मधुराहारैर्विजह्रे नर्षिभिः परम् ॥ ९३ ॥ धन्यः सुलब्धजन्माऽसि, कृतपुण्योऽसि सर्वथा। राज्यं प्राज्यं विहाय स्वं, प्राव्राजीद् यद् भवान् मुने! ॥९४॥ इत्युक्तः पुण्डरीकेण, त्रिःकृत्वः(त्वा) श्रमणाधमः। कालं कियन्तं स्थविरैर्विजहार मनो विना ॥ ९५॥ पश्चाद् यतिगुणोन्मुक्तोऽवसन्नीभूय दुर्मुनिः। भूत्वा तेभ्यः पृथग् राजधानीं स्वभ्रातुराययौ ॥ ९६ ॥ आसीनोऽशोकवृक्षाधः, शाड्वलोर्व्यां शिलोपरि। किञ्चित् शून्यमना ध्यायन्, धात्र्याऽत्राऽऽगतयेक्षितः ॥९७॥ पुण्डरीकाय साऽऽचख्यौ, तदागममसावपि। सान्तःपुरपरीवारो, वन्दनार्थमथाऽऽगमत् ॥ ९८ ॥ धन्योऽसि कृतपुण्योऽसीत्याद्युक्तोऽपि नृपेण सः। व्रतमोचनदुर्ध्यानात्, न निवृत्तो मनागपि ॥ ९९ ॥ किं कार्यमार्य! भोगैस्ते?, राज्ञोक्तोऽवोचदुच्चकैः। हन्त! कार्यमथो भूपस्तं राज्येऽभिषिषेच च ॥१००॥ पुण्योदयमिवादाय, तस्योपकरणं स्वयम्। प्राव्राजीद् विधिनाऽऽधाय, लोचं च पञ्चमु(मौ)ष्टिकम् ॥१०१॥ धर्मं प्रपद्य गुर्वन्ते, भोक्तुं भक्तादि कल्पते। ममेत्यभिग्रहं लात्वाऽचालीत् सोऽभिमुखं गुरोः ॥ १०२ ॥ प्रपेदेऽसौ चतुर्यामं, धर्मं प्राप्य गुरून् ततः (पुनः)। चक्रेऽष्टमतपःपारणकं च भिक्षयाऽऽप्तया ॥१०३॥ ततश्च कालातिक्रान्त-शीतान्त-प्रान्तया तया। जज्ञिरे परिणतया, दुस्सहास्तस्य वेदनाः ॥१०४॥ धर्तुं न शक्यतेऽथायुश्चकाराऽऽराधनां मुनिः। नमोऽस्तु मेऽर्हदादिभ्यो, प्रतोद्धारोऽस्तु तत्गुरः ॥१०५॥ आलोचित-प्रतिक्रान्तः, कालं कृत्वा समाधिना। त्रयस्त्रिंशत्समुद्रायुः, सर्वार्थेऽगाच्च सेत्स्यति ॥१०६॥ कण्डरीकोऽपि सम्प्राप्य, साम्राज्यं मलिनायतिः। आकण्ठं बुभुजे सर्वरसाहारमतृप्तितः ॥१०७॥ तेनाजीर्णेन पीडार्त्तः, सामन्त-सचिवादिभिः। ममारानुपचरितो, रौद्रध्यानानुगस्तु सः ॥१०८॥ त्रयस्त्रिंशत्समुद्रायुरुत्पेदे सप्तमावनौ। स्थूलत्वं वा कृशत्वं वा, तत्र श्रीदात्र कारणम् ॥१०९॥ बभूव कण्डरीकोऽतिकृशाङ्गो दुःखभाजनम्। उत्फुल्लगल्ल-कण्ठोऽपि, पुण्डरीकः सुखाऽऽस्पदम् ॥११०॥

ध्याननिग्रह एवात्र, हेतुः कश्चिन्न चापरः । अहो ! ज्ञातं ममाकूतं, श्रीदः श्रुत्वेति हृष्टवान् ॥१११॥ श्रीवज्रस्वामिनो जीवस्तस्य सामानिकः सुरः । तत् चक्रेऽध्ययनं कण्ठे, श्रुत्वा पञ्चशतीमितम् ॥११२॥ प्रातः प्रवस्थे चैत्यानि, पुनर्नत्वाऽथ गौतमः । तत्राऽऽगात् तापसा यत्रोत्पश्यन्तः सन्ति तत्पथम्(थाः) ॥११३॥ तं दृष्ट्वा तापसाः प्रोचुर्वयं शिष्या भवान् गुरुः । स्वाम्याह मम युष्माकं, गुरुर्वीरो जगद्गुरुः ॥११४॥ किं तवापि गुरुः स्वामिन्नित्युक्ते प्राह गौतमः । गुणाननन्यसामान्यान्, प्रातिहार्यादिकान् प्रभोः ॥११५॥ जातः शुभः परीणामस्तेषां तान् शृण्वतां गुणान् । कर्मग्रन्थिस्तु तुत्रोट, झटित्युद्घटिते दृशौ ॥ ११६ ॥ दीक्षिता देवतादत्तलिङ्गास्ते गौतमर्षिणा । सर्वेषां गच्छतां तेषां, मध्याह्नावसरोऽभवत् ॥ ११७ ॥ पप्रच्छ गौतमो वत्साः!, कस्मिन् भक्ते भवद्रुचिः ? । शुष्कसे(शै)वालदग्धाश्चास्तेऽप्याहुः पायसे प्रभो! ॥११८॥ पात्रकं प्रतिलिख्येन्द्रभूतिर्ग्रामं प्रविष्टवान् । जाग्रद्भाग्यमिवैकस्य, गृहिणो गृहमाप च ॥ ११९ ॥ अनभ्रवृष्टिदुष्प्रापं, मरौ सुरतरूपमम् । मन्यानः परमान्नेन, तमसौ प्रत्यलाभयत् ॥ १२० ॥ पात्रकं परमान्नेन, साऽऽज्य-खण्डेन गौतमः । पूरयित्वा ययौ शीघ्रमूचे चैवं तपोधनान् ॥ १२१ ॥ तिष्ठन्तु परिपाट्या भोः!, स्थितास्तेऽपि ततः (पः)क्रमात् । भगवान् सर्वलब्ध्याढ्यो, ददौ तेषां तदीप्सितम् ॥ १२२ ॥ सैवालितापसाश्चाऽऽश्चाश्चैतस्तेवमचिन्तयन् । अहो ! गुरोः प्रभावोऽस्य, जगद्विस्मयकारणम् ॥ १२३ ॥ धन्या वयं यकैः प्राप्तोऽचिन्त्यचिन्तामणि(णी)समः । गुरुरद्भुतमाहात्म्यस्तपस्या चाद्भुताऽऽर्हती ॥ १२४ ॥ इति चिन्तयतां तेषामर्द्धभुक्तेऽपि(च) केवलम् । कवलं केवलायाभूदहो ! शक्तिर्महात्मनाम् ॥ १२५ ॥ छत्रातिच्छत्रमालोक्याऽपूर्वादिकरणक्रमात् । सद्ध्यानात् केवलं प्रापुः, स्वामिनो दिन्नतापसाः ॥१२६॥ कोडि(कौण्डि)न्यतापसाः स्वामिरूपं विजितविष्टपम् । वीक्ष्याऽऽपुः केवलं कल्पद्रुमाप्तौ को हि निर्द्धनः ? ॥१२७॥ प्रभुं प्रदक्षिणीचक्रे, गौतमस्तेऽखिलर्षयः । तीर्थाय नम इत्युक्त्वा, चेलुः केवल(लि)पर्षदि ॥१२८॥ भद्रा! आयात वन्दध्व-

मित्युक्ते गौतमर्षिणा । स्वाम्याख्यदिन्द्रभूते ! मा, केवल्याशातनां कुरु ॥ १२९ ॥ आयुक्तो विदधे मिथ्यादुष्कृतं चाधृतिं मुनिः । स्वाम्याह किं वचो ग्राह्यं, देवानामथवाऽर्हताम् ? ॥ १३० ॥ अर्हतां गौतमेनोक्ते, तर्हि किं कुरुषेऽधृतिम् ? । ततः प्रभुरुवाचोच्चैः, शुम्भादींश्चतुरः फटान् ॥१३१॥ भवांश्च कम्बलकटानुरागो मयि वर्त्तते । संसृष्टो गौतम ! चिरं, चिर(भृशं)परिचितोऽसि मे ॥१३२॥ प्रशस्तेष्वपि रागस्तु, यथाख्यातप्रतापहः । तद्विना केवलोत्पत्तिर्न स्यादिह महात्मनाम् ॥१३३॥ सरागसंयमर्षीणां, वीतरागत्वहेतुतः । रागः प्रशस्तोऽप्रशस्तरागत्यागात् मतः(-गात्मनः) परम् ॥ १३४ ॥ तस्माद् विषादं मा गच्छोत्पत्स्यते वत्स ! केवलम् । क्षीणरागस्य ते प्रान्ते, भविष्यावोऽचिरात् समौ ॥ १३५ ॥ ततोऽब्रवीद् द्रुमपत्राध्ययनं तत्पुरः प्रभुः । इदं प्रसङ्गतोऽत्रोक्तं, वाच्यं स्यात् पुरतोऽपि यत् ॥ १३६ ॥ इति श्रीपुण्डरीकादिप्रबन्धः ॥ तथा—

वीरजिणपुव्वपियरो, देवाणंदा य उसभदत्तो य । इक्कारसंगविउणो, होऊणं सिवसुहं पत्ता ॥ ५८ ॥

व्याख्या—वीरजिनस्य–अन्त्यार्हतः पूर्वपितरौ, कौ ? देवानन्दा च ऋषभदत्तश्च एकादशाङ्गवेत्तारौ भूत्वा 'शिवसुखं' मोक्षशर्म प्राप्तौ । इति गाथासंस्कारार्थः ॥ ५८ ॥ भावार्थश्चायम्—

अन्येद्युर्भगवान् वीरो, विहरन् समवासरत् । ब्राह्मणकुण्डग्रामस्य, बहुशालाभिधे वने ॥ १ ॥ देवाः समवसरणं, चक्रिरे पर्षदाययौ । देवानन्दर्षभदत्तावीयतुर्दम्पती च तौ ॥ २ ॥ प्रभुं नत्वर्षभदत्तो, यथास्थानमुपाविशत् । देवानन्दाऽप्युदानन्दा, पृष्ठस्थाऽस्थात् निजेशितुः ॥३॥ स्तनाभ्यां प्रक्षरत्स्तन्यां, देवीवानिमिषेक्षणा(ण)म् । पश्यन्तीं तां प्रभुं वीक्ष्य, गौतमोऽपृच्छदुत्सुकः ॥४॥ जगच्चकोरशीतांशो(शो !), त्वयि सर्वोऽपि सादरः । ब्राह्मणीयं विशेषेण, किमिति ब्रूहि कारणम् ? ॥५॥ गौतमं गौतमगुरुरूचे ब्यशीत्यहान्य-



पुण्डरीक-कण्डरीक-प्रबन्ध-समाप्तिः ।

श्रीवीरपूर्व-मातृ-पितृ-सम्बन्धः ।

हम् । कुक्षावमुष्या उषितः, स्नेहोऽस्यास्तन्महान् मयि ॥ ६ ॥ तत् श्रुत्वा दम्पती हृष्टौ, चिन्तयामासतुर्हृदि । अहो ! क पितरावावां ?, कायं सूनुर्जगत्पिता ? ॥ ७ ॥ उत्थाय नेमतुर्वीरं, पितरौ हर्षनिर्भरौ । तौ हत्र दुष्प्रतीकारौ, चक्रेऽर्हन्निति देशनाम् ॥ ८ ॥ असारसंसृतावत्र, पिताऽयं सूनुरेष वा । घटते विघटते च, सम्बन्धो बहुशोऽङ्गिनाम् ॥९॥ तद् वस्तु वस्तुतो युक्तियुक्तं नात्रावभासते । विना दीक्षां तदुच्छित्तिः, सर्वथा नहि जायते ॥ १० ॥ तत् श्रुत्वा तौ पुनर्नत्वा, श्रीवीरमिदमूचतुः । निस्तारय भवादावां, दीक्षातयोऽधुना विभो ! ॥ ११ ॥ एवमस्त्वर्हता प्रोक्ते, तौ गत्वेशानकूणके । पञ्चमुष्टिकचोत्पाटं, कृत्वा त्यक्त्वा त्वलङ्कृतीः ॥१२॥ पुनर्नत्वोचतुर्नाथं, जन्म-मृत्यु-जराऽऽकुलात् । भवान्निस्तारय स्वामिन् !, दीक्षितौ तौ ततोऽर्हता ॥ १३ ॥ [ युग्मम् ] देवानन्दा चन्दनायै, स्थविरेभ्यस्त्वृषभम् । शिक्षाद्वैविध्यसिद्ध्यर्थं, ददौ दीक्षागुरुस्तयोः ॥ १४ ॥ पठित्वैकादशाङ्गानि, पालिताखण्डितव्रतौ । देवानन्दर्षभदत्तौ, जग्मतुः पदमव्ययम् ॥ १५ ॥ इति श्रीवीरपूर्वपितृसम्बन्धः ॥

श्रीवीरपूर्व-मातृ-पितृ-सम्बन्धः ।

अथ यथाक्रमं चत्वारः प्रत्येकबुद्धा दर्श्यन्ते—

**संबुद्धो दट्ठूणं, रिद्धिं वसहस्स जो अरिद्धिं च । सो करकण्डू राया, कलिंगजणवयवई जयउ ॥ ५९ ॥**

प्रथमकरकण्डुप्रत्येकबुद्ध-वक्तव्यता ।

व्याख्या—'सः' प्रसिद्धः करकण्डू राजा जयतु इति क्रिया । स कः ? यः 'सम्बुद्धः' प्रतिबुद्धः, किं कृत्वा ? 'दृष्ट्वा' वीक्ष्य, काम् ? 'ऋद्धिं' सम्पदं 'च' पुनः अनृद्धिं, कस्य ? 'वृषभस्य' गोः । किंविशिष्टो राजा ? 'कलिङ्गजनपदपतिः' कलिङ्गदेशस्वामी । इति गाथार्थः ॥५९॥

भावार्थश्चायम्—

आसीत् चम्पामहापुर्यां, पार्थिवो दधिवाहनः । चेटकस्य सुता पद्मावती तस्य प्रियाऽभवत् ॥१॥ गजाऽऽरूढा धृतच्छत्रा, राज्ञैत-

द्वेपभूपणा । भ्रमामि वनमित्यस्याः, सम्पन्नो दोहदोऽन्यदा ॥ २ ॥ तदपूर्त्यां कृशाङ्गा सा, पृष्टा राज्ञाऽऽशयं जगौ । ततो राज्ञा धृतच्छत्राऽऽरूढा पद्मावती गजे ॥३॥ गतोद्यानं(ने) तदाऽऽद्योऽभूत्, प्रावृट्कालोऽथ कुञ्जरः । सुगन्धमृत्तिकागन्धाभ्याहतो वनमसरत् ॥ ४ ॥ काननाभिमुखं हस्ती प्रतस्थेऽवमताङ्कुशः । शक्तोऽनुगन्तुं तं (न) कश्चित्, न सादी न पदातिकः ॥ ५ ॥ द्राक् नीतो करिणा तेन, दम्पती तौ महाटवीम् । ऊर्ध्वं(दूराद्) वटतरुं दृष्ट्वा, राज्ञ्यै राजेदमब्रवीत् ॥ ६ ॥ प्रिये ! यास्यत्यधोऽस्यैष, ग्राह्या शाखा त्वया दृढम् । राज्ञा गृहीता दक्षेण, तस्थौ राज्ञी तथैव हि ॥ ७ ॥ किंकर्त्तव्यतया मूढः, सशोकोऽगाद् गृहं नृपः । निर्मानुषाटवीं नीता, तेनेभेन नृपप्रिया ॥ ८ ॥ तृषार्त्तः प्राविशद् दन्ती, सरस्येकेऽम्बुखेलनम् । उत्तीर्णा शनकै राज्ञी, सरसो निर्जगाम च ॥ ९ ॥ न वेत्त्याशां भयभ्रान्ता, पश्यन्ती सर्वतो वनम् । अहो ! कर्मपरीणामो, येनाऽऽप्ताऽस्मीदृशीं दशाम् ॥ १० ॥ तत् किं कुर्वे ? क गच्छामि ?, गतिर्मे केति रोदितुम् । प्रवृत्ता परतन्त्रा सा, क्षणात् चक्रे दृढं मनः ॥ ११ ॥ दध्यौ न ज्ञायते किञ्चिद्, दुष्टश्वापदसङ्कुले । वनेऽस्मिन् भावि मे तस्मादप्रमत्ता भवाम्यलम् ॥ १२ ॥ क्षामिताः सर्वसत्त्वौघा(त्त्वाश्च),श्चतुःशरणमाश्रितम् । सागारं स्वीकृतं प्रायं, दुष्कृतं गर्हितं स्वकम् ॥ १३ ॥ कान्दिशीका दिशां(शं) काञ्चित्, ततः पञ्चनमस्कृतिम् । स्मरन्ती चलितैक्षिष्ट, तापसं सैकममतः ॥१४॥ गत्वाऽभिवादितो राज्ञ्या, तापसः पृष्टवानिमाम् । कुतः पुत्र्यागताऽसीहासूर्यपश्येव वीक्ष्यसे ॥ १५ ॥ सा स्माह यावदानीता, गजेनात्रास्मि कानने । सोऽपि चेटकसम्बन्धी, मा भैपीरिति तां जगौ ॥१६॥ ऊचे च मा स्म शोचीस्त्वमीदृश्येव भवस्थितिः । हेतुर्योग-वियोगानां, रुक्-शोकादिनिबन्धिनी ॥१७॥ उक्त्वा वनफलैः प्राणाजीविका कारिता बलात् । नीत्वा वासभुवं काञ्चित्, तामित्याह स तापसः ॥ १८ ॥ हलाकृष्टोर्वरा भद्रे !, नोचिताऽतः परं हि नः । देशो दन्तपुरस्यायं, दन्तवक्रोऽत्र पार्थिवः ॥ १९ ॥ निर्भयाऽत्राधुनागच्छ, यायाश्चम्पापुरीमनु, इत्युक्त्वा

तापसः पश्चात्, निवृत्तोऽगादियं पुरम् ॥२०॥ पृच्छन्त्युपाश्रयं साध्व्या, गत्वा(ता) नत्वा प्रवर्त्तिनीम्। रुरोद स्थापिवा प्रोच्य, तयाऽसह्यां भयस्थितिम् ॥ २१ ॥ ततः संवेगतस्तासां, मूले सा व्रतमग्रहीत्। दीक्षाऽदानभयाद् गर्भः, साध्वीनां नोदितस्तया ॥ २२ ॥ वर्द्धितेऽस्मिन् प्रवर्त्तिन्याः, सद्भावः कथितः स्वयम्। शासनोड्डाहरक्षार्थं, सा तया स्थापिता रहः ॥ २३ ॥ समं कम्बलरत्नेन, नाममुद्राङ्कितं सुतम्। जातमात्रं स्मशानोर्व्यां, साध्वी पद्मावती जहौ ॥२४॥ ततः स्मशानपालेन, लात्वा पत्न्यै स चार्पितः। अवकार्णिक इत्याख्यां, पितरौ तस्य चक्रतुः ॥ २५ ॥ सा मातङ्ग्या समं प्रीतिं, चक्रेऽपृच्छन्नथाऽऽर्यकाः। साध्वि! क गर्भस्ते? साऽऽख्यत्, मृतो जातोऽत उज्झितः ॥ २६ ॥ स क्रीडति समं बालैस्तान् स्माहास्मि नृपोऽस्मि (नु) वः। करं यच्छन्तु मे कण्डूयनलक्षणमर्भकाः ॥२७॥ रूक्षकच्छूगृहीतत्वात्, करकण्डुरिति व्यधुः। तस्याऽऽर्य्यां बालकाः सोऽपि, संयत्यामनुरागवान् ॥ २८ ॥ साऽप्यानीतान् मोदकांश्चारुभिक्षां चास्मै प्रयच्छति। स्मशानं वर्द्धमानोऽसौ(स्कौ), ररक्ष पितुराज्ञया ॥ २९ ॥ कुतश्चित् कारणात् साधुद्वयं तत्रान्यदाऽऽगतम्। ददर्श वंशजाल्यन्तर्दण्डरत्नं सुलक्षणम् ॥ ३० ॥ मुनिरेकोऽब्रवीदेनं, यो ग्रहीष्यति पार्थिवः। स भावीति(तः) परं योग्यश्चतुरङ्गुलवर्द्धितः ॥ ३१ ॥ तत् साध्वीसूनुनाऽश्रावि, तथैकेन द्विजन्मना। सोऽग्रहीत् तं रहोऽधस्तात्, खनित्वा चतुरङ्गुलम् ॥ ३२ ॥ विलग्नः करकण्डुस्तं, दण्डो मन्मूमयो स्वयम्। न दास्यामीति ते वौ तु, गतौ कारणिकान्तिके ॥ ३३ ॥ तैरुक्तं देहि भो बाल!, द्विजायामुं परं भवान्। गृह्णातु सोऽवदत् कार्यं, केनाप्यन्येन मे नहि ॥ ३४ ॥ ग्रहीष्याम्येनमेवाहं, दण्डमुद्दण्डराज्यदम्। स्मित्वोचुस्ते द्विजायैको, ग्रामो देयस्ततस्त्वया ॥ ३५ ॥ आसि(मे)त्युक्तेऽथ बालेन, दापितोऽस्मै द्विजात् [illegible] तैः। बालग्रहो दुर्ग्रहो हि, ब्रुवद्भिरिति तत्पुरः ॥ ३६ ॥ द्विजास्तेन द्विजेनान्ये, प्रोक्ता हत्वाऽमुमर्भकम्। हरामो दण्डकमिति, तत्पित्रा तत् श्रुतं वचः ॥ ३७ ॥ पितृ-पुत्रास्त्रयो(स्ततो) नष्टाः, काञ्चनाख्यं पुरं ययुः। तत्रापुत्रो

प्रथमकरकण्डुप्रत्येकबुद्धवक्तव्यता।

मृतो राजाऽमात्यैरश्वोऽधिवासितः ॥ ३८ ॥ बहिः सुप्तस्य तस्यान्ते, गत्वा दत्त्वा प्रदक्षिणाम् । स्थितोऽश्वो ददृशुः पौरास्तं सल्लक्षणमाद-रात् ॥ ३९ ॥ जयशब्दं व्यधुर्नन्दीतूर्यवादनपूर्वकम् । जृम्भां कुर्वन् स उत्तस्थावारूढो दिव्यवाजिनम् ॥ ४० ॥ प्रवेशं न ददुर्विप्रास्तस्य मातङ्गसूरिति । गृहीतो दण्डकस्तेनाऽऽरब्धो ज्वालितुमग्निवत् ॥ ४१ ॥ भीता विप्राः स्थिताः सर्वे, ततो धिग्जातयः कृताः । वाटधा-नकवास्तव्याश्च(श्चा)ण्डालाः करकण्डुना ॥४२॥ उक्तं च—"दधिवाहनपुत्रेण, राज्ञा नु (तु) करकण्डुना । वाटधानकवास्तव्याश्चा-ण्डाला ब्राह्मणीकृताः ॥ ४३ ॥" इत्वाऽवकर्णिकाभिख्यां, पितृभ्यां तस्य सद्मनः । चक्रे बालकृतं नाम, करकण्डुरिति स्फुटम् ॥४४॥ स समागा(त्य)द् द्विजो मह्यं, स्वोकं ग्रामं नृपा(मम)र्पय । गृहाणाभिमतं स्वस्य, वाक्शूरः पार्थिवोऽवदत् ॥ ४५ ॥ मद्गृहं देव! चम्पायां, तदासन्नं तम(मा)र्पय । चम्पेशाय ततो लेखः, प्रेषितः करकण्डुना ॥ ४६ ॥ स्वदेशे देहि मे ग्राममेकं यद् रोचते हि ते । पुरं वा ग्रामतुल्यं वा, विषये तद् गृहाण मे ॥ ४७ ॥ दण्डस्पृष्टाहिवद् रुष्टस्तत् श्रुत्वा दधिवाहनः । मातङ्गो वेत्ति नाऽऽत्मानमाज्ञापयति यत् स माम् ॥ ४८ ॥ दूतेनैत्योक्तमस्यैवत्, चम्पा रुद्धाऽऽहवोऽभवत् । साध्वी विज्ञाय तल्लोकक्षयो मा भूत् कृपां दधौ ॥ ४९ ॥ तत्र प्रवर्तिनी चम्पा(पां)पुरीमेत्य तपस्विनी । पिताऽयं वत्स! ते पूज्य इत्याख्यत् करकण्डवे ॥ ५० ॥ तेन तौ पितरौ पृष्टौ, ताभ्यामुक्तं यथास्थितम् । तथाऽप्यहङ्कारवशात्, पितुरन्ते न याति सः ॥ ५१ ॥ ततोऽन्तःपुरमार्याऽगात्, नत्वा दास्योऽरुदंस्तराम् । श्रुत्वाऽऽगत्य नृपो नत्वाऽपृच्छत् स्वं गर्भमार्यिकाम् ॥ ५२ ॥ साऽऽहैष येन ते रुद्धं, पुरं हृष्टः स निर्ययौ । मिलितौ पितृ-पुत्रौ तौ, हर्षाद्वैतात्मतां गतौ (तौ बीज्यङ्गजौ) ॥५३॥ दत्त्वा राज्यद्वयं सूनोः, प्राव्राजीद् दधिवाहनः । करकण्डुरभूद्गुमशासनः शासको द्विपाम् ॥५४॥ स गोकुल-प्रियस्तस्य, तान्यनेकानि जज्ञिरे । शरत्कालेऽन्यदाऽद्राक्षीद्, वत्समेकं नृपोऽद्भुतम् ॥ ५५ ॥ कुकु(कु)ट्यण्डमिव श्वेतमुच्छलत्पुच्छपिच्छलम् ।

प्रथमकरकण्डुप्रत्येकबुद्धवक्तव्यता ।

स्थूल(लं)गात्रं प्रीतिपात्रं, तं वीक्ष्य मुमुदे नृपः ॥ ५६ ॥ स गोपान् प्राह मा कुर्युरस्याम्बादोहनक्रियाम् । वर्द्धमानोऽन्यधेनूनां, पायितव्यः पयः पुनः ॥ ५७ ॥ प्रतिपन्नं वचो राज्ञो, गोपैर्गोपुत्रकः पुनः । जज्ञे तीक्ष्णविषाणाग्रोऽतिस्थूलगलकम्बलः ॥ ५८ ॥ अर्दयन् निर्दयं(भिन्दयन्) शृङ्गैर्बलीवर्दान् विमर्दनात् । कूर्दमानोऽन्यदा राज्ञा, जातस्थामेक्षितः स तु (स्वयम्) ॥ ५९ ॥ पुना राजाऽऽगतोऽद्राक्षीत्, पतितं तं जरद्गवम् । पडु(ड्)कैर्घट्टितं दीनं, हीनं चङ्क्रमणाक्षमम् ॥६०॥ गोपान् पप्रच्छ गोपालः, कुत्र स वृषभः ? स वैः (तु) । दर्शितस्तादृशो(शं) भूयस्तं वीक्ष्येदमचिन्तयत् ॥६१॥ अहो ! भूत्वाऽयं तादृक्षोऽधुना प्राप्तो दशामिमाम् । तदस्यां संसृतौ सर्वेऽनित्या भावा धनादयः ॥ ६२ ॥ जातः प्रत्येकबुद्धोऽसौ, चित्तान्तश्चिन्तयन्निति । लोचं कृत्वाऽग्रहीद् दीक्षां, देवतादत्तलिङ्गभृत् ॥ ६३ ॥ निष्क्रम्य सिंहद्वारयैवाप्रतिबद्धः समीरवत् । करकण्ड्वाख्यराजर्षिर्विजहार वसुन्धराम् ॥ ६४ ॥ उक्तं च—"सेयं सुजायं सुविभत्तसिंगं, जो पासिया वसभं गोट्ठमज्झे । रिद्धिं अरिद्धिं समुपेहियाणं, कलिंगराया वि समिक्ख धम्मं ॥ ६५ ॥" इति करकण्डुप्रबन्धः ॥

द्वितीयद्विमुखप्रत्येकबुद्धवक्तव्यता ।

पंचालदेसअहिवो, धूयमपूयं च इंदकेउस्स । दट्ठुं विरत्तकामो, पव्वइओ दोमुहनरिंदो ॥ ६० ॥

व्याख्या—प्रव्रजितो द्विमुखनरेन्द्रः, किं कृत्वा ? दृष्ट्वा, कां ? पूजां 'चः' पुनर् अपूजां, कस्य ? 'इन्द्रकेतोः' इन्द्रध्वजस्य । किंविशिष्टः ? पञ्चालदेशाधिपः । पुनः किंविशिष्टः ? 'विरक्तकामः' निवृत्ताभिलाषो राज्यादेरिति गम्यम् । इति गाथार्थः ॥ ६० ॥ भावार्थोऽयम्—

अस्तीह भरतक्षेत्रे, पुरे काम्पील्यनामनि । श्रीमद्हरिकुलोद्भूतो, यथार्थः पार्थिवो जयः ॥ १ ॥ गुणमालाप्रिया तस्य, गुणमाला प्रियाऽभवत् । निनाय वासरान् राज्यं, भुञ्जानो राट् तया समम् ॥ २ ॥ दूतं स्वाकूतमन्येद्युर्नृपोऽपृच्छत् किमस्ति न । यदस्ति राज्ञा-

१ "येवं सुजातं सुविभक्तशृङ्गं यो दृष्ट्वा वृषभं गोष्ठमध्ये । ऋद्धिमनृद्धिं समुत्प्रेक्ष्य कलिङ्गराजोऽपि समीक्षिष्ट धर्मम् ॥ ६५ ॥"

मन्येषां? सोऽवक् चित्रसभा न ते ॥ ३ ॥ ततोऽधिकारिणो राज्ञाऽऽदिष्टास्तां कारयन्तु भोः! । तदैव तैरथाऽऽरब्धा, राज्ञां कार्यं
वचोऽनुगम् ॥ ४ ॥ क्ष्मायां खन्यमानायां, दृष्टः पञ्चमवासरे । मुकुटः सर्वरत्नाढ्यः, प्रभाभर्त्सितभास्करः ॥ ५ ॥ शिष्टः कर्मकरै राज्ञे,
तूर्यवादनपूर्वकम् । उद्धृतोऽसौ ततो भूमेर्भूभुजा पूजिताश्च ते ॥ ६ ॥ निष्पन्नाऽभ्रंलिहा स्तोककालात् चित्रसभा नृपः । सुमुहूर्त्ते प्रवि-
ष्टोऽन्तर्मङ्गलध्वनिपूर्वकम् ॥ ७ ॥ स दिव्यमुकुटो मूर्ध्नि, धृतः श्रीजयभूभुजा । तस्याऽऽस्यस्यात्र सङ्क्रान्त्या, द्विमुखाऽऽख्यां जनोऽतनोत्
॥ ८ ॥ तस्याऽऽसंस्तनयाः सप्त, गुणमाला ममाऽऽत्मजा । नेति चक्रेऽधृतिं स्त्रीणां, पुत्री प्रायोऽतिवल्लभा ॥९॥ उपयाचितकं मेने, काम-
यक्षस्य राड्थ । कल्पद्रुमञ्जरीस्वप्नसूचिताऽस्याः सुताऽभवत् ॥ १० ॥ सवर्द्धापनकं नाम, दत्तं मदनमञ्जरी । वर्द्धमानेन्दुलेखेव, साऽभू-
द्यौवनोन्मुखी ॥ ११ ॥ इतश्चोज्जयनीपुर्यां, प्रद्योतश्चण्डशासनः । पार्थिवो बुभुजे राज्यं, दूतोऽभ्येऽस्येदमब्रवीत् ॥ १२ ॥ देव! दिव्य-
किरीटानुभावेन द्विमुखाभिधाम् । जयो राजाऽऽप तत् श्रुत्वा, राज्ञोऽस्योपर्यभूत् स्पृहा ॥ १३ ॥ प्रद्योतः प्राहिणोद् दूतं, स्वाकूतमिव
भूभुजे । सोऽप्यागत्याऽऽह ते राजन्!, किरीटं देहि मत्प्रभोः ॥ १४ ॥ मत्प्रभोरेव योग्यं तद्, युद्धसज्जो न चेद् भव । श्रुत्वेति द्विमुखो-
ऽवोचदस्तु तद्वस्तु मे प्रियम् ॥१५॥ गजोऽनलगिरिश्चाग्निभीरू रथः शिवा प्रिया । लोहजङ्घो लेखवाहो, दद्यादेतत् तव प्रभुः ॥ १६ ॥
तद्राज्यसारभूतं तद्, दूतो गत्वाऽऽह तत्समम् । सैन्याटोपेन कोपेन, प्रद्योतः प्राचलत् ततः ॥ १७ ॥ लक्षद्वयं गजेन्द्राणां, रथानामपि
तद् द्वयम् । सप्तकोट्यः पदातीनां, पञ्चायुतानि वाजिनाम् ॥ १८ ॥ प्रयाणैः सोऽनवच्छिन्नैरेतावत्सेनयाऽन्वितः । तस्थौ सागरव्यूहेन,
सीम्नि पञ्चालनीवृतः ॥ १९ ॥ द्विमुखः सन्मुखं तस्य, प्रतस्थे सर्वसेनया । विस्तार्य गरुडव्यूहं, तस्थौ सीम्नि स्वनीवृतः ॥ २० ॥
लग्नमायोधनं तत्र, सैन्ययोरुभयोरपि । अजय्यो द्विमुखो राजा, तत्किरीटानुभावतः ॥ २१ ॥ भग्नं द्विमुखसैन्येन, प्रद्योतस्याखिलं

द्वितीयद्वि-
मुखप्रत्येक-
बुद्ध-
वक्तव्यता ।

थलम् । बद्ध्वा पुरान्तरानीतः, प्रद्योतो द्विमुखेन तु ॥२२॥ पादयोर्निगडो दत्तो, धिक् कष्टं परतन्त्रता । पुरान्तर्भ्रमताऽनेन, दृष्टा मदनमञ्जरी ॥ २३ ॥ पञ्चबाणेन बाणेन, विद्धस्तद्दर्शनादसौ । नष्टवि(चि)त्त इव दृष्टः, पृष्टो द्विमुखभूभुजा ॥ २४ ॥ साधाध इव किं राजन् !, वीक्ष्यसे ब्रूहि कारणम् ? । निःश्वस्य दीर्घं प्रद्योतः, कथञ्चिदिदमूचिवान् ॥ २५ ॥ "मंयणवसगस्स नरवर !, वाहिविपत्थस्स तह य मत्तस्स । कुवियस्स मरंतस्स य, लज्जा दूरुज्झिया होइ ॥ २६ ॥" तद् यदीच्छसि मे क्षेमं, तदा मदनमञ्जरीम् । राजन् ! देहि न चेदेवं, विशामि ज्वलितानले ॥ २७ ॥ ततस्तन्निर्णयं ज्ञात्वा, द्विमुखोऽदात् निजां कनीम् । प्रद्योतनाय सन्तो हि, प्रार्थनाभङ्गभीरवः ॥ २८ ॥ तं जामातरमासूच्य, सन्मान्य बहुभक्तिभिः । प्रजिघाय यथास्थानं स्वस्येव द्विमुखो यशः ॥ २९ ॥ राज्यं पालयतोऽन्येद्युस्तस्यागादुत्सवो हरेः । आदिष्टा नागरा राज्ञा, भोः ! कुर्वन्तु तदुत्सवम् ॥३०॥ कु(क्व)णद्ध्वजपटाटोपस्तै रणत्किङ्किणीगणः । चित्रैश्च(विचित्र) चित्रितोऽनेकैरूर्ध्वीचक्रे हरिध्वजः ॥३१॥ ददुर्दानानि दातारो, जगुर्गीतानि गायनाः । वादका वादयामासुर्वाद्यानि मधुरस्वरम् ॥ ३२ ॥ चक्रुरिन्द्रजालानि, चक्रुर्नृत्यानि नर्त्तकाः । जज्ञे सप्तदिनीमेवं, पुरान्तः प्रवरोत्सवः ॥ ३३ ॥ पौर्णमास्यागता यावद्, राज्ञा विच्छर्दितो-(विच्छिरितो)ऽर्चितः । फल-प्रसून-पक्वान्नैरुच्चद्वाद्यपुरस्सरम् ॥ ३४ ॥ अमेध्य-मूत्रदुर्गन्धं(न्धे), निःश्रीकं पतितं ध्वजम् । मर्द्यमानं जनैः पादैस्तं वीक्ष्याचिन्तयत् नृपः ॥ ३५ ॥ अहो ! सर्वेऽप्यमी भावा, ईदृशा एव संसृतौ । धिगस्तु वस्तुतः काम-भोगांस्तान् दुःखदायिनः ॥ ३६ ॥ प्रत्येकबुद्धः शुद्धात्मा, सम्पन्नश्चिन्तयन्निति । प्राव्राजीद् देवतादत्तलिङ्गो लोचं विधाय च ॥३७॥ उक्तं च—"जो इंदकेउं सुयलं-

---

१ मदनवशगस्य नरवर ! व्याधिविप्रस्तस्य तथा च मत्तस्य । कुपितस्य म्रियमाणस्य च लज्जा दूरोज्झिता भवति ॥ २६ ॥

२ य इन्द्रकेतुं स्वलङ्कृतं तं दृष्ट्वा पतन्तं प्रविलुप्यमानम् । ऋद्धिमऋद्धिं समुत्प्रेक्ष्य पाञ्चालराजोऽपि समेक्ष्य धर्मम् ॥ ३८ ॥

किय वं, दट्ठुं पहंतं पविलुप्पमाणं । रिद्धिं अरिद्धिं समुपेहियाणं, पंचालराया वि समेक्ख धम्मं ॥३८॥" इति श्रीद्विमुखराजसम्बन्धः ॥

**सुच्चा वहूण सद्दं, वलयाणमसद्दयं च एगस्स । बुद्धो विदेहसामी, सक्केण परिक्खिओ य नमी ॥ ६१ ॥**

व्याख्या—नमी बुद्ध इति क्रिया । किं कृत्वा ? श्रुत्वा, किं तत् ? शब्दं, केषां ? 'वलयानां' कङ्कणानां देवीहस्तस्थानामिति गम्यम् । कियतां ? 'बहूनाम्' अनेकेषां 'चः' पुनर् अशब्दमेकस्य । कोऽसौ ? 'विदेहस्वामी' विदेहाख्यजनपदपतिश्च शक्रेण परीक्षितश्च । इति गाथार्थः ॥ ६१ ॥ भावार्थश्चायम्—

अस्तीह भ(भा)रते वर्षेऽवन्तीजनपदेऽद्भुतम् । पुरं सुदर्शनामिख्यं, निर्जितस्वःपुरं श्रिया ॥ १ ॥ राजा मणिरथस्तत्र, युवराड् युगबाहुकः । प्रिया मदनरेखाऽस्य, रूप-लावण्यदीर्घिका ॥ २ ॥ तस्याश्चन्द्रयशाः सूनुरनूनगुणसेवधिः । राजा मदनरेखायां, रागादिदमचिन्तयत् ॥ ३ ॥ चेद् रेमे नैतया सार्धं, तदा मे निष्फलं जनुः । ततस्तदर्थमेतस्यै, प्रैषीत् पुष्प-फलादिकम् ॥ ४ ॥ ज्येष्ठप्रसाद इति सा, निर्विकारा ददाददे । अन्येद्युर्मदनरेखां, रहो मणिरथोऽवदत् ॥ ५ ॥ भद्रे ! मां पुरुषत्वेन, प्रपद्य स्वामिनी भव । भद्राज्यस्येति साऽवोचत्, पुंस्त्वमस्त्येव पार्थिव ! ॥ ६ ॥ स्वकर्मणैव पण्ड-स्त्रीभावशून्यस्य ते पुनः । स्वामित्वं युवराट्पत्न्याः, कः क्षमो हर्तुमत्र मे ? ॥ ७ ॥ [ युग्मम् ] अन्यथ मृत्युमिच्छन्ति, सन्तोऽकृत्यं न कुर्वते । तत् त्यज त्वं महाराजाकार्यं भजस्व सत्पथम् ॥ ८ ॥ तत् श्रुत्वाचिन्तितं तेन, पाप्मना मामियं ध्रुवम् । नेच्छति भ्रातरि सति, हन्मि तं स्यात् ततो मतम् ॥ ९ ॥ अन्येद्युर्मदनरेखा, स्वप्ने दृष्ट्वा निशाकरम् । भर्तुराख्यत सोऽप्याह, प्रिये ! भाव्यद्भुतः सुतः ॥ १० ॥ तदैवाऽऽविरभूद् गर्भस्तृतीये मासि चाभवत् । जिनार्चा-मुनिदानादौ, दोहदोऽस्याः सुकर्मजः ॥ ११ ॥ सम्पूर्णदोहदा गर्भं, दधाना सा सती सुखम् । अनैषीत् समयं पत्युः, प्रेमानुस्यूतमानसा ॥ १२ ॥

तृतीयनमि-
प्रत्येकबुद्ध-
वक्तव्यता ।

वसन्तेऽन्येद्युरुद्याने, जगाम युगबाहुराट्। व्यग्रत्वाद् भक्तपानाद्यैस्तस्यास्तमगमद् रविः ॥ १३ ॥ काष्ठासु प्रसृतं ध्वान्तं, युगबाहू रति(त)श्रमात्। सुप्तो रम्भागृहे सार्द्धं, प्रियामदनरेखया ॥ १४ ॥ अथो मणिरथो दुष्टश्चिन्तयामास चेतसि। अयाऽऽस्ते शोभनोपायो, युगबाहुविनाशने ॥ १५ ॥ एकं स बहिरुद्याने, स्थितोऽन्यत् चाल्पसेवकः। तृतीयं रजनी(निर्)ध्वान्तं, चतुर्थं हन्मि तेन तम् ॥ १६ ॥ चिन्तयित्वेत्युपादाय, मण्डलाग्रं स उग्रधीः। उद्यानेऽगमदेकाकी, दृष्टः पृष्टोऽङ्गरक्षकैः ॥ १७ ॥ विश्वस्तं घातयत्येनं, माऽनुजं मेऽपरः परः। इत्यागतः पुरान्तस्तं, ज्ञात्वा यास्यामि साम्प्रतम् ॥ १८ ॥ दम्भाद् रम्भागृहं सोऽगाद्, युगबाहुः ससम्भ्रमम्। उत्थाय प्रणमन्मुक्तस्तेन याथः पुरान्तरे ॥ १९ ॥ जनापवादमुत्सृज्याविचार्यानार्यकार्यताम्। स पुरान्तर्गमव्यग्रस्तेन स्कन्धे हतोऽसिना ॥ २० ॥ तद्व्यथार्त्तः पपातोर्व्यां, सोऽथो मदनरेखया। पूत्कृतेऽभ्येयुराकृष्टखड्गास्तस्याङ्गरक्षकाः ॥ २१ ॥ प्रमादात् मत्करात् भद्रे!, पपातासिर्भिया स्तवम्। ज्ञात्वा तच्चेष्टितं भृत्यैर्नीतो मणिरथः पुरे ॥ २२ ॥ तैश्चन्द्रयशसः प्रोक्तं, क्रन्दश्रुचैः स आगमत्। वैद्यानादाय तैश्चक्रे, व्रणकर्मार्चितः परम् ॥ २३ ॥ नेत्रे निमीलिते रुद्धा, वाग् निश्चेष्टमभूद् वपुः। रुधिरोद्गारतः श्वेता, युगबाहोरभूत् तनुः ॥ २४ ॥ अन्त्यावस्थोचितं ज्ञात्वा, कामरेखा ततः पतिम्। स्थित्वा तत्कर्णयोर्मूलमुवाचैवं मृदुस्वरम् ॥ २५ ॥ राजन्! कस्योपरि द्वेषं, मा कुर्याः प्रीतिमङ्गिषु। भजस्व चतुःशरणं, निर्वृतिं चेतसो भज ॥ २६ ॥ स्वकृतं दुष्कृतं निन्द, सह व्यसनमागतम्। निमित्तमात्रमत्र स्यात्, परः स्व(स्वं) कर्म भुज्यते ॥ २७ ॥ पाथेयं परलोकस्य, स्मराऽर्हन्तं गुरुं वृषम्। दुष्टान्यष्टादश स्पष्टं, पापस्थानानि वर्जय ॥ २८ ॥ पितृ-मातृ-भ्रातृ-पुत्रादिकं सङ्गव्रजं त्यज। स्मर पञ्चनमस्कारं, सारं श्रीजिनशासने ॥ २९ ॥ तत् कृताञ्जलिना सर्वं, प्रपन्नं युगबाहुना। ममार च नमस्कारजापसारः समाधिना ॥३०॥ पूत्कृतं चन्द्रयशसा, कामरेखेत्यचिन्तयत्। मद्रूपं धिक् कृते यस्यानर्थोऽभूदीदृशो महान् ॥ ३१ ॥

व्यापादयिष्यति क्रूरो, मत्पुत्रमपि मत्कृते । शीलरत्नं तदात्मीयं, गत्वा रक्षामि कुत्रचित् ॥३२॥ चिन्तयित्वेति पुत्रादिवर्गं शोकात्मतां गतम् । सम्बोध्यार्द्धनिशि दिशं, प्रतीचीं प्र(प्रति प्राचीं)चचाल सा ॥३३॥ क्रूराटव्यामटन्त्याप, मध्याह्नेऽब्जसरः पुरः । प्राणवृत्तिं फलैश्चक्रे, बलीयो दैवचेष्टितम् ॥ ३४ ॥ साकारानशनं कृत्वा, सा सुप्ता कदलीगृहे । आगता रजनिस्तत्र, पूत्कुर्वन्ति मृगारयः ॥ ३५ ॥ घुर्घुरन्ति वराहौघाः, फेत्कारान् विदधुः शिवाः । नमस्कारपरावर्त्तपरायत्ता मनस्विनी ॥ ३६ ॥ [ युग्मम् ] अर्द्धरात्रे बभूवास्या, महत्युदरवेदना । सर्वलक्षणसम्पूर्णं, प्रसूता सा ततः सुतम् ॥ ३७ ॥ सं(सा)वेष्ट्य कम्बलेनैनं, मुद्रां न्यस्यामुचत् पितुः । स्वयं गता सरः प्रातः, क्षालितं वस्त्रमात्मनः ॥ ३८ ॥ [ युग्मम् ] स्नानार्थं यावदुत्तीर्णा, तावदागात् पयःकरी । तेनैषा शुण्डयोत्पाट्य, लीलयोच्छालिताऽम्बरे ॥ ३९ ॥ दैवादात्ता सुरूपेति, खेचरेण पतन्त्यसौ । रुदन्ती(ती) सुदती नीता, तेन वैताढ्यभूधरम् ॥४०॥ रुदन्त्या(त्या)ऽसौ तया प्रोक्तो, भो(ऽहो!) महापुरुषाऽऽत्मजम् । अद्य रात्रौ प्रसूताऽहं, तं मुक्त्वा कदलीगृहे ॥ ४१ ॥ स्नानार्थं यावदुत्तीर्णा, क्षिप्ता तावद् गजेन खे । त्वया यावदिहाऽऽनीता, त्वदधीनाऽस्मि साम्प्रतम् ॥ ४२ ॥ [ युग्मम् ] व्यापादयिष्यते वन्यैर्निस्तन्यो वा मरिष्यति । मत्सूनुस्तस्य दानेनानुग्रहं कुरु सत्तम ! ॥ ४३ ॥ तमानयात्र वा तत्र, मां नयेत्युदिते तया । युवाऽऽहाऽऽशाकरस्वे त्वां, यदीच्छसि पतिं मम ॥ ४४ ॥ अन्यच्च शृणु गा(ग)न्धारदेशे रत्नावहे पुरे । मणिचूडो नृपस्तस्य, पत्न्यभूत् कमलावती ॥ ४५ ॥ मणिप्रभोऽस्य पुत्रोऽहं, द्वयोः श्रेण्योः पिता मम । मुक्त्वा साम्राज्यं प्राव्राजीत्, चारणश्रमणान्तिके ॥ ४६ ॥ विहरन् खमिहाऽऽयातः, सोऽगात् नन्दीश्वरेऽधुना । गच्छता वन्दनायास्य, दृष्टा नीता मया ह्यसि ॥ ४७ ॥ त्वत्सूनुर्मिथिलेशेन, तत्राऽऽनीतेन वाजिना । गृहीतश्चार्पितो देव्यै, वर्द्धमानोऽस्ति पुत्रवत् ॥ ४८ ॥ प्रशस्त्या विद्यया ज्ञात्वा, मयोक्तं नान्यथा ह्यदः । भद्रे ! मुक्त्वा तदुद्वेगं, भुङ्क्ष्व भोगान् मया समम् ॥ ४९ ॥ श्रुत्वेति सा

सती दध्यावहो ! मे कर्मचेष्टितम् । भवाम्यन्यान्यदुःखानां, भाजनं भाग्यवर्जिता ॥ ५० ॥ न प्राणी मदनग्रस्तः, कार्याकार्यं विचारयेत् । नापवादाद् बिभेत्युच्चैः, शङ्कते नान्यलोकतः ॥ ५१ ॥ तत् शीलरत्नं यत्नेन, रक्षणीयं मयाऽधुना । चिन्तयित्वेति मदनरेखोचेऽदो मणिप्रभम् ॥ ५२ ॥ नय नन्दीश्वरं तावत्, करिष्ये त्वद्वचो ध्रुवम् । तत् श्रुत्वा मुदितो दिव्यं, यानं व्यरचयत् खगः ॥ ५३ ॥ तदारोप्य सतीं स्वान्तवेगं वेगादगात् खगः । नन्दीश्वरं द्विपञ्चाशज्जिनचैत्यविभूषितम् ॥ ५४ ॥ ववन्दे तत्र कृत्वाऽर्चां, तया सार्द्धं मणिप्रभः । ऋषभ-वर्द्धमानाद्याः, प्रतिमाः शाश्वतार्हताम् ॥ ५५ ॥ वन्दितो मणिचूडोऽपि, मुनिस्ताभ्यां ससम्भ्रमम् । चतुर्ज्ञानधरः सोऽप्यशासीद् व्यतिकरं तयोः ॥ ५६ ॥ शिक्षितो(शमितो) मणिचूडेन, धर्मदेशनया खगः । लज्जितस्तां सतीमूचे, भगिनीतः प्रभृत्यपि(सि) ॥ ५७ ॥ ब्रूहि सम्प्रति किं कुर्वे ?, साऽब्रवीत् मेऽखिलं कृतम् । अत्र कारयता यात्रां, तीर्थे मत्तुल्यदुर्लभे ॥ ५८ ॥ उत्पत्तिं वद मत्सूनोः, साऽपृच्छदिति तं मुनिम् (:)। सोऽप्याह प्राग्विदेहेऽभूद्, विजयः पुष्कलावती ॥ ५९ ॥ तत्र मणितोरणाख्ये, पुरेऽमितयशा नृपः । तस्य पुष्पवती पत्नी, रूपरेखाकपोपला ॥ ६० ॥ पुष्पसिंह-रत्नसिंहौ, बुभुजाते तदात्मजौ । साम्राज्यं चतुरशीतिपूर्वलक्षा निरर्गलम् ॥ ६१ ॥ प्रवव्रजतुरभ्यर्णे, चारणर्षेर्विरागतः । षोडशपूर्वलक्षास्तौ, पालयामासतुर्व्रतम् ॥ ६२ ॥ ततो मृत्वाऽच्युते कल्पेऽभूतां सामानिकौ सुरौ । द्वाविंशत्यर्णवायुष्कौ, निस्सीमसुखशालिनौ ॥ ६३ ॥ च्युत्वेतो धातकीखण्डभरतार्द्धेऽर्द्धचक्रिणः । पत्युः समुद्रदत्ताया, हरिषेणाभिधस्य तौ ॥ ६४ ॥ तनयौ सागराद् देव-दत्तौ नाम्ना बभूवतुः । क्रमात् क्रमागतं राज्यं, पालयामासतुश्चिरम् ॥ ६५ ॥ [युग्मम्] ततस्तौ द्वादशस्यान्ते, श्रीदृढसुव्रतार्हतः । व्रतं जगृहतुर्जन्मसाफल्यार्थमुभावपि ॥ ६६ ॥ मृत्वोत्पन्नौ महाशुक्रे, विद्युत्पातेन तद्दिने । सप्तदशार्णवायुष्कौ, तौ सुरौ परमर्द्धिकौ ॥ ६७ ॥ द्वाविंशस्यार्हतो जातकेवलस्यान्यदा मुदा । गतौ तौ महिमां कर्तुं,

पृच्छतः स्म निजाऽऽयतिम् ॥ ६८ ॥ स्वाम्याह भरतेऽत्रैव, च्युत्वेतो मिथिलापुरि । भूभुजो जयसेनस्य, त्वमेको भविता सुतः ॥६९॥ सुदर्शन(ने)पुरे चान्यो युगबाहोर्महीपतेः । पत्न्या मदनरेखाया, भावी पुत्रस्ततश्च्युतः ॥७०॥ इति श्रुत्वा प्रभुं नत्वा, जग्मतुस्तौ त्रिविष्टपम् । भुक्त्वा देवभवायुष्कं, पूर्वमेकस्ततश्च्युतः ॥ ७१ ॥ उत्पेदे मिथिलापुर्यां, जयसेनमहीपतेः । प्रियायां वनमालायां, पुत्रः पद्मरथाह्वयः ॥ ७२ ॥ यौवने जनको राज्यं, दत्त्वाऽस्मै व्रतमग्रहीत् । पुष्पमालाप्रिययाऽसा, स भोगान् बुभुजेऽधिकम् ॥७३॥ द्वितीयोऽपि ततश्च्युत्वा, पुत्रो धार्मिकि ! तेऽभवत् । इतः पद्मरथोऽन्येद्युर्वक्रशिक्षितवाजिना ॥ ७४ ॥ तत्राटव्यामटन्नागादत्र प्रातस्तवाऽऽत्मजम् । दृष्ट्वा पूर्वभवस्नेहात्, मुदितात्मा तमाददे ॥ ७५ ॥ पदानुसारतस्तस्यात्रान्तरे सैन्यमागतम् । सतश्चो गजमारुह्य, राजाऽगाद् राजमन्दिरम् ॥७६॥ प्रियायै पुष्पमालायै, पालनायार्पितः स सु(सुतः) । सवर्द्धापनकं वर्द्धमानोऽस्ति तद्गृहे सुखम् ॥७७॥ यावत् मुनिरिदं वक्ति, तावदेकं नभस्तलात् । विमानरत्नमुत्तीर्णं, द्युतिद्योतितदिक्तटम् ॥ ७८ ॥ किङ्किणीक्वाणमुखरं, स्वःस्त्रीघुष्टजयस्वरम् । स्वच्छस्फाटिकनिर्यूहं, मुक्ताजालकरन्वितम् ॥ ७९ ॥ [युग्मम्] तदन्तर्निर्ययौ देवः, कुण्डलालङ्कृतश्रुतिः । किरीटसुभगाकारस्तारहारमनोहरः ॥ ८० ॥ स त्रिः प्रदक्षिणीकृत्य, कामरेखां नमोऽकरोत् । पश्चात् मुनिं नमस्कृत्योपविष्टः पुरतो मुनेः ॥ ८१ ॥ वैपरीत्यं तदालोक्य, खेचरः सुरमब्रवीत् । अहो ! प्ररूपिता राजनीतयश्चामरैर्नृपैः ॥ ८२ ॥ लुम्पन्ति तास्त एवात्र, कस्याग्रे कथ्यते ततः ? । इति श्रुत्वा सुरोऽवोचत्, सत्यमेतत् परं शृणु ॥ ८३ ॥ सुदर्शनपुरे पूर्वमासीत् मणिरथो नृपः । तद्भ्राता युगबाह्वाह्वः, स तूद्याने गतोऽन्यदा ॥ ८४ ॥ केनचित् पूर्ववैरेण, कन्धरायां हतोऽसिना । भ्रात्रा(ता)मणिरथेनाथ, धर्मदेशनयाऽनया ॥ ८५ ॥ बोधितः स्प(स्पृ)ष्टसम्यक्त्वो, मृत्वा कल्पे स पञ्चमे । इन्द्रसामानिको जज्ञे, दशाब्ध्यायुर्महर्द्धिकः ॥ ८६ ॥ [युग्मम्] सोऽहं तदेषा मे धर्माचार्यत्वेनोपकारिणी । यद् भवेद् दुष्प्रतीकारो,

तृतीयनमि-
प्रत्येकबुद्ध-
वक्तव्यता ।

बोधिबीजार्पको जनः ॥ ८७ ॥ अतो नतोऽहमेतस्याः, पूर्वमेव पदद्वयम् । तत् श्रुत्वा खेचरो दध्यावहो ! धर्मस्य जृम्भितम् ॥ ८८ ॥
कामरेखां सुरोऽवोचत्, करवाणि तव प्रियम् । किं साधर्मिकि ! श्रुत्वेति, साऽवगेवं सुरं प्रति ॥ ८९ ॥ देवेन्द्रः परमार्थेन, न प्रियं कर्तु-
मीश्वरः । तथापि नय मां तत्र, यत्राऽऽस्ते मत्सुतो लघुः ॥ ९० ॥ परलोकहितं कुर्वे, यथाऽहं वीक्ष्य तन्मुखम् । नीता क्षणात् सुरेणाथ,
ततोऽसौ मिथिलापुरि ॥ ९१ ॥ जन्म-दीक्षा-ज्ञानभूमिर्मल्लि-नम्यर्हतोस्तु सा । अतोऽवतारिता पूर्वं, तीर्थभक्त्याऽर्हदालये ॥ ९२ ॥ तया
नतानि चैत्यानि, साध्व्यश्चोपाश्रये नताः । पुरस्तात् कथितो धर्मस्तस्यास्ताभिर्जिनोदितः ॥ ९३ ॥ उक्ता धर्मकथाप्रान्ते, तेन देवेन सा
सती । भद्रे ! यामो नृपावासे, पुत्रं पश्येति साऽवदत् ॥९४॥ संसारवर्द्धनेनालं !, प्रेम्णाऽऽदास्ये व्रतं हितम् । स्वामीष्टं कुरु देवोऽपीत्युक्त्वा
नत्वाऽगमद् दिवम् ॥ ९५ ॥ तासामन्ते तयाऽप्यात्तं, वैराग्यादार्हतं व्रतम् । तपस्यन्ती विजह्रेऽसौ, सुव्रतार्याऽऽख्यया क्षितौ ॥ ९६ ॥
अथो पद्मरथावासे, विप्रलेप सतीसुतः । प्रतिपक्षा नतास्तस्य, स्वयमेवोपदादिभिः ॥ ९७ ॥ ततोऽस्य गुणनिष्पन्नं, चक्रे नाम नमिर्नृपः ।
धात्रीभिः पञ्चभिर्लाल्यमालोऽवर्द्धिष्ट सत्सुखम् ॥ ९८ ॥ सर्वशास्त्रार्थसार्थं स, प्राप्तवानष्टवार्षिकः । क्षणाद् दर्शनमात्रेण, प्राच्यपुण्यानु-
भावतः ॥ ९९ ॥ अष्टोत्तरसहस्राणां, कनीनां ग्राहितः करम् । इक्ष्वाकुवंशजातानां, भूभुजां यौवने नमिः ॥ १०० ॥ सुरेन्द्र इव
भुञ्जानो, भोगांस्ताभिः समं नमिः । अनैषीत् सुखजं कालमथो पद्मरथोऽपि हि ॥ १०१ ॥ विदेहदेशजे राज्येऽभिषिच्य युगबाहुजम् ।
संसारासारतां ज्ञात्वा, प्रव्रज्याऽऽप शिवश्रियम् ॥१०२॥ अथो मणिरथो रात्रौ, तस्यां दष्टो महाहिना । चतुर्थ्यां नरकपृथ्व्यां, मृत्वोत्पे-
देऽतिपाप्मतः ॥ १०३ ॥ संस्कारितावुभौ मन्त्रि-सामन्ताद्यैः सहोदरौ । न्यस्तश्चन्द्रयशा राज्ये, कथञ्चित् प्रतिबोधितः(-ध्य तैः) ॥१०४॥
इतश्चालानमुन्मूल्य, श्वेतेभो नमिभूभुजः । अभि विन्ध्याटवीं गच्छन्, सुदर्शनपुरान्तिके ॥ १०५ ॥ दृष्टो गतैश्च वाह्याल्यां,

चन्द्रयशोऽनुजीविभिः । उक्तोऽसौ सोऽपि तं गत्वा, निनाय स्वपुरं रयात् ॥ १०६ ॥ [ युग्मम् ] चरैर्ज्ञात्वा नमेरुक्तं, स चन्द्रयशसे जनम् । प्राहिणोत् मद्गजं देहि, तस्मै सोऽपीदमब्रवीत् ॥ १०७ ॥ रत्नानि शासने न स्युः, कस्यापि लिखितानि भोः ! । यो बलेनाधिकस्तानि, तस्यैवेत्यत्र निर्णयः ॥ १०८ ॥ गत्वा दूतेन तत् प्रोक्तं, नमिराजस्ततोऽनमिः । क्रुद्धः सर्वबलेनालमचालीद्गजोपरि ॥ १०९ ॥ अथ चन्द्रयशा ज्ञात्वाऽऽगच्छन्तं कटकं नमेः । निर्गच्छन् स्वबलेनापशकुनेन निवारितः ॥ ११० ॥ पिधाय नगरद्वारं, तिष्ठेत्युक्तः स मन्त्रिभिः । कालोचितं करिष्यामः, पुनर्नावसरोऽधुना ॥ १११ ॥ तस्थौ नमिश्चतुर्दिक्षु, पुरमावेष्ट्य सेनया । अश्रौषीत् सुव्रतार्याऽपि, जनश्रुत्याऽऽसुरं तयोः ॥ ११२ ॥ मा मनुष्यक्षयं कृत्वा, यातामेतावधोगतिम् । इति प्रवर्त्तिनीं पृष्ट्वा, साऽगात् तद्बोधहेतवे ॥ ११३ ॥ पूर्वं प्राप्ता बहिः सैन्ये, ततोऽस्या दत्तमासनम् । नत्वोपविष्टो भूपीठे, नमिराजः कृताञ्जलिः ॥ ११४ ॥ साऽऽह राजन्नसारेयं, राज्यश्रीर्विषया विषम् । तत्कृते नरके दुःखसहनं युज्यते कथम् ? ॥ ११५ ॥ अन्यच्च युज्यते युद्धं, ज्येष्ठभ्रात्रा समं कथम् ? । कथं भ्रातेति तेनोक्ते, तं सप्रत्ययमाह सा ॥ ११६ ॥ तथापि सन्मुखं तस्य, न मानाद् यात्यसावथ( सौ ततः ) । साऽऽर्या खडकि( क्कि )काद्वारा, प्रविष्टाऽन्तःपुरं द्रुतम् ॥ ११७ ॥ प्रविशन्ती नृपावासे, स्वजनैः सोपलक्षिता । नत्वा दत्त्वाऽऽसनं चन्द्रयशाः पुर उपाविशत् ॥ ११८ ॥ नतामान्तःपुरजनो, गलद्बाष्पाविलः पदौ । एतां नृपोऽपृच्छदार्ये !, दुष्करं किं श्रितं व्रतम् ? ॥ ११९ ॥ कुत्रेदानीं मम भ्राता ?, रुद्धो येनेति साऽवदत् । निर्गतो नगरात् चन्द्रयशा हर्षप्रकर्षतः ॥ १२० ॥ आयान्तं(तं)तं नमिर्वीक्ष्य, द्रागुत्थायापतत् पदोः । परमप्रेमनिर्मग्नौ, प्रविष्टौ भ्रातरौ पुरम् ॥ १२१ ॥ अवन्तीदेशस्वामित्वे, न्यस्य चन्द्रयशा नमिम् । प्रव्रज्य सुगुरूपान्ते, विजहार यथासुखम् ॥ १२२ ॥ भुञ्जानोऽभवद्भूमाक्षो; नमिर्देशद्वयश्रियम् । जज्ञे पाण्मासिको दाघज्वरोऽस्याङ्गेऽन्यदोत्कटः ॥ १२३ ॥ विज्ञैरप्यौषधविधेः, प्रत्याख्यात-

ऽऽगतो राजाऽऽदातुकामस्तवद्भुतम् । अथश्चकार स्वकरं, ममासन्नस्तुक्तिकाः ॥ २० ॥ प्रदत्तहस्ततालं सा, जहासोवाच चोच्चकैः । पदैर्न त्रिभिरासन्दस्त्विष्यतामोऽस्य तुर्यकः ॥ २१ ॥ बाले ! कोऽत्रायमासन्दो ?, विलक्षोऽपृच्छदीशिता । स्मित्वा साऽऽह पितुर्भक्तमान-याति नृपाध्वनि ॥ २२ ॥ वाहं वाहयति स्वीयं, पुमानेकोऽविवेकतः । घृणा नास्य यदायान्ति, बाला वृद्धाः स्त्रियोऽत्र तु(तु) ॥ २३ ॥ एकः स मूर्खः पादोऽस्य, द्वितीयोऽत्रत्यपार्थिवः । योऽन्यैः समं विभज्यादात्, मत्पितुश्चित्रभूमिकाम् ॥ २४ ॥ सन्त्येकेषु कुटुम्बेषु, भूयांसश्चित्रकृज्जनाः । मत्पिता निर्धनो वृद्धो, निर्बन्धुरसहायकः ॥ २५ ॥ तृतीयो मत्पिता मूर्खे आनीते यो मयाऽशने । प्रयाति तनुचिन्तायै, स कीदृक् शीतलो रसः ? ॥ २६ ॥ चतुर्थस्तु भवान् मूर्खः, सर्वो वेत्त्यत्र यत् कुतः । शिख्यागमोऽथवा केनचिदानीत-स्तथापि हि ॥ २७ ॥ विदुषा चक्षुषा वीक्ष्य, व्यापार्यः स्वकरो भवेत् । एवं चिराय पश्यन्त्या, मेलिताऽस्य चतुष्पदी ॥ २८ ॥ [ युग्मम् ] राजा वचनविन्याससम्पदाऽस्याश्चमत्कृतः । वीक्ष्यानुरक्तो लावण्यं, कृतार्था साऽप्यगाद् गृहम् ॥ २९ ॥ सुगुप्तमन्त्रिणा राज्ञा, मार्गितः चित्रकृत् कनीम् । प्राह प्रभुः प्रभोः कर्तुं, रोरो नोद्वाहमङ्गलम् ॥ ३० ॥ ततो हिरण्य-धान्याद्यैर्भृतं तद्वेश्म भूभु-जा । प्रशस्ते तिथिमुहूर्ते, तामुपायत पार्थिवः ॥ ३१ ॥ प्रासादो दासिकावर्गयुक्तोऽस्या भूभुजाऽर्पितः । बह्वयो राज्योऽभवन् राज्ञस्तस्य रूपाप्सरःसमाः ॥ ३२ ॥ एकैका वारकेणाथाऽऽयाति राड्वासवेश्मनि । तद्दिने वारकं तस्याः, सप्रसादमदात् नृपः ॥ ३३ ॥ कृतस्फाराङ्गसंस्कारा, गता सा वासवेश्मनि । उपविष्टाऽऽसने दासीयुक्ताऽऽगात् पार्थिवस्ततः ॥ ३४ ॥ अभ्युत्थानादिविनयं, चक्रे कनकमञ्जरी । पूर्वं मदनिकोक्ताऽऽसीत्, प्रष्टव्याऽऽख्यानकं तदा ॥ ३५ ॥ सख्याख्यानकमाख्याहि, सख्यास्यत् चित्रकृत्सुताम् । भद्रे ! शेते प्रभुः पश्चात्, कथयिष्यामि तत् तव ॥ ३६ ॥ सोऽस्वाप्सीत् कूटमाश्रयात्, किमेषा कथयिष्यति ? । ततः सख्याद् तां

चतुर्थनमति-प्रत्येकबुद्ध-वक्तव्यता ।

अस्तीह भारते वर्षे, देशे गा(ग)न्धारनामनि । अचलाललनापुण्ड्रं, पुण्ड्रवर्द्धनपत्तनम् ॥१॥ तत्र सिंहरथो राजा, बभूवाद्वैतवैभवः । तस्योत्तरपथादश्वावायातौ प्राभृतेऽन्यदा ॥२॥ राजैकस्मिन्नथाऽऽरूढो, द्वितीये राजसूद्वये । निर्गतौ नगरात् प्रातौ, वाह्याल्यां नृप-तत्सुतौ ॥ ३ ॥ नृपो वेगपरीक्षार्थं, प्रेरयामास वाजिनम् । वेगाद् वायुरिवोड्डीनो, द्वादश योजनान्यगात् ॥ ४ ॥ अटवीं प्रापितो वल्गाकर्षणे यत्नवानपि । तेनैकाक्यपि भूपालो, वक्रशिक्षितवाजिना ॥ ५ ॥ निर्विण्णेन ततो राज्ञा, वल्गा मुक्ताऽस्य मुत्कला । स्थितः पदेषु तेष्वश्वो, वक्रत्वादुत्ततार राट् ॥ ६ ॥ वद्धैकस्मिन् तरावश्वं, प्राणवृत्तिः कृता फलैः । आरूढो भूधरं चैकं, रजनीवासहेतवे ॥ ७ ॥ सप्तभूमिकमावासं, ददर्श दर्शनप्रियम् । तदन्तर्दिव्यलावण्यपुण्य(ण्या)मेकां च कन्यकाम् ॥ ८ ॥ ससम्भ्रमं समुत्थाय, तयाऽस्मै दत्तमासनम् । जज्ञेऽनुरागश्चान्योन्यं, ततोऽपृच्छदिमां नृपः ॥ ९ ॥ भद्रे ! कथमिहारण्ये, तिष्ठस्येकाकिनी कनि ! ? । साऽवादीदिदमाकर्ण्य, भूपमालम्ब्य साहसम् ॥ १० ॥ पूर्वं परिणय स्वामिन्नाख्यास्याम्यखिलं ततः । प्रविवेश विशामीशस्तत्रस्थार्हद्गृहान्तरे ॥ ११ ॥ पुरस्थां वेदिकां तस्यार्चित्वा नत्वा जिनेश्वरम् । गान्धर्वेण विवाहेनोपयेमे तां कनीं नृपः ॥ १२ ॥ रात्रौ वासगृहे सुप्तौ, प्रबुद्धौ दम्पती प्रगे । नत्वा जिनेश्वरं राजोपविष्टोऽर्द्धासने प्रिया ॥ १३ ॥ शृणु व्यतिकरं स्वामिन् !, ममेत्याख्यत् सुलोचना । पुराऽभूद् भारते वर्षे, पुरं क्षितिप्रतिष्ठितम् ॥ १४ ॥ जितशत्रुनृपस्तत्र, चित्रार्थं सोऽन्यदा सभाम् । विभज्य समभागेन, चित्रकृच्छ्रेणये ददौ ॥ १५ ॥ तत्र चित्राङ्गदश्चित्रकृदेको वृद्ध-निर्धनः । चित्रं करोति तस्याऽऽस्ते, कन्या कनकमञ्जरी ॥ १६ ॥ एवं भूयानगात् कालः, सा पितुर्भक्तमन्यदा । आनयत्येक आयाति, साश्वो वेगात् पुमान् पथि ॥ १७ ॥ सा भीतेतस्ततो नष्टा, गतेऽस्मिन् पितुरन्तिकम् । प्राप्ता शरीरचिन्तार्थं, गतः पिताऽपि तावता ॥१८॥ तया निःक्षी(क्ष)णकर्मत्वात्, चित्रितं मणिकुट्टिमे । पिच्छमेकं मयूरस्य, वर्णकैः पितुरद्भुतम् ॥१९॥ इतस्तत्रा-



चतुर्णंनप्रति-
प्रत्येकबुद्ध-
वक्तव्यता ।

ऽऽगतो राजाऽऽदात्तुकामस्तदद्भुतम् । अथश्चकार स्वकरं, ममास्तन्नखशुक्तिकाः ॥ २० ॥ प्रदत्तहस्ततालं सा, जहासोवाच चोच्चकैः । पदैर्न त्रिभिरासन्दस्त्वियत्याप्तोऽद्य तुर्यकः ॥ २१ ॥ बाले ! कोऽन्नायमासन्दो ?, विलक्षोऽपृच्छदीशिता । स्मित्वा साऽऽह पितुर्भक्तमानयामि नृपाध्वनि ॥ २२ ॥ यादं वाहयति स्त्रीयं, पुमानेकोऽतिवेगतः । घृणा नास्य यदायान्ति, बाला वृद्धाः स्त्रियोऽत्र तु(नु) ॥ २३ ॥ एकः स मूर्खः पादोऽस्य, द्वितीयोऽत्रत्यपार्थिवः । योऽन्यैः समं विभज्यादात्, मत्पितुश्चित्रभूमिकाम् ॥ २४ ॥ सन्त्येकेषु कुटुम्बेषु, भूयांसश्चित्रकृज्जनाः । मत्पिता निर्धनो वृद्धो, निर्वन्धुरसहायकः ॥ २५ ॥ तृतीयो मत्पिता मूर्ख आनीते यो मयाऽशने । प्रयाति तनुचिन्तायै, स कीदृक् शीतलो रसः ? ॥ २६ ॥ चतुर्थस्तु भवान् मूर्खः, सर्वो वेत्त्यत्र यत् कुतः । शिख्यागमोऽयवा केनचिदानीतस्तथापि हि ॥ २७ ॥ विदुषा चक्षुषा वीक्ष्य, व्यापार्यः स्वकरो भवेत् । एवं चिराय पश्यन्त्या, मेलिताऽस्य चतुष्पदी ॥ २८ ॥ [ युग्मम् ] राजा वचनविन्याससम्पदाऽस्याश्चमत्कृतः । वीक्ष्यानुरक्तो लावण्यं, कृतार्था साऽप्यगाद् गृहम् ॥ २९ ॥ सुगुप्तमन्त्रिणा राज्ञा, मार्गितः चित्रकृत् कनीम् । प्राह प्रभुः प्रभोः कर्त्तुं, रोरो नोद्वाहमङ्गलम् ॥ ३० ॥ ततो हिरण्य-धान्याद्यैर्भृतं तद्वेश्म भूभुजा । प्रशस्ते तिथिमुहूर्ते, तामुपायत पार्थिवः ॥ ३१ ॥ प्रासादो दासिकावर्गयुक्तोऽस्या भूभुजाऽर्पितः । बह्वयो राज्योऽभवन् राज्ञस्तस्य रूपाप्सरःसमाः ॥ ३२ ॥ एकैका वारकेणायाऽऽयाति राड्वासवेश्मनि । तद्दिने वारकं तस्याः, सप्रसादमदात् नृपः ॥ ३३ ॥ छतस्फाराङ्गसंस्कारा, गता सा वासवेश्मनि । उपविष्टाऽऽसने दासीयुक्ताऽऽगात् पार्थिवस्ततः ॥ ३४ ॥ अभ्युत्थानादिविनयं, चक्रे कनकमञ्जरी । पूर्वं मदनिकोक्ताऽऽसीत्, प्रष्टव्याऽऽख्यानकं तदा ॥ ३५ ॥ सख्याख्यानकमाख्याहि, सख्याख्यत् चित्रकृत्सुताम् । भद्रे ! शेते प्रभुः पश्चात्, कथयिष्यामि तत् तव ॥ ३६ ॥ सोऽस्वाप्सीत् कूटमाश्रयात्, किमेषा कथयिष्यति ? । ततः सख्याह तां

चतुर्थनमति-प्रत्येकबुद्ध-वक्तव्यता ।

ब्रूहि, सखि ! सुप्तोऽधुना प्रभुः ॥ ३७ ॥ सख्याकर्ण्य साऽऽचख्यौ, वसन्तपुरपत्तने । वरुणाख्योऽभवत् श्रेष्ठी, धनाढ्यो धार्मिकामणीः ॥ ३८ ॥ तेन हस्तमिता देवकुलिका कारिताऽश्मनः । खण्डेनैकेन तन्मध्ये न्यस्तो देवश्चतुष्करः ॥ ३९ ॥ ततो मदनिकाऽपृच्छत्, चतुर्हस्तः सुरः कथम् । तस्यां खल्वेकहस्तायां, मातो ? मातर्ममाद्भुतम् ॥ ४० ॥ जय निद्रार्दिता प्रातराख्यास्यामीति साऽवदत् । स्वामिनीभावविज्ञाऽगात्, ततो मदनिका गृहम् ॥ ४१ ॥ कौतुकाद् वारकं तस्या, द्वितीयेऽह्न्यप्यदात् नृपः । पुनर्मदनिकाऽवोचद्, वार्तां पूर्वोदितां वद ॥ ४२ ॥ उवाच चित्रकृत्पुत्री, चतुर्हस्तः सुरः सखि ! । हरिर्नाम्ना न चा(वा)ऽऽकृत्या, पुनराख्यानकं शृणु ॥४३॥ आस्तेऽटव्यां महाशाखो, रक्ताशोकद्रुमो महान् । छाया नास्ति परं तस्य, पथिकप्रीतिकारिणी ॥ ४४ ॥ पुनर्मदनिकाऽपृच्छत्, छाया तस्य कथं नहि ? । साऽऽख्यद् दध्यदनादद्य, निद्राऽऽयाति भृशं मम ॥ ४५ ॥ राज्ञाऽस्या वारको दत्तस्तृतीयेऽह्न्यपि कौतुकात् । साऽऽह तस्यास्त्यधश्छाया, नोपरिष्टादसौ पुनः ॥ ४६ ॥ साऽऽख्यदाख्यानकं चान्यं, कस्मिन् ग्रामे गृहाश्रमी । वसत्येकोऽस्ति तस्योष्ट्रः, स्वैरं चरति सोऽन्वहम् ॥ ४७ ॥ अटव्यामटता तेन, दृष्टो बब्बूलपादपः । पत्र-पुष्प-फलाकीर्णो, व्यात्तमत्तुं तदा(तमा)ननम् ॥ ४८ ॥ परमत्तुं न शक्नोति, ततो ग्रीवां चतुर्दिशि । प्रेरयन्नपि न प्राप, पत्रमात्रमपुष्य सः ॥ ४९ ॥ निर्विण्णोऽतितरां रोषात्, शकृन्-मूत्रे विधाय सः । तस्योपरि गतोऽन्यत्र, कथमित्थं भवेत् सखि ! ? ॥ ५० ॥ कथयिष्यामि ते प्रातस्तथैवान्यदिनेऽवदत् । भद्रेऽन्धकूपगर्त्तान्तस्तेनात्तुं दुष्करस्तु सः ॥ ५१ ॥ कौतुकाख्यानकैरेवमाषण्मासीं विमोहितः । नृपस्तया समं रेमे, राज(ज्य)कार्यपराङ्मुखः ॥ ५२ ॥ ततः सपत्न्यः सामर्षाश्चेतसीदमचिन्तयन् । ऊचुश्चाहो ! शिल्पिपुत्र्याऽनया राजा वशीकृतः ॥ ५३ ॥ त्यक्त्वा कुलीनाः त्वा देवी, राज(ज्य-) कार्यं विहाय यः(च) । सेवते चित्रकृत्पुत्रीमल्पां तन्मयतां गतः ॥ ५४ ॥ अथो कनकमञ्जर्या, वासापवरकान्तरे । प्रविश्य मुक्त्वा

मध्याह्ने, यासांस्याभरणानि च ॥ ५५ ॥ राजसत्कानि चाऽऽत्मीयपितुर्यांसांस्वलङ्कृतीः । परिधाय स्वजीवस्य, शिक्षामेषमदात् सदा ॥ ५६ ॥
[ युग्मम् ] मा ऋद्धिगौरवं जीव !, कुर्वीथा मा छथा मदम् । मा विसार्पीरयात्मानं, सर्वर्द्धिर्भूभुजस्त्वियम् ॥ ५७ ॥ दण्डितः खण्डितो
वेषः, पैतृकोऽयमलङ्कृतिः । सीसक-त्रपु-कस्तीरमयी तेऽ(त)त्र मदो हि कः ? ॥ ५८ ॥ उत्सेकं चेटक ! चेद् जीव !, मनागपि करिष्यसि ।
तर्हि गृहीत्वा ग्रीवायां, नृपो निष्कासयिष्यति ॥ ५९ ॥ छिद्रं विलोकयन्तीभिः, सपत्नीभिर्विलोक्य तत्, तस्याश्चेष्टितमन्येद्युरित्यमुक्तं
नृपाग्रतः ॥ ६० ॥ यद्यप्यस्मासु देवासि, विरक्तस्त्वं तथापि ते । रक्षामोऽकुशलं यस्मात्, स्त्रियः स्युः पतिदेवताः ॥ ६१ ॥ वशीकृतो-
ऽनया वेत्सि, कार्याकार्यं न किञ्चन । त्वत्कृते साधयन्त्यस्ति, मन्त्रं या क्षुद्रकार्मणम् ॥ ६२ ॥ न मन्यसे यदि तदा, स्वाऽऽप्तपुंसा निरूपय ।
मेने राड् भृशमाख्यानात्, तासं स्वादार्द्रमप्ययः ॥ ६३ ॥ ततोऽपवरिकामध्ये, प्रविष्टायाः स्वयं नृपः । तस्या व्यमुं रहश्चेष्टां, निश्चेष्टस्त-
स्थिवान् रहः ॥ ६४ ॥ आत्मनः शासनं सोऽस्या, वीक्ष्य दध्याविदं हृदि । अहो ! वैदुष्यमेतस्या, विवेकोऽहो ! मदच्युतिः ॥ ६५ ॥
विरूपकं पृथेतस्यां, सपत्न्यश्चिन्तयन्ति ताः । गुणं दोषतयेक्षन्ते, धिक् सापत्न्यं हि योषिताम् ॥ ६६ ॥ ततस्तुष्टेन सा राज्ञा, सर्वस्व(स्व)
स्वामिनी कृता । पट्टो बद्धो महिषीत्वे, लभन्ते गौरवं गुणाः ॥ ६७ ॥ क्रमाद् विमलचन्द्राचार्यान्तेऽङ्गीकृतवान् नृपः । श्राद्धधर्मं तया
सार्द्धं, प्रपाल्यैपाऽगमद् दिवि ॥ ६८ ॥ ततश्च्युत्वाऽथ वैताढ्ये, सा पुरे तो(ता)रणाह्वये । पुत्री कनकमालाऽभूत्, दृढशक्तेः
खचारिणः ॥ ६९ ॥ क्रमेण यौवनं प्राप्ता, वासवाख्यखचारिणा । सा रूपाक्षिप्तचित्तेन, हृता मुक्ताऽत्र पर्वते ॥ ७० ॥ विकृत्य स्थापिता
वासं, करिष्येऽस्याः करमहम् । विचयाऽत्र कृता वेदिः, सामग्र्याविष्कृताऽखिला ॥ ७१ ॥ [ युग्मम् ] इतश्च कनकतेजास्तस्या-
स्यागतोऽग्रजः । सार्द्धं वासवखेटेन, युयुधे क्रोधदुर्धरः ॥ ७२ ॥ अन्योन्यं शस्त्रघातेन, मम्रतुस्तावुभावपि । तस्मौ कनकमालाऽपि,

चतुर्थनमतिप्रत्येकबुद्धवक्तव्यता ।

तत्र भ्रातृशुचाऽर्दिता ॥ ७३ ॥ तत्रान्येद्युः सुरः कश्चिदागतो व्यन्तराह्वयः । स विद्याभृत्सुतामूचे, प्राग्जन्मजनकोऽस्मि ते ॥ ७४ ॥ यावत् सुरो जल्पतीदं, तावत् स(स)सुत-कन्ययोः । गवेषणार्थं तत्राऽऽगाद्, दृढशक्तिर्नभश्चरः ॥ ७५ ॥ अन्यरूपा कृता कन्या, ततो देवेन मायया । त्रीण्यपि मृतरूपाणि, दर्शितानि खचारिणः ॥ ७६ ॥ दृष्ट्वा तानि खगो दध्यौ, वासवेन हतो हि मे । सुतस्तेनाप्यसौ तेन, म्रियमाणेन सा हता ॥ ७७ ॥ धिगस्तु वस्तुतो भोगानिति वैराग्यरञ्जितः । दृढशक्तिर्ललौ दीक्षां, बुद्ध्यन्तेऽल्पेऽपि साधवः ॥ ७८ ॥ हृत्वा मायां न(त)तः साधुर्व्यन्तरेणानयाऽपि च । स्वभ्रातृवधवृत्तान्तं, सर्वं साऽऽख्यत् पितुः पुरः ॥ ७९ ॥ दृष्टं किमेतदित्येतां, पप्रच्छ प्राक् मया मुनिः । सुरोऽब्रवीत् मया माया, कृता शृण्वत्र कारणम् ॥ ८० ॥ जितशत्रुरभूद् भूपः, पुरे क्षितिप्रतिष्ठिते । चित्राङ्गदसुता तेनोढा सुश्राविका तु सा ॥ ८१ ॥ निर्यामितोऽनया पञ्चनमस्कारेण चित्रकृत् । स मृत्वा व्यन्तरो नाम सुरोऽभूत् स त्वहं मुने ! ॥८२॥ अन्यदाऽहमिहाऽऽयातो, वीक्ष्यैतां शोकसङ्कुलाम् । स्नेहोऽभूद् बाढमेतस्यां, ततश्चिन्तितवानिदम् ॥ ८३ ॥ कश्चिद् बन्धुविशेषो मे, ज्ञातं चावधिना ततः । मृत्वा प्राग्भवमत्पुत्री, जातेयं खेचराऽऽत्मजा ॥ ८४ ॥ त्वामायान्तमिहाऽऽलोक्य, मा पित्रा सह यात्यसौ । तद्वियोगासहेनान्यरूपा कन्या कृता मया ॥ ८५ ॥ जातोऽधुना सखेदोऽस्मि, यद् भवान् विप्रतारितः । तन्महात्मन् ! क्षमस्वागो, ममादो दोष्मतां वर ! ॥ ८६ ॥ व्रतमपि व्रतलाभैकहेतुत्वादुपकार्यभूः । त्वमित्युक्त्वा व्रतोत्सुको, विजहार यथासुखम् ॥ ८७ ॥ वृत्तं कनकमालाऽपि, स्मरन्ती व्यन्तरोदितम् । प्राप जातिस्मृतिं साक्षाद्, विदाञ्चक्रे तथैव च (तत्) ॥ ८८ ॥ स्नेहात् ववोऽवदद् देवं, भविता तात ! को वरः ? । ममेत्युक्तोऽवदद् देवो, विज्ञायावधिनाऽऽत्मनः ॥ ८९ ॥ देवो भूत्वाऽभवद् भद्रे !, दृढसिंहसुतोऽधुना । नाम्ना सिंहरथो भर्त्ता, भविता प्राक्पतिस्तव ॥ ९० ॥ कथं तस्यात्र संयोगो, भावीत्युक्ते(क्तो) सुरोऽवदत् । स एष्यति



चतुर्थनमतिप्रत्येकबुद्धवक्तव्यता।

नृपो भद्रे !, वक्रशिक्षितवाजिना ॥ ९१ ॥ उद्वेगं मा कृथास्तत् त्वमेष तिष्ठामि तेऽन्तिके(कम्) । तस्य सम्पादक इति, स्थितोऽत्रावास एव सः ॥ ९२ ॥ ततः कनकमालाऽपि, क्रीडन्ती व्यन्तरैः समम् । आर्यपुत्रानयत् कालं, साऽहं स व्यन्तरः पुनः ॥ ९३ ॥ कल्ये मेरुगिरौ चैत्यवन्दनार्थं ययावथ । अपराह्णे भवानागात्, मत्पुण्यैः प्रेरितोऽद्भुतैः ॥ ९४ ॥ स्नेहौत्सुक्यवशादात्मा, त्वया सार्द्धं विवाहितः । प्रतीक्षितो न चा(त्वा)ऽऽगच्छन्, स सुरः प्राक्तनः पिता ॥ ९५ ॥ एष स्वामिंस्त्वया पृष्टः, स्ववृत्तान्तो मयोदितः । जाता जातिस्मृतिश्चिन्तयतः सिंहरथस्य तत् ॥ ९६ ॥ अत्रान्तरे सुरस्त्रीभिर्वृतस्तत्राऽऽगतः सुरः । राज्ञा नत्वसमाचख्यौ, सा स्वोद्वाहमहोत्सवम् ॥ ९७ ॥ ततोऽभिनन्दितो राजा, सुरेण हर्षनिर्भरम् । मध्याह्ने दिव्यमाहारं, भोजितः प्रियया समम् ॥ ९८ ॥ स्थित्वेत्थं मासमेकं स, स्वप्रियां प्राह पार्थिवः । प्रिये ! प्रत्यर्थिवर्गो मे, देशमुद्वाटयिष्यति ॥९९॥ यामस्तदनुमन्यस्व, स्वाम्यादेशस्तथेति सा । ऊचे परं पुरं दूरे, गन्तुं ते दुष्करं पदा ॥ १०० ॥ गृहाण तेन प्रज्ञप्तिविद्यां मत्तस्ततो नृपः । जग्राह तां हि को विद्यामायान्तीं वा रमां त्यजेत् ? ॥१०१॥ विधिना साधयित्वा तां, पुरेऽगात् समहोत्सवम्(ः) । ज्ञातव्यतिकरैश्चाभिनन्दितो नागरैर्नृपः ॥१०२॥ एवं याति नृपस्तत्र, पञ्चमे पञ्चमे दिने । विहृत्याहानि कति(कानि)चित्, समं कनकमालया ॥ १०३ ॥ यदेतीति नगे होप, तस्मादेषोऽस्तु नग्नतिः । इति लोकैः कृतं तस्य, नामाऽन्वर्थाभिधायकम् ॥१०४॥ गतो नग्नतिरन्येद्युस्तत्रोक्तं(क्तो) व्यन्तरेण भोः ! । स्वाम्यादेशो ममायातः, कर्त्तव्यो निश्चयेन सः ॥१०५॥ तत्र कालविलम्बो मे, भूयान् भावी ततो मम । वियोगे कुरुते नैषाऽधृतिं कार्यं तथा त्वया ॥ १०६ ॥ उपायमपरं राजा, जानंस्तत्र पुरं व्यधात् । चैत्यान्यचीकरत् चारुमूर्तीस्तत्रार्हतां न्यधात् ॥ १०७ ॥ आनीता बहवो लोकाः, प्रलोभ्याद्रिगुणोक्तिभिः । सोऽनैषीत् समयं राज्यं, कुर्वंस्तासां तथाऽर्हणाम् ॥ १०८ ॥ अन्येद्युरतु यात्रार्थं, निर्गतो नग्नतिर्नृपः । पथ्येका सहकारस्य, गृहीता तेन मञ्जरी ॥ १०९ ॥

चतुर्थनग्नति-प्रत्येकबुद्ध-वक्तव्यता।

स्कन्धावारेण सर्वेण, गृह्णताऽस्य दलादिकम् । चक्रे काष्ठावशेषो हि, गतानुगतिको जनः ॥ ११० ॥ प्रत्यावृत्तो नृपोऽपृच्छत्, स चूतः क्वाद्य योऽभवत् ? । दर्शितो मन्त्रिणोचे राट्, कथं जातः स ईदृशः ? ॥ १११ ॥ मञ्जर्येका त्वयाऽग्राहि, सैन्येनास्य दलादिकम् । कृतः काष्ठावशेषोऽयमात्रः फलोऽपि मञ्जयक् ॥११२॥ तं दृष्ट्वा नृपतिर्दध्यावहो! यावद् रमा भवेत् । तावत शोभा चला सा तु, लहर्य इव वारिधेः ॥११३॥ चिन्तयन्न(न्नि)ति सम्पन्नवैराग्यैकतरङ्गितः । प्रत्येकबुद्धः शुद्धात्मा, प्राव्राजीत् नग्नतिर्नृपः ॥११४॥ उक्तं च—

"जो चूयरुक्खं तु मणाभिरामं, समंजरी-पल्लव-पुप्फचित्तं । रिद्धिं अरिद्धिं समुपेहिया णं, गंधाररायावि समिक्ख धम्मं ॥ ११५ ॥"[1]

[ आर्षत्वात् "समीक्षते" अङ्गीकुरुते ] चत्वारो विहरन्तस्ते, पुरे क्षितिप्रतिष्ठिते । चतुर्मुखे देवकुले, आविशन् दैवयोगतः ॥ ११६ ॥ पूर्वस्यां करकण्ड्वाख्यः, सोऽपाच्यां द्विमुखोऽविशत् । यक्षो नामुष्य विमुखं, स्थास्यामीत्यास्यमातनोत् ॥११७॥ पश्चिमायां नमिमुनिस्तत्राप्यासीत् तदाननम् । उदीच्यां नग्नतिस्तस्याभूत् तदभिमुखं मुखम् ॥ ११८ ॥ आबाल्यात् करकण्डोश्च, साऽस्ति कण्डूरथामुना । कर्णः कण्डूयितः कण्डूयनेन मसृणात्मना ॥ ११९ ॥ सङ्गोपितं तदेकत्र, तद् दृष्ट्वा द्विमुखोऽवदत् । त्यक्त्वा राज्यादिकं सर्वं, सङ्ग्रहं कुरुषेऽस्य किम् ? ॥ १२० ॥ ततो नमिरुवाचैवं, राज्ये ते पैतृके यदि । बहुकृत्यकृतस्तेषामद्य कृत्यकरोऽसि किम् ? ॥ १२१ ॥ गन्धारोऽप्यभवीत् सर्वं, त्यक्त्वा मोक्षोद्यतो भवा(व)न् । साधो! गर्हसि किमपरानात्मनो हितकारकान् ? ॥ १२२ ॥ करकण्डुरथोऽ(था)वोचत्, श्रमणं ब्रह्मचारिणम् । निवारयन्तमहिताद्, वक्तुं नार्हसि दोषिणम् ॥ १२३ ॥ प्रपन्ना अनुशास्ति ते, करकण्डुकृतामिमाम् । चत्वारः करकण्ड्वाद्याः, क्रमेणाऽऽपुः शिवश्रियम् ॥ १२४ एतदेवाऽऽह—[ ग्रन्थाग्रं २००३ ],

1 "चूतवृक्षं तु मनोऽभिरामं, समञ्जरी-पल्लव-पुष्पचित्रम् । ऋद्धिमनृद्धिं समुत्प्रेक्ष्य गान्धारराजोऽपि समीक्षते धर्मम् ॥ ११५ ॥"

कथार्णवाङ्कायां वृत्तौ पञ्चमो विश्रामः ।

चतुर्थनग्नतिप्रत्येकबुद्धवक्तव्यता ।

नयरम्मि खिइपइट्ठे, चउरो वि पकप्परं समुल्लावं। अकरिंसु तत्थ जाओ, जक्खो भत्तीइ चउवयणो ॥६३॥ तथा—
पुष्फुत्तराउ चयणं, पव्वज्जा तह य तेसि समकालं। पत्तेयबुद्ध(द्धि) केवल(लि) सिद्धि गया एगसमएणं(-यम्मि)॥६४॥

व्याख्या—गाथायोर्गाथयोरक्षरार्थ उक्तकथानकांशादेवावसेयः। नवरम्—"अकरिंसु" त्ति अकार्षुः। तथा प्रव्रज्या तेषां 'समकालं' युगपदेव, प्रत्येकबुद्धत्वं केवलित्वं सिद्धत्वं च 'गताः' प्राप्ताः 'एक(कैन)समयेन' परमनिकृष्टकालेन। इति गाथार्थः॥ ६३-६४॥
[इति श्रीनमतिसम्बन्धः] इति श्रीचतुःप्रत्येकबुद्धचरित्रम्॥

अथ प्रसन्नचन्द्रर्षिमभिधातयन्ति—

वीरजिणकहियसत्तमपुढवी-सवट्टसिद्ध(द्धि)गइजोग्गो। नंदउ पसन्नचंदो, तक्कालं केवलं पत्तो॥ ६५॥

व्याख्या—प्रसन्नचन्द्रो नृपो नन्दतु। किंविशिष्टः? वीरजिनेन कथितः—उक्तः सप्तमपृथिव्याः सर्वार्थसिद्धस्य च क्रमात् सिद्धिगतेश्च योग्यः—उचितोऽशुभ-शुभध्यानविशेषादिति शेषः। पुनः किंविशिष्टः? 'तत्कालं' तदैव 'केवलं' पञ्चमज्ञानं प्राप्तः। इति गाथार्थः॥६५॥ तथा—

पिउतावसउवगरणं, पमज्जयंतस्स केवलं नाणं। उप्पन्नं जस्स जए, वक्कलचीरिस्स तस्स नमो॥ ६६॥

व्याख्या—पिता चासौ तापसश्च पितृतापसस्तस्योपकरणं—भाजनादि तत् प्रमार्जयतो यस्य केवलज्ञानमुत्पन्नमिति क्रियायोगः। "तस्स" त्ति "छट्ठिविभत्तीइ भण्णइ चउत्थी" इति प्राकृतलक्षणात् तस्मै वल्कलचीरिणे 'नमः' नमस्कारोऽस्तु। इति गाथाक्षरार्थः॥६६॥ गाथार्थस्तु द्वयोर्गाथयोर्भ्रातृद्वयदृष्टान्ताद् ज्ञेयः। स चायम्—

जम्बूद्वीपेऽत्र गाम्यार्थभरतक्षेत्रभूषणम्। मगधाख्येऽभवद् देशे, पुरं राजगृहाह्वयम्॥ १॥ तत्र शात्रवनक्षत्रतेजोहृत् श्रेणिका-

प्रसन्नचन्द्र-वल्कलचीरिमहर्षि-वर्णनम्।

ह्वयः । राजा राजति राजेव, कुमुदानन्ददायकः ॥२॥ चैत्ये गुणशिलेऽन्येद्युः, श्रीवीरः समवासरत् । जगच्चक्षुर्जगच्चक्षुरिवाकाशस्थलेऽमले ॥३॥ तदागमं सदागममिवाऽऽविरकरोत् मुदा । गुरुरारामिकः च्छात्रधात्रीशायाऽऽशयाद्भुतः ॥४॥ दानं दत्त्वाऽनृणीकारं, तस्मै तोषोत्तरो नृपः । अध्यासामास चाऽऽकाशं, शुभ्रं शुभ्रांशुवद् गजम् ॥५॥ चचाल बलचलनैश्चालयन्नचलाव(च)लम् । उत्सुको वत्सको धेनुमिव द्रष्टुं नृपः प्रभुम् ॥ ६ ॥ मार्गे ददृशतुस्तस्य, पदाती मुनिमेककम् । उत्सर्गेस्थं पदैकेन सूर्यन्यस्तेक्षणद्वयम् ॥ ७ ॥ मूर्त्तं शान्तरसं स्वान्तध्यातशान्तरसं मुनिम् । वीक्ष्यैकः सुमुखाभिख्यः, स्पष्टं तुष्टाव सेवकः ॥ ८ ॥ धन्यो मुनिरयं एवं हि, तप्यते दुस्तपं तपः । सुलब्धं जनुरेतस्य, लोकद्वयहितावहम् ॥९॥ तत् श्रुत्वा दुर्मुखाख्योऽन्योऽसहिष्णुर्गुणवर्णना(न)म् । वृश्चिकस्पृष्टवद् दुष्टमुज्जगार वचोविषम् ॥१०॥ दृग्भ्यामदर्शनीयोऽयं, नास्मात् पापवान् परः । यो हि बाल(लं)सुतं राज्ये, न्यस्य पाखण्डमाश्रयत् ॥११॥ स बालो मन्त्रिभी राज्यादथ दूरीकरिष्यते । ततो भविन्री पत्नीनां, गतिः काऽमुष्य दुर्मतेः ? ॥ १२ ॥ पुत्रच्छेदात् कुलोच्छेदस्तच्छेदात् पितृतर्पणम् । कः कर्त्ता ? तदभावे हि, स्वर्गमार्गोऽतिदुर्गमः ॥ १३ ॥ भूतग्रस्त इव श्रुत्वा, तत् मुनिर्विस्मृतव्रतः । अध्यारुरोह दुर्ध्यानाधिरोहिण्येकमूर्द्धनि ॥ १४ ॥ शत्रूणां मन्त्रिणां वृन्दं, पुरस्थानामिवायुधैः । मनसा खण्डशश्चक्रे, स्मारं स्मारं क्रमेण सः ॥ १५ ॥ इतस्तत्रागतो राजा, गजादुत्तीर्य तं मुनिम् । नमस्कृत्यास्तवीदेवं, भक्त्या विरचिताञ्जलिः ॥ १६ ॥ अहो ! सुलब्धं जन्मास्यानेन तीर्णो भवार्णवः । एकपादाद्यवस्थानं, कः कुर्यादीदृशं तपः ? ॥ १७ ॥ ततोऽगात् समवसृतौ, नत्वाऽन्त्यपरमेष्ठिनम् । मनुष्यपर्षदासीनः, पपौ राड् देशनामृतम् ॥१८॥ प्रपच्छावसरे राजा, स्वामिन् ! यस्मिन् क्षणे मया । स राजर्षिर्नतस्तत्र, मृतः कोत्पद्यते तदा ? ॥ १९ ॥ स्वाम्याह सप्तमावन्यां, तत् श्रुत्वा विस्मयात् नृपः । दध्यावहो ! सप्तमोर्व्यामीदृगुत्पद्यते कथम् ? ॥२०॥ पुनः क्षणान्तरेऽपृच्छत्, काधुनोत्पद्यते हि सः ? । ऊचे वि(प्र)भुः



प्रसन्नचन्द्र-वल्कलचीरिमर्षि-वर्णनम् ।

स सर्वार्थसिद्धियोग्योऽधुनाऽभवत् ॥ २१ ॥ कथं द्विधोत्तरं स्वामिन्निति पृष्टे महीभुजा । स्वाम्याहान्तःपरीणामात्, कथमाख्याहि मे प्रभो! ॥ २२ ॥ प्रभुराह यदा राजन्[1], स राजर्षिर्नतस्त्वया । रौद्रध्यानी तदा सोऽभूत्, शुक्लध्यान्यधुना तु सः ॥२३॥ राजोचे कथमित्याख्यत्, स्वाम्यग्रेसरयोस्तव । शुभाशुभं वचः श्रुत्वा, मुनिर्दुर्ध्यानमासदत् ॥ २४ ॥ क्षीणान्यखिलशस्त्राणि, घ्नतस्तान् मनसा रिपून् । तस्यावशेष एकोऽभूत्, शत्रुः शस्त्रं च नैककम् ॥२५॥ हन्म्येनं केन शस्त्रेण?, शिरस्केनेति यावता । वाहितः स्वकरस्तावद्, दृष्टं स्वं लुञ्चितं शिरः ॥२६॥ जातानुताप-सन्तापस्ततो मुनिरचिन्तयत् । अहो! केयमवस्था मे, परिहारात्मिकैनसाम्? ॥ २७ ॥ क्व चायं समरारम्भो, दुरारम्भैककारणम् । कस्य पुत्राः? स्त्रियः कस्य?, मुधाऽऽत्मा मलिनीकृतः ॥ २८ ॥ इति ध्यानाधिरूढस्य, मोहनिद्रानिरोधतः । विवेकार्कोदयात् तस्योन्मीलितं चक्षुरान्तरम् ॥ २९ ॥ पुष्टध्यानानलप्लुष्टदुष्टकर्मेन्धनो मुनिः । भेजे स्वाभाविकावस्थामुष्णयारीव शीतताम् ॥ ३० ॥ पुरस्थानिव नत्वाऽस्मानालोच्य प्रतिक्रम्य च । शुद्धोऽभूदिति राट् श्रुत्वा, तद्गुणैर्वासितोऽभवत् ॥ ३१ ॥ स्वामिन्! बालं सुतं राज्ये, निवेश्यैष विशांपतिः । प्राव्राजीत् किमिति? ब्रूहि, पप्रच्छ श्रेणिकः प्रभुम् ॥ ३२ ॥ स्वाम्याह पोतनपुरे, सोमचन्द्रो नृपोऽभवत् । धारिणी धरि(र)णीवाभूत्, तस्य सर्वसहा प्रिया ॥३३॥ अन्येद्युः सा गवाक्षस्था, कुर्वाणा पत्युरात्मनः । शिरोजानां विवरणं, ददर्शैकं कचं सितम् ॥३४॥ ततो देवाऽऽगतो दूतो, धारिण्येत्युदिते नृपः । तमपश्यन् प्रियेऽद्यापि, किं नायाति स दृक्पथम्? ॥ ३५ ॥ पुंवेषो नैष किन्त्वागात्, पलितो धर्मदूतकः (दूतवत्) । यमभीतिं विभो! वक्तुं, प्रेषितो धर्मभूभुजा ॥ ३६ ॥ तद् श्रुत्वा नृपतिं दूनं, वीक्ष्याऽऽख्यद् धारिणी प्रियम्(य!)। किं दुर्मनायसे? कार्या, पटहोद्घोषणा पुरे ॥३७॥ कुर्यात् पलितवार्तां मे, कश्चित् मेति कथाप्यताम् । नृपोऽप्याह न जिह्रेमि, प्रियेऽस्य दर्शनात् परम् ॥३८॥ पूर्वजाः पूर्वमेवास्य, दर्शनात् नो ललुम्रेतम् । न शक्तो विषयासक्तोऽद्याऽ-

प्रसन्नचन्द्र-वल्कलचीरिमर्षि-वर्णनम् ।

प्याद्दातुमर्हं व्रतम् ॥३९॥ गृह्णाम्येवाधुना किन्तु, राज्यमारोप्यते कथम् । तनौ तनूजे ? तत् पत्नि ! तं वर्द्धय गृह(हं)स्थिता ॥४०॥ धारि-
पयप्याद देवाहं, भाविनी तेऽनुयायिनी । प्रसन्नचन्द्रो दीर्घायु, राज(ज्य)र्द्धा वर्द्धतां स्वयम् ॥ ४१ ॥ राज्येऽभिषिच्य तं बालं, धात्र्या
पत्न्या सहाऽऽददे । दिक्प्रो(प्रे)क्षिततापसानां, तपस्यां सोमचन्द्रराट् ॥४२॥ चिरोद्वसाश्रमे गत्वा, कृत्वा पर्णैर्नवोटजम् । वन्यैर्धान्यैर्दलैः
शुष्कैः, प्राणयात्रामसूत्रयत् ॥४३॥ पत्यर्थं धारिणी तल्पं, कल्पते मसृणैस्तृणैः । तैलं निष्कास्येङ्गुदीभ्यो, दीपं निश्युटजान्तरे ॥ ४४ ॥
आलिलेप प्रियाऽरण्यगोमयैरुटजाङ्गणम् । तदर्थं चाऽऽनयद् भूपो, वनव्रीहीन् जलानि च ॥ ४५ ॥ इतश्च प्रागनाख्यातो, व्रतानादानश-
ङ्कया । चक्रस्थ इव मृत्पिण्डो, गर्भोऽस्या ववृधे क्रमात् ॥ ४६ ॥ प्रिये ! कुलकलङ्कोऽय, कस्तेऽपृच्छदिति प्रियः । साऽऽह्वाथ नाथ ! गार्ह-
स्थ्यावस्थाभूर्नोधुनातनः ॥४७॥ धारिणी धरि(र)णी बीजमिवाजीजनदात्मजम् । तदैव दैवयोगेन, प्रसूः सूतिरुजा मृता ॥४८॥ वल्कला-
न्येव चीराणि, घने(तनौ) तैरेष वेष्टितः । पिता वल्कलचीरीति, तेन तस्याभिधां व्यधात् ॥ ४९ ॥ अरण्यमहिषीक्षीरं, पाययित्वा
तमर्भकम् । धात्र्यै धात्रीपतिरदात्, सुपाल्याः स्त्रीभिरर्भकाः ॥५०॥ स्वामिनीमिलनोत्केव, मृता धात्र्यपि दैवतः । सोऽपि सार्द्धं व्यधात्
पांशुक्रीडामर्भो मृगार्भकैः ॥५१॥ पयोऽपीप्यत् पिता पुत्रं, महिषीणां तथाऽशनम् । व्रीहिभिः संस्कृतैः स्नेहात्, तद्वृद्ध्यर्थमचीकरत् ॥५२॥
क्रमेण क्रमण-चङ्क्रमणशक्तो बभूव सः । वर्द्धमानः पितुश्चिन्तातीतैः सार्द्धं मनोरथैः ॥ ५३ ॥ तातं शुश्रूषते श्रान्तं, पादसंवाहनादिभिः ।
वाढं प्रौढो दृढाङ्गोऽसौ (प्रौढैर्दृढाङ्गैस्तैः), सत्पुत्राः पितृदे(दे)वताः ॥५४॥ स्त्रीणां नामापि नाज्ञासीत्, निःस्त्रीकेऽस्मिन् वने वसन् । आजन्म
ब्रह्मचार्येव, व्रती वल्कलचीर्यभूत् ॥ ५५ ॥ प्रसन्नचन्द्रश्चान्येद्युः, शुश्राव वनवासिनम् । सोमेन्दु-धारिणीजातं, जनश्रुत्या निजानुजम्
॥५६॥ तत् श्रुत्वा मिलनोत्केन, राज्ञाऽऽकार्योदितास्ततः । भोश्चित्रकृतो ! यात, वने मत्पित्रलङ्कृते ॥५७॥ तत्राऽऽलिख्य मम भ्रातृरूपमानयत

हुतम्। प्रमाणमादेश इति, प्रोच्य तेऽपि ययुर्वनम् ॥ ५८ ॥ विज्ञानातिशयाद् विश्वकर्ममूर्त्यन्तरैरिव। रूपमालिख्य तैस्तस्य, नृपाय प्राभृतीकृतम् ॥ ५९ ॥ तद् वीक्ष्याक्ष्णोः सुधाकुल्यं, वात्सल्यातुल्यमुत् नृपः। दध्यौ न पितुराकारो, हतो(हृतो)ऽनेन मनागपि ॥ ६० ॥ दिक्षा दृग्भ्यश्चिराद् भ्रातस्त्वमित्युक्त्वा स सस्वजे। जघ्रौ मूर्ध्नि न चोत्सङ्गादीपदप्युदतारयत् ॥ ६१ ॥ उवाच च पिता वृद्धो, व्रतं चरतु दुश्चरम्। साम्प्रतं साम्प्रतं नास्य, शिशोस्तस्यानुसेवनम् ॥ ६२ ॥ हहा! क्रीडाम्यहं राज्यह्रदाङ्के राजहंसवत्। वने वनेचर इव, भ्राता भ्रमति सैककः ॥६३॥ दुरानेयः पुरेऽरण्यजीववत् सोऽन्यमानवैः। इति ध्यात्वाऽऽदिशद् वेश्यास्तद्वशा(श्या)र्थमथार्थवित् ॥६४॥ रे रे! यात वने वेश्या!, मुनिवेषाः प्रलोभ्य तम्। स्वाङ्गस्पर्शैः फलैः खाण्डैरिहाऽऽनयन्तु मेऽनुजम् ॥६५॥ बिल्वादीनि फलान्येता, अप्यादाय ययुर्वनम्। सोऽपि वीक्ष्य मुनिवेषं, तासां चक्रेऽभिवादनम् ॥६६॥ सोऽपृच्छदृजुधीश्चैतत्, के यूयं? क च आश्रमः?। तेऽप्यूचुर्वयमृषयः, पोतनाश्रमवासिनः ॥ ६७ ॥ तवातिथय आयाताः, किमातिथ्यं करिष्यसि?। बिल्वादीनि फलान्येषां वन्यान्येषोऽप्यढौकत ॥ ६८ ॥ तेऽप्याहुरीदृशान्यस्ति, नीरसान्याश्रमे न नः। कोऽपि किन्त्वृषिपुत्रर्षे!, तेषां वीक्षस्व वर्णिकाम् ॥ ६९ ॥ ततः फलानि खाण्डानि, जिह्वास्वादूनि योषितः। दत्त्वा तस्य करं पीनवक्षोजे स्वस्य च न्यधुः ॥ ७० ॥ सोऽपृच्छद् भद्रकः किं च, एते चोरःस्थले स्थले?। तेऽप्यूचुरस्मदाश्रमफलानां फलमीदृशम् ॥७१॥ सुकुमारं भवेदङ्गं, स्थूले चोरःस्थले स्थले। अशक्यो वक्तुमास्वादोऽपुण्यानां दृग्गोचरः ॥ ७२ ॥ चेत् चिरादिपसीमानि, तदेह्यस्माकमाश्रमे। मेने सोऽपि रसज्ञा हि न कारयति किं नृणाम्? ॥ ७३ ॥ ततस्ताभिः स्वसङ्केतस्थानं तस्मै निवेदितम्। तापसोपकृतिं त्यक्त्वा, तत्राऽऽगात् सोऽपि सत्वरम् ॥ ७४ ॥ द्रुमारूढैरथो पुम्भिः, सोमचन्द्रर्षिरीक्षितः। आगच्छन् योषितां तासां, पुरश्च प्रतिपादितः ॥ ७५ ॥ अन्योन्यममिल(वद)न्त्वस्ता मा शाप्सीदिति भीतितः। त्रस्तास्तस्मात् मुनेर्व्याधाद् वनमृग्य इव

प्रसन्नचन्द्र-वल्कलचीरिमर्पिवर्णनम्।

प्रसन्नचन्द्र-वल्कलचीरिमर्षि-वर्णनम् ।

स्त्रियः ॥ ७६ ॥ ताते स्थानं गते तत्र, सोऽपश्यंस्ता इतस्ततः । वनं बभ्राम नष्टस्व, इव पश्यन् पदे पदे ॥ ७७ ॥ एकं रथिनं वीक्ष्यैष, प्राह ताताभिवादये । क यास्यसीति तेनोक्तो(क्ते) प्रत्याख्यत् पोतनाश्रमे ॥ ७८ ॥ वदेहि सार्थे यास्यामो, वयं तं चेत्यवक् रथी । तन्निशम्यान्वगाद् धावन्, मृगवद् वल्कलाम्बरः ॥ ७९ ॥ रथाधिरूढां तत्पत्नीं, वीक्ष्य तातेति सोऽवदत् । पप्रच्छ सा प्रियं स्वामिन् !, चाटुयागेष किं शिशुः ? ॥ ८० ॥ सोऽवक् प्रिये ! वनेऽमुष्मिन्, निःस्त्रीके निवसन्नयम् । स्त्री-पुंसव्यक्तिभावज्ञो, नाद्याप्यस्त्यृपिपुत्रकः ॥ ८१ ॥ प्रेर्यमाणान् हयान् वीक्ष्य, मार्गे वल्कलचीर्यवक् । किमेते तात ! वाहान्ते, मृगा ह्येवं तपस्विनः ? ॥८२॥ स्मित्वाऽथ रथिकः स्माह, भद्रैतेषामुपस्थितम् । कर्मेदृगेव किं कुर्मो ?, नैवाऽऽगो नो मनागपि ॥८३॥ स(स्वः) तस्मै मोदकान् स्वादून्, रथी पथि ददावथ । प्राग् लब्धास्वादसञ्जातस्मृतिः स्माहर्षिसूरिति ॥८४॥ अखादिषं फलान्येवंविधान्येवं पुराऽप्यहम् । दत्तानि मुनिभिर्मह्यं, पोतनाश्रमवासिभिः ॥८५॥ तत्स्वाद(दाद्) द्विगुणीभूतोत्साहो गन्तुं पुराय सः । कपाय-रूक्षाम्रवन-व्रीहि-विल्वाद्युपद्रुतः ॥ ८६ ॥ रथिनोऽभूत् समं युद्धं, दोष्मतैकेन दस्युना । हतो द्वेविप्रहारेण, रथिना पार(रि)पन्थिकः ॥८७॥ तद्घातविधुरश्चौरो, बभाषे भो ! रिपोरपि । घातः प्रशस्यते तेन, किञ्चित् त्वां वच्मि मानव ! ॥ ८८ ॥ तुष्टोऽस्मि तद् गृहाण त्वं, ममास्त्यत्र घनं धनम् । ततो न्यधुस्त्रयोऽप्येते, रथे तद्द्रव्यसञ्चयम् ॥ ८९ ॥ पोतन(नं)पुरमायातास्ते त्रयोऽपि क्रमादथ । तस्मै दत्त्वा रथी द्रव्यमूचेऽध्वसुहृदे ह्यदः ॥ ९० ॥ आश्रमेऽत्राश्रमो भद्र !, विना द्रव्यं न लभ्यते । तद् दत्त्वाऽत्रक्रये द्रव्यं, तिष्ठात्र स्वस्थमानसः ॥ ९१ ॥ इत्युक्त्वा रथ्यगात् स्थानमेषोऽप्यन्तःपुरं भ्रमन् । किमत्र यामि ? किं वाऽत्र ? पश्यन् हर्म्याण्यचिन्तयत् ॥९२॥ पुरे नराणां नारीणामृषिबुद्ध्याऽभिवादनम् । कुर्वन्नहस्यतात्यन्तं, पौरैर्वल्कलचीर्यथ ॥९३॥ प्रविष्टो गृहमेकस्या, वेश्याया आश्रमाऽऽशया । मन्वानस्तां मुनिं मुग्धोऽवादीत् ताताभिवादये ॥९४॥ उटजं प्रार्थयाञ्चक्रे, तां दत्त्वाऽत्रक्रये

धनम्। साऽप्युक्त्वाऽत्र वस स्वस्थोऽजूहवत् नापितं द्रुतम्॥९५॥ छिन्नास्तस्याङ्गसंस्कारकृते सूर्पोपमा नखाः। वेश्याया आज्ञया तेन, किमिदं हीति वादिना ॥९६॥ वल्कलोत्सारणे स्नान-सिचूत्कीकारक्षणे क्षणम्। आरटत् कपटाटोपः (प)पाटूपट इवार्भकः ॥ ९७ ॥ वेश्या प्राहो-पचारोऽयमतिथीनामिहाश्रमे। चेद् वस्तुमुटजे तेऽत्र, स्पृहाऽङ्गीकुरु तत् समम्॥९८॥ तद् वा सलोभतः सर्वं सोऽनुमेने मुनेः सुतः। नाप्यङ्गं चालयेत् सर्पो, मन्त्रेणेव वशीकृतः ॥९९॥ तस्याभ्यज्य स्वयं तैलैर्जटाकुटिलकुन्तलान्। विवव्रे वर्णिनीचोर्ण(र्णां)पिण्डमस्पृष्टकङ्कतान्॥१००॥ अभ्यज्य मृज्यमानाङ्गो, गौरिव स्नापजं सुखम्। लेभे कण्डूय्यमानोऽसौ, तत्करस्पर्शमार्दवात् ॥ १०१ ॥ स्नपयित्वाऽथ तं वेश्या, कवो(दु)ष्णैर्गन्धवारिभिः। परिधाप्याऽऽहतं वासश्चक्रेऽलङ्कृत्यलङ्कृतम् ॥ १०२ ॥ ग्राहितः करमेकस्याः कन्याया वेश्ययाऽथ सः। शुशुभे साऽङ्गिनीवास्य, गार्हस्थ्यश्रीः करस्थिता ॥ १०३ ॥ तद्वधू-वरयोर्योगे, जगुर्गीतानि योषितः। पठन्ति मुनयोऽमी किं ?, सोऽस्यादिति सविस्मयः ॥ १०४ ॥ नेदुर्दिव्यानि वाद्यानि, वेश्यावासे तदुत्सवे। पिदधे स श्रुती श्रुत्वाऽश्रुतपूर्वी वसन् वने ॥ १०५ ॥ इतश्च मुनिवेषास्ता, वेश्या राज्ञे व्यजिज्ञपन्। प्रलोभनादिवृत्तान्तं, सर्वं वल्कलचीरिणः ॥ १०६ ॥ सङ्केतस्थानमानीतोऽस्माभिर्यावत् प्रलोभ्य सः। तावद् वीक्ष्यात्र तत्तातं, त्रस्ताः शापभयाद् वयम् ॥ १०७ ॥ मोदकाद्यैस्तथाऽस्माभिर्भृशं प्रालोभ्यसौ यथा। भ्रान्ता वनाद् वनं चास्मदर्थे गामी न चाऽऽश्रमे ॥१०८॥ तत् श्रुत्वा नृपतिर्दध्यौ, हा! धिग् नाऽऽप्तो मयाऽनुजः। तीरं नीरं द्वयं नष्टं, पितृ-पुत्रौ वियोजितौ ॥१०९॥ प्राणिष्यति कथं तातवियोगे स ममानुजः ?। भ्रमन् वनाद् वनं मीन इव नीरनिराकृतः ॥११०॥ इति चिन्ताशुचाऽऽक्रान्तो, यावद् भूभुगभूद् भृशम्। शुश्राव तावद् धोंकारमधुरं मुरुजध्वनिम् ॥१११॥ रे रे! कोऽयमनात्मज्ञो, मद्दुःखाद् दुःखिते जने। वाद्यं वादयतीत्थं राट्, पश्यतेत्यादिशत् नरान् ॥११२॥ कोऽस्त्यत्रायमनात्मज्ञो, जने दुःखाकुलेऽखिले। मद्दुःखाद् यत् पुरश्चायं श्रूयते मुरु-

प्रसन्नचन्द्र-वल्कलचीरिमर्षि-वर्णनम्।

प्रसन्नचन्द्र-वल्कलचीरिमर्षि-वर्णनम्।

जध्वनिः ॥११३॥ तद् राज्ञो वचनं श्रुत्वा, जनश्रुत्या पणाङ्गना। स्वयमेत्य स्ववृत्तान्तं, प्राञ्जलिर्भूभुजे जगौ ॥ ११४ ॥ प्रागेव देव! दैवज्ञो,
ज्ञात्वा ज्ञानेन मामवक्। ऋषिवेषजुषे यूने, त्वया देया स्वका कनी ॥ ११५ ॥ तदद्यैव युवा तादृग्वेषोऽभ्यागात् मदास्पदे। विवाहिता
कनी तेन, तेन वाद्यादि मद्गृहे ॥ ११६ ॥ न जाने दुःखिनं नाथमज्ञानादुत्सवोत्सुका। तत् क्षमस्व क्षमानाथ! ममाऽऽगोऽदः सहेतुकम्
॥११७॥ मा कदाचिद् भवेत् सेति, संशयाद् दृष्टपूर्विणः। प्राहिणोत् नृपतिस्तं चान्वेष्टुं वेश्यागृहे जनान् ॥११८॥ गत्वा तेऽप्युपलक्ष्यैनं,
सद्यो राज्ञे व्यजिज्ञपन्। दृष्टसुस्वप्नवद् राजा, तत् श्रुत्वा मुमुदेऽधिकम् ॥ ११९ ॥ ततः पट्टेभमारोप्य, सप्रियं स्वानुजं नृपः। आनि-
नाय नृपावासमुच्छलन्मर्दलध्वनिम् ॥ १२० ॥ निःशेषव्यवहारज्ञो, राज्ञाऽकार्यनुजः शनैः। तिर्यञ्चोऽप्यार्य! चातुर्यं, परैर्जानन्ति
शिक्षिताः ॥ १२१ ॥ परिणिन्येऽन्यराजन्यकन्या राजाज्ञयाऽथ सः। रेमे ताभिः समं रम्भादिभिर्जम्भरिपुर्यथा ॥ १२२ ॥ तत्
चौरदत्तं स्वर्णादि, विक्रीणानोऽन्यदा पुरे। रथी दृष्टो जनैः स्वं स्वं, तत् तद्, वस्तूपलक्षितम् ॥ १२३ ॥ उत्कमारक्षकायैतैर्बद्धाऽऽनीतो
नृपामतः। तावत् तत्पुण्यनुन्नेन, दृष्टो वल्कलचीरिणा ॥१२४॥ मम मार्गसुहृद् वृद्धोऽयमित्यालिङ्ग्य मोचितः। रथी तेन सत्त्वो हि,
नोपकारं स्मरन्ति न ॥ १२५ ॥ इतश्च सोमचन्द्रर्षिस्त्रापश्यन्निजात्मजम्। दैवेन हा! हतोऽस्मीति, वदन्नरुदटुच्चकैः ॥ १२६ ॥
प्रसन्नचन्द्रप्रहितैर्नरैरुक्ते यथास्थिते। उद्धाननयनः सोऽभूद्, ज्ञात्वा जीवन्तमात्मजम् ॥ १२७ ॥ किन्तु सूनोर्वियोगेन, रोदनादनुवा-
सरम्। रात्रीकरणमहोऽपि, तस्यान्धत्वमभूत् मुनेः ॥ १२८ ॥ तपोऽन्ते तापसैरन्यैः, सोऽपार्यत फलादिभिः। एकं वृद्धत्वं चान्धत्वं, परं
कष्टमहो! महत् ॥ १२९ ॥ अथो द्वादशवर्षान्ते, भोग्यकर्मोदयक्षयात्। दध्यौ प्रबुद्धोऽर्द्धनिशि, स्वान्ते वल्कलचीर्यदः ॥ १३० ॥ मृता
मे जातमात्रस्य, माता मां तात एव तत्। कुमारभृत्यां कुर्वाणः, पालयामास कृच्छ्रतः ॥ १३१ ॥ उत्कटं मयका कष्टं, नोज्झता तत्कटी-

प्रसन्नचन्द्र-
वल्कलची-
रिमर्षि-
वर्णनम्।

तटम्। उत्पादितं पितुर्मूत्रावस्करक्षालनादिना ॥१३२॥ तारुण्ये वयसीदानीं, तं भक्तिकरणक्षणे। त्यक्त्वाऽजितेन्द्रियोऽत्राऽऽगां, भोगकर्दमशूकरः ॥ १३३ ॥ तत्पुत्रपाशो जातोऽहमृणानर्पणतः पितुः। सोढकष्टेन येनायं(ऽह) कर्यकार्यल्पपूतरः ॥ १३४ ॥ सैवं विचिन्त्य चिन्तार्त्तः, प्रातर्भ्रातरमब्रवीत्। गन्तुमुत्कं मनो मेऽभूद्, भ्रातस्ताताश्रिताश्रमम् ॥ १३५ ॥ ऊचे प्रसन्नचन्द्रोऽपि, सदृगेव पिताऽऽवयोः। तवैवास्ति ममोत्कण्ठा, नमस्कर्तुं पितुः पदान् ॥ १३६ ॥ ततः सतत्रौ प्रस्थाय, द्वावपीयतुराश्रमम्। यानादुत्तेरतुर्भूपं, प्राह वल्कलचीर्यदः ॥ १३७ ॥ दृष्ट्वाऽऽश्रममभुं भ्राता राज्यश्रीर्मे तृणोपमा। पश्यैतानि सरांस्येष्वकार्पं क्रीडां मरालवत् ॥ १३८ ॥ फलान्यखादिपं येषां, कपिवत् ते द्रुमा अमी। पांशुक्रीडासखास्तेऽमी, बन्धुतुल्या मृगार्भकाः ॥ १३९ ॥ महिष्यस्ता इमा मातृकल्पा यासामपां पयः। सर्वं भव्यं परं तातभक्तिरत्रातिशायिनी ॥१४०॥ क्रमात् क्रमैरतिक्रम्याऽऽश्रमोर्वीं भ्रातरावुभौ। पुरो ददृशतुस्तातपादं नेत्रसुधाकरम् ॥ १४१ ॥ प्रसन्नचन्द्रो नमति, पदातिस्तात! ते पदम्। तत् श्रुत्वा सोऽपि पस्पर्श, तत्पृष्ठं प्रश्नमुत् मुनिः ॥ १४२ ॥ तात! त्वचरणाम्भोजं, नौति वल्कलचीर्ययम्। मुनिर्जघ्रौ शिरस्तस्य, पद्मानीव मधुव्रताः ॥ १४३ ॥ तदानीं सङ्गमे सून्वोः, कोष्णो बाष्पोऽपतद् दृशोः। स एवाभूत् मुनेस्तस्य, महान्ध्यध्वंसनौषधम् ॥१४४॥ अभूतां सुस्थितौ वत्सौ, स्पर्शं स्पर्शं शिरस्तयोः। सोऽपृच्छदूचतुस्तौ तु, कामं तातप्रसादतः ॥१४५॥ जज्ञे तापसभाण्डं तत्, कीदृक्षमनवीक्षितम्?। विवेशोत्यन्तरुटजं, द्रुतं वल्कलचीर्यथ ॥१४६॥ वस्त्राञ्चलेन तद् भाण्डं, दध्यौ प्रतिलिखन्नयम्। किं पात्रकेसरिकयाऽकार्पमेवं क्वचित् पुरा ॥१४७॥ इति चिन्तयतस्तस्य, जाता जातिस्मृतिस्थितिः। मर्त्यामर्त्यभवान् स्वस्यासार्षीत् ह्यःकृतकार्यवत् ॥ १४८ ॥ स्मृतं कृतं व्रतं प्राच्यं, जज्ञे वैराग्यवांस्ततः। धर्मध्यानादनु शुक्लध्यानं सोऽध्यारुरोह च ॥ १४९ ॥ तत्कालं केवलं लेभे, चिन्तारत्नमिव च्युतम्। आददे देवतानीतं, लिङ्गं प्रत्येकबुद्धराट्

(वत्) ॥ १५० ॥ पितुर्भ्रातुः प्रबोधार्थं, विदधे धर्मदेशनाम् । इतश्च समवासार्ष्मः, सतत्राऽस्तत्र भो! वयम् ॥ १५१ ॥ दत्त्वा स्वतातमस्माकं, वल्कलचीरिकेवली । परस्परोपकाराय, विजह्रेऽन्यत्र पार्थिव! ॥ १५२ ॥ प्राप्तः प्रसन्नचन्द्रोऽपि, पुरा वैराग्यवान् परम् । दीक्षाक्षणं वीक्षमाणोऽह्यानि तस्थौ कियन्त्यपि ॥१५३॥ इतश्च पोतनपुराऽऽरामे नाम्ना मनोरमे । विहरन्तः समायाता, वयमन्येद्युरुद्यताः ॥ १५४ ॥ प्रसन्नचन्द्रस्तत्कालं, राज्ये न्यस्य शिशुं सुतम् । प्राव्राजीदन्तिकेऽस्माकं, सन्तः श्रेयसि नालसाः ॥ १५५ ॥ इत्युक्त्वा विरते वीरेऽभिवृष्येव नवाम्बुदे । ददर्श देवसम्पातं, श्रेणिकोऽन्तरेऽम्बरे ॥ १५६ ॥ को देव! देवसम्पातो, दृश्यतेऽयं प्रभुर्जगौ । कर्तुं प्रसन्नचन्द्रस्याऽऽयान्त्यमी केवलोत्सवम् ॥ १५७ ॥ तत् श्रुत्वा विस्मयस्मेरो, नत्वेशं राडगाद् गृहम् । चिरं प्रसन्नचन्द्रोऽपि, विहृत्यागात् महोदयम् ॥ १५८ ॥ इति श्रीवल्कलचीरि-प्रसन्नचन्द्रमहर्षिप्रबन्धः ॥

**जं चेव य जाणामी तं चेव न व? त्ति भणिय पव्वइओ । अइमुत्तरिसी सिरिवीरअंतिए चरमदेहधरो ॥ ६७॥**

व्याख्या—अतिमुक्तर्षिः 'प्रव्रजित.' प्राव्राजीद् इति क्रिया । किं कृत्वा? 'इति भणित्वा' प्रोच्य, इतीति किं? 'यदेव' चस्य पुरः सम्बन्धाद् जानामि तदेव च "न व?" त्ति नैव जानामि, कस्मिन्? श्रीवीरान्तिके । किंविशिष्टः? चरमम्-अन्त्यं देहं-शरीरं धरतीति स तथा । इति गाथार्थः ॥ ६७ ॥ भावार्थस्त्वायम्—

अस्तीह भरतक्षेत्रे, पोलासं नाम पत्तनम् । कमलालङ्कृतं सार, कासार इव यत् सदा ॥ १ ॥ तत्र शत्रुधरित्रीशकुरङ्गत्रासकेसरी । सदाजयो जयो राजा, राजेवाऽऽनन्दकृत् सताम् ॥२॥ श्रीदेवीव हरेस्तस्य, श्रीदेवी देव्यभूत् प्रिया । या जिगाय जगद्योपित्सौभाग्यं रूपरेखया ॥ ३ ॥ साऽन्यदा द्रुममद्राक्षीद्, रात्रौ स्वप्नेऽविमुक्तकम् । तदैव दैवतो गर्भं, मञ्जरीव फलं दधौ ॥४॥ सम्पूर्णलक्षणं सम्पूर्णे

अतिमुक्तकर्षिप्रबन्धः ।

दिनेऽसूत सा सुतम् । स्वप्नेऽतिमुक्तको दृष्टोऽभूत् नाम्ना सोऽतिमुक्तकः ॥ ५ ॥ मरालबालवत् पद्मं, पद्मादङ्कमथाङ्कतः । सञ्चरन् सोऽन्ववर्द्धिष्ट, सार्द्धं(माता)पित्रोर्मनोरथैः ॥६॥ हसंश्च पुटिकादानाद्, जल्पन् मन्मनभाषया । पितुः कूर्चकचान् कर्षन्, सोऽभवद् द्विलिवार्षिकः ॥ ७ ॥ इतश्च चरमतीर्थकरो वीरजिनेश्वरः । विहरन् समवासार्षीदेलोद्यानेऽन्यदा पुरः ॥ ८ ॥ जयं वर्द्धापयामासागमेनाऽऽरामिकोऽर्हतः । नृपो ननर्त्त तत् श्रुत्वा, केकीव जलदध्वनिम् ॥ ९ ॥ ततोऽस्याथतृणीकारं, दानं दत्त्वा मुदा नृपः । चचाल शाक् मनोऽभीष्टे, ह्यौत्सुक्यं जन आगते ॥ १० ॥ स त्रिः प्रदक्षिणीकृत्य, नृपो वीरं नमोऽकरोत् । यथास्थानं निषण्णश्च, पपौ तद्देशनामृतम् ॥११॥ कैश्चिद् यतित्वं श्राद्धत्वं, सम्यक्त्वं कैश्चिदाश्रितम् । निशम्य देशनां पात्रे, न्यस्ता हि न मुधा सुधा ॥ १२ ॥ अहो! रूपं स्फुरद्रूपमहो! वाग्वैभवोद्भवम् । जैनान् जनो गुणान् गृह्णन्नित्यादीन् स्वाऽऽस्पदं ययौ ॥१३॥ इतश्च षष्ठतपसः, पारणार्थी जगद्गुरुम् । आपृच्छ्य गौतमोऽविक्षत्, पुरान्तः श्रेयसां निधिः ॥१४॥ अतिमुक्तकुमारोऽपि, कुमारैः स्ववयःसमैः । सुवर्णकन्दुकक्रीडां, तदा चक्रे नृपाध्वनि ॥ १५ ॥ धावं धावं विशश्राम, श्रान्तश्छायासु सद्मनः । प्रविष्टं गोचरेऽद्राक्षीत्, कुमारो गौतमं मुनिम् ॥ १६ ॥ स्वभावाद् विनयो राजपुत्रे स्वादित्यसौ शिशुः । द्रागुत्थाय नमश्चक्रे, गौतमांह्री उवाच च ॥१७॥ के यूयं? कुत्र वसथ?, भ्राम्यथेत्थं कथं पुरे? । स्वाम्याख्यत् साधवः साधो!, वसामोऽन्त्यार्हतोऽन्तिके ॥१८॥ पर्यटामश्च भिक्षार्थमुच्च-नीचकुलेऽन्वहम् । तत् श्रुत्वाऽऽह कुमारोऽसौ, प्राञ्चद्रोमाञ्चकञ्चुकः ॥ १९ ॥ तद्यायात ममाऽऽवासे, यद् भिक्षां दापयामि वः । इत्युक्त्वाऽऽकृष्य हस्ताभ्यां, वेश्मनेऽचालयत् स तम् ॥ २० ॥ दूराद् गुरुकरच्छन्नशीर्षमायान्तमात्मजम् । वीक्ष्याभूद् विकसद्गात्रा, प्रसूः प्रसूनवद् भृशम् ॥२१॥ ततः श्रीदेवी देवीव, गुर्वालोकेऽनिमेषदृक् । भक्त्या मुनिं नमस्कृत्य, मोदकैः प्रत्यलाभयत् ॥ २२ ॥ राजसूः पुनरप्ृच्छत्, क्व यूयं यास्यथाधुना? । गुरुराह गुरूपान्ते,

तत्राऽऽयाम्यस्मि सोऽप्ययक् ॥२३॥ प्रातः प्रभुः प्रभूपान्ते, तमादायार्भकं ततः । धर्माख्यानाम्भसाऽऽरेभेऽरजसं कर्तुमीश्वरः ॥ २४ ॥ अस्मिन्नसारे संसारे, सारं किञ्चिन्न वीक्ष्यते । यौवनं जीवितं देहो, धनं सर्वमशाश्वतम् ॥ २५ ॥ भोगा रोगावहा योगा; योगिनां न सुखावहाः । कुशाग्रलग्नपानीयबिन्दुवत् चाऽऽयुरस्थिरम् ॥ २६ ॥ धर्म एवार्हतोऽशेषदुःखानिक्षयक्षमः । तत्रापि सारं चारित्रमचिरात् मोक्षसौख्यदम् ॥ २७ ॥ एवमर्हद्वचोदीपदृष्टस्पष्टार्थनिश्चयः । ऊचे च गृहमेत्यादः, पितरावतिमुक्तकः ॥ २८ ॥ शुश्रुवेऽद्य मया वाणी, पितरौ! परमार्हतः । मोहनिद्रातमश्छेदे; सहस्रकरसोदरा ॥ २९ ॥ तयोन्मीलितनेत्रोऽहमादास्येऽथाऽऽर्हतं व्रतम् । तावूचतुर्वत्स! वेत्सि, कथं धर्मं त्वमर्भकः ? ॥ ३० ॥ सोऽवग् यदेव जानामि, तदेवापि न वेद्म्यहम् । यद् जाने न तदेवाहं, वेद्मीति परमार्थतः ॥३१॥ ऊचतुः पितरौ वत्स!; कथं नूपेऽसमञ्जसम् ?'। सोऽवादीत् पितरौ! जाने; जातस्य मरणं ध्रुवम् ॥ ३२ ॥ कदा कस्य ? कथं वेति ?, सम्यगेतन्न वेद्मि तु । न वेद्मि यान्ति कैः श्वभ्रे ?, कर्मभिर्यान्ति वेद्म्यपि ॥ ३३ ॥ अथो नृपोऽवदत् पुत्र!, कर्कशक्लेशकारिणीम् । दीक्षां यश्चीकरोपि त्वं, कदलीकोमलः कथम् ? ॥ ३४ ॥ पञ्चोत्पाट्या यमाश्चात्रे, गुरवः पञ्च मेरवः । तथा शीलभरोऽश्रान्तं, कचलोचोऽतिदुष्करः ॥ ३५ ॥ सोढव्या दुस्सहा वाढं, द्वाविंशतिः परीषहाः । रूक्षं भैक्ष्यं भवेद् भक्ष्यं, समत्वं मित्र-शत्रुषु ॥ ३६ ॥ शोभतेऽवसरे सर्वं, भुक्तभोगस्त्वमेतम् । तत् पुत्राऽऽमहं मुञ्च, हात्र भमा महारथाः ॥ ३७ ॥ अतिमुक्तोऽवदत् तात !, सर्वं स्याद् दुष्करं ह्यदः । कातराणां न शूराणां, साहसैकावलम्बिनाम् ॥ ३८ ॥ उद्धरन्ति गिरिं चोर्वीं, लङ्घन्तेऽब्धिं तरन्ति च । तद् जगत्यस्ति नोऽसाध्यं, यत् शूराः साधयन्ति न ॥३९॥ नृपोऽवददनायासात्, कार्यं स्थैर्यवतां भवेत् । सुन्दरश्रेष्ठिवत् कोऽयं, तातेति पृष्टवान् पुनः (सुतः) ॥४०॥ सोऽवक् गुणस्थले ग्रामे, श्रेष्ठ्यभूत् सुन्दराह्वयः । सुन्दरी दयिता तस्य, पुत्रो नाम्ना पुरन्दरः ॥४१॥ आयुडम्मः सुतं तस्य, गेहद्वार-

मपातयत् । सदाऽऽख्याति पतिं पत्नी, द्वारं वीक्ष्य निरर्गलम् ॥ ४२ ॥ कार्यमार्य ! गृहद्वारं, मा सुपित्वा व्रजेद् गृहम् । कश्चिद् रात्रौ दिवा रक्षां; करोम्येकाकिनी कथम् ? ॥ ४३ ॥ सोऽवक् करिष्यते लग्नं, कोत्तालाऽस्ति ? स्थिरा भव । व्याघ्रीव कुर्कुरी द्वारे, भषन्त्यस्ति क एष्यति ? ॥४४॥ कश्चित् सुसुपिषुर्गेहं, भषन्तीमवधीत् शुनीम् । श्रेष्ठिनं सा पुनः प्राह, गेहचिन्ता हि यत् स्त्रियः (याम्) ॥ ४५ ॥ दौवारिका मृता साऽपि, कस्ते रक्षां करिष्यति ? । श्रेष्ठ्याचष्ट वधूरस्ति, तव रक्षाविधा(सहा)यिनी ॥४६॥ वधूरपि मृताऽन्येद्युः, सद्यो रोगाद् विधेर्वशात् । दयिता(तं) पुनराहेदं, कस्ते रक्षाकरः परः ? ॥ ४७ ॥ कथ्यं कुरु कुरु द्वारमुद्वाहय निजात्मजम् । उन्मविष्णुः श्रियमसौ, किं न विनाशयिष्यति ? ॥ ४८ ॥ सुन्दरोऽप्यवदत् सुभ्रु !, शनैः सर्वं करिष्यते । स्यात् तुन्दपरिमृजानां, स्यात् शुभं स्थैर्यशालिनाम् ॥ ४९ ॥ नीरन्ध्रध्वान्तपूर्णायां, मध्येग्रामं परेद्यवि । रात्रौ सार्थो महानागाद्, वेसरोष्ट्रादियानवान् ॥ ५० ॥ तत्रैकाऽश्वतरी सार्थभ्रष्टा पृष्ठस्थयासना । प्रविष्टा श्रेष्ठिनो गेहमाकृष्टा तच्छुभैरिव ॥ ५१ ॥ रोटैः स्खलद्गतेस्तस्याः, पृष्ठाद् दीनारवासना । पपात वहणत्काराद्, जजागाराऽऽस्पदाधिपः ॥५२॥ दीपमाधाय चैक्षिष्ट, यासनानां स विंशतिम् । क्षणं प्रतीक्ष्य चोत्थाप्य, पत्नीमिदमुवाच च ॥ ५३ ॥ कार्यं स्थैर्यं प्रिये ! कार्ये, सर्वस्मिन्निति मन्मतेः । फलं पश्य, ह्यनायासाल्लाभोऽभूदावयोरियान् ॥ ५४ ॥ आयान्तीं वेसरीं द्वारे, भषन्ती वारयेत् शुनी । पितृवर्गे वधूर्गत्वाऽकथयिष्यदिदं धनम् ॥ ५५ ॥ तदनेन धनेनोच्चैः, सदनं कारयिष्यते । विवाहश्चोत्कुल्याभिः, स्त्रीभिः सह सुतस्य तु ॥ ५६ ॥ तत् पुत्र ! स्थिरता श्रेष्ठा, सर्वत्र कुरु तां ततः । उत्तालानां भवेत् पश्चात्तापोऽपि पृष्टगेहिवत् ॥ ५७ ॥ पृष्टाख्योऽभूत् कुटुम्ब्येकः, पुरा ग्रामे कुशस्थले । यक्षः सतोपवक्त्रे(वासे)ण, तेनाऽऽराद्धो धनेच्छया ॥ ५८ ॥ सोऽप्यग् भद्र ! त्वया ग्राह्यं, पिच्छमेकं प्रगे प्रगे । सुवर्णबर्हिणीभूय, नृत्यतः पतितं मम ॥ ५९ ॥ सदैवैवं स कुर्वाणो, धनवानचिराद्-

भूत्। दिव्यप्रसादः स्वल्पोऽपि, निकामं कामदो नृणाम् ॥ ६० ॥ अन्येद्युश्चिन्तितं तेन, दूरे यक्षालयेऽन्वहम् । प्रातः प्रातश्च को गन्ता ?,
तद् गृह्णाम्येनमक्षतम् ॥ ६१ ॥ ध्यात्वेति वाहितस्तेन, हस्तस्तद्ग्रहणेच्छया । तत्पुण्यवशगात् कापि, काकीभूय स केक्यपि ॥६२॥ गामं गामं
प्रगे पृष्टः, कुटुम्बी यक्षसद्मनि । स्वभावजमपि पिच्छं, कर्हिचिन्नाप बर्हिणः ॥ ६३ ॥ नमस्याभिस्तपस्याभिर्वरिवस्याभिरन्वहम् । तेनाऽऽ-
राद्धोऽधिकं यक्षो, नैव दर्शनमप्यदात् ॥ ६४ ॥ सन्तापभाजनं पश्चात्तापादेष व्यजायत । दैवं हि दुर्मतिं दत्ते, चपेटां न कपोलयोः
॥ ६५ ॥ तेनाऽतिमुक्तकोत्तालो, भवन् भूमौऽनुतापवान् । तत् श्रुत्वाऽर्भोऽभ्यधात् तात !, धर्मे स्थैर्यं न युज्यते ॥ ६६ ॥ चञ्चलं
पिप्पलदलमिवाऽऽयुर्मनुजन्मनाम् । तदाश्चर्यमिवाभाति, यत् सुप्त्वोत्थीयते प्रगे ॥ ६७ ॥ उदयास्तमनाक्रान्तिरप्यवस्थात्रयं रवेः । दिना-
न्तर्यत्र संसारे, तत्रान्येषां तु का कथा ? ॥ ६८ ॥ एवं प्रौढोचितं श्रुत्वा, बहुधाऽस्य शिशोर्वचः । श्रीमाता मुदिताऽवादीत्, चिरं
जीव बलिः क्रिये ॥ ६९ ॥ ततोऽतिमुक्तो मातापित्रनुज्ञामवाप्य सः । चकार सङ्घे सङ्घार्चां, चैत्येष्वष्टाह्निकामहः ॥ ७० ॥ स्नातानु-
लिप्तसर्वाङ्गाभरणैर्भूषितो भृशम् । दधानो दण्ड-पात्रादिसाधुवेषं निजान्तिके ॥ ७१ ॥ आरुह्य शिबिकां शूरः, सहस्रनरवाहिनीम् ।
दानं ददानो दीनानां, जयजयारावबादिनाम् ॥ ७२ ॥ धृतच्छत्रः पितृ-मातृ-भ्रातृ-मित्रपरीवृतः । उद्यद्बहुविधाऽऽतोद्यमुखरीकृतदिङ्मुखः
॥ ७३ ॥ मनो विस्मापयन्नन्यजनानां रागिणामपि । अश्रूणि पातयन्नागादतिमुक्तोऽन्तिकेऽर्हतः ॥ ७४ ॥ [ चतुर्भिर्विशेष(ः कलाप)कम् ]
प्रभुं नत्वा जयो राजा, श्रीमाताऽप्याहतुस्ततः । भगवन्नावयोः सूनोर्देहि दीक्षां(क्षा-)कनीं निजाम् ॥७५॥ एवं पितृभ्यां विज्ञप्तः, षड्वार्षिक-
मपि प्रभुः । दीक्षयामास तं योग्यं, जानन् ज्ञानेन भास्वता ॥ ७६ ॥ पितृन्नथावदद् वीरो, धन्या यूयं ययोः सुतः । शिवं गमी
भवेऽत्रैव, बालोऽप्ययमबालधीः ॥ ७७ ॥ वैमुख्यं विषये धर्मे, सर्वस्यामोघमो भवे । अभास्याऽऽसन्नभव्यस्य चिह्नमेतद् यदुच्यते

॥ ७८ ॥ परीत्तसंसृती धन्यौ, युवां याभ्याममीदृशः । व्रताय पुत्रोऽनुज्ञातो, जीवात्मा दर्शनप्रियः ॥ ७९ ॥ कदाऽऽप्स्यावो व्रतमिति, चिन्तयन्तौ च दम्पती । जग्मतुर्गृहमेषोऽपि, विजहाराऽर्हता समम् ॥ ८० ॥ वहिर्भुवं गतोऽन्येद्युर्वर्षाकालेऽतिमुक्तकः । वालकान् क्रीडतोऽद्राक्षीत्, निम्नभूमिस्थवारिषु ॥ ८१ ॥ शैशवे दुर्निवार्या स्यात्, क्रीडेति श्रीसुतो मुनिः । मृदा वहत्पयो बद्धा, जलाश्रयमकल्पयत् ॥ ८२ ॥ क्षिप्त्वा पतद्ग्रहं तत्र, दण्डेन प्रणुदन् ब्रुवन् । ममेयं नौरहं कर्णधारश्चिक्रीड सोऽम्भसि ॥ ८३ ॥ स्थविरैर्मधुरैर्वाक्यैर्निषिद्धः क्षुल्ल ! किं त्वया । मुग्ध ! दुग्धमुखारब्धमकल्प्यमिति वादिभिः ॥ ८४ ॥ तत् श्रुत्वा सोऽधिकं ह्रीणो, जीवाजीवानभिज्ञधीः । विलक्षास्यो निवृत्तोऽस्मात्, नृणां लज्जैव भूषणम् ॥ ८५ ॥ पप्रच्छुः स्थविरा वीरं, भवैः कतिपयैर्गमी । शिवं शिशुरसौ स्वामिन् !, जलक्रीडादिलोलुपः ? ॥ ८६ ॥ प्रभुराह भवेऽत्रैव, सेत्स्यत्येष महाशयः । न कार्याऽऽर्यैरतो गर्हा, गर्हार्हस्यापि चाऽऽर्हतैः ॥ ८७ ॥ वैयावृत्यं व्यधु: सम्यक्, ततोऽर्हद्वचसाऽस्य ते । पात्रं प्रीणाति हि स्वान्तं, तादृशं वचसा किमु ? ॥ ८८ ॥ पपाठैकादशाङ्गानि, सोऽचिरात् स्थविरान्तिके । स्वर्णपात्रे न(ण) को भिक्षां, क्षिपेत् क्षेमाभिलाषुकः ? ॥ ८९ ॥ ज्ञात्वाऽऽयुश्चात्मनः स्वल्पं, स तेपे दुस्तपं तपः । चतुर्थषष्ठाष्टमादि द्रढीयःकर्मकर्तनम् ॥९०॥ गुणरत्नसंवत्सराभिधं चाऽऽरब्धवांस्तपः । गीतार्थसार्थमुख्योऽर्थसाधनार्थ्यतिदुष्करम् ॥ ९१ ॥ अस्थि-चर्मावशेषाङ्गः, स उग्रतपसाऽभवत् । यथा यथा तथा मङ्क्षु नङ्क्ष्यत्पापो मोहपुरेऽपतत् ॥ ९२ ॥ आव्रतात् सप्तवर्षान्ते, सोऽवधीत् मुनिकेसरी । चतुष्कषायकलभसुलभं मोहदन्तिनम् ॥ ९३ ॥ तज्जयात् साधुवादादिवादिनी केवलाऽवला । वरमालां गलेऽक्षैप्सीत्, श्रीनन्दनमुनेर्मुदा ॥९४॥ जैनाद्(न) जैनं निशम्यामलवचनमलं श्रीसुतं श्रीसुतोऽहो !, बुद्धा वध्यादिसज्ज्ञानभिमुखहृदयो योऽवधीदात्म-

शत्रुम् । षष्ठेऽब्दे प्राप्य दीक्षां श्रुतमपठदथाब्दद्वयं सप्तवर्षां तामाराध्याऽतिमुक्तस्त्रिदशसमसमायुर्गतः सिद्धिसौधम् ॥ ९५ ॥ इति श्रीअतिमुक्तकुमारर्षिदृष्टान्तः ॥ अथ क्षुल्लकुमारं स्तौति—

**कुमरं सत्थाहवहुं, मंतिं मिंठं च जो उ पव्वावे । संबुद्धो गीईए, तं वंदे खुड्डगकुमारं ॥ ६८ ॥**

व्याख्या—'तं' प्रसिद्धं क्षुल्लककुमारं वन्दे, यस्तु 'कुमारं' युवराजानं(जं) "सत्थाहवहुं" ति सार्थवाहपत्नीं मन्त्रिणं 'मिण्ठं' महामात्रं च "पव्वावेइ" त्ति प्राव्राजयत् । किंविशिष्टः ? सम्बुद्धः, कया ? 'गीत्या' ध्रुवकेन । इति गाथार्थः ॥ ६८ ॥ भावार्थस्त्वयम्—

श्रीसाकेतपुरे क्षोणीवेणीचूडामणीनिभे । राजाऽभूत् पुण्डरीकाक्षः, पुण्डरीकदलेक्षणः ॥ १ ॥ तद्भ्राता कण्डरीकाख्यो, युवराजोऽस्य पत्न्यभूत् । यशोभद्रा यशोभद्रा, सुधाकृतसुधा गिरा ॥२॥ पुण्डरीको नृपोऽद्राक्षीदन्येद्युस्तां रहःस्थिताम् । अनावृताङ्गीं तन्वङ्गीं, रागमत्तो बभूव च ॥ ३ ॥ प्रसादनार्थमेतस्याः, प्राहिणोत् प्राभृतं नृपः । ज्येष्ठप्रसाद इत्येषा, निर्विकारा तदाददे ॥४॥ अन्येद्युः प्रार्थयामास, तां निरस्य त्रपां नृपः । यशोभद्राऽऽह तं राजन् !, न भ्रातुरपि ते त्रपा ? ॥ ५ ॥ ततोऽसौ दुरभिप्रायो, जघान भ्रातरं नृपः । प्रतस्थे सार्थसार्थेन, शीलरक्षाकृते सती ॥ ६ ॥ श्रावस्त्यां पुर्यगादजितसेनाचार्यसद्गुरोः । महत्तराकीर्तिमत्याः, पार्श्वे साऽशिश्रयद् व्रतम् ॥ ७ ॥ तदैवोत्पन्नगर्भाऽऽशा, व्रतानादानशङ्कया । महत्तराया नाख्याता, चारित्रोत्सुकया तया ॥ ८ ॥ वर्द्धमाने ततो गर्भे, सोपालम्भनपूर्वकम् । सा महत्तरया पृष्टा, पूर्वोत्पन्नं तमाह च ॥ ९ ॥ शासनोड्डाहरक्षार्थं, रक्षिता सा सती रहः । क्षुल्लकुमारनामानं, प्रासूत समये सुतम् ॥ १० ॥ स क्रमाद् यौवनावस्थो, दध्यौ पालयितुं व्रतम् । नैव क्षमोऽस्मि पृच्छामि, भोगार्थी मातरं निजाम् ॥ ११ ॥ मात्राऽनुशासितः सम्यक्, क्षुल्लः स्थातुमनीश्वरः । देहि मे द्वादशाब्दानि, स तया प्रार्थितो ददौ ॥ १२ ॥ ततो द्वादश-



क्षुल्लकुमारर्षिप्रबन्धः ।

क्षुल्लकुमार-
पिंप्रबन्धः ।

वर्षान्ते, पुनः पप्रच्छ मातरम् । साऽप्याख्य(वोच)दार्यिकां पृच्छ, तदधीनाऽसि यत् सुत ! ॥१३॥ भोगाभिलाषी याम्यसि, तेनापृच्छि महत्तरा । ममापि द्वादशाब्दानि, देहीति तान्यसावदात् ॥ १४ ॥ द्वादशद्वादशाब्दान्याचार्योपाध्याययोरपि । वाचैवं तस्थिवान्प्रचत्वारिंशत् स वत्सरान् ॥ १५ ॥ गच्छंस्तदन्ते मात्रोक्तो, मा याहीतस्ततः सुत ! । पुण्डरीकः पितृव्यस्ते, साकेते तत्र च प्रजेः ॥ १६ ॥ नाममुद्रां पितुः सत्कां, रत्नकम्बलमद्भुतम् । तस्मै ददौ यशोभद्रा, पुत्रप्रेम्णाऽऽर्यिका तदा ॥ १७ ॥ आदाय, तद्द्वयं सोऽपि, पितृव्यपुरमागमत् । स्थितस्तद्यानशालायां, प्रातर्द्रक्ष्यामि पार्थिवम् ॥ १८ ॥ तदाऽभ्यन्तरपर्षद्यासीत् नाट्यं नाटिकाकृतम् । नटी पश्चिमयामिन्यामीषन्निद्राद्रिताऽभवत् ॥ १९ ॥ निद्रायमाणां तां वीक्ष्य, दध्यौ धौरिकिनी हृदि । तोपिता परिषत् सर्वा, लब्धं बहुतरं धनम् ॥ २० ॥ निद्रातीयं यदीदानीं, भवामो धर्षिता इति । सा सुट्ठु गीतमित्यादि गीतिकामुच्चकैर्जगौ ॥ २१ ॥ तद्यथा—

"सुट्ठु गाइयं सुट्ठु वाइयं सुट्ठु णच्चियं सामसुंदरी ! । अणुपालिय दीहराइ(ति)या उ सुमिणंतए मा पमायए ॥ १ ॥"[1] अत्रान्तरेऽर्पितः क्षुल्लसाधुना रत्नकम्बलः । कुण्डलं युवराजेन, यशोभद्रेण चार्पितम् ॥ २२ ॥ कटको मन्त्रिणाऽदायि, नर्तक्यै यतिसन्धिनः ॥ हारः श्रीकान्तया सार्थवाहपत्न्याऽर्पितोऽद्भुतः ॥ २३ ॥ वितीर्णः कर्णपालेन, महामात्रेण चाङ्कुशः । पञ्चकं कम्बलाद्येवत्, लक्षमूल्यं पृथक् पृथक् ॥ २४ ॥ लिख्यते वहिकायां यस्तत्र तुष्यति रुष्यति । स्याद् दानादानयोर्ज्ञानेऽनुग्रहो निग्रहोऽन्यथा ॥ २५ ॥ सर्वेऽपि प्रातराहूताः, किं त्वया रत्नकम्बलः । दत्तः ? क्षुल्लकुमारेति, राज्ञा पृष्टः ससम्भ्रमम् ॥ २६ ॥ स यथा मारितस्तातो, माता नंष्ठाऽऽर्यिकाऽभवत् । यावद्यौवनोऽत्रागां, भोगार्थीत्यवदत् समम् ॥ २७ ॥ गृहाण पुत्र ! तद् राज्यमित्यूचे पुण्डरीकराट् ।

1 "सुष्ठु गीतं सुष्ठु वादितं सुष्ठु नर्तितं श्यामसुन्दरि ! । अनुपालिता दीर्घरात्रिका तु स्वप्नान्तके मा प्रमादीः ॥ 1 ॥"

सोऽप्याख्यत् तात ! राज्येन सृतं दुर्गतिहेतुना ॥ २८ ॥ मरिष्याम्यचिरादेव, प्रमादोऽल्पकृते हि कः ? । संयमोऽपि पुराऽऽचीर्णो नश्यत्येनर्विसञ्जजः ॥ २९ ॥ किं कुमार ! त्वया दत्तं, कुण्डलं ? सोऽप्यदोऽवदत् । मारयामि जरद्भूपं, राज्यं दास्यत्यसौ न मे ॥ ३० ॥ तन्निशम्याह भूभर्ताऽऽदत्स्व राज्यं ममाऽऽत्मज ! । न कार्यमार्य ! राज्येन, नरकान्तेन सोऽप्यवक् ॥ ३१ ॥ कथं दत्तस्त्वया मन्त्रिन् !, कटकः ? सोऽप्यदोऽवदत् । त्वां मुक्त्वाऽन्यनृपं सेवे, पुराऽऽसीदिति चिन्तितम् ॥ ३२ ॥ किं श्रीकान्तेऽर्पितो हारस्त्वयेति साऽऽह मत्पतेः । द्वादशाब्दा गतस्याऽऽसन्नानयामि परं नरम् ॥ ३३ ॥ कथं दत्तः (किमदायि) त्वया सादिन्नङ्कुशः ? सोऽप्यथाब्रवीत् । मारयाऽऽनय वात्रेभं, ज्ञापितं यत् पुरा परैः ॥ ३४ ॥ सर्वेऽपि स्वार्थसिद्ध्यर्थं, राज्ञाऽऽदिष्टाः सुतादयः । न्यधुर्निषेधमुद्धुद्धास्तत्तत्पापाभिलापतः ॥ ३५ ॥ युवराजादयः सर्वे, वैराग्यादस्तकल्मषाः । क्षुल्लकुमारमार्गेण, तदैवाऽऽददिरे व्रतम् ॥ ३६ ॥ इत्थं क्षुल्लकुमारस्य, निशम्य चरितं हितम् । शुभं भजन्तु भावेन, भो भव्या ! भावमाभवम् ॥ ३७ ॥ इति श्रीक्षुल्लककुमारर्षिप्रबन्धः ।

अथ लोहार्यं स्तौति—

**धन्नो सो लोहज्जो, खंतिखमो पवरलोहसिरिवण्णो । जस्स जिणो पत्ताओ, इच्छइ पाणीहि भुत्तुं जे ॥ ९९ ॥**

व्याख्या—स 'धन्यः' धनावहः, कः ? 'लोहार्यः' लोहनामा मुनिः । किंविशिष्टः ? क्षान्त्या–क्षमया न त्वशक्त्या क्षमते–सहते इति क्षान्तिक्षमः । पुनः किंविशिष्टः ? प्रवरा–साररूपा लोहश्रीः–लोहकान्तिस्तद्वर्णः कृष्णवर्णत्वाद् दृढसंहननत्वाच्चे(दि)त्यर्थः, 'यस्य' लोहर्षेः 'पात्रात्' भाजनात् 'जिनः' अर्थाधिकारात् महावीरः ['पाणिभ्यां' हस्ताभ्यां] 'भोक्तुम्' अभ्यवहर्तुं भक्तमिति गम्यं तद् 'इच्छति' अभिलषति



क्षुल्लकुमारर्षिप्रबन्धः ।

लोहार्यस्तवनम् ।

'जे' इति पादपूरणे "इ-जे-राः पादपूरणे" [हैम ८।२।२१७] इति वचनात्। इति गाथार्थः ॥६९॥ भावार्थस्तु विशिष्टाम्नायाभावात् सम्यक् न ज्ञायते। यथाज्ञातस्तु समयज्ञैः स्वयमुह्याच्यः॥ अत्र केषुचित् नवीनादर्शेषु प्रक्षेपरूपाः सप्त गाथा अपि दृश्यन्ते, ताश्चेमाः—

लोहार्य-स्तवनम्।

**जोऽसेसकम्मवल्लिं, अट्ठविहं छिंदिउं निरवसेसं। सिद्धिवसहिमुवगओ, तमहं लोहं नमंसामि ॥ ७० ॥**

व्याख्या—सुगमैव। नवरम्—"असेसकम्मवल्लि" त्ति अशेषाणि–समस्तानि यानि कर्माणि–ज्ञानावरणा(णीया)दीनि तान्येव गुपिलत्वाद् वल्लिरिव वल्लिस्तां, किं कृत्वा ? 'छित्त्वा' लूत्वा, किंविशिष्टाम् ? 'अष्टविधाम्' अष्टप्रकारां, ज्ञानावरणादिकर्मणामष्टविध(प्रकार)त्वात्। पुनः किंविशिष्टाम् ? 'निरवशेषां' समूलतः। तथा 'सिद्धिवसतिं' सिद्धिलक्षणोपाश्रयम् 'उपगतः' प्राप्तः। इति [गाथार्थः] ॥ ७० ॥

श्रमणभद्र-र्षिस्तवनम्।

**जेणेगराइयाए, दंस-मस अहियासिया उवसग्गा। वोसट्ठ-चत्तदेहं, तमहं वंदे समणभद्दं ॥ ७१ ॥**

व्याख्या—स्पष्टा। नवरम्—एकस्यां रात्रौ भवा एकरात्रिकी तस्यामेकरात्रिक्यां प्रतिमायामिति गम्यं "दंस-मस" त्ति दंश-मशकभक्ष[णलक्ष]णाः 'उपसर्गाः' उपद्रवाः 'अध्यासिताः' सम्यक् सोढा इति गाथार्थः ॥ ७१ ॥ भावार्थश्चायम्—

जितशत्रुरभूत् नाम्ना, चम्पापुर्यां पुरा नृपः। तस्य श्रमणभद्राख्यो, युवराजोऽभवत् सुतः ॥१॥ सोऽन्येद्युः स्थविरोपान्ते, प्राव्राजीत् स्वार्थसिद्धये। एकत्वप्रतिमां धीरो, गुर्वादेशात् प्रपन्नवान् ॥ २ ॥ अधोभुवि शरत्काले, सोऽन्येद्युः प्रतिमां स्थितः। निर्दम्भः सम्भवत् स्तब्धः, स्वार्थसाधनतत्परः ॥ ३ ॥ स दंश-मशकैस्तीक्ष्णतुण्डाग्रैर्दश्यते निशि। अतितीव्रा व्यथा जज्ञे, प्रमार्जयति नो वपुः ॥ ४ ॥ दध्यौ च किमियं मेऽर्तिर्नारका नरकावनौ। परमाधार्मिकैर्देवैः, पीड्यन्तेऽनेकधा चिरम् ॥ ५ ॥ वृक-चित्रक-गोमायुमायाकारैः सुराधमैः। भक्ष्यन्ते त्रोटितस्नायु-मांसा नैरयिकाः क्वचित् ॥६॥ लोहतुण्डखग(गा)कारधारिभिर्व्योमचारिभिः। छल्यन्ते क्वापि क्रन्दन्तो,

निष्कपै(त्पै)र्नरकोद्भवाः ॥ ७ ॥ अन्यचान्यद् वपुरिदं, जीवोऽन्य इति वादिनाम् । देहेऽपि मुक्तमूर्च्छानां, तद्बाधा नार्त्तिदायिनी ॥ ८ ॥ इत्येवं चिन्तयन्नेष, सोढसम्यगुपद्रवः । तस्यां निश्याप पञ्चत्वं, महात्मा महिमाश्रयः ॥ ९ ॥ "चउदस अहियासिया उवसग्गा" इति पाठेऽपरः कश्चिद् यथाज्ञातोऽत्र वाच्यः ॥

**भोगेसु अरज्जंतो, धम्मं सोऊण वद्धमाणस्स । सो समणो पवइओ, सुपइट्ठरिसिं नमंसामि ॥ ७२ ॥**

व्याख्या—'भोगेषु' शब्दादिषु 'अरज्यन्' रागमकुर्वन्, किं कृत्वा ? श्रुत्वा, किं ? 'धर्मं' श्रुत-चारित्रलक्षणं, कस्मिन् ? "वद्धमाणस्स" इति पदैकदेशे पदसमुदायोपचाराद् वर्द्धमानस्वामिनोऽन्तिके 'सः' इति वक्ष्यमाणः 'श्रमणः' तपस्वी प्रव्रजितः, यत्तदोर्नित्याभिसम्बन्धात् तं सुप्रतिष्ठर्षिं "नमंसामि" नमस्करिष्यामि । इति प्रथमगाथार्थः ॥ ७२ ॥

**जो वागरिओ वीरेण, सिंहनिक्कीलिए तवोकम्मे । उस्सप्पिणीए भरहे, अपच्छिमो सत्ति तं वंदे ॥ ७३ ॥**

व्याख्या—'यः' सुप्रतिष्ठर्षिः 'व्याकृतः' व्याख्यात उक्त इति यावत् । केन ? 'वीरेण' चरमार्हता, कस्मिन् ? सिंहनिष्क्रीडिताख्ये तपःकर्मणि, कस्यां ? अवसर्पिण्यां 'भरते(त)' क्षेत्रे 'अपश्चिमः' अन्तिम एष इति, तं वन्दे द्विर्वन्दनक्रियाभिधानम् अत्यन्तादरख्यापनार्थम् । इति द्वितीयगाथार्थः ॥ ७३ ॥ भावार्थस्तु विशिष्टाम्नायाभावात् नोक्तः । यथाज्ञातः समयज्ञैः स्वयमुन्नाव्यः ॥

**धण-कणय-रयणपउरो, जेणं संसारवासभीएणं । मुक्को कुडुंबवासो, तं सिरसा सुव्वयं वंदे ॥ ७४ ॥**

व्याख्या—'तं' वक्ष्यमाणं 'सुव्रतं' सुव्रतनामानं मुनिं 'शिरसा' मस्तकेन वन्दे, तं कं ? येन कुटुम्बे वासः—वसनं सः 'मुक्तः'

त्यक्तः। किंविशिष्टः(किंभूतः)? धनं-द्रम्मादि स्वर्णं—काञ्चनं रत्नानि—कर्केतनादीनि तैः प्रचुरः—प्रभूतः, कथम्भूतेन? संसारवासभीतेन। इति गाथाक्षरार्थः ॥ ७४ ॥ भावार्थश्चायम्—

श्रीसुव्रत-महर्षि-प्रबन्धः।

सुदर्शनपुरे पूर्वं, शिशुनागो महाधनी। बभूव सुयशानाम्नी, तत्प्रिया प्रेमशालिनी ॥ १ ॥ पितृभ्यां परमप्रीत्या, लाल्यमानः प्रसूलवत्। ज्ञान-विज्ञानवान् जज्ञे, तत्सुतः सुव्रताह्वयः ॥ २ ॥ यौवनं पावनं प्राप, स स्त्रैणगणमोहनम्। क्रमेण कर्मयोगेन, वैराग्यं च महत्तरम् ॥ ३ ॥ सम्बोध्य पितरौ कृच्छ्राद्, जगृहे सुव्रतो व्रतम्। बहुश्रुतस्तथैकत्वविहारप्रतिमामपि ॥ ४ ॥ प्रशशंसान्यदा शक्रस्तं वीक्ष्य प्रतिमास्थितम्। सुरावश्रद्दधानौ द्वौ, पुंरूपावीयतुर्भुवम् ॥ ५ ॥ कुमारब्रह्मचार्येष, धन्य(धर्मी) एकोऽभवत् सुरः। परश्च कुल-सन्तानच्छेदकः पापधानयम् ॥ ६ ॥ तयोर्द्वयोर्वचः श्रुत्वा, नाकुप्यत् नातुषत् मुनिः। तुल्यवृत्तिस्तुलाकोटिरिवाभूत् किन्तु चेतसा ॥ ७ ॥ ततश्च पितरौ ताभ्यां दर्शितौ देवमायया। अत्यन्तविपयासक्तौ तन्मनःक्षोभहेतवे ॥ ८ ॥ दर्शितौ मार्यमाणौ तौ, क्रन्दन्तौ करुणस्वरम्। तथापि सुव्रतमुनिश्चुक्षोभाम्भोधिवन्न च ॥ ९ ॥ वैक्रियविकृतस्त्रीभिः सविभ्रमविलोकनम्। दिव्याभिर्दीर्घनिःश्वासपूर्वमालिङ्गितो भृशम् ॥ १० ॥ इत्याद्यैरुपसर्गौघैरनुकूलैरसौ मुनिः। ताभ्यां न चालितो ध्यानात्, सुमेरुरिव वात्यया ॥ ११ ॥ किन्तु स्थिरतरोऽप्ययं, संयमे सुव्रतोऽभवत्। तत्रैव केवलज्ञानं, निष्पापः प्राप चामृतम् ॥ १२ ॥ इति श्रीसुव्रतमहर्षिप्रबन्धः ॥

श्रीगोभद्रर्षि-प्रबन्धः।

जेण कयं सामन्नं, छम्मासे झाण-संजमरएणं। तं मुणिमुदारकित्तिं, गोभद्दरिसिं नमंसामि ॥ ७५ ॥

व्याख्या—'येन' प्रसिद्धेन 'कृतम्' अनुष्ठितं 'श्रामण्यं' श्रमणत्वम्, कथं? "छम्मासे" त्ति षण्मासान् यावदिति गम्यं श्रीवीरान्ते इति शेषः। मुणति—जानाति तत्त्वमिति मुनिस्तं, किंविशिष्टम्? उदारा कीर्तिर्यस्य तं 'गोभद्रर्षिं' प्रसिद्धं श्रीशालिभद्रपितृमुनिं "नमंसामि"

नमस्करिष्यामि । भविष्यत्क्रियानिर्देशः सूत्रस्य त्रिकालविषयदर्शनार्थः । इति गाथार्थः ॥ ७५ ॥ भावार्थस्तु श्रीशालिभद्रचरित्राधिकारे पुरो दर्शयिष्यते ॥

वारत्तपुरे जायं, सोहम्मवडंसया चइत्ताणं । सिद्धिं विहुयरयमलं, वारत्तरिसिं नमंसामि ॥ ७६ ॥

व्याख्या—स्पष्टार्थैव ॥ ७६ ॥ भावार्थः कथानकगम्यः । तच्चेदम्—

चम्पापुर्यां नृपो मित्रप्रभो मित्रप्रभोऽभवत् । धारिणी महिषी तस्य, सौभाग्यद्रुमसारिणी ॥१॥ धनमित्राह्वयस्तत्र, सार्थवाहो महाधनी । धनश्रीर्गेहिनी तस्य, गेहश्रीरिव देहिनी ॥ २ ॥ लब्धो जातः सुतोऽनेकैरौपयाचितकैस्तयोः । सुजातं तस्य योऽनर्द्धे, कुलेऽभूदित्यवग् जनः ॥ ३ ॥ निर्वृत्ते द्वादशाहेऽथ, पितृभ्यां परया मुदा । सुजात इति तन्नाम, चक्रे लोकवचोऽनुगम् ॥ ४ ॥ स तु(तु) देवकुमाराभो, ववृधेऽत्यन्तरूपवान् । लीलाललितमेतस्य, शिक्षन्ते सस्पृहं परे ॥ ५ ॥ जीवाजीवादितत्त्वज्ञे, धनमित्र-धनश्रियौ । अथ तत्र पुरे धर्मघोषाख्यः सचिवोऽभवत् ॥ ६ ॥ नाम्ना प्रियङ्गुस्तत्पत्नी, सा शुश्राव सखीमुखात् । सुजातकुमारस्योच्चैश्चेष्टालीलायितं महत् ॥ ७ ॥ रागात् तया पुरो दास्याः, प्रोक्तं चेदत्र यात्यसौ । ततो मम त्वया वाच्यं, पश्यामि यदमुं दृशा ॥ ८ ॥ ततोऽन्येद्युः सुजातोऽपि, मित्रवृन्दपरीवृतः । प्रियङ्गोर्दर्शितो दास्या, गच्छन् मन्त्रिगृहान्तिकम् ॥ ९ ॥ तस्या अन्याः सपत्न्योऽपि, तं वीक्ष्योचुः परस्परम् । धन्या सा भूतले यस्या, भाग्यायातः पुमानयम् ॥ १० ॥ प्रियङ्गुरप्यहो ! तस्य, लीला चेष्टा महात्मनः । इति ब्रुवाणा तद्वेषविधाने रमते रहः ॥ ११ ॥ एवमाभरणान्यात्मदेहे परिदधात्यसौ । इत्थं मित्रैः समं ब्रूत इत्याद्यनुचकार सा ॥ १२ ॥ धर्मघोषोऽन्यदा मन्त्री, निःशब्दमवरोधनम् । शनैः शनैरिति पदैर्द्वात् तद्गृहमासदत् ॥१३॥ दृष्ट्वा कपाटच्छिद्रेण, प्रियङ्गुर्मन्त्रिणा स्वयम् । सुजातवेष-चेष्टाद्यनुकारं(ग्रानं)

सुजात-वारत्तकर्षि-सम्बन्धः ।

कुर्वती सती ॥ १४ ॥ तद् दृष्ट्वा सचिवो रुष्टो, दध्यावन्तःपुरं द्रुता ! । विनष्टं कथनं सुप्तु, नोच्चैः स्युखा हि निष्पाः ॥ १५ ॥ सुजातं किन्तु प्रच्छन्नं, मारयामि परं पिता । तस्य राज्ञो भृशं पूज्यो, मा विनाशोऽस्तु मे ततः ॥ १६ ॥ चिन्तयामि परं किञ्चिदुपायं तन्निवर्हणे । दिष्टाऽऽप्तः सोऽधुना यत्नात्, स्वार्थसिद्धिनिबन्धनम् ॥१७॥ ततोऽन्येद्युरमात्येनोपनीता लेखवाहकाः । राज्ञो लेखान् लिखित्वोच्चैः, कूटान् कपटतः स्वयम् ॥ १८ ॥ मित्रप्रभस्य यो राज्ञस्तत्र शत्रुस्तदाख्यया । लिपीकृतं सुजातस्योद्दिश्य लेखान्तरे ह्यदः ॥ १९ ॥ यद् व्यापाद्यः सुजातायं, त्वया मित्रप्रभो नृपः । ततस्तत्र नृपश्चाहमर्द्धराज्यधरो भवान् ॥ २० ॥ राज्ञोऽग्रे वाचिता(तो) लेखा(ख)स्ततो रोपारुणेक्षणः । वध्यानादिष्टवान् लेखवाहकानादितो नृपः ॥२१॥ प्रच्छन्नास्ते कृता धर्मघोषेण सचिवेन नु(तु) । दध्यौ हन्मि सुजातं चेत्, नृपक्षोभो भवेत् पुरः ॥ २२ ॥ अकीर्त्तिरपि लोके स्यात्, मम तस्य नृपस्य च । ततो बहिरुपायेन, केनचित् मारयाम्यमुम् ॥ २३ ॥ ततश्चन्द्रध्वजाख्योऽस्ति, मनुष्यस्तस्य भूभुजः । अरिक्षुरपुरे राजा, तमुद्दिश्येदमादिशत् ॥ २४ ॥ सुजातो भद्र ! हन्तव्यो, नात्र कार्या विचारणा । रहः सुजातं चाऽऽकार्य, प्रेम्णेवेदं नृपोऽवदत् ॥ २५ ॥ सुजातारिक्षुरे गत्वा, राज(ज्य)कार्याणि साधय । भूत्वा द्वितीयस्तद्राज्ञोऽनुमेने सोऽपि तदृजुः ॥२६॥ सुजातस्तत्र गत्वाऽऽस्ते, विश्वस्तः सरलाशयः । हनिष्यत इति मिथः, क्रीडतस्तौ दिने दिने ॥ २७ ॥ अथ चन्द्रध्वजस्तस्य, शीलं रूपं विलोक्य सत् । दध्यौ विनष्टोऽ(ष्टा)न्तःपुर्यो, कयाचित् मार्यैवे न्विति ॥ २८ ॥ परं व्यापादयाम्यसि, नररत्नं किमीदृशम् ? । ध्यात्वेत्यदर्शयल्लेखं, वधार्होऽसि नृपाज्ञया ॥ २९ ॥ सुजातोऽप्याह यत् तुभ्यं, रोचते तत् कुरुष्व भोः ! । चन्द्रध्वजोऽवगीदृक्षं, करिष्ये पातकं नहि ॥ ३० ॥ परं कालविलम्बोऽस्तु, स तु सम्पन्निबन्धनम् । ततश्चन्द्रयशास्तेन, दत्ताऽस्मै स्वस्य च स्वसा ॥ ३१ ॥ रहस्त्वगूद्दोपदुष्टा सा, सोऽस्थात् सार्द्धं-तया सुखम् । सुजातस्य स सङ्क्रान्तो, रोगस्तत्सङ्गमात् मनाक् ॥ ३२ ॥

सुजात-वारत्तकर्षि-सम्बन्धः ।

सा क्रमात् श्राविका तेन, कृता चिन्तितवत्सदः । अहो! मदीयदोषेण, विनष्टोऽसौ महामनाः ॥ ३३ ॥ इति वैराग्यतः प्रत्याचख्या-
वनशनं तपः । निर्यामिता सुजातेन, प्रपेदे त्रिदिवश्रियम् ॥ ३४ ॥ [युग्मम्] विज्ञायावधिना पूर्वभवोपकृतिकारिणम् । नत्वा सुजातं
देवोऽवक्, किं करोमि तव प्रियम्? ॥ ३५ ॥ वैराग्यातिशयं प्राप्तः, सुजातोऽवददीदृशम् । पश्यामि पितरौ पूर्वमादास्ये त्वार्हतं व्रतम्
॥३६॥ स चम्पापुर्युपर्यागाद्, विकृत्य सुमहच्छिलाम् । धूपव्यग्रकराः पौरा, भीतास्तं शरणं ययुः ॥३७॥ देवोऽवदद्रे दासाः!, सुजातो
मन्त्रिणा हतः । निरागाः श्रावको मोक्षो, न यस्तच्छरणं विना ॥ ३८ ॥ स्वामिन्! स क्वास्ति? देवोऽवक्, पुरोद्यानेऽस्ति सोऽधुना । ततः
सनागरो राजा, तं प्रसाद्याऽऽनयत् पुरम् ॥ ३९ ॥ पतित्वा पादयो राज्ञा, पौरैश्च क्षामितो भृशम् । पितृंश्च भूपमापृच्छ्य, सुजातो
व्रतमग्रहीत् ॥ ४० ॥ प्रावव्रजतुरन्यस्य, धनमित्र-धनश्रियौ । त्रयो महर्षयोऽप्येते, सम्प्रापुर्निर्वृतिश्रियम् ॥ ४१ ॥ आज्ञप्तो भूभुजा
धर्मघोषो निर्विषयो रुषा । येन तस्य गुणालोके, प्रद्वेषोऽकारि दुर्धिया ॥ ४२ ॥ यथा नेत्रे तथा शीलं, यथा नासा तथाऽऽर्जवम् ।
यथा रूपं तथा चित्तं, यथा शीलं तथा गुणाः ॥ ४३ ॥ अथवा—विषम-समैर्विषम-समा, विषमैर्विषमाः समैः समाचाराः । कर-
चरण-कर्ण-नासिक-दन्तौष्ठनिरीक्षणैः पुरुषाः ॥ ४४ ॥ सोऽपि निर्वेदमापन्नो, दध्यौ धिङ् मन्दबुद्धिना । निर्मन्तुर्हन्तुमारब्धः, सुजातो
भोगलोभतः ॥ ४५ ॥ तथाविधस्थविराणामन्ते राजगृहे ततः । अङ्गीचकार चारित्रं, धर्मघोषो विरागतः ॥ ४६ ॥ बहुश्रुतश्च
विहरन्, वारत्तपुरमीयिवान् । तत्राऽऽस्तेऽभयसेनाख्यो, यथार्थः पार्थिवः पुनः ॥ ४७ ॥ मन्त्री वारत्तकस्तत्र, धर्मघोषो महामुनिः ।
भ्रमन् गोचरचर्यायां, मध्याह्नेऽस्यागमद् गृहम् ॥ ४८ ॥ पायसस्थालमानीतं, सर्पिर्मधुसमन्वितम् । दात्र्या प्रदीयमानेऽस्मै, पायसे
पृषतोऽपतन् ॥ ४९ ॥ परिशाटिरितीष्टं न, तदलात्वा मुनिर्ययौ । वारत्तको गवाक्षस्थस्तद् वीक्ष्येदमचिन्तयत् ॥ ५० ॥ किं मन्ये मुनिना

तेन, शुद्धा मिक्षेयमुज्झिता ?। तावत् तत्रापतन् विन्दौ, मक्षिका रसभक्षिकाः ॥५१॥ दैवात् ता जक्षितुं कुड्यमत्स्योऽगात् सरटश्च तम् । सरटं पुनर्मार्जारो, मार्जारं गृहकुर्कुरः ॥ ५२ ॥ प्रत्यन्तवासिनः श्वा तं, सङ्ग्रामोऽभूत् तयोर्द्वयोः । युध्यमानौ वहिः प्रापतावीयुश्चातिथिकुर्कुराः ॥ ५३ ॥ स्वामिनां सारमेयानां, सङ्ग्रामोऽभूत् महान् मिथः । मश्री दध्यौ ध्रुवं त्यक्ता, सा तेनानेन हेतुना ॥ ५४ ॥ चिन्तयंश्चास्मरद् जातिं, लेभे प्रत्येकबुद्धताम् । लिङ्गं देवतयाऽऽनीतमादायाप्याददे व्रतम् ॥५५॥ वारत्तकमुनिः सोऽथ, विहरन्नन्यदा ययौ । सुंसुमारपुरे तत्र, धुन्धुमारोऽस्ति पार्थिवः ॥ ५६ ॥ तस्याऽङ्गारवती पुत्री, श्रमणोपासिकोत्तमा । सा परिव्राजिकां वादेऽन्येद्युश्चक्रे निरुत्तराम् ॥५७॥ सापत्न्ये पातयाम्येनां, रुष्टा दध्यौ तपस्विनी । ततोऽस्याः फलके रूपं, विज्ञानाधिक्यतोऽलिखत् ॥ ५८ ॥ चण्डप्रद्योतभूपस्य, दर्शितं तत् तयाऽद्भुतम् । सोऽप्यपृच्छदियं देवी, किन्नरी वा खचारिणी ? ॥५९॥ तपस्विन्याह भूभर्त्तर्मानव्यङ्गारवत्यसौ । धुन्धुमारं प्रति प्रेम्णा, प्रैषीद् दूतं ततो नृपः ॥ ६० ॥ सोऽप्यूचे प्रार्थ्यते कन्या, विनयेन पिपासया । न प्रसह्येत्यसौ राज्ञा, धर्षितोऽगादिनान्तिकम् ॥ ६१ ॥ रुष्टस्तद्वचसा चण्डप्रद्योतश्चण्डशासनः । चतुरङ्गचमूचक्रचञ्चुश्चक्रे प्रयाणकम् ॥ ६२ ॥ सर्वतः सेनयाऽऽवेष्ट्य, सुंसुमारपुरं स्थितः । तस्थौ चाल्पबल इति, धुन्धुमारः पुरान्तरा(रम्) ॥ ६३ ॥ नागागारे तदा तस्थौ, महर्षिश्चत्वरान्तिके । धुन्धुमारो नृपो भीतः, प्रत्यर्थी बलवानिति ॥ ६४ ॥ नैमित्तिकं ततोऽपृच्छत्, पुरेशः सोऽप्युपश्रुतिम् । शृण्वानो भापयामास, भृशं क्रीडापरान् शिशून् ॥ ६५ ॥ भीतास्ते कम्पमानाङ्गा, ययुर्वारत्तकान्तिकम् । स दैवात् कृपया तेषां, मा भीर्दानं ददौ तदा ॥ ६६ ॥ शोभनोपश्रुतिरिति, ज्ञात्वाऽऽगत्य निमित्तवित् । धुन्धुमारमुवाचोच्चैर्जयं जानीहि हस्तगम् ॥ ६७ ॥ ज्ञात्वाऽध्वखिन्नं तत् सैन्यं, मध्याह्ने पूःपतिश्छलात् । उपरिष्टात् पपातेव, श्येनश्चटकपेटकम्(के) ॥ ६८ ॥ भग्नं रिपुबलं बद्ध्वाऽऽनीतस्तदधिपः पुरे । विशुद्धाध्याप्धुनीनानां,

सुजात-
वारत्तकर्षि-
सम्बन्धः ।

जयः प्रायः करांश्रयी(यः) ॥६९॥ पुरद्वाराणि बद्धानि, प्रद्योतो भूभुजोदितः । वातः कुतोमुखो वाति, वद भोः! ब्रूहि पार्थिव ! ? ॥७०॥ प्रद्योतोऽप्याह यद् वेत्सि, धुन्धुमार ! कुरुष्व तत् । सोऽप्युवाच महाराज !, हतेन मम किं त्वया ? ॥७१॥ ततोऽङ्गारवती तस्मै, दत्त्वा(त्ता)ऽऽडम्बरपूर्वकम् । पुरद्वाराणि मुक्तानि, प्रद्योतोऽस्थात् पुरे सुखम् ॥७२॥ केऽप्याहुर्देवमुद्दिश्योपवासो भूभुजा कृतः । डिम्भरूपं कृतं तेन, निमित्तं चाय(वा वि)लोकितम् ॥७३॥ प्रद्योतो द्विरदारूढो, भ्रमन्नल्पपरिच्छदः(म्) । पुरं वीक्ष्य प्रियां प्रोचे, कथं मेऽभूत् पराजयः ? ॥७४॥ साधुवागनुभावेन, बभाषेऽङ्गारवत्यपि । हास्यात् नैमित्तिकं साधुं, वन्दे त्वामित्यवक् नृपः ॥७५॥ उपयुक्तोऽभवद् वारत्तकर्षिश्चाप्रतात् स्मृतम् । मा भीर्दीनं तदाऽर्भानां, व्रतिनां व्रतदूषकम् ॥७६॥ यदार्षम्—"थेवो वि गिहिपसंगो, जइणो सुद्धस्स पंकमावहइ । जह सो वारत्तरिसी, हसिओ पज्जोयनरवइणा ॥ ७७ ॥" तदालोच्य प्रतिक्रम्य, मिथ्यादुष्कृतपूर्वकम् । वारत्तकमुनिः क्षीणकर्मा प्राप महोदयम् ॥ ७८ ॥ इति श्रीसुजात-वारत्तकमुन्योः सम्बन्धः ॥ व्याख्याताः समापि यथाज्ञाताः प्रक्षेपगाथाः ॥ अथ मूलं(ल)सूत्रं व्याख्यायते—

छट्ठेणं छम्मासे, सहित्तु अक्कोस-तालणाईणि । अज्जुणमालागारो, खवित्तु परिणिव्वुओ(डो) कम्मे ॥ ७६ ॥

व्याख्या—अर्जुनमालाकारः 'परिनिर्वृतः' परि-सामस्त्येन कर्माग्निनिर्वाणात् शीतीजात इति क्रिया । किं कृत्वा ? "खवित्तु" क्षपयित्वा, कानि ? 'कम्मे' त्ति कर्माणि व्यस्तसम्बन्धः प्राकृतत्वात् । पुनः किं कृत्वा ? "सहित्तु" विषह्य, कानि ? आक्रोश-ताडनादीनि तत्राऽऽक्रोशः—शापः, ताडनं—यष्टि-मुष्ट्यादिप्रहरणम्, आदिशब्दात् तर्जनं च । कथं ? षण्मासान् यावदिति गम्यम् । केन ? 'षष्ठेन' उपवास(वास)द्वयेन । इति गाथार्थः ॥ ७६ ॥ भावार्थश्चायम्—

१" स्तोकोऽपि गृहिप्रसङ्गो यतेः शुद्धस्य पङ्कमावहति । यथा स वारत्तर्षिर्हसितः प्रद्योतनरपतिना ॥ ७७ ॥

कथार्णवाख्यायां वृत्तौ पञ्चमो विश्रामः ।

सुजात-वारत्तकर्षि-सम्बन्धः ।

अर्जुनमालाकार-महर्षि-वक्तव्यता ।

अर्जुनमालाकार-महर्षि-वक्तव्यता।

आसीद् राजगृहे पूर्वं, पुष्पाजीवोऽर्जुनाह्वयः । स्कन्दश्र्याख्या प्रिया तस्य, रूपरेखाकपोपला ॥ १ ॥ यक्षोऽभूत् मुद्गरकरोऽर्जुनस्य कुलदेवता । पुरो बहिस्तदारामः, पुरमार्गान्तरस्थितिः ॥ २ ॥ भक्तं दातुं गताऽन्येद्युः, स्कन्दश्रीर्भर्तुरात्मनः । पुष्पाण्यमाण्युपादाय, प्रत्यावृत्ताऽऽस्पदं प्रति ॥ ३ ॥ यक्षायतनमध्यस्थैः, सा दुर्ललितगोष्ठिकैः । दृष्टा यान्ती नरैः षड्भिस्तेऽदश्चोचुस्ततो मिथः ॥ ४ ॥ भो भो ! आयान्तु गृह्णीमः, सुरूपामर्जुनप्रियाम् । ततस्तैर्जगृहे सा हि, तादृशां तादृशैव धीः ॥ ५ ॥ जनाः षडप्यमी यक्षपुरो बुभुजिरेऽथ ताम् । अर्जुनोऽपि सुमेरग्रै(ग्र्यै)र्यक्षमर्चति तं स(सर्व)दा ॥६॥ तमर्चितुं दिने तस्मिन्नागात् तं वीक्ष्य साऽवदत् । एषोऽर्जुन इहाऽऽयाति, किं मां मोक्ष्यथ पूरुषाः !? ॥ ७ ॥ तैर्ज्ञातमेतदेतस्याः, प्रियमित्यूचिरेऽथ ते । त्वां सेविष्यामहे बद्ध्वा, तमित्युक्त्वा स तैः सितः ॥ ८ ॥ पुरो यक्षस्य तं बद्ध्वा, स्कन्दश्रीस्तैरसेव्यत । भर्तुर्मोहोत्पादकानि, क्लीबवचांस्यतनोच्च सा ॥ ९ ॥ भुज्यमानां प्रियां वीक्ष्याऽर्जुनो दध्याविदं हृदि । पूजयामि सदा यक्षममुमग्रैः(ग्र्यैः) सुमैरहम् ॥ १० ॥ तथाप्येवं पराभूतिं, लेभे तत् सत्यमत्र तु । नाधिष्ठाता सुरः कश्चिदस्तीत्यनुशयं दधौ ॥ ११ ॥ ततोऽनुकम्पया तस्य, यक्षोऽस्याङ्गे प्रविष्टवान् । देवताधिष्ठितं सलक्षणं यद्वस्तु वस्तुतः ॥ १२ ॥ आट्कृत्य त्रोटयित्वाऽथ, मालिको बन्धनं निजम् । सहस्रपलनिष्पन्नं, ललौ मुद्गरमायसम् ॥ १३ ॥ तान् षडप्यवधीत् क्रोधात्, स्कन्दश्रीसहितान् नरान् । एवं दिने दिने पुंसः, षट् सस्त्रीकान् जघान सः ॥ १४ ॥ बहिर्नायाति पूर्लोको, न यावत् सप्त मारिताः । इतश्च भगवान् वीरस्तत्रागाद्, विहरन् क्रमात् ॥ १५ ॥ वन्दनप्रत्ययार्थं तद्भीत्या याति न कश्चन । श्रेष्ठी सुदर्शनस्तत्र, स्वामिभक्तोऽभवद् भृशम् ॥१६॥ स दध्यौ यद् भवेत् तत् तु, भवत्वेष प्रयाम्यहम् । इत्यर्हद्भक्तिरागेण, निर्ययौ निजमन्दिरात् ॥१७॥ दधावे शस्त्रमुत्पाट्य, तं वीक्ष्यायान्तमर्जुनः । श्राद्धोऽर्हत्-सिद्ध-साधूनां, प्रपन्नः शरणं ततः ॥ १८ ॥ सागारानशनं कृत्वा, श्रीवीरोऽर्हन् गतिर्मम । स्मरन् पञ्चनमस्कारं

कायोत्सर्गेण तस्थिवान् ॥ १९ ॥ परितोऽमुं भ्रमन् यक्षः, शक्तो नाऽऽक्रमितुं ततः । दृष्याऽनिमेषयाऽद्राक्षीदर्जुनः श्रीसुदर्शनम् ॥२०॥ यक्षो मुद्गरमादाय, गतश्चापतदर्जुनः । क स्थितं(:) ? किं कृतं कार्यं ?, पप्रच्छेति सचेतनः ॥ २१ ॥ पूर्वव्यतिकरं तस्मै, श्रेष्ठ्याचष्टाखिलं ततः । सानुतापोऽर्जुनोऽवादीदहो(द्धहा)ऽहं गुरुपापवान् ॥२२॥ श्रेष्ठिन् ! क प्रस्थितोऽसीति ?, सोऽप्यूचे वन्दितुं प्रभुम् । एष्याम्यहमपि श्रेष्ठिन् !, नमस्कर्तुं जगद्गुरुम् ॥ २३ ॥ गत्वा श्रुत्वाऽऽर्हतं धर्मं, सोऽपृच्छद् देशनावधौ । स्वामिन् ! शुद्धिः किमस्मात् मे, भविता पापकर्मणः ? ॥२४॥ स्वाम्युवाचाऽर्जुन ! तपश्चरणादेव तत्क्षयः । ज्वलज्ज्वलनसंसर्गादिवार्जुनमलक्षयः ॥ २५ ॥ यदुच्यते—"हुयासणेण तत्तस्स, कणगस्स जहा मलो । विद्धंसइ तहा एवं, तवेण खलु जंतुणो ॥ २६ ॥ (१)" ततोऽनेन प्रभूपान्ते, परिव्रज्याऽऽश्रिताऽऽर्हती । षष्ठभक्तव्रती राजगृहे चभ्राम पत्तने ॥ २७ ॥ आक्रुश्यतेऽसौ स्वजनमारकः शत्रुरेष नः । जनैस्तु सहते सम्यक्, मन्वानो लाभमात्मनः ॥ २८ ॥ अपि च—"अक्कोस-हणण-मारण-धम्मब्भंसाण बालसुलभाणं । लाभं मन्नइ धीरो, जहोत्तराणं अभावम्मि ॥ २९ ॥ (२)" एवं शुभपरीणामात्, षण्मासान्तेऽर्जुनो मुनिः । सम्प्राप केवलं लोकालोकालोकं क्रमात् शिवम् ॥३०॥ इति श्रीअर्जुनमालाकारमहर्षिकथा ॥

माहणमहिलं संपइ, सगब्भमवि छित्तु पत्तवेरग्गो । घोरागारं च तवं, काउं सिद्धो दढप्पहारी ॥ ७७ ॥

व्याख्या—"माहण" त्ति दरिद्रद्विजं 'महिलां' तद्ब्राह्मणप्रियां "संपइ" त्ति प्रस्तावादावश्यकोपदेशमालावृत्त्यादिष्वनुक्ताऽपि श्रीहेमचन्द्रा(मा)चार्यैस्तत्प्रकरणकारकाद्यभिप्रायेण गौरेवात्र ज्ञेया । "माहणमहिलं सपइं" इति पाठे "माहणमहिलं" ति माहणीं, किंविशिष्टां ?

१ "हुताशनेन तप्तस्य, कनकस्य यथा मलः । विध्वंसते तथैवं, तपसा खलु जन्तुनः ॥ २६ ॥" २ "आक्रोश-हनन-मारण-धर्मभ्रंशानां बालसुलभानाम् । लाभं मन्यते धीरो, यथोत्तराणामभावे ॥ २९ ॥"

कथार्णवाख्यायां वृत्तौ पञ्चमो विश्रामः ।

अर्जुनमालाकारमहर्षिवक्तव्यता ।

दृढप्रहारिमहर्षिवर्णनम् ।

'सपतिकां' भर्तृसहितां । पुनः (तां) किंविशिष्टां ? 'सगर्भां' ससत्त्वामपि 'छित्वा' द्विधाकृत्य आत्तवैराग्यः । शेषं सुगमम् । इति गाथाधदलार्थः ॥ ७७ ॥ भावार्थश्चायम्—

दृढप्रहारि-महर्षि-वर्णनम् ।

कस्मिन् ग्रामे द्विजन्मैकः, कुरुतेऽन्यायमन्वहम् । नाप्यस्माद् वारितोऽनेकैर्दुर्दान्तो दुःस्वभाववः ॥ १ ॥ सम्भूय निखिलैर्ग्राम्यैर्ग्रामात् निष्कासितो रुषा । सुगुणो वाऽगुणो नृणां, हेतुर्मानापमानयोः ॥ २ ॥ भ्रमन्नसावरण्यानीं, चौ(चो)रपल्लीमगाद् बटुः । तत्पल्लीपतिना प्रेम्णा, धर्मपुत्रतयाऽऽदृतः ॥ ३ ॥ पल्लीपतौ मृते तस्मिंस्तत्पदे दस्युभिर्द्विजः । न्यस्तो दैवं हि सदृशं(क्षं) सदृशे योजयत्यपि ॥ ४ ॥ ख्यातो दृढप्रहारीति, दृढं प्रहरतीति सः । निष्कृपो(पं) निस्त्रपो(पं) बाल-वृद्धादीन् घ्नन् न शङ्कते ॥ ५ ॥ चो(चौ)रधाट्या समं ग्रामं, गतो हन्तुं परेद्यवि । दृढप्रहारी तत्रैको, दरिद्री(द्रो) वसति द्विजः ॥ ६ ॥ शिशूनां रुदतां तेन, याचित्वा गोरसादिकम् । पायसं पक्तुमारब्धं, ब्राह्मण्या दारकाग्रहात् ॥ [illegible] ॥ नद्यां स्नातुं गतो विप्रस्तावत् पल्लीपतेर्भ्रमन् । तत्रैको दस्युरायातस्तदद्राक्षीत् च संस्कृतम् ॥ ८ ॥ पायसं चरुमुत्पाट्य, गतो दस्युर्बुभुक्षितः । रुदतामपि डिम्भानां, दे(दै)यो दुर्बलघातकः ॥ ९ ॥ रुदद्भिरुदितं बालैः, स्वपितुस्तद्द्विजन्मनः । पितरावेव पूत्कारस्थानं हि तनुजन्मनः ॥ १० ॥ ततः कृपाणमाकृष्य, द्विजः क्रोधारुणेक्षणः । पत्न्या निवारितोऽप्युच्चैस्तस्करं प्रत्यधावत ॥११॥ ग्रामान्तर्यत्र तत्पल्लीनाथोऽस्ति तत्र स द्विजः । गत्वोच्चैः समरारम्भं, चकार(कृतवान्) तस्करैः समम् ॥ १२ ॥ एतेन परिभूयन्ते, द्विजेन मम दस्यवः । ध्यात्वेति दस्युनाथेन, द्विधाचक्रे स निर्दयम् ॥ १३ ॥ तत्प्रिया प्राह रे पाप्मन् !, किमक्षत्रं कृतं त्वया ? । तामप्यसौ द्विधाचक्रे, क्रोधोऽन्धङ्करणं नृणाम् ॥ १४ ॥ तस्या उदरमध्यस्थं, वीक्ष्य गर्भं द्विधाकृतम् । स्फुरन्तं जातकारुण्याद्(ण्यो), दध्यौ पल्लीपतिस्त्विदम् ॥ १५ ॥ हहाऽधर्मः कृतः कस्मादस्मात् मुक्तिर्ममांहसः ? । लेभे प्रवृत्तिं डिम्भेभ्यो, यद् द्विजोऽयं दरिद्रभूत् ॥ १६ ॥

निर्वेदं सुतरां प्राप्तस्ततो दृष्ट्वा मुनीनिह । दृढप्रहारी पप्रच्छोपायः कोऽत्र महर्षयः!? ॥१७॥ धर्मो मुनिभिराख्यातस्ततः पल्लीपतिर्व्रतम् । प्रपद्यामिमहं घोरं, क्षमालक्षणमग्रहीत् ॥ १८ ॥ ताडना-तर्जनाऽऽक्रोशांस्तत्रैव विहरन् मुनिः । सेहे सम्यक् क्षमाधीनमनाः साधुशिरोमणिः ॥ १९ ॥ अग्रा(था)ग्रुपभ्रशनादि, यावद् ग्राम, स्मरामि तम् । तावत् नाहारयामीति, तपस्तेपे दुस्तपम् ॥ २० ॥ एवं निरशनः षण्मासीमसौ मुनिसत्तमः । उत्पाद्य केवलज्ञानं, शिश्रिये(श्राय) शिवसम्पदम् ॥ २१ ॥ इति श्रीदृढप्रहारिमुनिसम्बन्धः ॥

**जाइसरं रायसुयं, खंतिजुयं कूरगडु(ड्डु)यं वंदे । चउरो वि तहा खवगे, पंच वि सिवमयलमणुपत्ते ॥ ७८ ॥**

व्याख्या—'कूरगडु(ड्ड)कं' बालकृवना(तोम्ना)मकं मातृ-पितृकृतापर(-ख्यां कृतनामकं)नागदत्ताभिधानं वन्दे । किंविशिष्टं ? "जाइसरं" ति जातिस्मृतिवन्तम्, तथा राजसुतं क्षान्तियुतं च । तथा चतुरोऽपि क्षपकान् वन्द इत्यत्रापि योज्यम् । 'पञ्चापि' अमून् शिवं—मोक्षम् अचलं—निश्चलमनुप्राप्तान् । इति गाथासंस्कारार्थः ॥ ७८ ॥ भावार्थश्चायम्—

कश्चिदुग्रतपाः कस्मिन्, गच्छेऽभूत् क्षपकः पुरा । स क्षुल्लेन सहान्येद्युर्भिक्षार्थमगमत् पुरे ॥ १ ॥ गच्छता तेन मण्डूकी, मार्गे व्यापादिता पदा । तद्वधं क्षुल्लकः प्राह, न मेने क्षपकस्तदा ॥ २ ॥ आलोचयति नाऽऽलोचनावेलायां मुनिस्तु तम् । क्षुल्लकश्चाह तत्पापमालोचय शुभाशय! ॥ ३ ॥ तत् श्रुत्वा क्षपको रुष्टः, क्षुल्लं हन्मीत्यधावत । क्षुल्लोऽपि लब्धलक्षत्वात्, नष्ट्वा दूरं गतो जवात् ॥ ४ ॥ स्तम्भभग्नशिरा मृत्वोत्पेदे क्रोधान्धविग्रहः । विराधितव्रत-कुले, स फण्येकत्र दृग्विषः ॥५॥ जानन्ति तेऽह्योऽन्योन्यं, जातिस्मृतिवशात् ततः । प्रासुकाहारिणो रात्रिचारिणो जज्ञिरेऽखिलाः ॥ ६ ॥ इतश्च कस्यचित् राज्ञः, पुत्रो दष्टोऽहिना मृतः । रुष्ट आदिष्टवान् भूपः, सर्पव्यापादनं(ने) जनान् ॥ ७ ॥ तस्मै यच्छामि दीनारं, यो हृतं दर्शयत्यहिम् । ततो बहुजनो लग्नस्तद्वधे लोभलीलया ॥ ८ ॥ केनचिद्



दृढप्रहारि-
महर्षि-
वर्णनं

कूरगडुमुनि-
प्रबन्धश्च ।

कूरगड्डुमुनि-प्रबन्धः तापसस्तवनं च ।

भ्रमताऽन्येद्यू रेखास्तेषामिहेक्षिताः । ओ(औ)षधीमिततो दध्मौ, तस्याहेर्निर्दयो बिलम् ॥ ९ ॥ निर्यातमिमुखं नाहिर्मा भूत् मे भस्मसाद् दृशा । निर्गतं निर्गतं छित्त्वा, तं राज्ञेऽदर्शयच्च सः ॥ १० ॥ नागदेवतया भूपो, बोधितो यत् तवाऽऽत्मजः । नागदत्ताह्वयो भावी, देयाहीनामतोऽभयम् ॥ ११ ॥ मृत्वा क्षपकजीवोऽहिर्महिष्या तस्य भूभुजः । नागदत्ताभिधो जज्ञे, सूनुरन्यूनविग्रहः ॥१२॥ नागदत्तो गवाक्षस्थोऽन्यदाऽतिक्रान्तशैशवः । साधूनालोक्य सस्मार, जातिं ह्यःकृतकार्यवत् ॥ १३ ॥ प्रवव्राज गुरूपान्ते, बुभुक्षाधानसौ भृशम् । जग्राहाभिग्रहं रोषो, न कार्योऽत्र मया क्वचित् ॥ १४ ॥ सन्त्याचार्यगणे तस्मिंश्चत्वारः क्षपकर्षयः । एक-द्वि-त्रि-चतुर्मासोपवासतपसः क्रमात् ॥ १५ ॥ रजन्यां देवताऽऽयाता, त्यक्त्वा तानखिलान् मुनीन् । ववन्दे क्षुल्लकमुनिं, समद्वैतक्षमानिधिम् ॥ १६ ॥ निर्गच्छन्ती करे धृत्वा, सोक्तैकेन तपस्विना । रे कटपूतने ! ग्राम्ये !, विवेकविकलाऽसि किम् ? ॥१७॥ महातपस्विनो याऽस्मान्, मुक्त्वा त्रिकाल-भोजिनम् । वन्दसे पूर्वमेवैनं, सर्वसाध्वव(ध)मं मुनिम् ॥ १८ ॥ देव्युवाच मुने ! भावक्षपकं प्रणमाम्यहम् । न द्रव्यसाधुमित्युक्त्वा, सा स्वाश्रयमशिश्रयत् ॥ १९ ॥ क्षुल्लोऽपि कल्यवर्त्तस, पात्रं दत्त्वा न्यमन्त्रयत् । मुनीनेकेन निष्ठ्यूतं, तदन्तर्न्यैस्समीर्ष्यया ॥ २० ॥ मिथ्या मे दुष्कृतं खेलमात्रं यो नार्पितं द्रुतम् । तेनेत्युक्तेऽपि(च) निष्ठ्यूतं, न्यस्तं तत्राखिलर्षिभिः ॥ २१ ॥ अद्विष्टो भुक्तवान् भक्तं, मुनिभिर्वारितोऽप्यसौ । अद्वैतक्षान्तिमाहात्म्यात्, केवलज्ञानमाप च ॥ २२ ॥ चत्वारः क्षपकाः सानुतापाः केवलमुज्वलम् । सम्प्रापुरेवं पञ्चापि, शिश्रियुस्ते शिवश्रियम् ॥ २३ ॥ इति श्रीकूरगड्डु(ड्)मुनि(कूरकुम्मर्षि)प्रबन्धः ॥

अथ श्रीगौतमयुगपत्प्रतिबोधितत्र्युत्तरपञ्चदशशततापसान् स्तुवन्ति—

**कोडिन्न-दिन्न-सेवाल(लि)नामए पंचपंचसयकलिए। पडिबुद्धे गोयमदंसणेण पणमामि सिद्धे य ॥७९॥** तथा—

**एगस्स खीरभोयणहेऊ नाणुप्पया मुणेयवा । बीयस्स य परिसाए, दिट्ठाए जिणम्मि तइयस्स ॥ ८० ॥**

व्याख्या—एतयोर्गाथयोर्द्वयोरपि व्याख्यार्थः सुगम एव । नवरम्—"एगस्स" त्ति 'एकस्य' पञ्चशतवृन्दस्य एकेनाधिकस्येति गम्यम् ॥ ७९–८० ॥ भावार्थस्तु प्राक् पुण्डरीक-कण्डरीकप्रबन्धाधिकारे दर्शित इति [ पृथग् न दर्श्यत इति ] ॥

अथ शिवराजर्षेराशिष(-र्षिं, शिवगमन)माह—

**विप्परिवडियविभंगो, संबुद्धो वीरनाहवयणेणं । सिवरायरिसी एक्कारसंगवी जयउ सिद्धिगओ ॥ ८१ ॥**

व्याख्या—व्याख्यार्थः स्पष्टः ॥ ८१ ॥ भावार्थस्त्वयम्—

समृद्धे कुरुदेशेऽभूत्, पार्थिवो हस्तिनापुरे । शिवो नाम्ना शिवाश्लेषविशेषः शिववत् सदा ॥ १ ॥ तस्याग्रमहिषी रूपधारिणी
धारिणीत्यभूत् । कुमारः शिवभद्राख्यः, पितृनेत्रसुधानिधिः ॥ २ ॥ शिवो वीक्ष्यान्यदा दध्यौ, राज्यादेर्वृद्धिमात्मनः । प्राचीनागण्य-
पुण्यस्य, ममैतदखिलं फलम् ॥ ३ ॥ नीव्याभे विद्यमानेऽस्मिंस्तत् कुर्वे किं(क)ञ्चिदुद्यमम् । प्रदीपे खलु निर्वाणे, न दीपान्तरबोधनम् ॥४॥
संस्थाप्य शिवभद्रं तत्, कुमारं राज्यसम्पदि । वानप्रस्थपरिव्रज्यां, श्रयामि सुकृतार्थ्यहम् ॥ ५ ॥ ध्यात्वेति प्रातराकार्यादिदेशादेशका-
रिणः । राज्याभिषेकसामग्रीं, सज्जीकुरुत सत्वरम् ॥ ६ ॥ अष्टोत्तरसहस्राग्रस्वर्ण-रूप्य-मृदात्मकैः । राज्येऽभिषिक्तः कलशैः, शिवभद्रो
नृपादिभिः ॥ [illegible] ॥ ततः शोभननक्षत्र-मुहूर्त्त-करणेऽहनि । पार्थिवः स्वजनान् सर्वान्, भोजनाय न्यमन्त्रयत् ॥८॥ भुक्तोत्तरं तान् सत्कृ-
त्यापृच्छ्य तांश्चात्मनन्दनम् । वानप्रस्थपरिव्रज्यां, गङ्गाकूले नृपोऽग्रहीत् ॥ ९॥ आजन्मषष्ठभक्तार्थोऽभिग्रहोऽभिमुखं रवेः । ऊर्ध्वबाहुस्त-
पस्तेपे, स धृतायःकटु(डु)च्छु(च्छ)कः ॥१०॥ अथाद्यषष्ठभक्तस्य, शिवर्षेः पारणादिने । शिश्रायोपाश्रयं स्वस्य, वल्कलाश्लि(क्लि)ष्टविग्रहः



तापसत्वबन्धे शिवराजर्षिवर्णनं च।

शिवराजर्षि-वर्णनम् ।

किञ्चिद् गत्वाऽनुजानातु, ॥११॥ आदाय क(कि)ढिणं प्राचीं, दिशं प्रेक्ष्येदमब्रवीत् । प्रस्थाने प्रस्थित सोमः, शिवं रक्षतु दिक्पतिः ॥१२॥ किञ्चिद् गत्वाऽनुजानातु, मामित्युक्त्वा स्थितान्यसौ । कन्द-मूल-फलादीनि, लात्वाऽक्षैप्सीत् स्वभाजने ॥१३॥ लात्वैधो-दर्भ-पत्राणि, समेत्योटजमात्मनः । वेदीं कृत्वा व्यधाद् भूमेरुपलेपन-मार्जनम् ॥ १४ ॥ गृहीत्वा कलशं दर्भगर्भं गङ्गामगादसौ । स्नात्वा तत्र शुचिर्देव-पितृभ्योऽम्भोऽञ्जलीनदात् ॥ १५ ॥ एत्योटजं पुनश्चक्रे, स वेदीं वालुका-कुशैः । उत्पाद्यारणितो वह्निं, ज्वालयामास दारुभिः ॥ १६ ॥ मधुभिस्तन्दु(ण्डु-)लैश्चाज्यैस्तं पुपूजा-ऽऽशुशुक्षणिम् । चक्रे ज्ञानी वलिं विश्वदेव चातिथिपूजनम् ॥ १७ ॥ ततोऽभ्यवहरत्येवं, ज्ञेयो याम्यादिदिक्ष्वपि । द्वि-त्रि-चतुः-पञ्चभक्तपा-रणायाः क्रमोऽस्य तु (तु) ॥१८॥ एवं शिवर्षिरज्ञानकष्टानुष्ठानतः क्रमात् । प्रकृत्या भद्रकत्वेन, विभङ्गज्ञानवानभूत् ॥ १९ ॥ विभङ्गज्ञान-तस्तस्मात्, सप्त द्वीपोदधीनसौ । साक्षाद् ददर्श लोकेऽस्मिन्, न किञ्चित् परतस्ततः ॥ २० ॥ हस्तिनापुरमेत्याथादिशद् बहुजनानसौ । सप्तद्वीपाब्धिवलेय भूर्ज्ञातं ज्ञानतो मया ॥ २१ ॥ अत्रान्तरेऽन्तिमस्तीर्थनायकः समवासरत् । श्रीवीरस्तत्पुरोद्याने, वन्दनायैयरुर्जनाः ॥२२॥ गौतमः प्रभुमापृच्छ्य, गोचरायाविशत् पुरम् । शुश्राव जनतः सप्तद्वीपाब्धित्वं शिवोदितम् ॥ २३ ॥ मन्ये सत्यमसत्यं किमि-त्याविर्भूतकौतुकः । पप्रच्छ गौतमो वीरं, किमसत्यं शिवोदितम् ? ॥ २४ ॥ स्वाम्याह गौतम ! शिवो, यद् ब्रूतेऽसत्यमेव तत् । सप्त-द्वीपाब्धिता भूमेरेवमाख्याम्यहं पुनः ॥२५॥ तिर्यग्लोके ह्यसङ्ख्याताः, ख्याता द्वीपाब्धयो जिनैः । एकधाऽनेकधा संस्थानतो विस्तरतश्च ते ॥२६॥ तेऽसङ्ख्याता जिनैः ख्याताः, स्वयम्भूरमणान्तिमाः । तं निशम्याखिला पर्षत्, प्रभुं नत्वाऽऽस्पदं ययौ ॥२७॥ ततो ब्रूते जनोऽन्योन्यं, मिथ्यावादी शिवो मुनिः । द्वीपाब्धीनामसङ्ख्यात्वं, यदुदाहृतमर्हता ॥२८॥ तामसह्यां शिवादित्यः(यो दिव्या), समाकर्ण्य जनश्रुतिम् । शङ्कितो भेदमापन्नः, कालुष्यमगमत्तराम् ॥ २९ ॥ ततो विभङ्गज्ञानं तत्, पतितं तस्य तत्क्षणात् । हस्ताद् रत्नमिवैपोऽपि,

दध्यावुद्भूतचेतनः ॥ ३० ॥ यामि पृच्छामि सर्वज्ञं, श्रीवीरं सर्वदर्शिनम् । ततः स्वोपकृतिं ज्ञात्वा, शिवो वीरं नमोऽकरोत् ॥ ३१ ॥ महत्पर्षद्गतो वीरः, शिवर्षेर्धर्ममब्रवीत् । तं श्रुत्वोद्भूतवैराग्यः, सोऽगादीशानकूणके ॥ ३२ ॥ पञ्चमुष्टिकचोत्पाटं, कृत्वैत्य स्वामिनोऽन्तिके । उपाददे परिव्रज्यां, शिवः शिवसुखोन्मुखः ॥ ३३ ॥ अधीत्यैकादशाङ्गानि, पालिताखण्डितव्रतः । उत्पाद्य केवलज्ञानं, शिवः प्राप शिवश्रियम् ॥ ३४ ॥ इति श्रीशिवर्षिकथा ॥ अथ श्रीदशार्णभद्रर्षिमाह—

चउसट्ठिकरिसहस्सा, चउसट्ठिसअट्ठदंतअट्ठसिरा । दंते य एगमेगे, पुक्खरिणीओ य अट्ठट्ठ ॥ ८२ ॥
अट्ठट्ठ लक्खपत्ताइं तासु पउमाइं हुंति पत्तेयं । पत्ते पत्ते बत्तीसयद्धनाडयविही दिव्वो ॥ ८३ ॥
एगेगकण्णि(न्नि)याए, पासायवडंसओ य पइपउमं । अग्गमहिसीहि सद्धिं, उवगिज्जंते तहिं सक्के ॥ ८४ ॥
एयारिसइड्ढीए, विलग्गमेरावणम्मि दट्ठु हरिं । राया दसन्नभद्दो, निक्खंतो पुण्ण(न्न)सपइण्णो(न्नो) ॥८५॥

व्याख्या—आसां चतसृणामपि गाथानामक्षरार्थः सुगम एव । नवरम्—"चउसट्ठि" त्ति चतुरधिका षष्टिः, "करिसहस्स" त्ति करिणां—ऐन्द्रियगजानां सहस्राणीत्यर्थः । एतत् प्रकरणकार्य(कारकाथ-)भिप्रायेणोक्तम्, न सिद्धान्ताभिप्रायेण; तत्राऽऽवश्यकोत्तराध्ययनवृत्त्यादावेरस्यैवैरावणस्य तावद् वदनादिविस्तरदर्शनात् । "चउसट्ठिसअट्ठ" त्ति चतुःषष्टिरष्टगुणा क्रियते ततो द्वादशाधिका पञ्चशती भवतीति भावः, एकैकस्य गजस्य मुखानामिति गम्यम् ( गाथार्थः ) । अयमपि प्रकरणकर्तृणामभिप्रायो, न सैद्धान्तिकानां तत्र प्रायोऽदर्शनात् । "पुण्ण(न्न)सपइण्ण(न्न)" इति पूर्णस्वप्रतिज्ञ इति गाथार्थः ॥ ८२-८३-८४-८५ ॥ भावार्थस्तु कथानकगम्यः । तच्चेदम्—

य(व)राटविषये सन्निवेशो धान्यपुराह्वयः । महत्तरसुतस्तत्र, वसत्येकोऽतिभद्रकः ॥१॥ दुःशीला प्रेयसी तस्य, परोक्षे पत्युरात्मनः ।



शिवराजर्षिवर्णनं दशार्णभद्रर्षिवर्णनं च ।

दशार्णभद्रर्षिवर्णनम्।

दण्डिना सरजस्केन, सा सार्द्धं रमते रहः ॥ २ ॥ नटप्रेक्षणकं तत्रान्येद्युर्जज्ञे मनोहरम् । क्लीवेषेण ननर्तोच्चैस्तत्रैकस्तरुणो नटः ॥ ३ ॥ तं ज्ञात्वा पुरुषं रक्ता, महत्तरप्रियाऽभवत् । वाताविद्धो ध्वज इव, दुःशीलानां मनोऽस्थिरम् ॥ ४ ॥ नटपेटकनाथोऽथ, तयोक्तश्चेत् मया सह । रमतेऽयं तदा स्वस्य, यच्छाम्यष्टोत्तरं शतम् ॥ ५ ॥ प्रतिपन्नं च तत् तेन, याहीत्येवैष आगतः । पृष्टं गृहं तयाऽऽख्यातं, ततोऽगादसतीगृहम् ॥ ६ ॥ तन्निमित्तं तयाऽसत्या, क्षीरेयी प्रगुणीकृता । नटोऽपि नटनाथेन, प्रेषितोऽस्या गतो गृहम् ॥ ७ ॥ तस्यार्पितं पादशौचं, नटो भोक्तुमुपाविशत् । सुरभ्याज्य-गुडोन्मिश्रा, क्षीरेयी परिवेषिता ॥ ८ ॥ यावद् भुङ्क्ते नटो नैव, तावद् ग्रामेश आगतः । तयोक्तो नट ! उत्तिष्ठ, तिलापवरके विश ॥ ९ ॥ यावदेनं प्रेषयामि, सरजस्कोऽवदत् ततः । किमेतदिति ? साऽप्यूचे, भोक्ष्येऽहं साज्यपायसम् ॥ १० ॥ सरजस्कोऽवदद्दहं, भोक्ष्ये साऽऽह बुभुक्षिता । नैवं बलादसौ भोक्तुं, तत् पायसमुपाविशत् ॥ ११ ॥ तावत् तत्पतिरायातः, उत्तिष्ठासौ तयोदितः । विशापवरकेऽप्यर्वाक्, तिष्ठेरमेऽस्ति पन्नगः ॥ १२ ॥ पप्रच्छ तत्पतिर्मुग्धे ! (ग्धः), क्षीरेयी भाजनेऽत्र किम् ? । सोचे,बुभुक्षिताऽभूवं, भोक्तुमुपाविशन्त्यहम् ॥ १३ ॥ पतिराह स भोक्ष्येऽहं, साऽप्यूचेऽद्याष्टमीतिथिः । भोजनं न विना स्नानं, युज्यते गृहमेधिनाम् ॥ १४ ॥ सोऽवदत् त्वमसि स्नातेत्युक्त्वोपाविशदुत्सुकः । इतो बुभुक्षितेनार्त्तं, नटेन फूत्कृतास्तिलाः ॥ १५ ॥ सरजस्कोऽहिरित्येष, पलायाञ्चक्रिवान् भयात् । नटोऽपि पृष्ठतस्तस्य, ततो वेलेति निर्ययौ ॥ १६ ॥ किमेतौ निर्गतौ पत्नि ! ?, मुग्धः पप्रच्छ तत्पतिः । साऽप्यूचे प्राक् मयाऽऽख्यातं, न धर्मो गृहिणामयम् ॥ १७ ॥ स्वगृहात् निर्गतौ स्नानधर्मभ्रंशादुमा-हरौ । सोऽपृच्छत् पुनरप्येतौ, कथं प्रविशतो गृहे ? ॥ १८ ॥ साऽऽह न्यायार्जितार्थेन, सर्वर्द्धया पूजया पुनः । गृहे प्रविशतो गौरी-शङ्करौ जीवितेश्वर ! ॥ १९ ॥ मुग्धो दशार्णदेशेऽगात्, न्यायार्जितधनेच्छया । दश गद्याणकास्तत्रोपार्जिताश्चाटुकर्मणा ॥ २० ॥ स्वं स्वल्पमिति नो तुष्टः, प्रत्यावृत्तस्तथाप्यसौ ।

दशार्णभद्रविवर्णनम् ।

छायायां पिप्पलतरोर्विशश्राम श्रमातुरः ॥ २१ ॥ इतश्चापहृतोऽश्वेन, तत्राऽऽगाद् दैवयोगतः । दशार्णभद्रो भूमीन्द्रो, महत्तरसुतान्तिके ॥ २२ ॥ दर्शितं तेन पानीयं, राज्ञोऽश्वादुत्ततार राट् । उत्तारितं च पर्याणमश्वो विश्रामितस्ततः ॥ २३ ॥ राज्ञः परिजनोऽप्यागात्, पृष्टोऽसौ कः ? किमागतः ? । यथास्थितं च तेनोक्तं, राज्ञोऽग्रे सरलात्मना ॥ २४ ॥ किं करोम्युपकारिंस्ते ?, राज्ञोक्तोऽसावभाषत । सर्वर्द्धिपूजोत्सवार्थं, करोतु प्रभुरुद्यमम् ॥ २५ ॥ नृपो दध्यौ वराकोऽयमृजुको वञ्चितः स्त्रिया । न यामि पत्तनं तावद्, विधास्येऽस्योचितं ततः ॥ २६ ॥ तमानीय पुरं राजा, सम्पाद्य स्नान-भोजनम् । दध्यौ धर्मपुमानेष, हित कार्यं मयाऽस्य किम् ? ॥ २७ ॥ इतश्चागमनं श्रीमद्वीरस्य चिनिवेदितम् । प्रवृत्तिकथकेस्तेभ्यो, नृपोऽदाद् दानमीप्सितम् ॥ २८ ॥ तत्र स्थितः प्रभुं नत्वा, नृपो दध्यावहो ! यदि । विवेकविकलस्यास्य, पूजायामुद्यमो महान् ॥ २९ ॥ तदस्मत्सदृशैः सर्वसामग्रीकैर्विवेकिभिः । जगच्चिन्तामणेः पूजा, सर्वर्द्ध्या क्रियते न किम् ? ॥ ३० ॥ [ युग्मम् ] ध्यात्वेति पार्थिवोऽवोचत्, तथा वन्द्यो जगद्गुरुः । यथा न केनचित् पूर्वं, वन्दितो महताऽप्यभूत् ॥ ३१ ॥ ततः प्रातः कृतस्नानः, सर्वाभरणभूषितः । उदार-स्फारनेपथ्यः, शतपञ्चावरोधनः ॥ ३२ ॥ नानायानाश्रितश्रेष्ठि-सामन्त-सचिवैर्वृतः । चतुरङ्गचमूचक्रच्छत्रच्छन्ननभस्तलः ॥३३॥ पदे पदे दीयमानदानप्रीणितमार्गणः । गीयमानगुणग्रामो, वाद्या(द्य)पूरितदिङ्मुखः ॥३४॥ नटैः प्रकटितं नाट्यं, प्रेक्ष्य(क्ष)माणः पदे पदे । राजा दशार्णभद्रोऽगात्, महर्द्ध्या स्वामिनोऽन्तिके ॥ ३५ ॥ [ चतुर्भिर्विशेष( कलाप,)कम् ] तदद्दृष्टर्पमकर्षी राड्,, धन्यंमन्योऽनमत् प्रभुम् । इतश्चावधिनाऽद्राक्षीत्, सुरेन्द्रस्तं तथास्थितम् ॥ ३६ ॥ अहो ! शक्तिरहो ! भक्तिरपर्वेति वं हरिः । दशार्णभद्रबोधायाऽऽदिदेशैरावतं गजम् ॥ ३७ ॥ विचक्रेऽसौ मुखान्यष्टौ, तेष्वष्टौ रदनान् पृथक् । दन्ते दन्तेऽष्टाष्ट वापीः, पद्मान्यष्टाष्ट तासु च ॥ ३८ ॥ पद्मे पद्मे दलान्यष्टावेष्वेषु लक्षपत्रिकाः । द्वात्रिंशद्बद्धनाट्यानि, तासु तास्वष्ट च पृथक् ॥ ३९ ॥

[युग्मम्] पवनै(हेतौ-)रावणाऽऽख्यस्थ चक्रः प्रदक्षिणाम् । जगद्गुरोर्जगत्येतः, स्वस्य विस्मापयन् श्रिया ॥ ४० ॥ तस्य दिव्यानुभावेना- दशार्णभद्र-र्षिवर्णनम् ।
प्यादानुति(द)गो गिरौ । गजेन्द्रपद इत्याख्यां, गिरिर्लेभे तदादितः ॥ ४१ ॥ चतुःषष्टिसहस्रेभविस्तरः शाम्यतोऽन्यतः । ज्ञेयो मयो-
पजीव्यैकः, सिद्धान्तदर्शितो गजः ॥ ४२ ॥ ईदृग्विभूतिमन्तं तं, सुरेन्द्रं वीक्ष्य पार्थिवः । दध्यौ मुधा मया हा! धिगल्पेनाऽहङ्कृतिः
कृता ॥ ४३ ॥ अपि च—"अदृष्टा अविद्धमदा, येयेण वि हुंति उत्तुणागीया । णयइ उत्तालकरो हु, मूसगो वीहिमासज्ज ॥ ४४ ॥"[1]
त्यगापि न मया धर्मो, मुखेन प्राग्भवेऽपि कृतम् (?) । तेनाल्पलात् तनेनाहं, कुर्वे खेदेन किं पुनः ? ॥ ४५ ॥ उक्तं च—"समसज्ञानमयः
गण, गुणः पुरतं किमन्यनश्येति ? । पुण्यैरधिकतरोऽयं, ननु सोऽपि करोतु गान्येव ॥ ४६ ॥" इति चिन्तयतस्तस्य, कर्म चारित्रयावरम् ।
रिरीनं वह्निसंयोगात्, स्थानमाश्रमिव क्षणात् ॥ ४७ ॥ तत उत्थाय संवेगात्, श्रीवीरं प्राह पार्थिवः । निर्विण्णो भवकारायाः, दीक्षा-
दानुग्रहेण माम् ॥ ४८ ॥ ततो दशार्णभद्रेन्द्रो, विधिवद् दीक्षितोऽर्हता । महत्तरमुतश्चापि, न मुधा साधुसङ्गतिः ॥ ४९ ॥ चन्द्र-
रवमीहशी येन, तस्य श्रीरूपणया क्षणात् । प्रशशंस प्रभूपान्तोपविष्टं तं मुनिं हरिः ॥ ५० ॥ प्रतिज्ञा पूरिता द्रव्यस्तयाद् भावस्तयो
यतः । धेयानुकरोति तं नराऽऽज्ञात् नाकं नाकनायकः ॥ ५१ ॥ इति श्रीदशार्णभद्रराजर्षिसम्बन्धः ॥
अथ श्रीमेतार्यमार्यं स्तुतिगोचरी[उरी]कुर्वन्ति—
नयपुरी जो कुंगगभयराहिणमवि दगाइ नाइक्खे । तं नियजियनिरविक्खं, नमामि मेयज्जमंतगडं ॥ ८६ ॥ मेतार्यर्षि-प्रबन्धः ।
व्याख्या—'तं' प्रसिद्धं मेतार्यं 'नमामि' प्रणीमयामि इति क्रिया । तं कं ? यः 'नयपूर्वी' नयपूर्ववेदी 'क्रो(क्रौ)ञ्चं' पक्षिविशेषम्,

1 "अपयाऽऽदमग्रा कोऽहेतारि मतभि गर्तपुष्पा । नृपसुताकरः सतु मूषको वोहिमासाद्य ॥ ४४ ॥"

'अपराधिनं' काञ्चनज(य)वभक्षणलक्षणापराधकारिणमपि 'दयया' करुणया "नाइक्खे" त्ति 'नाऽऽचख्यौ' नोक्तवानिति यावत् कलादस्येति गम्यम् । किंविशिष्टं ? 'निजजीवितनिरपेक्षं' निजजीविताशंसारहितमित्यर्थः । पुनः किंविशिष्टं ? "अंतगडं" ति अन्तकृत्केवलिनम् । इति गाथार्थः ॥ ८६ ॥ अत्र केष्वाधुनिकादर्शेषु प्रक्षेपरूपमिदं सोपयोगं च गाथाद्वयमपि दृश्यते—

**रायगिहम्मि पुरवरे, समुदाणट्ठा कयाइ हिंडंतो । संपत्तो तस्स घरे, सुवन्नगारस्स पावस्स ॥ ८७ ॥**
**निप्फेडियाणि दुन्नि वि, सीसावेढेण जस्स अच्छीणि । न य संजमाउ चलिओ, मेयज्जो मंदरगिरि व्व ॥ ८८ ॥**

व्याख्या—तत्राऽऽद्यगाथा स्पष्टार्था । नवरम्—"समुदाणट्ठे" त्ति समुदानं—भैक्ष्यं तदर्थमिति ॥ ८७ ॥ "निप्फेडियाणि" त्ति 'निस्फेटिते' निष्कासिते भूमौ पतिते इत्यर्थः । द्वे अपि "सीसावेढेण" त्ति शिरोवन्धनेन यस्याक्षिणी, एवमपि कदर्थ्यमानोऽनुकम्पया 'न च' नैव संयमात् चलितः, कोऽसौ ? मेतार्यः, क इव ? "मंदरगिरि व्व" मेरुगिरिरिव । इति गाथार्थः ॥ ८८ ॥ भावार्थश्चायम्—

श्रीसाकेतपुरे चन्द्रावतंसकनृपोऽभवत् । प्रिया सुदर्शना तस्य, तथाऽन्या प्रियदर्शना ॥ १ ॥ सागरचन्द्र-मुनिचन्द्राख्यौ पुत्रौ तथाऽपरौ । गुणचन्द्र-बालचन्द्रौ, जज्ञिरे क्रमशस्तयोः ॥ २ ॥ राजा सागरचन्द्राय, यौवराज्यपदं ददौ । कुमारभुक्तये मुनिचन्द्रायोज्जयिनीं पुरीम् ॥ ३ ॥ कायोत्सर्गेऽन्यदा तस्थौ, माघे राड् वासवेश्मनि । यावद् ज्वलति दीपोऽयं, हृदा कृत्वेत्यभिग्रहम् ॥ ४ ॥ प्रागृयामान्ते प्रसुप्तोऽसौ, ध्वान्ते स्यातेति भक्तितः । हीयमाने प्रदीपेऽसिञ्चीटी तैलं न्यधात् पुनः ॥ ५ ॥ यावन्निशीथं जज्वाल, शय्यारक्षाकरी पुनः । निर्वाणाभिमुखे दीपे, तैलं चिक्षेप पूर्ववत् ॥ ६ ॥ एवं यामे तृतीयेऽपि, यावद् रुधिरपूरितः । प्रातः पतित्वा पञ्चत्वं, प्राप चन्द्रावतंसकः ॥ ७ ॥ राजा सागरचन्द्रोऽभूदन्यदाऽसौ विमातरम् । प्रोचे सून्वोः कृते राज्यं, गृहाण प्रव्रजाम्यहम् ॥ ८ ॥

अनेन राज्यमाक्रान्तं, क्षमौ नाद्यापि मत्सुतौ । बालत्वादित्यसौ दीयमानं नेच्छति तत् तदा ॥ ९ ॥ ततो राज्यश्रियाऽत्यन्तं दीप्यमानं
निरीक्ष्य तम् । दध्यौ न सुधाऽनेन दीयमानं तदाऽऽदृतम् ॥ १० ॥ श्रियाऽभविष्यतामेवं, शोभमानौ सुतौ मम । तदिदानीममुं हन्मि,
येन स्यादीप्सितं मम ॥ ११ ॥ गवेषयति छिद्राणि, प्रत्यहं प्रियदर्शना । राज्ञः सागरचन्द्रस्य, वधैककृतनिश्चया ॥ १२ ॥ प्रैषीत्
सूदाय सन्देशं, बुभुक्षावान् नृपोऽन्यदा । कल्यवर्त्तो मम कृते, प्रेष्यः प्रेष्यादिपाणिना ॥ १३ ॥ चेटीहस्तेऽर्पितस्तेन, मोदकः सिंहके-
सरः । किमेतदिति पप्रच्छ, सम्भ्रान्ता प्रियदर्शना ॥ १४ ॥ साऽऽह पूर्वाह्णिकं राज्ञः, तया(तः) पस्पर्श पाणिना । प्राग् विपाक्तेन तेना-
सौ, वासितो मोदकोऽभवत् ॥ १५ ॥ अहो! सुगन्ध इत्युक्त्वा, सा तं चेटीकरे ददौ । तच्चेष्टितमजानाना, ढुढौके साऽपि भूभुजे ॥१६॥
विमातृ-तनयौ पार्श्वेऽभूतां दध्यौ ततो नृपः । बुभुक्षिताभ्यामेताभ्यां, कुर्वे पूर्वाह्णिकं किमु ? ॥ १७ ॥ द्विधाकृत्य तयोस्तस्यैकैकं खण्डं
ददौ नृपः । तदास्वादाद् विषावेगघूर्णितौ तौ बभूवतुः ॥ १८ ॥ सम्भ्रमाद् बहवो(निपुणा) वैद्या, आहूता भूभुजाऽऽययुः । सुवर्णपान-
योगेन, सज्जीजातावुभौ क्षणात् ॥ १९ ॥ आहूय पृष्टा सा चेटी, भूभुजा विस्मितात्मना । तयोर्मातृकरस्पर्शं, विचाले प्राह केवलम् ॥२०॥
तामाकार्यावदद् देवः, सखेदं प्रियदर्शनाम् । पापेऽनाचीर्णपुण्योऽहं, क्षिप्तोऽभूवमधस्त्वया ॥ २१ ॥ दीयमानं तदा राज्यं, भवत्याऽ-
ङ्गीकृतं न किम् ? । तद् गृहाणाधुनेत्युक्त्वा, दत्त्वा प्रव्रजितः स्वयम् ॥ २२ ॥ साधुसङ्घाटकस्तत्रावन्तीतः कश्चिदाययौ । निरुपद्रवता
पृष्टो, मुनीनामिदमभ्यधात् ॥ २३ ॥ साधून् पाखण्डिनश्चापि, पुरोधो-राजनन्दनौ । बाधाटाधुत्राटयतः, केवलं केलिलोलुपौ ॥ २४ ॥
श्रुत्वा सागरचन्द्रर्षिः, सामर्षस्तामगात् पुरीम् । साम्भोगिकानां साधूनामुपाश्रयमशिश्रयत् ॥ २५ ॥ मध्याह्ने तैरसौ पृष्ट, आनयामो
भवत्कृते । भक्तमेषोऽब्रवीदात्मलब्धिलब्धोपजीव्यहम् ॥ २६ ॥ दर्शयन्तु परं स्थापनाकुलानि ममर्षयः । ततस्तैः क्षुल्लकस्तस्मै, तद्दर्शन-

दास्ये चाहमन्वहम् ॥ ४६ ॥ सदैवं व्यवहारेण, दृषद्रेखेव निश्चला अप्यासन्नाऽऽस्पदत्वेन, प्रीतिरासीत् तयोर्मिथः ॥ ४७ ॥ स्वभावात् श्रेष्ठिनी निन्दुर्मेत्या जातः सुतस्ततः। दत्तस्तस्यै मृता तस्याः । सुता प्रीताऽऽत्मनाऽऽददे (सुताऽऽत्मनाऽऽददे तया) ॥ ४८ ॥ श्रेष्ठिनी पादयोर्मेत्यास्तं पातयति नन्दनम्। भवत्या जीवितः(वतु) शिशुः, प्रसादेनेति वादिनी ॥ ४९ ॥ श्रेष्ठिन्या लालितोऽत्यन्तं, मेतार्य इति नामतः । ववृधेऽसौ सुधासेकात्, मन्दार इव मन्द्रे ॥ ५० ॥ सोऽग्रहीदल्पकालेन, कलाचार्यान्तिके कलाः । बोध्यमानोऽपि देवेन, तेन नैवैष बुध्यते ॥ ५१ ॥ तदर्थमर्थिताः पित्राऽथेभ्यानामष्ट कन्यकाः । सोऽभ्रमत् शिविकारूढो, जातपाणिमहोत्सवः ॥ ५२ ॥ तेन देवेन मातङ्गोऽधिष्ठितोऽवदद्दुच्चकैः । चेत् सुता मे मृता नाभूदकरिष्यं तदुत्सवम् ॥ ५३ ॥ ततो व्यतिकरो मेत्या, मेतस्य कथितोऽखिलः । यथाऽयमावयोः सूनुर्विज्ञेयो भवता प्रिय ! ॥ ५४ ॥ करोष्यसदृशं रे रे ! त्वं सम्बन्धं ब्रुवन्निति । चिक्षेपोत्पाट्य मातङ्ग(ङ्गो) गर्त्तायां सहसा स तम् (तकम्) ॥ ५५ ॥ आविर्भूयावदद् देवो, बोध्यमानो न बुध्यसे । किमिदानीमिवैषोऽपि, बभाषे हीनवागिदम् ॥ ५६ ॥ वयस्यावर्णवादो मे, हीनजात्युद्भवः पुनः । निवारय परिव्रज्यामादास्येऽल्पदिनैस्ततः ॥ ५७ ॥ स कथं यात्यनेनोक्ते, मेतार्यो भाषते सुहृत्। राजकन्याविवाहेन, यात्यसौ नान्यथा पुनः ॥ ५८ ॥ तवश्छगलकस्तस्मै, दत्तो रत्नपुरीषकृत्। तत्पितोपायि(य)नीचक्रे, तानि रत्नानि भूभुजे ॥ ५९ ॥ पृष्टः श्रेणिकराज्ञाऽसावुपायनप्रयोजनम्। प्राह राजन्! निजां कन्यां, प्रदेहि मम सूनवे ॥ ६० ॥ निषिद्धोऽपि पुनस्तानि, रत्नानि नृपतेरदात्। रत्नाप्तिस्ते कुतस्त्येति, पृष्टो मेतोऽभ्यधादजम् ॥ ६१ ॥ बद्धो राजगृहे छागो, दुर्गन्धमसुचत् शकृत्। ततो दिव्यानुभावोऽयमिति प्रत्यर्पितोऽस्य सः ॥ ६२ ॥ कुर्वत्युपायनं तस्मिन्, पुनर्मन्त्र्यभयोऽवदत्। भो ! दुःखं याति वैभारगिरौ नन्तुं प्रभुं नृपः ॥ ६३ ॥ निष्पादय रथारोहपद्यां सद्यः स्वसिद्धये। देवेन तत्क्षणादेव, सा कृताऽचिन्त्य-

शक्तिना ॥ ६४ ॥ साऽद्यापि दृश्यते शालः, सौवर्णः कारितः पुरे । मन्त्रिणोक्तः पुनर्मेतो, भो! अत्रानय वारिधिम् ॥ ६५ ॥ तत्र स्नातस्य शुद्धस्य, यच्छामस्ते कनीं निजाम् । आनीतोऽम्भोनिधिरसौ, वेलायां स्नापितः शुचिः ॥ ६६ ॥ विवाहं कारितो याप्ययान(ना)रूढोऽभ्रमत् पुरम् । आनीतास्ताः स्त्रियो भोगान्, भुङ्क्तेऽसौ नवभिः सह ॥ ६७ ॥ समेत्य द्वादशाब्द्यन्ते, सुरो मेतार्यमब्रवीत् । व्रतार्थं प्रार्थितः स्त्रीभिर्द्वादशाब्दान्यदात् पुनः ॥ ६८ ॥ चतुर्विंशतिवर्षान्ते, सर्वेऽपि प्राव्रजंस्ततः । नवपूर्वविदेकत्वप्रतिमामाददे मुनिः ॥ ६९ ॥ पुरेऽस्मिन् विहरन् सोऽगात्, स्वर्णकृद्गृहमन्यदा । स श्रेणिकजिनार्चार्थं, कुरुते काञ्चनान् यवान् ॥ ७० ॥ त्रिसन्ध्यं परिपाट्याऽर्चत्यर्हन्तं राड् यवैस्तैः । अष्टोत्तरशतैस्ते तु, तेन निष्पादितास्तदा ॥७१॥ भिक्षा तदर्थं नानीतोदिते स्वर्णकृताऽपि हि । तदर्थं प्राविशद् वेश्माभ्यन्तरं स्वर्णकृत् स्वयम् ॥ ७२ ॥ गलितास्ते यवभ्रान्त्या, काञ्चनाः क्रौ(क्रौ)ञ्चपक्षिणा । पप्रच्छ बहिरायातस्तत्सम्बन्धमसौ मुनिम् ॥ ७३ ॥ त्वया परेण वा केन, वदर्षे! मे यवा हृताः? । स तत्करुणया जानन्नप्याचष्टे न किञ्चन ॥ ७४ ॥ राज्ञोऽर्चावसरो जज्ञेऽद्यास्थिखण्डान्यहं क्रिये । इति भीत्या स पप्रच्छ, मुनिरूचे न तत् पुनः ॥ ७५ ॥ ततो वपाऽऽर्द्रवार्द्रेण, शीर्षावेष्टोऽर्पितो मुनेः । तथा यथा दृशोर्गोलौ, निर्गत्य पतितौ भुवि ॥ ७६ ॥ निश्चलात्मा महात्माऽसौ, ध्यानात् नाप्यचलत् तथा । अन्तकृत्केवली भूत्वा, सिद्धिसौधाममाप च ॥ ७७ ॥ स्फोट्यमानादथो काष्ठादेकं खण्डं गलेऽलगत् । क्रौ(क्रौ)ञ्चस्योत्पत्य ते तेनाखिला वान्ता यवा भिया ॥ ७८ ॥ हाहाकारपराः पौरा, मृतं तं वीक्ष्य चाक्षताम् । यवानाचुकुशुः पाप्मन्!, स्वर्णकृत्! किं कृतं त्वया? ॥ ७९ ॥ दधाविरे वधायास्य, ज्ञातव्यतिकरा नराः । उपाददे ततोऽसावनन्योपायतो व्रतम् ॥ ८० ॥ धर्मलाभं कलादोऽदाद्, राज्ञे स्मित्वा नृपोऽवदत् । कथिष्यसे

फटाहे रे !, येन लप्स्यसि व्रतं क्वचित् ॥ ८१ ॥ इत्थं मेतार्यवत् कार्यमार्यैर्ध्यानस्थिरं मनः । शश्वदानन्दमाकन्दकन्दलोद्भेदसिद्धये ॥ ८२ ॥

इति मेतार्यमहर्षिप्रबन्धः ॥

अथेलापुत्रमुपर्बृंहयन्ति—

अभिरूढो वंसग्गे, मुणिपवरे(रं) दट्ठु केवलं पत्तो । जो गिहिवेसधरो वि हु, तमिलापुत्तं नमंसामि ॥ ८९ ॥

व्याख्या—व्याख्यार्थः कथानकादेव स्पष्टः (-ज्ञातव्यः) ॥ ८९ ॥ तच्चेदम्—

वसन्तपुरे ग्रामेऽभूद्, द्विजो धर्मं निशम्य सः । चारित्रं सद्गुरोरन्ते, सकलत्रोऽप्युपाददे ॥ १ ॥ तेपाते तौ तपस्तीव्रं, परं प्रेम मिथो महत् । विचिकित्सां ब्राह्मणीति, चक्रे स्त्रीत्वस्वभावजाम् ॥ २ ॥ मृत्वोत्पन्नावुभौ देवौ, तदनालोचितागसौ । इतश्च भारतेऽत्रैवास्तीलावर्द्धनं पुरम् ॥ ३ ॥ तत्रेलानामतः ख्यातिशाया देव्यस्ति विश्रुता । तां सेवतेतरानेका, सार्थवाही सुतार्थिनी ॥ ४ ॥ कुक्षौ तस्यास्तदाऽमुत्रोत्पेदे जीवो द्विजन्मनः । इलापुत्र इति नाम, कृतमुत्सवपूर्वकम् ॥ ५ ॥ ब्राह्मण्यभूद् विचिकित्सावशात् लङ्खकुले सुता । क्रमाद्यौवनं प्राप्तौ, मन्मथद्रुमरोहणम् ॥ ६ ॥ लङ्खपुत्रीमिलापुत्रो, नृत्यन्तीमन्यदैक्षत । मार्गयत्प्रेमतस्तस्मात्, सुतां रागार्दितोऽभवत् ॥ ७ ॥ सुहृद्भिः प्रार्थिता साऽस्य, लङ्खमुख्यास्ततोऽवदन् । यच्छामः कथमप्येनां, नाक्षयो निधिरेव नः ॥ ८ ॥ येद् विद्यां शिक्ष्य(क्ष)तेऽस्माकं, साकं भ्रमति चैव नः । तदेनां लभते सर्वतोऽलिकामपि नान्यथा ॥ ९ ॥ ततः कर्मवशाद् रागात्, स्वीचक्रे तदिलासुतः । येन वेविद्यां तस्करा, तमितोऽथवाज्ज्ञुप्सम् ॥ १० ॥ तद्विद्यां शिक्षितः सम्यग्, विद्यादृत्याजितुं धनम् । बेन्नातटपुरं प्राप्तो, ययाचेऽवसरं नृपात् ॥ ११ ॥ तस्यावसरतोऽसौ, स्वान्तःपुरपरीवृतः । राजा सनागरोऽप्राक्षीत्, तत्कलं नाट्यमीदृशम् ॥ १२ ॥ पूर्वमूर्णीकृतम्याम, महान् वंशोऽस्य

इलापुत्रर्षि-
सम्बन्धः ।

चोपरि। फलकं प्रान्तयोस्तस्य, द्वौ द्वौ स्तो लोहकीलकौ ॥ १३ ॥ फलकान्तरसौ स्थित्वा, हस्तोपात्तासि-खेटकः। मूलच्छिद्रयुतोपानद्‌द्वयं परिदधात्यथ ॥ १४ ॥ सप्ताग्रतोमुरसान्युच्चैः, सप्त पश्चान्मुरान्यपि। उत्पत्योत्पत्य गगनेऽप्रमत्तः किरणान्यदात् ॥ १५ ॥ पादुकाच्छिद्रयोरन्तः प्रवेशयति कीलकौ। कथञ्चित् पतति तत्रेद् याति शतखण्डताम् ॥ १६ ॥ सर्वे दानोन्मुखास्तस्य, रञ्जिताः कलयाऽभवन्। अदावरि परं राज्ञि, पूर्वं नो कश्चिदप्यदात् ॥ १७ ॥ सा गीतं गायकीवृन्दयुता गायति सुस्वरम्। अद्वैतरूपां तां वीक्ष्य, नृपो रागार्दितोऽभवत् ॥ १८ ॥ राजाऽऽहोत्सितनं नैव, दृष्टं भोः! कुरु तत् पुनः। एवं द्वि-त्रि-चतुर्वारं, कृतं तेन कलावता ॥ १९ ॥ परं लङ्खसुतारक्तो, म्रियते चेत् पतत्ययम्। पश्चात् परिणयाम्येनामिति दध्यौ नृपो हृदि ॥ २० ॥ साधुकारः कृतो लोकैरदातरि नृपे ततः। दध्यौ नटो मां कन्यार्थे, मृतमिच्छति राड् ध्रुवम् ॥ २१ ॥ इतश्चेलासुतोऽद्राक्षीद्, वंशस्थो धनिनां गृहे। स्त्रीभिरद्भुतरूपाभिर्दीयमानोदनान् मुनीन् ॥ २२ ॥ तद्रूपादौ परं तेषां, न मनः किन्तु भक्तगम्। तद्वीक्ष्याचिन्तयदसौ, दुष्कर्मावरणक्षयात् ॥ २३ ॥ अहो! निःस्पृहताऽमीषां, नीरागाणां महात्मनाम्। धिङ् मां केयमवस्था मे, कुलीनस्याकुले स्थितिः ॥ २४ ॥ शुभध्यानवशादेवं, वंशाग्रस्थोऽपि केवलम्। लेभे ज्ञानमिलापुत्रो, योगस्याहो! विशिष्टता ॥२५॥ लङ्खपुत्री नृपो राज्ञी, त्रयोऽप्येवं विरागतः। लेभिरे केवलज्ञानं लिङ्गं च देवतार्पितम् ॥ २६ ॥ स्वर्णाम्बुजीभूतवंशोपरि विष्ठन्निलासुतः। भविकान् बोधयामास, तत्रस्थान् धर्मदेशनात् ॥ २७ ॥ इति श्रीइलापुत्रर्षिकथा ॥

अथ चिलातीपुत्रं प्ररूपयन्ति—

**उवसम-विवेय-संवरपयचिंतणवज्जदलियपावगिरी। सोढुवसग्गो पत्तो, चिलाइपुत्तो सहस्सारे ॥ ९० ॥**

व्याख्या—चिलातीपुत्रः 'सहस्रारे' अष्टमदेवलोके प्राप्त इति क्रिया। किंविशिष्टः? उपशमश्च विवेकश्च संवरश्च तत्रोपशमः—



इलापुत्रर्षिसम्बन्धः।

चिलातीपुत्रर्षिवक्तव्यता।

क्रोधादिनिग्रहः, विवेकः—स्वजन-सुवर्णादित्यागः, संवरः—इन्द्रिय-नोइन्द्रियगुप्तिरिति लक्षणानि यानि पदानि तेषां चिन्तनं—स्मरणं तदेव वज्रं—कुलिशं तेन दलितः—भेदितः पापमेव गिरिः—भूधरो येन स तथा, कोऽर्थः ? यथा हि वज्रेण गिरयो भिद्यन्ते तथानेनोपशमादिपदत्रयेण पापमिति भावः। पुनः किंविशिष्टः ? "सोढुवसग्गो" त्ति सेवितोपसर्गः कीटिकानामिति [ गम्यम् ] इति गाथार्थः ॥ ९० ॥ अत्र केचिद् गाथाद्वयमिदमपि प्रक्षेपरूपं पठन्ति—

**चालणगं पिव भगवं, समंतओ जो कओ य कीडीहिं। घोरं सरीरवियणं, तह वि हु अहियासए धीरो ॥९१॥**
**अड्ढाइज्जेहिं राइंदिएहिं पत्तं चिलाइपुत्तेण। देविंदामरभवणं, अच्छरगणसंकुलं रम्मं ॥ ९२ ॥**

व्याख्या—द्वयोर्गाथयोर्व्याख्यार्थः कथानकादेवावसेयः। नवरम्—'चालनकमिव' पिष्टादिशोधनं सच्छिद्रायो-वंशादिपात्रविशेष इव ॥ तथा "अड्ढाइज्जेहिं" ति अर्द्धतृतीये रात्रिदिवैर्देवेन्द्रामरस्येवामरभवनं देवेन्द्रामरभवनम्, तथाऽप्सरसां—देवीनां गणैः सङ्कुलं—व्याप्तम्, अत्राप्सरोगणसङ्कुलत्वं गमनागमनमाश्रित्येव ज्ञेयं न तूत्पत्तिम्। तासां हि तृतीयादिषु देवलोकेष्वनुत्पत्तेरिति भावः ॥९१-९२॥ तचेदम्—

क्षितिप्रतिष्ठिते द्रङ्गे, यज्ञदेवाभिधो द्विजः। एकोऽभूत् पण्डितंमन्यो, जिनशासननिन्दकः ॥ १ ॥ सोऽन्यदा निर्जितो वादे, गुरुभिर्व्रतमग्रहीत्। देवतायोधितस्यास्य, सम्यक् परिणतं च तत् ॥ २ ॥ परं त्यजेद् जुगुप्सां नोपशान्तः स्वजनोऽखिलः। प्रियाऽदात् कार्मणं(णां)प्रेम्णा, तस्मै वश्यो भमास्त्विति ॥ ३ ॥ ततो मृत्वा सुरो जज्ञे, साऽपि निर्वेदतो व्रतम्। लात्वाऽनालोचिता चैव, मृत्वोत्पन्ना सुरालये ॥ ४ ॥ इतश्च धननामाऽऽसीत्, श्रेष्ठी राजगृहे पुरे। चिलात्याख्या मुख्यचेटी, चेटीकोटीषु विश्रुता ॥ ५ ॥ तस्याः कुक्षौ ततश्च्युत्वोत्पेदे जीवो द्विजस्य सः। जुगुप्सातोऽभिधा तस्य, चिलातीपुत्र इत्यभूत् ॥ ६ ॥ तत्रैव श्रेष्ठिनः पञ्चपुत्रोपरि दिवश्च्युता। स

एव ब्राह्मणीजीवः, सुंसुमाख्याऽभवत् कनी ॥ ७ ॥ चेटीसुतः स एतस्याः, कल्पितो बालधारकः । कुचेष्टां श्रेष्ठिना दृष्टः, कुर्वाणोऽस्या भगादिषु ॥ ८ ॥ निर्वासितो ह्ययोग्यत्वात् पल्लीं सिंहगुहां गतः । सुभगत्वात् निजोपान्ते, पल्लीनाथेन रक्षितः ॥ ९ ॥ पल्लीशोऽभूत् मृते तस्मिन्, निर्स्त्रिंशोऽप्रधार्यसौ । प्रोचास्तेनाऽऽत्मनश्चौरा, यामो राजगृहं पुरम् ॥ १० ॥ धनश्रेष्ठिश्रियस्तत्र, युष्माकं मम सुंसुमा । ततो पतन्नकस्मात् ते, रात्रौ तच्छ्रेष्ठिनो गृहे ॥ ११ ॥ दत्त्वाऽवस्वापिनीं तेषां, तद्धनं सुंसुमां च ते । आदाय कथयित्वा स्वं, प्रति पल्लीं प्रतस्थिरे ॥ १२ ॥ आरक्षकान् धनोऽवोचद्, युष्माकं वालितं धनम् । कन्या ममेति तत्पृष्ठे, सपुत्रस्तैरधावत ॥ १३ ॥ भग्नाश्चौरा धनं मुक्तं, तद्धृत्वा वलिताः परे । सपुत्रोऽप्यन्वगात् श्रेष्ठी, पल्लीशं सुंसुमान्वितम् ॥१४॥ नासौ शक्नोति तां वोढुमासन्नोऽभूद् धनस्ततः । छित्त्वा कन्याशिरो रागात्, तदादायमतोऽचलत् ॥ १५ ॥ निराशो वलते श्रेष्ठी, मध्याह्ने तान् क्षुधाऽर्दितान् । तनयानाह हत्वा मां, कुर्वन्त्वाहारमात्मनः ॥ १६ ॥ न धर्मोऽकृत्यमीदृक्षं, ज्येष्ठोऽवग् घ्नन्तु मां परम् । एवं यावत् कनिष्ठोऽपि प्राहै(ह)ते मेनिरे न तत् ॥१७॥ ततो धनोऽब्रवीद्वृद्धः, सर्वं त्यक्त्वा सुतापलम् । तत् तैराहारितं भोगभुजोऽभूवन् गता गृहम् ॥ १८ ॥ एवं मुनिभिराहार, आहार्यो गाढकारणैः(णे) । तन्मासवदनिर्वाहे, मोक्षौकःप्रापकः क्रमात् ॥ १९ ॥ दिङ्मूढः पल्लीनाथोऽभूद्, गच्छन् कन्याशिरःकरः । मूर्त्तं धर्ममिवाद्राक्षीत्, मुनिमातापनापरम् ॥ २० ॥ ब्रूहि धर्मं न चेत् छेत्स्ये, तवाऽऽकृष्टासिना शिरः । उपशम-विवेक-संवर इत्यब्रवीत् मुनिः ॥ २१ ॥ तत् श्रुत्वाऽचिन्तयत् चौरः, सत्यवाचो महर्षयः । कस्तत्रोपशमादीनां, भावार्थो ? ज्ञातवान् स्वयम् ॥ २२ ॥ क्रोधत्यागो भवेत् तत्रोपशमश्च विवेकता । स्वस्वादिवर्जनं त्यक्तस्तेनासिश्च कनीशिरः ॥ २३ ॥ इन्द्रिय-नोइन्द्रिययोर्गुप्तिः स्यात् संवरः पुनः । एतत् पदत्रयं ध्यायंस्तस्थौ प्रतिमया स्थिरः ॥ २४ ॥ ईयुः शोणितगन्धेन, वज्रतुण्डाः पिपीलिकाः । भक्षयन्ति स्म तस्याङ्गं, ध्यानस्थस्य महा-

यत्नेन, गन्तव्यमखिलं मया ॥ ११ ॥ तथा महान्तमध्वानं, योऽपाथेयः प्रपद्यते । दुःखी भवत्यसौ गच्छन्, क्षुधा-तृष्णाऽभिपीडितः
॥ १२ ॥ यस्तु महान्तमध्वानं, सपाथेयः प्रपद्यते ।' सुखी भवत्यसौ गच्छन्, क्षुधा-तृष्णाविवर्जितः ॥ १३ ॥ याति धर्ममकृत्वैवं,
योऽमुत्र सोऽसुखी भवेत् । कृत्वा धर्मं पुनर्याति, सोऽल्पकर्मा सुखी भवेत् ॥१४॥ स्यात् प्रदीप्ते(प्ते) यथा गेहे, तस्य यस्तु पतिर्भवेत् (भवेत्
पतिः) । उद्धरेत् सारभाण्डानि, निस्सारं सर्वमुज्झति ॥ १५ ॥ एवं लोके प्रदीप्तेऽस्मिन्, जरया मरणेन च । आत्मानं तारयिष्यामि,
संसाराद् युष्मदाज्ञया ॥ १६ ॥ तं माता-पितरोऽवोचन्, श्रामण्यं पुत्र ! दुश्चरम् । गुणानां तु सहस्राणि, धार्याणि स्युर्महर्षिभिः
॥ १७ ॥ समता सर्वभूतेषु, तत्र मित्रेषु शत्रुषु । प्राणातिपातविरतिः, कर्त्तव्याऽस्यर्थमामवम् ॥ १८ ॥ सर्वदाऽप्यप्रमत्तेन, मृषावाद-
विवर्जनम् । सत्यं वाच्यं न चादत्तमुपादेयं तृणाद्यपि ॥ १९ ॥ ब्रह्मचर्यं त्रिधा धार्यं, स्मार्या नार्यो न सङ्गमाः । धन-धान्य-हिरण्या-
दिर्वर्जनीयः परिग्रहः ॥ २० ॥ रात्रौ चतुर्विधाहारस्त्याज्यो धार्यो न सन्निधिः । सर्वारम्भपरित्यागो, ममताऽत्र न कुत्रचित् ॥ २१ ॥
क्षुत्-तृष्णा-दंश-मशक-शीतोष्णाद्याः परीषहाः । दुश्चरा याचनावृत्तिलब्धशुद्धान्नभोजनम् ॥ २२ ॥ कापोतीया पुनर्वृत्तिः, कचलोचोऽति
दुश्चरः । यावज्जीवमविश्रामो, धार्यो गुणभरोऽन्वहम् ॥ २३ ॥ व्योमगङ्गाप्रतीपोग्रश्रो(स्रो)तोवद् दुस्तरो भृशम् । बाहुभ्यां सागर इव,
तरितव्यो गुणोदधिः ॥ २४ ॥ वालुकाकवलाहारनिरास्वादेऽत्र संयमे । एकान्तदृष्ट्याऽहिरिवासिधारागमनं भवेत् ॥ २५ ॥ चर्वयितव्या
मदनदन्तैर्लोहमया यवाः । यथा चाग्निशिखा दीप्ता, पातुं भवति दुष्करा ॥ २६ ॥ यथा तोलयितुं मेरुस्तुलया दुष्करो भवेत् । श्रामण्यं
तथा तारुण्ये, कर्तुं स्याद् दुष्करं तथा ॥ २७ ॥ [ युग्मम् ] भुङ्क्ष्व मानुष्यकान् भोगान्, शब्दादीन् पञ्चधा चिरम् । भुक्तभोगस्ततो जाता-
वसरे त्वं परिव्रज ॥ २८ ॥ स माता-पितरावूचे, सत्यमेतद् यथोदितम् । इहलोके निष्पिपासस्य, किञ्चिदस्ति न दुष्करम् ॥ २९ ॥

मनोजा देहजाः सोढा, अनन्ता वेदना मया । दुःखहानौ भवेऽमुष्मिन्, जन्म-मृत्यु-जराऽऽकुले ॥ ३० ॥ यथेह महदुष्णत्वं, स्फीतं शीतं तथाऽत्र तु । ततोऽनन्तगुणं तातानुभूतं नरकेषु तत् ॥ ३१ ॥ पक्वोऽस्मि कु(क)न्दुकुम्भ्यमावूर्ध्वपादस्त्वधःशिराः । दग्धो दवाग्नितुल्यासु कदम्बवालुकास्वहम् ॥ ३२ ॥ ऊर्ध्वं बद्धाऽधमैश्छिन्नोऽनेकधा क्रकचादिभिः । रित्रस्तीक्ष्णाग्रसम्वलिद्रोः(द्रौ) कर्पणापकर्पणैः ॥ ३३ ॥ इक्षुवत् पीडितोऽत्यर्थं, महायन्त्रेषु चाऽऽरटन् । पातितः पाटितश्छिन्नः, कूजन् कोल-श्वभिः सुरैः ॥३४॥ नियोज्य ज्वलदग्न्याभे तोत्रैर्लोहरथेऽदितः । असिभिश्चातसीवर्णैश्छिन्नो भिन्नश्च पट्टिशैः ॥ ३५ ॥ ज्वलज्ज्वलनचितासु, दग्धो महिषवद् भृशम् । विलुप्तो ढङ्क-गृध्राद्यैर्लोहतीक्ष्णाननैर्विभिः ॥ ३६ ॥ तृषार्त्तः क्षुरधाराभिर्गतो वैतरणीं हतः । प्राप्तोऽसिपत्रं(यत्र) तापार्त्तः, पतद्भिः खण्डितो दलैः ॥ ३७ ॥ मुद्गरैर्मुशलैः शूलैर्भग्नाङ्गोऽनेकधाऽभवम् । उत्क्लृप्तः कल्पितस्तीक्ष्णधाराभिः कल्पनी(कर्त्तरी)क्षुरैः ॥३८॥ पाशैर्जालैर्मृग इव, बद्धो रुद्धश्च बाधितः । मकरैर्वडिशैर्जालैर्मत्स्यवत् पाटितो हतः ॥ ३९ ॥ व्याधाभैर्वज्रलेपाद्यैर्गृहीतपक्षिवद् ह(धृ)तः । कुठाराद्यैर्द्रुम इव, छिन्न-पाटित-कुट्टितः ॥४०॥ दृढैश्चपेटा-मुष्टाद्यैश्चूर्णितो लोहवद् घनैः । तप्तायस्त्रपु-ताम्राणि, तृषार्त्तः पायितो बलात् ॥४१॥ मांसं तेऽभूत् प्रियं पूर्वं, स्वमांसमिति खादितः । स्मारयित्वा सुरां चैव, वसा-रक्तानि पायितः ॥ ४२ ॥ एवं नानाविधास्तीव्राः, परमाधार्मिकैः कृताः । सोढा मयाऽतिभीतेन, वेदना नरकेऽन्वहम् ॥ ४३ ॥ मनुष्यलोके यादृक्षा, दृश्यन्ते तीव्रवेदनाः । ताभ्योऽनन्तगुणास्तातानुभूता नरके (तु) ताः ॥ ४४ ॥ एवं भवेषु सर्वेष्वनुभूता वेदना मया । सुखोचितत्वं किं तस्य, प्रव्रज्या दुष्कराऽथवा ? ॥ ४५ ॥ पितरावूचतुस्तं तु, प्रव्रज स्वेच्छयाऽऽत्मज ! । निष्प्रतिकर्मता तत्र, श्रामण्यं दुष्करं परम् ॥ ४६ ॥ सोऽवोचदेवमेवैतत्, पितृभ्यां यदिहोदितम् । प्रतिकर्म परं कोऽत्र, कुरुते मृग-पक्षिणाम् ? ॥ ४७ ॥ एकभूतो यथाऽरण्ये, चरति स्वेच्छया मृगः । तथा धर्मं चरिष्यामि, तपसा संयमेन च ॥४८॥

स्यात् मृगस्य यदातङ्को, महारण्ये प्रजायते । विपन्नं तरुमूलेषु, कश्चैनं हि चिकित्सति ? ॥ ४९ ॥ को वा तस्यौषधं दत्ते ?, सुखं पृच्छति वा(वाऽ)स्य कः ? । भक्तं वा कोऽस्य पानं वा, समानीय समर्पयेत् ? ॥ ५० ॥ यदा सुखी भवत्येष, तदा गच्छति गोचरम् । स्वेच्छया भक्तपानार्थं, वल्लरेषु सरस्सु च ॥ ५१ ॥ पीत्वाऽम्भो भक्ष्यमास्वाद्य, सरस्सु वल्लरेषु च । मृगचर्यां चरित्वा च, याति स्वाश्रयभूमिकाम् ॥ ५२ ॥ एवं समुत्थितो भिक्षुरूर्ध्वं गच्छत्यनेकगः । मृगवत् मुनिरप्येवं, निन्देद् भक्ष्यं न कर्हिचित् ॥ ५३ ॥ मृगचर्यां चरिष्यामि, पुत्रैवं ते यथासुखम् । पितृभ्यामित्यनुज्ञातस्त्यक्तवानुपधिं ततः ॥ ५४ ॥ स माता-पितरावेवमनुज्ञाप्य महामहात् । तत्याज ममतां तावत्, महाहिरिव कञ्चुकम् ॥ ५५ ॥ ऋद्धिं वित्तं सुतान् दारान्, ज्ञातीन् मित्राणि सद्म च । स रजोवत् पटे लग्नं, निर्द्धूयोपाददे व्रतम् ॥ ५६ ॥ त्रिगुप्तः पञ्चसमितः, पञ्चमहाव्रतान्वितः । बाह्यान्तरभेदभिन्ने, तपःकर्मणि चोद्यतः ॥ ५७ ॥ निर्ममो निरहङ्कारो, निस्सङ्गस्त्यक्तगा(गौ)रवः । समश्च सर्वभूतेषु, त्रसेषु स्थावरेषु च ॥५८॥ लाभालाभे सुखे दुःखे, जीविते मरणे तथा । समो निन्दा-प्रशंसासु, तथा मानापमानयोः ॥५९॥ गा(गौ)रवेषु कषायेषु, दण्ड-शल्य-भयेषु च । निवृत्तो हास(स्य)-शोकाभ्यामनिदानोऽप्यबन्धनः ॥६०॥ इह लोके परलोके, विरागत्वादनिश्रितः । वासी-चन्दनकल्पश्चानशनेऽप्यशने तथा ॥ ६१ ॥ ज्ञानेन चरणेनैवं, तपसा दर्शनेन च । सद्भावनाभिरात्मानं, वासयित्वा समं ततः ॥ ६२ ॥ ततो बहूनि वर्षाण्याराध्य श्रामण्यमुत्तमम् । अर्द्धमासोपवासेन, मृगापुत्रो ययौ शिवम् ॥ ६३ ॥ उत्तराध्ययनैकोनविंशत्यध्ययनानुगः । सम्बन्धोऽयं मृगासूनोः, सङ्क्षेपाद् दर्शितो मया ॥६४॥ इति श्रीमृगापुत्रसम्बन्धः ॥

अथेन्द्रनागर्षिं दर्शयन्ति—

**सुधा बहुपिंडिय एगपिंडिओ दट्ठुमिच्छइ तुमं ति । जाईसरित्तु बुद्धो, सिद्धो तह इंदनागमुणी ॥ ९४ ॥**

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे प्रथमोंऽशः । मृगापुत्रचरित्रम् । इन्द्रनागर्षिसम्बन्धः ।

व्याख्या—इन्द्रनागमुनिः सिद्ध इति क्रिया । कोऽसौ ? यो बुद्धः, किं कृत्वा ? इति श्रुत्वा, इति इति किं ? 'भो बहुपिण्डिक !' बहवः पिण्डाः—भक्तविशेषा जनगृहेषु यस्यार्थे संस्क्रियन्त इति तस्याऽऽमन्त्रणम् । 'एकपिण्डिकः' अर्थात् श्रीवीरो ग्रहं 'इच्छति' अभिलषति त्यामिति । शेषं सुगमम् ॥ ९४ ॥ भावार्थः कथानकगम्यः । तचेदम्—

अशेषश्रीगृहे वार्धिवद् वसन्तपुरे पुरे । विस्तृतः पुत्र-पौत्राद्यैर्यदवत् श्रेष्ठ्यभूद् धनः ॥ १ ॥ सार्वितान्यन्यदा तस्य, श्रेष्ठिनो मारिवारिणा । दुर्दैववशतो गेहमानुपाण्यखिलान्यपि ॥ २ ॥ इन्द्रनागाह्वयश्चैकः, स्थितोऽर्भस्तत्कुलोद्भवः । ग्लानो बुभुक्षितोऽन्नादि, यावदेऽदात् न कोऽपि तत् ॥ ३ ॥ मा मारिसङ्क्रमोऽन्येषां, कण्ट(ण्टि)काभिस्तद्वारपदम् । इत्यन्यैर्वेष्टितं लोकैर्मृत्युभीर्महती हि भीः ॥ ४ ॥ तद्रन्ध्रश्वकृतद्वारात्, निर्ययौ सोऽर्भको बहिः । जनास्यर्द्धिमत्पुत्रो, जीवतीति सुभिक्षया ॥५॥ इतश्चाचीकरत् कश्चिदुच्चैरुद्घोषणां पुरे । पुरं राजगृहं गन्तुमना मृदुमना धनी ॥६॥ तत्सार्थे बहवश्चेलुर्दुर्बलाशम्य(ऽऽम्ब)ला नराः । सोऽपीति बुद्ध्या भिक्षाऽन्यदेशे स्य(त)स्तु चौरिका ॥ ७ ॥ सार्थान्त(-र्यंत)स्तेन भिक्षाऽऽप्ता, भुक्ता जीर्णा न चास्य सा । द्वितीयेऽह्नि स्थितो दृष्टो, ज्ञातस्तेनोपवास्यसौ ॥८॥ भ्रमतोऽस्य तृतीयेऽह्नि, स्निग्धान्नं श्रेष्ठ्यदाद् बहु(ऋजुः) । दिनद्वयं स्थितो ज्ञातः, षष्ठ(ष्ठि)भोजीति तेन सः ॥९॥ भिक्षार्थं नागतः कल्ये, पृष्टः किं श्रेष्ठिनेति सः । तस्थौ मौनेन धनिना, ज्ञातं यत् षष्ठभोज्यसौ ॥ १० ॥ ततोऽभूत् श्रेष्ठिनोऽस्यास्था, ददौ स्निग्धान्नमीप्सितम् । तेनाजीर्णेन तस्थौ सोऽन्यफलिङ्गी विनद्वयम् ॥ ११ ॥ भक्तं भक्त्या ददुः सार्थलोकास्तेषां स नाऽऽददे । लाभादेकत्र तल्लोकैर्नामाकार्येकपिण्डिकः ॥ १२ ॥ सार्थशेनान्यशोकोऽसौ, भिक्षा प्राप्ता न कस्यचित् । नगरं गम्यते यावत्, तावद् दास्याम्यहं [redacted] ॥ १३ ॥ पुरं प्राप्तो गृहासन्नं, तस्मै श्रेष्ठी ददौ मठम् । स मुण्डं मुण्डयामास, कषायाण्यंशुकान्यधात् ॥ १४ ॥ विख्यातोऽभूद् जने याति, भोक्तुं न कस्यचिद् गृहे । एकस

फस्यचित् तत्राऽऽदत्ते भक्तमुपागतम् ॥ १५ ॥ तज्ज्ञानार्थं जनैर्भेरी, चक्रे यच्छति यस्तु सः । वादयेत् तां वलन्तेऽन्ये, कालश्चैवं ययौ कियान् ॥ १६ ॥ इतश्च समवासार्षीत्, श्रीवीरस्तत्पुरो बहिः । निषिद्धाः साधवो यान्तः पुर भिक्षार्थमर्हता ॥ १७ ॥ आर्या ! अनेषणाऽस्त्यपि, तस्मिन् मुक्ते व्रजन्तु भोः ! । स मुक्तस्ताडिता भेरी, पुरान्तः साधवोऽविशन् ॥ १८ ॥ गौतमः प्रभुणाऽभाणि, लिङ्गी वाच्यः स च त्वया । त्वामेकपिण्डिकोऽनेकपिण्डिकं द्रष्टुमिच्छति ॥१९॥ रुष्टः श्रुत्वेन्द्रनागस्तत्, शान्तात्माऽभूत् क्षणान्तरे । दध्यिवान् लब्धबोधस्तु, भाषन्ते न मृषर्षयः ॥ २० ॥ मम पिण्डशतान्येतैः, क्रियन्ते पारणादिने । एकपिण्डा भुञ्जतेऽमी, सदाऽकृतमकारितम् ॥ २१ ॥ सस्मार जातिं प्रत्येकबुद्धः शुद्धमना मुनिः । अध्ययनमिन्द्रनागाख्यमुक्त्वा केवल्यगात् शिवम् ॥ २२ ॥ इत्यावश्यकोक्तेन्द्रनागमुनिप्रबन्धः ॥

अथ धर्मरुचिं प्रस्तावयन्ति—

अन्हाणमणाउट्टी, जावज्जीवं ति सोउ मुणिवयणं । चिंतंतो धम्मरुई, जाओ पत्तेयबुद्धजई ॥ ९५ ॥

व्याख्या—गाथार्थः सुगमः । नवरम्—"अणाउट्टी" ति आकुट्टनमाकुट्टिः—छेदनं हिंसेत्यर्थः न आकुट्टिरनाकुट्टिस्तां, 'यावज्जीवम्' इति सर्वकालिकीमित्यर्थः ॥ ९५ ॥ भावार्थः किञ्चिदुच्यते—

वसन्त इव सश्रीक, श्रीवसन्तपुरं पुरम् । जितशत्रुर्यथार्थोऽभूत्, पार्थिवस्तत्र चन्द्रवत् ॥ १ ॥ धारिणी धरणीवाभूत्, तस्य सर्वंसहा प्रिया । सूनुः प्रसूनवद् धर्मरुचिर्नाम्ना सुवासनः ॥ २ ॥ वैराग्याद् वार्द्धके भूपो, जिघृक्षुस्तापसव्रतम् । इयेष धर्मरुचये, दातुं स्वां राज्यसम्पदम् ॥ ३ ॥ सोऽपृच्छत् मातर मातस्तातः किं राज्यमुज्झति ? । ससारवर्द्धनं वत्स !, त्वत्तातस्त्यजतीति तत् ॥ ४ ॥ आदास्ये



इन्द्रनागर्षिसम्बन्धः ।

धर्मरुचिप्रबन्धः ।

धर्मरुचि-प्रबन्धः।

नाहमप्येतत्, ततोऽसौ तापसाश्रमे। सतातः प्राव्रजत् तूर्णं, महान् न कापि मुह्यति ॥ ५ ॥ उद्घोषणाऽभवत् तत्र, चतुर्दश्यां तु(नु)
यत् प्रगे। अनाकुट्टिरमावस्यां, ग्राह्यं कन्द-फलादि तत् ॥ ६ ॥ दध्यौ धर्मरुचिर्नित्यमनाकुट्टिस्तदा वरम्। यातोऽद्राक्षीदमावस्यां, स मुनी-
नन्तिकाध्वना ॥ ७ ॥ पप्रच्छ ताननाकुट्टिर्नाद्य किं याथ यद् वनम्?। यावज्जीवमनाकुट्टिरस्माकमिति तेऽभ्यधुः ॥ ८ ॥ गतास्ते स
स्मरन् जातिं, सस्मार श्रुःश्रुतार्थवत्। प्रत्येकबुद्ध एकादशाङ्गवेदी ययौ शिवम् ॥ ९ ॥ इति श्रीधर्मरुचिप्रबन्धः ॥

तेतलिसुतमन्त्रि-वक्तव्यता।

अथ गाथाद्वयेन तेतलिसुतमन्त्रिणमाविष्कुर्वन्ति—

पुक्खलवईइ(ए)पुंडरी(र)गिणीइ(ए)राया अहेसि महपउमो। चउदसपुवी संलेहणाइ पत्तो महासुक्के ॥ ९६ ॥
तत्तो तेयलिपुत्तो, वयणेणं पुट्टिलाइ जाइसरो। केवलनाणी भासइ, तेयलिनामं सुयज्झयणं ॥ ९७ ॥

व्याख्या—एतयोर्गाथयोर्व्याख्यार्थः कथानकादेव गम्यः। तच्चेदम्—

चक्रिवद् बहुरसाढ्यं, श्रीतेतलिपुरं पुरम्। तत्राभूत् कनकरथो, नृपः पद्मावतीपतिः ॥ १ ॥ जातान् जातान् सुतान् भोगलौल्याद्
व्यङ्गयते स राट्। महाशुक्रात् च्युतस्तत्र, तेतलिपुत्रमन्त्र्यभूत् ॥ २ ॥ स्वर्णकारः पुष्पकाराभिधः श्रेष्ठ्यस्ति तत्सुताम्। पोट्टिलां स्वग-
वाक्षस्थामद्राक्षीत् सचिवोऽन्यदा ॥ ३ ॥ तत्तावमर्थयित्वा तां, परिणिन्ये स रागतः। अन्येद्युर्मन्त्रिणं पद्मावती देवीदमब्रवीत् ॥ ४ ॥
रक्षान्यद्गं सुतं चैकं, स्याद् भिक्षापात्रमावयोः। असूता युगपद् दैवात्(-पदेव), पोट्टिला पट्टदेव्यपि ॥ ५ ॥ पोट्टिलायाः सुता देव्याः,
सचिवेनार्पिता रहः। देव्याः पुत्रो गृहं नीतः, पालितः पाठितः कलाः ॥ ६ ॥ पोट्टिला मन्त्रिणोऽन्येद्युरनिष्टाऽभूत् तथा यथा। दुःस्वप्न
इव नामापि, नास्या गृह्णाति कर्हिचित् ॥ ७ ॥ साध्वीं पप्रच्छ भिक्षार्थमायातां साऽतिदुःखिता। किञ्चिद् जानीत वद् ब्रूत, स्वां कथञ्चित्

प्रियप्रिया ? ॥ ८ ॥ ऊचुस्ताः कथ्यते नैवदुक्तो धर्मोऽर्हतोदितः । प्रबुद्धा सा प्रव्रज्यार्थं, पप्रच्छ सचिवं सती ॥ ९ ॥ मन्त्री नादाद् व्रतानुज्ञां, किन्तु मां बोधयेर्यूपे(यः) । तत् प्रतिश्रुत्य चारित्रमादाय साऽगमद् दिवम् ॥ १० ॥ ममार नगराधीशो, गुप्तं लोके प्रकाश्य तम् । पद्मावतीसुतं राज्ये, स्थापयामास धीसखः ॥ ११ ॥ कनकध्वजनामानं, पद्मावत्याह तं नृपम् । राज्यप्राप्त्येकहेतुस्ते, मान्योऽयं सचिवो भृशम् ॥ १२ ॥ मन्त्र्यधीनमभूत् तस्य, कार्यं राज्ञो(ज्ये)ऽखिलं ततः । स्वप्रावौ पोट्टिलादेवो, बहुधा बोधयत्यमुम् ॥ १३ ॥ परं न बुध्यते मन्त्री, ततो राजा पराङ्मुखः । नमत्यमात्ये दैवेन, कृतो भीतस्ततोऽथ सः ॥१४॥ चलितोऽनुचरैर्मुक्तो, लेभे गेहेऽपि नादरम् । ततस्तालपुटं जग्धं, तदप्यासीत् न मृत्यवे ॥१५॥ कङ्कासिर्वाहितः कण्ठे, कुण्ठोऽभूद् रज्जुमग्रहीत् । त्रुटितोदस्तापपानीये, प्रविष्टः स्थलभूरभूत् ॥१६॥ प्रविष्टस्तृणकूटान्तर्दग्धस्तत्र न वाग्निना । पुराद् बहिर्गतो भीतस्तत्रोऽपीत्थं सुरोऽकरोत् ॥ १७ ॥ पृष्ठे गजः पुरो गर्त्ता, पार्श्वयोर्ध्वान्तमुल्वणम् । पतन्ति पत्रिणो मूर्ध्नि, मन्त्री भीतोऽभवत्तराम् ॥ १८ ॥ पोट्टिले ! श्राविके ! रक्ष, दिशो रुद्धाः क यास्यहम् ? । आविर्भूयावदद् देवो, भीतस्य शरणं व्रतम् ॥ १९ ॥ आलापकान् पठन्तं तं, ज्ञातोकान् पोट्टिलाकृतिम् । वीक्ष्योहापोहवशतः, प्राग्भवं सचिवोऽस्मरत् ॥ २० ॥ तथाहि पुष्कलावत्यां, पुरी पुण्डर(री)किण्यभूत् । जितशत्रुर्नृपस्तत्र, वैराग्यादाददे व्रतम् ॥ २१ ॥ चतुर्दश च पूर्वाणि, पठित्वाऽऽराध्य च व्रतम् । महाशुक्रे समुत्पन्नस्ततश्च्युत्वाऽस्मि चाभवम् ॥ २२ ॥ प्रबुद्धः सचिवोऽवोचत्, नृपं शमय निर्जर ! । प्राव्राजीत् पार्थिवे हृष्टे, जननिन्देति माऽस्तु मे ॥ २३ ॥ सर्वत्र माननीयोऽभूत्, नृपोऽप्यागात् सहाम्बया । क्षमयित्वाऽम्बा-पुत्राभ्यां, मन्त्री प्रवेशितः पुरे(रम्) ॥ २४ ॥ ततः स्फीता व्रतं लात्वा, स्मृत्वा पूर्व(प्राग्भ)भवश्रुतम् । सिद्धस्तेतलिपुत्रर्षिर्लुटद्दुष्कर्मबन्धनः ॥ २५ ॥
इति श्रीषष्ठाङ्गावश्यकाद्युक्ततेतलिपुत्रप्रबन्धः ॥



तेतलिसुतमन्त्रि-वक्तव्यता।

अथ जितशत्रुनृपं दर्शयन्ति—

**जियसत्तू पडिबुद्धो, सुबुद्धिवयणेण उदगनायम्मि । ते दो वि समणवसहा(सीहा), सिद्धा इक्कारसंगधरा ॥९८॥**

व्याख्या—व्याख्यार्थः सुगम एव । नवरम्—"सुबुद्धिवयणेण" त्ति सुबुद्धिम(-द्धेर्म-)न्त्रिणो वचनेन "उदगनायम्मि" त्ति अशुचिपरिखोदकनृपपानज्ञापनाख्याते दृष्टान्ते इति ॥ ९८ ॥ भावार्थश्चायम्—

चम्पापुर्यामभूत् पूर्वं, जितशत्रुर्नृपामणीः । श्राद्धः सुबुद्धिस्तन्मन्त्री, सुबुद्धिमकराम्बुधिः ॥ १ ॥ अमात्य-जात्यसामन्तादिभिः सार्द्धं नृपोऽन्यदा । भुक्त्वा रसवतीं दिव्यां, प्रशशंस पुनः पुनः ॥ २ ॥ सुबुद्धिः स्माह देवात्र, चित्रं नो मे मनागपि । वस्तुष्वहंन्मतवत्सत्या-दृपारुष्वपि चारुषु ॥ ३ ॥ यद् दुर्गन्धाः सुगन्धाः स्युर्विरसाः सरसास्तथा । दुर्वर्णाश्च सुवर्णाः स्युः, संस्कारात् पुद्गलाः खलु ॥ ४ ॥ निन्दा-प्रशंसे नो कार्ये, तेनाऽऽर्यैर्वस्तुषु स्फुटम् । श्रद्दधाति परं नैतत्, पार्थिवः सचिवोदितम् ॥ ५ ॥ गच्छन् राजाऽन्यदा राजपाटिकायां ददर्श च । सकलेवरदुर्गन्धि, कलुषं परिखोदकम् ॥ ६ ॥ थूत्कृत्याऽऽछाद्य वस्त्रेण, नक्रं भूशक्र इत्यवक् । बीभत्समतिदुर्गन्धमहो! कीदृगिदं पयः ? ॥ ७ ॥ सचिवः स्माह नो निन्द्यं, जलं यत् नो जले मलम् । अद्धत्ते न परं राजा, मन्त्र्यासैरानिनाय तत् ॥ ८ ॥ गलितं कतकक्षोदयोगाद् विकलुषीकृतम् । अन्यान्यकौरभाण्डेषु, क्षिप्तं त्रिःसप्तवासरान् ॥ ९ ॥ रत्नप्रायं तदच्छत्वात्, कर्पूराद्यैः सुवासितम् । राज्ञो भोजनवेलायां, सूदेभ्यः सचिवो ददौ ॥ १० ॥ पायं पायं पयः पौनःपुन्येन पृथिवीपतिः । स्वादातिरेकतस्तृप्तिं, नाऽऽपेयातितृषार्दितः ॥ ११ ॥ सूदान् पप्रच्छ भूपोऽम्भः, क्वेदं लब्धं सुधोपमम् ? । तेऽप्यूचुर्मन्त्रिणा दत्तमस्माकमतिगौरवात् ॥ १२ ॥ नृपोऽपृच्छत् कुतो मन्त्रिन्!, मुग्धं लब्धमिदं पयः ? । चेद् ददास्यभयं तर्हि, सत्यं वच्मीति मन्त्र्यवक् ॥ १३ ॥ दत्तेऽभयेऽवदन् मन्त्री,

जितशत्रु-नृपर्षि-प्रबन्धः ।

तदिदं परिखोदकम्। नृपोऽवददसम्भाव्यं, कथं जातं तदीदृशम्? ॥ १४ ॥ अमनोज्ञं मनोज्ञं स्यात्, समनोज्ञमथवा(था)न्यथा। कालेनेत्युक्तवान् मन्त्री, श्रद्धत्ते न परं नृपः ॥ १५ ॥ नृपाध्यक्षं ततो मन्त्री, तदेव परिखोदकम्। आनाय्य प्राग्(क्)प्रयोगेण, रत्नाच्छं तदर्शयत् ॥ १६ ॥ नृपः प्राह पुनर्मन्त्रिन्!, कुतो ज्ञातमिदं त्वया?। पुद्गलाणं परीणामवाक्यादवगतं विभोः ॥ १७ ॥ नृपोऽथ श्रावकीभूतः, क्रमात् मन्त्रि-नृपावुभौ। प्रव्रज्यैकादशाङ्गानि, पठित्वा जग्मतुः शिवम् ॥ १८ ॥ इति ज्ञाताधर्मकथोक्तजितशत्रुनृपप्रतिबोधसम्बन्धः ॥ इति श्रीखरतरगच्छशृङ्गारहारश्रीगुणरत्नाचार्य-शिष्यवर्यवाचनाचार्यपद्ममन्दिरगणिविरचितायां श्रीऋषिमण्डलप्रकरणवृत्तौ शाल-महाशाल-पिठर-यशोमती-गागलिकेवलोत्पत्ति-श्रीगौतमाष्टापदारोहण-पुण्डरीक-कण्डरीककथा-कौडिन्यादितापसप्रबोध-श्रीवीरपूर्वपितृशिवगमन-श्रीकरकण्डुकथा-द्विमुखकथा-नमिकथा-नग्गतिकथा-प्रसन्नचन्द्र-वल्कलचीरिकथा-अतिमुक्तकुमारकथा-क्षुल्लकुमारकथा-श्रीलोहार्यमुनिस्तवनं-श्रमणभद्रमुनिकथा-श्रीसुव्रतमुनिकथा-गोभद्रर्षिस्तवन-वारत्तक-धर्मघोष-सुजात महर्षिकथा-अर्जुनमालाकारकथा-दृढप्रहारिकथा-कूरगडुककथा-शिवराजर्षिकथा-दशार्णभद्रकथा-मेतार्यकथा-इलापुत्रकथा-चिलातीपुत्रकथा-मृगापुत्रप्रव्रज्या-इन्द्रनागमुनिकथा-श्रीधर्मरुचिकथा-तेतलिपुत्रमन्त्रिकथा-जितशत्रुराजर्षिकथावर्णनाधिकारे पञ्चमविश्रामे प्रथमोंऽश इति ॥ [ग्रन्थाग्रं ४००३ सर्वसङ्ख्या]

अथ द्वितीयोंऽशः प्रारभ्यते। तत्रादौ गाथात्रयेण श्रीमदार्द्रकमहर्षिं प्रस्तावयन्ति—

उववन्नो जोऽणज्जेसु, दट्ठुमुसभस्स समजडं पडिमं। पवइओ जेण पुणो, चरणावरणे उइन्नम्मि ॥ ९९ ॥
अप्पा विमोइउ भावबंधणा दवबंधणाउ करी। लद्दजओ परतित्थिसु, सो अद्दरिसी सिवं पत्तो ॥ १०० ॥

व्याख्या—स आर्द्रकर्षिः(मुनिः)शिवं प्राप्त इति द्वितीयगाथापर्यन्ते क्रियायोगः। कोऽसौ? य उत्पन्नोऽनार्येषु देशेषु इति गम्यम्। किं कृत्वा? दृष्ट्वा, कां? 'प्रतिमां' मूर्तिं, कस्य? 'ऋषभस्य' नाभेयस्य, किंविशिष्टां? 'समजटां' समे-अविषमे अर्थाधिकाराद् द्वे जटे यस्याः सा ताम्। भगवान् पञ्चमुष्टिलोचाधिकारे हि सौवर्णकलशोपरिसहकारपत्रावलिश्रियं शोभमानामुभयोः स्कन्धयोरुपरि विलुलितां कुन्तलावलीं विलोक्य सुरेन्द्राभ्यर्थनया रक्षितवानिति वृद्धाः। तथा लब्धप्रबोधश्च प्रव्रजितः। तथा येन पुनः 'चरणावरणे' चारित्रवारके कर्मणि उदीर्णे सति प्रव्रज्या त्यक्तेति गम्यम्। 'आत्मा' जीवः 'विमोचितः' 'भावबन्धनात्' संसारादिति हृदयम्। 'द्रव्यबन्धनाद्' बाह्यबन्धनात् 'करी' गजराजः, तथा 'लब्धजयः' प्राप्तप्रतिष्ठः, केषु? परतीर्थिषु इति युग्मगाथार्थः ॥ ९९–१०० ॥ तथा—

न दुक्करं वारणपासमोयणं, गयस्स मत्तस्स वणम्मि रायं !।
जहा उ चत्ता वलिएण तंतुणा, तं दुक्करं मे पडिहाइ मोयणं ॥ १०१ ॥

व्याख्या—एतद्वृत्तस्यार्थः सुगम एव ॥ १०१ ॥ व्यासार्थः कथानकगम्यः। तच्चेदम्—

प्रत्यक्षकल्पवृक्षश्रीः, पिपर्तु परमां रमाम्। बहुमेरुपदप्राप्तप्रतिष्ठस्त्रिशलात्मजः ॥ १ ॥ अस्तीह वारिधेरन्तः, समृद्धो नीवृडा(दा)र्द्रकः। आर्द्रकाख्यपुरे राजाऽऽर्द्रकाख्यस्तत्प्रियाऽऽर्द्रका ॥ २ ॥ तयोः सूनुरनूनश्रीः, सर्वदाऽऽर्द्रहृदार्द्रकः। भुञ्जानो गमयामास, दिव्यान् भोगान् दिनानि सः ॥ ३ ॥ अथ राजगृहे राजा, श्रेणिकाख्योऽभवत् तदा। पारम्पर्यागता प्रीतिः, श्रेणिकाऽऽर्द्रकभूभुजोः ॥ ४ ॥ प्राहिणोदार्द्रकेशाय, प्राभृतं श्रेणिकोऽन्यदा। सौवर्चल-निम्बपत्र-कम्बलाद्यात्तपूरुषैः ॥ ५ ॥ तदादायाऽऽर्द्रकेन्द्रोऽपि, पप्रच्छामात्यपुङ्गवम्। सर्वत्र वर्त्तते वार्त्तं, सुहृदः श्रेणिकस्य मे ॥ ६ ॥ मन्त्र्याह देवपादानां, सौमनस्याम्बुदोदयात्। मगधेशितुरेधन्ते, कल्याणारामपा-

दपाः ॥ ७ ॥ अथाऽऽर्द्रककुमारेन्द्रः, पप्रच्छ पितरं निजम् । तात ! कः श्रेणिको येनाऽऽयुष्मता सह सौहृदम् ? ॥८॥ आर्द्रकेन्द्रोऽवदद् वत्स !, पारम्पर्यागता चिरात् । स्वामिनां प्रीतिरन्योन्यं, मगधार्द्रकनीवृतोः ॥ ९ ॥ पप्रच्छाऽऽर्द्रककुमारो, मन्त्रिन् ! मे प्रीतिभाजनम् । कश्चिदनन्यसामान्यगुणः पुत्रोऽस्ति ते प्रभोः ? ॥ १० ॥ मन्त्र्याह न श्रुतः श्रुत्वा, कुमारेन्द्रोऽभयाह्वयः ? । श्रेणिकस्य सुतोऽद्वैतगुणरत्नैकरोहणः ॥ ११ ॥ मन्त्रिपञ्चशताधीशं, धर्मज्ञं बुद्धिसेवधिम् । को न जानाति तं प्राज्ञं, राज(ज्य)कार्यधुरन्धरम् ? ॥ १२ ॥ आर्द्रकेन्द्रः कुमारेन्द्रं, तत्प्रेमाभिमुखं जगौ । वत्स ! धन्यः कुलीनोऽसि, चालयन् पूर्वजक्रमम् ॥ १३ ॥ समानशील-कुलयोः, सद्गुण-वयोवतोः । विवाहयोगवद् वत्स ! सौहृदं शस्यते द्वयोः ॥ १४ ॥ कुमारः श्रेणिकामात्यमूचे जनमुखात् ततः । यत् त्वया गच्छता ज्ञाप्यं, ममैलेपोऽप्यमन्यत ॥१५॥ महत्या प्रतिपत्त्या तमवस्थाप्याऽऽर्द्रकेश्वरः । प्राहिणोत् प्राभृतं दत्त्वा, सुहृदे मौक्तिकादिकम् ॥ १६ ॥ विसृष्टो भूभुजा मन्त्री, कुमारान्तिकमीयिवान् । प्राभृतं सोऽभयायादात्, सन्मुक्ता-विद्रुमादिकम् ॥ १७ ॥ ऊचे च वाच्यं मद्वाचाऽभयाय सुहृदे मम । यदार्द्रककुमारोऽमा, भवतेच्छति सौहृदम् ॥ १८ ॥ एवमेवेति मन्त्र्युक्त्वा, मुत्कलाप्याऽऽर्द्रकासुतम् । महात्मपुरुषेणास्य, वेगाद् राजगृहं ययौ ॥ १९ ॥ सम्भाल्य मन्त्र्यदात् सर्वं, श्रेणिकायाऽभयाय च । दध्यौ ततोऽभयः सख्यं, किमिच्छेत् स मया समम् ? ॥ २० ॥ अभव्यो दूरभव्यो वा, सख्यं नेच्छेत् मया समम् । नूनमासन्नभव्योऽयं, यत् स्यात् तत्तुल्यधर्मिणोः ॥२१॥ उत्पन्नोऽयं ह्यनार्येषु, विराधितव्रताद् यतः । तद् बुद्ध्वा बोधयाम्येनं, प्रेषणादर्हदाकृतेः ॥ २२ ॥ ततो रत्नमयीं दिव्यां, विधाप्याऽऽदिजिनेशितुः । पेटामध्ये समुद्रान्तः, प्रतिमामभयो न्यधात् ॥ २३ ॥ घण्टिका-धूपदहनाद्यर्चोपकरसम्भृताम् । तामाप्तमन्त्रिणो दत्त्वाऽभयो मन्त्रीदमूचिवान् ॥ २४ ॥ भो ! वाच्यमार्द्रकासूनोः, पेटोद्घाट्या त्वया रहः । सम्यग् विलोक्यमङ्गेषु, विन्यस्या-

भरणं ह्रदः ॥ २५ ॥ विसृष्टः श्रेणिकेनाऽऽर्द्रकेशस्य सचिवः समम् । स्वाप्तपुंसा ययौ स्थानं, प्राभृतं तत् तयोर्ददौ ॥ २६ ॥ उद्घाट्य पेटामेकान्ते, प्रतिमां प्रथमार्हतः । आर्द्रकासूनुरद्राक्षीत्, तेजोऽतिक्रान्तभास्कराम् ॥ २७ ॥ मूर्द्धि कण्ठे हृदि दोष्णोर्वहन्नाभरणेच्छया । तत्र तत्राशोभमानां, वीक्ष्योहापोहतां ययौ ॥ २८ ॥ किं प्राग् कापीदृशी दृष्टा ?, स्मरन् मूर्च्छामगादिति । क्षणाद् जातिस्मृतिविज्ञानात्, सस्मार प्राग्भवं यथा ॥ २९ ॥ इतो भवात् तृतीयेऽहं, प्राग्भवे मगधावनौ । कुटुम्बी सामाय(यि)काख्यः, श्रीवसन्तपुरेऽभवम् ॥ ३० ॥ पत्नी मे बन्धुमत्यासीत्, तया सार्द्धमथान्यदा । धर्मं निशम्य गुर्वन्ते, प्रव्रज्याऽहमुपात्तवान् ॥ ३१ ॥ तप्यमानस्तपस्तीव्रं, पठन् गुर्वन्तिके श्रुतम् । अविक्रियां क्रियां कुर्वन्, कस्मिंश्चित् पत्तनेऽस्यगाम् ॥ ३२ ॥ साध्वीमध्यस्थिता दैवात्, तत्राऽऽगाद् बन्धुमत्यपि । तां वीक्ष्य प्राग्रतिस्मृत्वाऽभूयं कामवशंवदः ॥ ३३ ॥ मयोक्तं साधवेऽन्यस्मै, तेनाचार्याय तैरपि । प्रवर्त्तिन्यास्तया बन्धुमत्याः साऽपि व्यचिन्तयत् ॥ ३४ ॥ निशम्य मामसौ देशान्तरस्थामपि हास्यति । रागं नेति त्यजामि स्वं, शीलरक्षणहेतवे ॥ ३५ ॥ ततः प्रवर्त्तिनीं पृष्ट्वोद्ध्यानशनयोगतः । त्यक्त्वा निष्ठ्यूतवत् प्राणान्, देवभूयमियाय सा ॥ ३६ ॥ तत् श्रुत्वाऽचिन्तयत् साधुः, शीलभङ्गभयादहो ! । महानुभावाऽमृत सा, साधुर्नाध्यानमुज्झति ॥ ३७ ॥ ततोऽहमपि तत्पृष्ठे, मृत्वाऽनशनपूर्वकम् । देवोऽभूवं ततश्च्युत्वोत्पन्नोऽनार्येषु साम्प्रतम् ॥ ३८ ॥ धन्यः स मेऽभयो बन्धुर्गुरुर्यो बोधितो धिया । येन मल्लक्षणोऽनार्यैः, पद्मवत् पद्मबन्धुना ॥ ३९ ॥ ततस्तं सत्वरं स्निग्धं, दृशा पश्यामि साम्प्रतम् । इत्यतीवोत्सुकोऽभूदार्द्रकिस्तन्मिलनेच्छया ॥ ४० ॥ पप्रच्छ तातमन्येद्युर्मिलनायाऽभयस्य सः । स्थानस्थानां भवेत् प्रीतिर्नृपोऽवक् नो न सङ्गमात् ॥ ४१ ॥ पारापत इवोड्डीय, यियासुरभयं प्रति । ववर्षोश्रान्तमस्राम्भो, भाद्राम्भोदवदार्द्रकिः ॥ ४२ ॥ कीदृक्षो मगधो देशः ?, कीदृग् राजगृहं पुरम् ? । कोऽध्वा तत्र गतौ ? चे(वे)त्यार्द्रकिः पप्रच्छ पार्श्वगान् ॥४३॥

आर्द्रक-
महर्षि-
सम्बन्धः ।

आसने शयने यानेऽभये तन्मयता(तां)गतम्। तं वीक्ष्य पार्थिवो दध्यावेषोऽनुस्त्यैव यास्यति ॥४४॥ ततो राज्ञाऽस्य रक्षार्थं, सामन्तशतपञ्चकम्। आदिष्टमजनिष्टास्य, देहच्छायेव पार्श्वगम् ॥४५॥ वन्दैर्धृ(न्दे धृ)तमिवात्मानं, मन्यमानस्तदाऽऽर्द्रकिः। विश्वासाय वहिर्वाहं, वाह्याल्यां वाहयत्यपि ॥ ४६ ॥ सामन्तान् पार्श्वगान् मुक्त्वा, यान् सदाऽप्यधिकाधिकम्। आगच्छत् पुनरप्येषां, विश्वासं ह्यजीजनत् ॥ ४७ ॥ पूरयित्वा प्रत्नरत्नैः, पोतं प्रतीतपूरुषैः। कुमारः कारयामास, सज्जं वार्द्धौ धियां निधिः ॥ ४८ ॥ वञ्चयित्वा दृशस्तेषां, प्रतिमां न्यस्य तत्पुरः। पोतेनोत्तीर्य पाथोधिमार्यदेशमियाय सः ॥ ४९ ॥ सप्तक्षेत्र्यां धनान्युप्त्वा, मूर्तिं प्रेष्याऽभयाय ताम्। व्रतार्थमुच्चचारोच्चैः, सूत्रं सामायिकं स्वयम् ॥ ५० ॥ व्योम्न्यवादीत् तदा देवीदानीं भो! मा ग्रहीर्व्रतम्। आस्ते भोगफलं कर्म, तवाद्यापि पुराऽर्जितम् ॥ ५१ ॥ कृत्वा तदश्रुतमिवादाय श्रामण्यमार्द्रकिः। साधुः प्रत्येकबुद्धोऽसौ, विजह्रे विधिवत् महीम् ॥ ५२ ॥ इतश्च भूशिरोरत्नं, श्रीवसन्तपुरं पुरम्। तत्रासीद् देवदत्ताख्यः, श्रेष्ठी धनवतीपतिः ॥ ५३ ॥ च्युत्वा बन्धुमतीजीवो, धनवत्युदरोद्भवा। श्रीमतीनामतः ख्याता, देवदत्तस्य पुत्र्यभूत् ॥ ५४ ॥ धात्रीभिर्लाल्यमाना सा, कल्पवल्लीव जङ्गमा। पांशुक्रीडोचितावस्थां, प्रपेदे पुण्यनिम्नगा ॥ ५५ ॥ तत्रैव दैवयोगेन, मुनिर्देवकुलान्तरे। तस्थौ प्रतिमया मायामुक्तः शिवसुखोन्मुखः ॥५६॥ श्रीमती स्ववयस्तुल्यबालिकाभिस्तदाऽऽकुला। क्रीडार्थमागता देवकुले तन्मुनिपाविते ॥ ५७ ॥ क्रीडन्त्यस्ताः कुमार्योऽथ, स्तम्भान् स्वरुचि वव्रिरे। वृतो वदन्त्यो भर्त्तेति, बालक्रीडा ह्यनेकधा ॥ ५८ ॥ श्रीमत्या स वृतः स्तम्भमुद्धर्षिः स्तम्भनिश्चलः। साधु साधु वृता इति, नभःस्थोवाच देवता ॥ ५९ ॥ ववर्ष दिव्यरत्नानि, देवी तद्वरणोत्सवे। सत्यङ्कारं ददाने च, घनगर्जितपूर्वकम् ॥ ६० ॥ गर्जारवभयात् श्रेष्ठिपुत्री लग्नर्षि(र्षेः)पादयोः। विजह्रेऽन्यत्र सापायं, स्थानमित्यार्द्रकिर्मुनिः ॥ ६१ ॥ अस्वामिकं धनं राज्ञ, इत्यागात् तत्पुराधिपः। आदातुं रत्नवृष्टिं तामादिशदा(त्वा-)त्मपूरुषान् ॥ ६२ ॥



आर्द्रक-
महर्षि-
सम्बन्धः।

आर्द्रक-महर्षि-सम्बन्धः ।

तेऽपि तां संवुवूर्षन्तो, ददृशुर्दन्दशूककान् । नागलोकद्वारमिव, स्फारफूत्कारकारिणः ॥ ६३ ॥ श्रीमतीवरणे दत्तमिदं रत्नादि दैन्यवक् । श्रेष्ठी जग्राह तत् सर्वं, स्वं(स्व)स्थानं राड्जनोऽप्यगात् ॥ ६४ ॥ वरास्तद्वरणायेयुः, कुल-शीलादिशालिनः । वृणु, वत्से !, स्वरुचितं, वरमित्याह तत्पिता ॥ ६५ ॥ साऽऽह तात ! वरो वव्रे, यस्तु देवकुले स मे । वरोऽपरो नानुमेने, त्वयाऽप्येतद् घनग्रहात् ॥ ६६ ॥ सकृद् जल्पन्ति राजानः, सकृद् जल्पन्ति पण्डिताः । सकृत् कन्याः प्रदीयन्ते, बाला अपि पठन्त्यदः ॥ ६७ ॥ श्रेष्ठ्यूचे स कथं वत्से !, प्राप्स्यते ? यत् नवं नवम् । पुष्पं पुष्पन्धय इव, सेवते स्थानमन्वहम् ॥ ६८ ॥ प्राप्तोऽपि स कथञ्चिद् वा, वद केनोपलक्ष्यते ? । यतो भ्रमन्ति यहयो, भिक्षयसत् त्यजाऽऽग्रहम् ॥ ६९ ॥ श्रीमत्याह तदा तात !, यानर्येव विलम्बया । गर्जिभीत्या मुनेरङ्घ्रौ दृष्टं लक्ष्मास्ति निस्तुलम् ॥ ७० ॥ तेनोपलक्षयिष्यामि, लक्ष्मणा तत् ममादिश । यातायातमुमुक्षूणां, भिक्षार्पणविधौ पितः ! ॥ ७१ ॥ एवमस्त्विति तातोक्ता, भिक्षामागतभिक्षवे । दत्त्वा सा वन्दनव्याजाद् , वीक्षते लक्ष्म पादयोः ॥ ७२ ॥ द्वादशेऽब्दे गतेऽन्येद्युर्दिङ्मूढोऽत्रागतो मुनिः । तयोपलक्षितः सम्यक्, पादयोर्लक्षणेक्षणात् ॥ ७३ ॥ लगित्वा पादयोरूचे, त्यक्त्वा मां स्वेदबिन्दुवत् । तदा गतोऽभूरधुना, कथं यास्यसि हे प्रिय ! ? ॥ ७४ ॥ चेद् यास्यसि बलात्कारात्, कृत्वाऽऽत्मानं तदाऽग्निसात् । स्त्रीहत्यापातकं दास्ये, तव लोकेऽतिगर्हितम् ॥ ७५ ॥ तया राज्ञा जनैश्चान्यैः, श्रेष्ठिनाऽभ्यर्थितो भृशम् । मुनिर्मेने स्मरन् दिव्यां, वाचं च व्रतवारकाम् ॥ ७६ ॥ भुञ्जानस्य तया सार्द्धं, भोगांस्तस्य मुनेः क्रमात् । गार्हस्थ्यकीर्त्तनं सूनुर्जज्ञे ही ! कर्मणां गतिः ॥ ७७ ॥ मातुर्मनोरथैः सार्द्धं, वर्द्धमानोऽर्भकोऽभवत् । उल्लसद्रसनो वक्तुं, राजकीर इवोत्सुकः ॥ ७८ ॥ तावन्माने सुते जाते, पत्नीं प्राहाऽऽर्द्रकासुवः । प्रिये ! जातः सहायस्ते, पुत्रोऽयं प्रव्रजाम्यहम् ॥ ७९ ॥ श्रीमती धीमती ज्ञापयितुं सूनोस्तदार्द्रकेः । कर्त्तनं कर्त्तुमारेभे, तर्कुमादाय कर्कशम् ॥ ८० ॥ इतश्चागाद् रममाणः, पुत्रः पप्रच्छ मातरम् । तर्कुकर्म

किमारब्धमन्वेतरजनोचितम्? ॥ ८१ ॥ माताऽऽह जात! तातस्ते, प्रव्रजिष्यति साम्प्रतम्। शरणं तर्कुरेवैको, निर्नाथाया भवांल्लघुः ॥ ८२ ॥ बाल्याद् बालोऽलपत् लब्ध-मन्मनैरक्षरैः प्रसूम्। बद्ध्वाऽवस्थापयिष्येऽहं, भव स्वस्थाऽऽत्मवीजिनम् ॥ ८३ ॥ ततोऽम्बाकर्त्तितं सूत्रमादायावेष्टयत् पितुः। चरणौ श्रीमतीसूनुर्लीलाभिरूर्णनाभवत् ॥ ८४ ॥ लब्ध-मन्मनया वाचा, चेष्टया स्पष्टया तया। स्नेहार्द्रे आर्द्रकासूनुः, सूत्रैर्दध्याविदं हृदि ॥ ८५ ॥ यावन्तः शिशुनाऽनेन, मदंह्र्योः सूत्रवेष्टकाः। दत्तास्तावन्ति वर्षाणि, करिष्येऽवस्थितिं गृहे ॥ ८६ ॥ गणितास्तन्तुबन्धास्ते, बभूवुर्द्वादशाखिलाः। तस्थौ तावन्ति वर्षाणि, गार्हस्थ्ये श्रीमतीपतिः ॥ ८७ ॥ यामिन्याः पश्चिमे यामे, दध्यौ पूर्णावधौ सुधीः। धिग् मुधाऽऽत्मा व्रतत्यागाद्, भवाब्धौ पातितो मया ॥ ८८ ॥ व्रतभङ्गादनार्योऽहं, हृदैव प्राग्भवेऽभवम्। त्यजन् जानन्निदानीं तद्, गतिः काऽतः परं मम? ॥ ८९ ॥ प्रक्षालयामि चाऽऽत्मानं, परिव्रज्य तपोऽग्निना। अग्निशौचांशुकमिव, तनिदानीमपि ध्रुवम् ॥ ९० ॥ ततो वैराग्यतः पत्नीं, स सम्भाष्यानुमान्य च। यतिलिङ्गमुपादायाचालीद् राजगृहं प्रति ॥ ९१ ॥ तदन्तराले सोऽद्राक्षीत्, सामन्तशतपञ्चकम्। कल्पिताऽऽजीविकं चौर्यवृत्त्या स्वगृहसेवकम् ॥ ९२ ॥ उपलक्ष्य नमश्चक्रे, स तैर्मुनिरथावदत्। कोऽयमाजीविकोपायो, भद्रा! भद्रापहोऽस्ति वः? ॥ ९३ ॥ तेऽवोचन् वञ्चयित्वाऽस्मान्, पलायिष्ट यदा क्वचित्। तदा वयं ह्रिया वक्त्रं, नेशा दर्शयितुं प्रभोः ॥ ९४ ॥ देशात् निर्गत्य पश्यन्तस्त्वां भ्रान्ताश्चिरमुर्वराम्। जीवामश्चौरिकावृत्त्या, नोपायोऽन्योऽनुजीविनाम् ॥ ९५ ॥ मुनिराह महाकष्टमायातं भवतां परम्। पुण्यानुबन्धि तत् पुण्यं, कार्यं प्रेत्यसुखावहम् ॥ ९६ ॥ अहिंसा सत्यमस्तेयं, ब्रह्मचर्यमखण्डितम्। आकिञ्चन्यं चे(चे)ति धर्मः, सर्वज्ञोक्तो मतोऽस्तु वः ॥ ९७ ॥ ते प्रोचुर्भद्रकात्मानो, यथा प्रभुरभूः पुरा। तथा गुरुर्भवेदानीं, दीक्षादानेन नाथ! नः ॥ ९८ ॥ ततः प्रव्राज्य तान् सर्वान्,



आर्द्रकमहर्षिसम्बन्धः।

हस्तिमोक्षणात् ॥ ११७ ॥ मुनिः स्माह तथा नाभूद्, दुष्करं करिमोक्षणम् । तर्कुतन्तुपाशमोक्षो, यथाऽभूद् दुष्करो मम ॥ ११८ ॥ राज्ञा पृष्टोऽवदत् सर्वां, तर्कुतन्तुकथां मुनिः । आत्मनः प्रतिबोधं चाभयमन्त्रिप्रयोगजम् ॥ ११९ ॥ मदर्थं प्रेषिता मन्त्रिन्!, त्वयाऽर्हत्प्रतिमा तदा । तां वीक्ष्य(क्ष्या-) प्रतिमां जातिस्मारीभूयाऽऽर्हतोऽभवम् ॥१२०॥ किं न दत्तं त्वया मन्त्रिन्! ?, किं मे नोपकृतं त्वया ?। अनार्यपङ्कमग्नोऽहमुद्धृतो बुद्धितो यतः ॥ १२१ ॥ श्रेयोभिर्वर्द्धसे मन्त्रिन्नित्युक्त्वा मुनिरार्द्रकिः । राजगृहे तदाऽऽयातं, श्रीमद्वीरं नमोऽकरोत् ॥ १२२ ॥ तत्पादसेवयाऽऽत्मानं, पवित्रीकृत्य कृत्यवित् । आर्द्रकर्षिः क्रमात् प्राप, महानन्दपदश्रियम् ॥ १२३ ॥ इति श्रीआर्द्रकुमारमहर्षिप्रबन्धः ॥

अथोदकर्षिं गाथाद्वयेन स्तुवन्ति—

नालंदाए अद्धतेरसकुलकोडिकयनिवासाए । पुच्छिय गोयमसामिं, सावयवयपच्चक्खाणविहिं ॥ १०२ ॥
जो चरमजिणसमीवे, पडिवन्नो पंचजामियं धम्मं । पेढालपुत्तमुदयं, तं वंदे मुणियसयलनयं ॥ १०३ ॥

व्याख्या—'तम्' उदकनामानं मुनिं वन्दे इति द्वितीयगाथान्ते क्रियायोगः। स कः ?। सः 'चरमजिनसमीपे' श्रीवीरान्ते प्रतिपन्नः 'पञ्चयामिकं धर्मं' पञ्चमहाव्रतरूपं, किं कृत्वा ? पृष्ट्वा, कं ? 'गौतमस्वामिनं' चरमार्हत्प्रथमशिष्यकं श्रावकव्रतप्रत्याख्यानविधिं, कस्यां ? 'नालन्दायां' राजगृहबाहिरिकायां, किंविशिष्टायां ? अर्द्धत्रयोदशकुलकोटिकृतनिवासायाम् । इति गाथाद्वयार्थः ॥ १०२–१०३ ॥ भावार्थस्त्वयम्—

राजगृहबाहिरिका नालन्दाऽऽख्याऽभवद् भुवि । तत्र श्रीगौतमस्वामी, विहरन्नन्यदाऽऽययौ ॥ १ ॥ तत्र मेतार्यगोत्रीयो, भगवानुदकाह्वयः । पेढालपुत्रः श्रीपार्श्वापत्यमासीत् महामुनिः ॥ २ ॥ स जातसंशयोऽभ्येत्यावादीदेवं गणाधिपम् । आयुष्मन्निह प्रष्टव्यः,



आर्द्रकमहर्षिसम्बन्धः।

उदकमुनिसम्बन्धः।

प्र(सं)देशः कश्चिदस्ति मे ॥ ३ ॥ तं मे स्पष्टं यथास्पष्टं, व्याकुर्वीति जगौ प्रभोः । श्रुत्वा शाम्याम एवपें !, लाहोदकमुनिस्ततः ॥ ४ ॥ कुमारपुत्रा निर्ग्रन्थाः, सन्ति प्रवचनं च ते । प्रवदन्तो भवत्सत्कमायुष्मन् ! प्रतिपत्तनम् ॥ ५ ॥ श्रमणोपासकं प्रत्याख्यापयन्त्येवमन्वहम् । नान्यत्राभियोगेन, चोरमहविमोक्षणात् ॥ ६ ॥ इत्यादिविस्तरः सूत्रकृताङ्गसूत्रतो बुधैः । ज्ञेयो नास्माभिरुक्तोऽत्र, ग्रन्थगौरवभीतितः ॥ ७ ॥ उदकस्ततोऽवादीद् गौतमं छिन्नसंशयः । भवदुक्तमिदं सर्वं, श्रद्दधे रोचयाम्यपि ॥ ८ ॥ तमूचे गौतमः सम्यग्, रोचयित्वा हितं कुरु । उदकस्ततोऽवादीद्, गौतमं रचिताञ्जलिः ॥ ९ ॥ चतुर्यामाद् पञ्चयामं, सम्प्रति श्रमणं शुभम् । मुने ! विहर्तुमिच्छाम्युपसम्पद्य त्वयोदितम् ॥ १० ॥ गौतमस्तं समादाय, ययौ वीरान्तिकेऽथ सः । ऊचे विहर्तुमिच्छाम्याश्रित्य धर्मं प्रभूदितम् ॥ ११ ॥ न कार्यः प्रतिबन्धोऽत्र, प्रभोर्वाक्यं निशम्य सः । पञ्चयामं प्रतिपद्य, धर्मं विहृतवान् महीम् ॥ १२ ॥ इत्युदकमुनिसम्बन्धः ॥ उदकमुनि-सम्बन्धः ।

अथ सुजातमुनिं स्तौति— सुजातमुनि-स्तवनम् ।

**आसी सुरसादिया, सीलं रूवं च जस्स जयपयडं । तं निक्खंतं वंदे, सिद्धिं पत्तं सुजायरिसिं ॥ १०४ ॥**

व्याख्या—'तं' प्रसिद्धं सुजातर्षिं वन्दे । यस्य 'आसीत्' यभूव "सुरसादिया" देवतासान्निध्यं प्राकृतत्वात् स्त्रीलिङ्गत्वम् । 'च' पुनः 'शीलं' स्वभावः, रूपं 'जगति' विश्वे 'प्रकटं' प्रकाशं, तं किंविशिष्टं ? निष्क्रान्तं सिद्धिं प्राप्तं च । इति गाथार्थः ॥ १०४ ॥ भावार्थस्तु प्राग् वारत्तकमहर्षिप्रबन्धाधिकारे दर्शित एव ॥

अथ श्रीसुदर्शनश्रेष्ठिमुनिं नमस्कुर्वन्ति— सुदर्शन-श्रेष्ठिमुनि-वर्णनम् ।

**गिहिणो वि सीलकणयं, निघडियं जस्स वसणकसवट्टे । तं नमिमो सिवपत्तं, सुदंसणरिसिं महासत्तं ॥ १०५ ॥**

व्याख्या—व्याख्या सुगमैव। नवरम्—"गिहिणो वि" त्ति गृहस्थस्यापि शीलकनकं "निव्वडियं" ति 'निर्वृत्तं' निष्पन्नं परां कोटिं प्राप्तमिति यावत्। कस्मिन्? व्यसनकषपट्टे, अयं भावः—यथा हि कषपट्टे कषितं काञ्चनं शुध्यति तथाऽयं भगवान् व्यसनकषपट्टे सुतरां शुद्धोऽभूदिति ॥ १०५ ॥ अत्र केचित् प्रक्षेपरूपां गाथां पठन्तीमामपि—

**खंतिखमं उग्गतवं दुक्करतव-तेय-झाणसंपन्नं। किन्नरगणेहिं महियं, सुदंसणरिसिं महासत्तं ॥ १०६ ॥**

व्याख्या—व्याख्या तु सुगमत्वात् नोक्ता। स्वयमेवाभ्यूह्या ॥ १०६ ॥ भावार्थस्तु कथानकगम्यः। तचेदम्—

सुदर्शनश्रेष्ठिमुनिवर्णनम्।

अस्त्यङ्गविषये चम्पापुर्यां श्रीदधिवाहनः। पार्थिवस्तत्प्रिया रूपपात्रमत्राऽऽभयाह्वया ॥ १ ॥ तत्राजनिष्ट धर्मिष्ठः श्रेष्ठी श्रेष्ठजनेष्टकृत्। श्रीमानृषभदासाख्योऽर्हद्दासी तत्प्रिया प्रिया ॥२॥ तयोरेकोऽस्ति महिषीपालकः सुभगाह्वयः। स चारयति भद्रात्मा, महिषीः शाड्वलावनौ ॥ ३ ॥ हिमर्त्तौ सोऽन्यदा सायमागच्छन् सदनं प्रति। कायोत्सर्गस्थमद्राक्षीत्, मुनिं मार्गे निरम्बरम् ॥ ४ ॥ स्फीते शीते पतत्येष, हा! निरावरणः कथम्?। मुनिर्भावीति चिन्ताऽऽर्त्तः, कथञ्चिदनयत् निशाम्? ॥५॥ महिषीर्महिषीपालः, पुरस्कृत्याऽऽत्मनः प्रगे। सचे(चे)लमचलत् साधुमपश्यच्च तथास्थितम् ॥६॥ नत्वाऽऽसांचक्रिवान् स्तोकं, सुभगो मुनिसन्निधौ। उदियाय रविस्तावद्, द्वेधाऽप्यस्य तमोऽपहः ॥ ७ ॥ मुनीन्द्रो द्राग् नमो अर(रि)हंताणमित्युदीर्य सः। व्योमोत्पपात पक्षीव, शुश्राव सुभगोऽप्यदः ॥ ८ ॥ इयं खगामिनी विद्या, जानन्निति स सन्मतिः। जजाप तत्पदं तिष्ठन्, स्वपन् जाग्रद् गृहे बहिः ॥ ९ ॥ श्रेष्ठिश्रेष्ठोऽन्यदाऽपृच्छत्, कास्तं पदमिदं त्वया?। सोऽवक् खगामिनी विद्या, मयाऽऽप्ता(र्ष)र्षि(र्षे)मुखात् मुखात् ॥१०॥ न व्योमगामिनी विद्या, केवलं भद्र! किं त्वियम्। स्वर्गापवर्गयोर्योगदात्री पात्री यथाऽन्धसाम् ॥११॥ तेनोच्छिष्टेन नो जप्याऽशुच्या यान्त्यधिदेवताः। इत्युक्त्वाऽपाठयत् श्रेष्ठी, सर्वां तस्मै नमस्कृतिम्

सुदर्शन-श्रेष्ठिमुनि-वर्णनम् ।

॥ १२ ॥ धरां धाराधरे धाराधोरणीभिर्निरन्तरम् । पूरयत्यथ महिषीर्लात्वाऽगात् सुभगो बहिः ॥ १३ ॥ तदाऽविशन् महिष्योऽन्यक्षेत्रे
तीर्त्वा नदीं द्रुतम् । सोऽचिन्तयदुपालम्भो, माऽऽयासीत् स्वामिनो मम ॥ १४ ॥ ततः खगामिनीविद्यां, बुद्ध्वा ध्यात्वा नमस्कृतिम् ।
झम्पामदादसौ नद्यां, स्थाणुविद्धो मृतो हृदि ॥ १५ ॥ नमस्कृतिस्मृतिवशात्, मराल इव मानसे । सुस्वप्नसूचितः कुक्षौ, सोऽर्हद्दास्या
अवातरत् ॥ १६ ॥ पुण्यानपूरयत् श्रेष्ठी, तृतीये मासि दोहदान् । कालेऽन्या सुषुवे सूनुं, नाम्नाऽऽकृत्या सुदर्शनम् ॥ १७ ॥ वर्द्धमानः
कलाशालीन्दुलेखेव सुदर्शनः । केषां चेतश्चकोराणां, न जहावक्षिगोचरः ? ॥ १८ ॥ द्विधा मनोरमां कन्यां, पितृभ्यां परिणायितः ।
पलयेवेन्द्र इन्द्राण्या, स भोगान् बुभुजे समम् ॥ १९ ॥ कपिलेन समं प्रीतिरभून् तस्य पुरोधसा । सद्गोष्ठीनिष्ठयोरिष्टः, कालो याति
तयोर्द्वयोः ॥ २० ॥ एकान्तेऽपृच्छदन्येद्युः, कपिलं कपिला प्रिया । प्रियाधस्त्ये क यासि, त्यक्त्वा कार्याणि वेश्मनः ? ॥ २१ ॥
सोऽप्यच् सुहृद्गोष्ठीनिष्ठो, नान्यत् कार्यं स्मराम्यपि ! । साऽपृच्छत् को वयस्यस्ते ?, स्मित्वा स्माह पुरोहितः ॥ २२ ॥ पुण्य-नैपुण्य-लावण्य-
सौजन्यादिगुणोत्क(-णाक)रः । किमद्यापि न मन्मित्रः, श्रुतः श्रुत्वा सुदर्शनः ? ॥२३॥ विशदैस्तद्गुणैश्चित्रं, कपिला रक्ततामगात् । तदास्युपायं
ध्यायन्ती, मन्मथोन्मथिता स्थिता ॥ २४ ॥ गूढकार्येऽन्यदा राज्ञा, प्रेषितः कपिलः क्वचित् । कपिलाऽवसरं ज्ञात्वा, श्रेष्ठ्योकोऽगादुवाच
च ॥ २५ ॥ निर्दिग्धं वाधया स्निग्धं, श्रेष्ठिन् ! त्वद्दृष्टिवृष्टितः । शीघ्रमाश्वासयाभ्येत्य, दग्धं द्रुममिवाम्बुदः ॥ २६ ॥ सत्वरस्तदास्पदं गत्वा,
श्रेष्ठ्यपृच्छ क्व मे सुहृत् । क्वास्तीति ? कपिलाऽप्योचत्, निर्वातेऽस्ति(च)सुहृत् तव ॥ २७ ॥ इत्युक्त्वाऽसौ प्रमादीव, निगोढे सदनान्तरे ।
नीतस्तयाऽथ झटिति, जटितः (दत्तः) कपाटसम्पुटः ॥ २८ ॥ नीवीबन्धश्लथा मुक्तकञ्चुका सा सुदर्शनम् । कामुका कामयामास, निःशमं
कामविह्वला ॥२९॥ प्रत्युत्पन्नमतिः श्रेष्ठी, स्माह यूनां मनोमतम् । इदमेव परं मुग्धे !, क्लैब्ये(ष्टीयो) नाऽस्मि विडम्बितः (-म्बनम्) ॥३०॥

सुदर्शन-श्रेष्ठिमुनि-वर्णनम्।

विलक्षा गच्छ गच्छेति वादिनी कपिला द्रुतम्। द्वारमुद्घाटयामास, निराशास्याऽऽशया सह ॥ ३१ ॥ भिन्नग्रन्थिरिव जीवो, निर्गत्याऽऽस्पदवस्ततः। न गन्तव्यं मयाऽन्येषां, जग्राहाभिग्रहं गृहे ॥ ३२ ॥ ययौ क्रीडितुमन्येद्युरुद्याने दधिवाहनः। सुदर्शन-पुरोधोभ्यां, समं सामन्त-मन्त्रिभिः ॥ ३३ ॥ यानारूढाऽभया राज्ञी, दधिवाहनमन्वगात्। इन्द्राणीव सुरेन्द्रं द्राक्, सख्या कपिलया समम् ॥३४॥ षड्रसैरिव षट्पुत्रैर्युता याता मनोरमा। तां वीक्ष्य कपिलाऽपृच्छद्, राज्ञीं केयं पुराङ्गना? ॥ ३५ ॥ राज्याह सखि! किं वेत्सि, नेमां सुदर्शनप्रियाम्?। साऽऽहेक्षोः फलवत् तर्हि, कुतोऽस्याः सुतसम्भवः? ॥ ३६ ॥ राज्यवोचदसम्बद्धं, जल्पाके! जल्पसीह किम्?॥ तुल्यं हि राज्ञा(ज)रङ्काणां, लक्षणं पुत्रलक्षणम् ॥ ३७ ॥ साऽऽहायं देवि! षण्ढोऽस्ति, स्मित्वा स्माह नृपप्रिया। धूर्त्ते! धृष्टाऽसि किं क्वाप्यार्हतेन श्रेष्ठिनाऽमुना? ॥ ३८ ॥ उवाच वञ्चनां प्राच्यां, सख राज्यै द्विजाङ्गना। राज्यूचेऽयं परस्त्रीषु, षण्ढो न त्वात्मनः स्त्रियाम् ॥ ३९ ॥ हुं मुग्धे! वञ्चिताऽसीति, हसन्त्याह नृपप्रिया। ततो मन्दाक्षवैलक्ष्यादाख्यदेवं द्विजाङ्गना ॥ ४० ॥ वञ्चिता सत्यमस्म्यस्मि, मुग्धा तेऽपि विदग्धता। साम्प्रतं ज्ञास्यते त्वं, चेत् समं रमसेऽमुना ॥ ४१ ॥ सगर्वमभयाऽवादीत्, मुग्धे! वार्त्ता ह्यमुष्य का?। भूपोऽपि भ्रूलताक्षेपमात्रेण भ्राम्यते मया ॥ ४२ ॥ स्त्रीणां कटाक्षविक्षेपात्, क्षुभ्यन्त्येकेन्द्रिया अपि। पञ्चाक्षस्य मनुष्यस्याऽमुष्य क्षोभे कियान् श्रमः? ॥ ४३ ॥ हले! सहेलं यद्येनं, न रमेऽग्नौ विशामि तत्। इत्युक्त्वा ते वनं गत्वा, सायं स्वगृहमीयतुः ॥ ४४ ॥ प्रतिज्ञां पण्डिताख्याया, धात्र्यास्तामभयाऽवदत्। धात्र्याह पुत्रि! तत्सङ्गसङ्गरः सुकरो न ते ॥४५॥ सामान्योऽप्यास्तिकः स्त्रीभिरक्षोभ्योऽर्हन्मतानुगः। धर्मध्यानैकतानस्य, सुदर्शनस्य का कथा? ॥४६॥ शेषाहेर्यः शिरोरत्नमुद्धरेत् सिंहकेसरान्। ध्रुवचक्रं चालयेत्(-क्वचालने) शक्तः, स तु तच्छीलचालने ॥ ४७ ॥ कथमायात्यसावत्रायातोऽपि रमते कथम्। त्वया परस्त्रिया सार्द्धं?, साधु तत्र कृतं सुते! ॥ ४८ ॥ साऽऽहेदं तु कृतं

सुदर्शन-श्रेष्ठिमुनि-वर्णनम् ।

किन्तु दर्शयोपायमस्य ! मे । धात्र्याह निश्चयस्ते चेदुपायोऽस्त्येक एव हि ॥ ४९ ॥ शून्यागारे स पर्वाहे, कायोत्सर्गेण तिष्ठति । मूर्त्तो योग इवानेयोऽथापरोऽप्यसरोऽपि न ॥५०॥ इतश्च कौमुदीपर्वदिने राजाज्ञया प्रजाः । क्रीडार्थं जग्मुरुद्याने, पटहोद्घोषणोदिताः ॥५१॥ श्रीमान् सुदर्शनः श्रेष्ठी, च(चा)तुर्मास(सि)कपर्वणि । तस्थौ विज्ञप्य राजानं, तदा धर्मचिकीर्गृहे ॥ ५२ ॥ अभयां पण्डिताऽवोचदत्र सेयं त्वया गृहे । प्रतिज्ञापूरणकृते, कृत्वा किञ्चित् मृषोत्तरम् ॥ ५३ ॥ मूर्ध्न शिरोऽर्त्तिरस्तीति, दम्भेनाऽऽपृच्छ्य सा नृपम् । तस्थावन्तः-पुरान्तःस्था, कपटोत्कटपाटवा ॥ ५४ ॥ आत्रार्चादिनिर्धानदि, विधाय विधिनाऽर्हताम् । प्रगृह्य पौषधं श्रेष्ठी, तस्थौ प्रतिमया निशि ॥ ५५ ॥ पण्डिता यानमारोप्याऽभयार्थे तं तथास्थितम् । यक्षाकृतिरिति द्वाःस्थैरनिरुद्धाऽऽर्पयत् मुदा ॥५६॥ भ्रूलतोत्क्षेपकोदण्डा कटाक्षोन्मुक्तसायका । श्रेष्ठिनं सा व्यधाद् वेध्यं, शृङ्गारैकतरङ्गिणी ॥ ५७ ॥ हुं तपो दुस्तपं तप्तं, मुग्धाद्य फलितं तव । भजस्व मुञ्च पाखण्डं, मां रूपेणाप्सरःसमाम् ॥ ५८ ॥ स्तनोपपीडमाश्लेषो, हावभावादिकाः क्रियाः । प्रहारा इव वज्राद्रौ, सर्वास्तस्मिन् मुधाऽभवन् ॥ ५९ ॥ स विशेषाद् दधौ ध्यानं, जग्राहेदं त्वभिग्रहम् । पारयामि तदोत्सर्गं, मुच्ये चेत् सङ्कटादतः ॥ ६० ॥ नर्मभिः कर्मभिर्ध्यानवर्मभृद् बहुधाऽप्यसौ । तयोपसर्गितो यत्नया मेरुरिव नाक्षुभत् ॥ ६१ ॥ विलक्षीभूय दक्षास्या, श्रेष्ठिनं सा ततोऽब्रवीत् । स्त्रियो मुग्ध ! सुधा-सुधा, रुष्टा हि विषमं विषम् ॥ ६२ ॥ क्षुभ्येत् स यावदावक्रोक्तिभिर्नो भक्तिम(यु)क्तिभिः । तावत् नखैर्विदार्य स्वं, पूत्कारोऽभया प्रगे ॥ ६३ ॥ रे रे प्राहरिकास्तूर्णमेत्य पश्यन्तु मद्वपुः । शीललोपमनिच्छन्त्याः, पाप्मना कीदृशं कृतम् ? ॥ ६४ ॥ दधाविरे प्राहरिका, धृतनानाविधायुधाः । ददृशुः श्रेष्ठिनं शान्तं, कायोत्सर्गस्थितं पुरः ॥ ६५ ॥ नैव सम्भवति ह्यस्मिन्निन्दाग्मेरिवोद्गमः । इति सञ्चिन्त्य तैर्भूपो, विज्ञप्तः स्वयमागमत् ॥ ६६ ॥ राज्ञे व्यजिज्ञपद् राज्ञी, सबाष्पं गद्गदस्वरम् । देवाहं भवदादेशादावासे यावदागता ॥ ६७ ॥ तावद-

सुदर्शन-
श्रेष्ठिमुनि-
वर्णनम्।

काण्डकूष्माण्डोद्भेदमिवाभवः। अदर्शमेनं गोवक्त्रं, व्याघ्रं कपटधार्मिकम् ॥ ६८॥ कुर्वन् मच्छीललोपार्थं, लर्ह्नि निर्लोठितः स तु। पापो विदारयामास, मां रुषा नखरैः खरैः ॥ ६९ ॥ असम्भाव्यमिदं हासिन्, दुग्धे पूतरका इव। विचिन्त्येति नृपोऽपृच्छत्, श्रेष्ठिन्! ब्रूहि यथास्थितम् ॥ ७० ॥ प्रतिमास्थो न चोवाच, सत्त्वं श्रेष्ठ्यभयाभयात्। राज्ञा ज्ञातं ततो जार-चो(चौ)राणां लक्षणं ह्यदः ॥ ७१ ॥ क्रुधाऽऽदिदेश देवोऽथाऽऽरक्षकांस्तद्वधक्रमे। ततस्ते श्रेष्ठिनो भद्रं, कारयाञ्चक्रिरे शिरः ॥ ७२ ॥ मषीलिप्तमुखं बद्धकरवीरस्रजं गले। सूर्पछत्रं खरारूढं, पुरोवादितडिण्डिमम् ॥ ७३ ॥ उद्गिरन्तो मुखे जारदोषं तस्य न चेशितुः। निन्युरारक्षकास्तस्य, सद्माभ्यर्णं सुदर्शनम् ॥ ७४ ॥ सतीमतल्लिका वीक्ष्यासम्बद्धं तत् मनोरमा। दध्यौ कदाचिदम्भोधिः, सीमां मुञ्चेत् न मत्पतिः ॥ ७५ ॥ जिनेन्द्रं मनसि कृत्वोद्दिश्य शासनदेवताम्। तस्थौ प्रतिमया गर्भागारमेत्य मनोरमा ॥ ७६ ॥ उत्पातशान्तिर्मे पत्युर्भविष्यति यदा तदा। उत्सर्गं पार-यिष्यामि, नान्यथेत्यस्त्वभिग्रहः ॥ ७७ ॥ अत्रान्तरेऽभवद् व्योम्नि, दिव्या वाणी मनोरमे!। सान्निध्यं ते विधास्यामः, पत्युस्त्वं मा ऽधृतिं कृथाः ॥ ७८ ॥ इतश्चारक्षका निन्युर्बहिर्भूमौ सुदर्शनम्। शूलिकायां न्यधुश्चोग्रा, हाहारवपरे जने ॥ ७९ ॥ जज्ञे दिव्यानुभावेन, शूलिका सिंहविष्टरम्। रत्नप्रहारा हाराश्च, बभूवुः श्रेष्ठिनो गले ॥ ८० ॥ केयूराण्यभवन् बाह्वोः, पादयोर्नूपुरान् पुनः। ग्रीवायां ग्रीवाभरणं, शस्त्रघाताश्च वत्तनौ ॥ ८१ ॥ ततस्तदद्भुतं राज्ञे, विज्ञप्तमधिकारिभिः। सतत्रो विस्मयस्मेरस्तत्रागात् पार्थिवः स्वयम् ॥ ८२ ॥ दिव्यसिंहासनासीनं, नानालङ्कृत्यलङ्कृतम्। कल्पवृक्षमिवैक्षिष्ट, साक्षाद् भूपः सुदर्शनम् ॥ ८३ ॥ ततः सर्वाङ्गमालिङ्ग्य, सानुतापं वदन् मनः। ऊचे पुण्यात्मनैकेन, मत्पुरं शोभतेऽधिकम् ॥ ८४ ॥ हा! धिग् विचारशून्यस्याज्ञस्याऽज्ञानं ममेदृशम्। स्त्रीणां वचसि विश्वासो यः कुर्यात् स करोतु हा! ॥ ८५ ॥ दिष्ट्या स्वदृक्षा दृष्टोऽसि, श्रेष्ठिन्! जीवन् स्वकर्मभिः। इत्याद्युक्त्वाऽवदद् भूपः, क्षमस्वाऽऽगो महा-

शय ! ॥ ८६ ॥ पट्टेभस्कन्धमारोप्य, ततो राजा सुदर्शनम् । उद्यज्जयजयारावमानयद् राजमन्दिरम् ॥ ८७ ॥ जनस्तां वर्द्धयामास, हर्षोत्कर्षात् मनोरमाम् । धार्मिके ! पार्योत्सर्गं, क्षेमेणाऽऽगात् पतिस्तव ॥ ८८ ॥ निर्बन्धेन नृपपृष्टः, श्रेष्ठी वध्यमचीकथत् । सोऽवगचीकरः सर्वं, तद्वेवमब्रुवंस्तदा ॥८९॥ अभयानिग्रहे क्रुद्धं, श्रेष्ठी विज्ञप्य पार्थिवम् । अभयं दापयामास, पीडितोऽपीक्षुरस(स)द्रसः ॥९०॥ सत्कृत्य दिव्यवस्त्राद्यैर्बहुमानपुरस्सरम् । प्राहिणोद् गजमारोप्य, पार्थिवः श्रेष्ठिनं गृहे ॥९१॥ जिनधर्मानुभावं तद्, वीक्ष्य साक्षात् क्षमापतिः । पिपासुरिव पीयूषेऽर्हद्धर्मे प्रेमवानभूत् ॥ ९२ ॥ स्वभयादभया राज्ञी, स्वमुद्बन्ध्य व्यपद्यत । परस्मिश्चिन्तितं पापं, प्रायः 'पतति चाऽऽत्मनि ॥ ९३ ॥ कारागारादिवासारात्, संसारात् श्रीसुदर्शनः । विरक्तात्मा परिव्रज्यामुपादत्तैकचित्ततः ॥ ९४ ॥ पण्डिता पाटलीपुत्रे, देवदत्तान्तिके गता । तत्पुरो वर्णयत्तस्य, शीलदार्ढ्यं मुनेर्भृशम् ॥ ९५ ॥ सामर्षं गणिकाऽप्याख्यत्, किं वर्णयसि तं भृशम् ? । अङ्गुल्या नर्तयाम्यग्रे, यदि पश्यामि तं क्वचित् ॥९६॥ भ्रमन् गोचरचर्यायां, दैवात् तत्रागतो मुनिः । कपटश्रावकीभूय, नीतः पण्डितया गृहे ॥९७॥ बहुधा द्वारमुन्मुद्याभ्यर्थितो देवदत्तया । मुनिर्न शीलमर्यादां, धात्ययाऽब्धिरिवामुचत् ॥ ९८ ॥ ततो जातातिनिर्वेदो, मुनिर्निर्गत्य तद्गृहात् । श्मशाने प्रतिमया तस्थौ, कर्मनिर्मूलनैकधीः ॥९९॥ व्यन्तरीभूतया तत्राऽभययाऽप्युपसर्गितः । सुदर्शनमुनिर्ध्यानातिरेकात् प्राप केवलम् ॥१००॥ सुरैर्निर्मितमध्यास्य, सुवर्णकमलं मुनिः । मोहनिद्रापहां चक्रे, सुधादेश्यां स देशनाम् ॥१०१॥ केचिद् यतित्वं केचिच्च, श्रावकत्वं प्रपेदिरे । प्रबुद्धा चाभया देवदत्ता धात्र्यपि पण्डिता ॥ १०२॥ भव्यारविन्दवदनानि विकाश्य तेजोराशिः सुदर्शनमुनिः स्वपदप्रचारैः । कर्माख्यभूधरमपास्य निरस्तशोकलोकाग्रमस्तकमणिश्रियमाससाद ॥ १०३ ॥ इति श्रीसुदर्शनमहर्षिकथानकम् ॥

अथ श्रीगाङ्गेयर्षिः प्ररूप्यते—

सुदर्शन-श्रेष्ठिमुनि-वर्णनम् ।

गाङ्गेयर्षिवक्तव्यता।

**जीवाणुववाय-पवेसणाइ पुच्छित्तु वीरजिणपासे। गिण्हित्तु पंचजामं, गंगेओ जयउ सिद्धिगओ ॥ १०७ ॥**

व्याख्या—'गाङ्गेयः' मुनिः 'जयतु' जयमनुभवतु, किंविशिष्टः? सिद्धिं गतः, किं कृत्वा? "गिण्हित्तु" गृहीत्वा, किं? पञ्चयामं धर्ममिति गम्यम्। कस्मिन्? वीरजिनपार्श्वे। पुनः किं कृत्वा? पृष्ट्वा, किं तत्? उपपात-प्रवेशनादि, केषां? जीवानाम्। इति गाथाक्षरार्थः ॥ १०७ ॥ भावार्थस्त्वयम्—

अन्येद्युः समवासार्षीत्, श्रीवीरः सपरिच्छदः। चैत्ये दूतिपलासा(शा)ख्ये, वाणिजग्रामसन्निधौ ॥ १ ॥ तत्र पार्श्वजिनापत्यं, गाङ्गेयः श्रमणाग्रणीः। स्थित्वाऽन्तेऽपृच्छदर्हन्तं, समग्रैश्वर्यशालिनम् ॥ २ ॥ निरन्तरं सान्तरं वोत्पद्यन्ते नारका विभो!?। निरन्तरं सान्तरं चोत्पद्यन्त इत्यवक् प्रभुः ॥ ३ ॥ तथाऽसुरकुमारादिपृच्छायां ज्ञेयमुत्तरम्। तदेवापृच्छदर्हन्तं, गाङ्गेयः पुनरप्यदः ॥ ४ ॥ पृथ्वीकायादयः स्वामिन्!, सान्तरं वा निरन्तरम्। उत्पद्यन्ते? सान्तरं नोत्पद्यन्ते ते निरन्तरम् ॥ ५ ॥ द्वीन्द्रियादयश्चाप्येवं, यावद् वैमानिकाः सुराः। निरन्तरं सान्तरं चोत्पद्यन्त इत्यवक् प्रभुः ॥ ६ ॥ निरन्तरं सान्तरं वोद्वर्त्तन्ते नारकाः प्रभो!?। निरन्तरं सान्तरं चोद्वर्त्तन्त इत्यगद् जिनः ॥ ७ ॥ पृथ्वीकायादयः स्वामिन्!, सान्तरं वा निरन्तरम्। उद्वर्त्तन्ते? सान्तरं नोद्वर्त्तन्ते ते निरन्तरम् ॥ ८ ॥ निरन्तरं सान्तरं चोद्वर्त्तन्ते द्वीन्द्रियादयः। यावद् वैमानिका देवा, ज्ञेयं प्रश्नानुगोत्तरम् ॥ ९ ॥ सोऽपृच्छत् पुनरर्हन्तं, कतिधेश! प्रवेशना?। श्रीवीरः स्माह गाङ्गेय!, कथ्यते सा चतुर्विधा ॥ १० ॥ नृ-तिर्यक्-नारकामर्त्त्यभेदात् 'सा चतुर्विधा। गर्भजापरभेदेन, नरप्रवेशना द्विधा ॥ ११ ॥ इत्यादि बहुधा तस्य, प्रश्नोत्तरकदम्बकम्। ज्ञेयं प्रज्ञप्तितो विज्ञैर्नात्रोक्तं ग्रन्थगौरवात् ॥ १२ ॥ पुनः प्राह प्रभुर्लोकोऽयं पार्श्वस्वामिनोदितः। लोक्यत इति चान्वर्थाद् ध्रुवो नित्यश्च शाश्वतः ॥१३॥ नृ-तिर्यक्-नारकामर्त्त्यभवेषूत्पत्ति-

रङ्गिनाम् । यथाऽर्जितानामुदयान्, स्यात् शुभाशुभकर्मणाम् ॥ १४ ॥ इत्यादिकं प्रभोर्वाक्यं, स तदाकर्ण्य युक्तिमत् । गाङ्गेयश्छिन्नसन्देहस्तं सर्वज्ञममन्यत ॥ १५ ॥ कृताञ्जलिरथोत्थाय, प्रभुं नत्वा व्यजिज्ञपत् । पञ्चयामं प्रभूपान्ते, धर्ममिच्छामि सेवितुम् ॥ १६ ॥ सम्प्रतिक्रमणं पञ्चयामं धर्मं प्रपद्य सः । प्रभूपान्ते तदारभ्य, विजहाराऽर्हदाज्ञया ॥ १७ ॥ व्रतमाराध्य गाङ्गेयो, बहून्यब्दानि निर्मलम् । सर्वदुःखक्षयं मोक्षं, लेभे कर्मक्षयोद्भवम् ॥ १८ ॥ इति श्रीपञ्चमाङ्गोक्तश्रीगाङ्गेयर्षिसम्बन्धः ॥

गाङ्गेयर्षिवक्तव्यता ।

अथ जिनपालितर्षिं प्रस्तावयन्ति—

जिनपालितर्षिप्रबन्धः ।

**इक्कारसंगधारी, सीसो वीरस्स मासिएण गओ । सोहम्मे जिणपालियनामा सिज्झिस्सइ विदेहे ॥ १०८ ॥**

व्याख्या—व्याख्यार्थः सुगम एव ॥ १०८ ॥ भावार्थश्चायम्—

चम्पायां पुरि माकन्द्यभिधानः सार्थपोऽभवत् । तस्याभूतां सुतौ ख्यातौ, जिनात् पालित-रक्षितौ ॥१॥ वारानेकादशाम्भोधौ, वाहनानि प्रपूर्य तौ । तारुण्येऽर्जयतो भूरिव्यवसायवशाद् धनम् ॥२॥ तौ द्वादशमवेलायां, पितृभ्यां वारितावपि । प्रपूर्य यानपात्राणि, चेलतुर्वार्द्धिवर्त्मनि ॥३॥ भग्नः (भिन्नः) पोतो महोत्पातैः, फलकं प्राप्य तावुभौ । रत्नद्वीपं गतौ यत् स्युरुपायाः प्रबलायुषि ॥४॥ रत्नद्वीपनिवासिन्या, देव्या नीतौ स्ववेश्मनि । तयाऽनुभवतः साकं, भोगान् सार्थपतेः सुतौ ॥५॥ सुरेन्द्रादेशतोऽन्येद्युः, सुस्थितो लवणाधिपः । शुद्ध्यर्थं लवणाम्भोधेः, सङ्करस्याऽऽह किङ्करान् ॥ ६ ॥ मिलन्तीषु व्यन्तरीषु, रत्नद्वीपाधिपा सुरी । सार्थेशाऽऽत्मजयोस्तत्र, यान्ती शिक्षामियं(मां) ददौ ॥ ७ ॥ भद्रौ ! भवद्भ्यां मद्गेहे, क्रीडा कार्या यथासुखम् । प्राक्-प्रतीच्युत्तराशास्थवनखण्डेषु चान्वहम् ॥ ८ ॥ दक्षिणाशावने नैव, गन्तव्यं कर्हिचित् पुनः । यतो दृष्टिविषस्तत्र, दन्दशूकोऽस्ति दारुणः ॥ ९ ॥ इत्युक्त्वा सा ययौ वार्द्धिशुद्ध्यर्थं

तावुभावपि । क्रीडतो भवने देव्यास्तथा त्रिपु वनेष्वपि ॥ १० ॥ दक्षिणाशावनेऽन्येद्युर्दुर्गन्धमुपलभ्य तौ । विस्मितौ पुरतो गन्तुं, प्रवृत्तौ पश्यतः शवान् ॥ ११ ॥ शूलारूढं नरं तत्रैकं क्रन्दन्तमपश्यताम् । पप्रच्छतुश्च तं कस्त्वं ?, केनेत्थं वा कदर्थितः ? ॥ १२ ॥ सोऽप्याचख्यावहं भद्रौ !, सांयात्रिकवणिक्सुतः । भग्नपोतोऽनया देव्याऽऽनीतो नीतिवाह्यया ॥ १३ ॥ मया सममसौ भोगान्, भुक्तवत्येकदा पुनः । कस्मिंश्चिदपराधेऽल्पे, शूलायां मामदात् क्रुधा ॥ १४ ॥ एवं व्यापादिता देव्याऽनया हि शतशो नराः । तत् श्रुत्वा तौ भयभ्रान्तचेतस्काविदमूचतुः ॥१५॥ भो भद्र ! कोऽप्युपायोऽस्ति ?, येनास्मात् सङ्कटाद् वयम् । छुटामः स पुमानाख्यदत्राऽऽस्ते पूर्वदिग्वने ॥ १६ ॥ प्रासादे सेलकाभिख्यो, यक्षोऽसौ वाजिरूपभृत् । चतुर्दश्यष्टमी-राका-ऽमावास्यासु भ्रमन् वने ॥१७॥ कं तारयामि ? कं पालयामीत्युच्चैर्वदेद् यदा । तदा भवद्भ्यां तत्पूजा, कर्तव्याऽऽर्तिविनाशिनी ॥१८॥ वाच्यं च पुरतस्तस्य, नाथ ! नौ तारयेति सः । तारयिष्यति तत् श्रुत्वा, गतौ तौ निजवेश्मनि ॥ १९ ॥ श्रुत्वा यक्षवचोऽन्येद्युः, पर्वाहे तौ तदन्तिकम् । गत्वोचिवांसौ भो ! आवां, नाथ ! तारय पालय ॥ २० ॥ यक्षोऽवादीदहो ! भद्रावारोप्य पृष्ठमात्मनः । युवां नेष्यामि चम्पायां, कार्यमेतद् वचः परम् ॥ २१ ॥ हावभावैर्यदि क्षोभं, यास्यथो देवताकृतैः । तदा वां पातयिष्यामि, वार्धौ सा वां हनिष्यति ॥ २२ ॥ इत्युक्त्वाऽऽरोप्य तौ पृष्ठं, प्रतिचम्पं चचाल सः । इतश्च शोधयित्वाऽब्धिं, सा देवी गृहमागमत् (ता) ॥ २३ ॥ तत्राथ तावपश्यन्ती, विज्ञायावधिना द्रुतम् । क्षोभयामास तौ हावभावैस्तत्पृष्ठमेत्य सा ॥ २४ ॥ परं न क्षुभ्यतस्तौ तु, ततोऽसौ जिनरक्षितम् । क्षोभयामास यक्षोऽब्धौ, चिक्षेपैषाऽवधीच्च तम् ॥ २५ ॥ हावभावैर्घनैर्देव्या, न क्षुब्धो जिनपालितः । नीतः क्षेमेण यक्षेण, चम्पायां मिलितः पितुः ॥ २६ ॥ सुखी जातः क्रमाद् वीरोपान्ते प्रव्रज्य शुद्धधीः । आद्ये कल्पे समुत्पेदे, विदेहे शिवमाप्स्यति ॥ २७ ॥ इति श्रीजिनपालितसम्बन्धः ॥

धर्मरुचिमुनिसम्बन्धः।

अथ धर्मरुचिमहर्षिरुच्यते—

तीयद्धाए चंपाए, सोमपत्तीइ जस्स कडुतुंबं। दिन्नं नागसिरीए, उवज्जिओऽणंतसंसारो ॥ १०९ ॥
सो धम्मघोससीसो, भुच्चा मासखमणपारणए। धम्मरुई संपत्तो, विमाणपवरम्मि सव्वट्ठे ॥ ११० ॥

व्याख्या—एतयोर्गाथयोरक्षरार्थः सुगम एव। नवरम्—"तीयद्धाए" त्ति अतीतकाले "चंपाए" त्ति चम्पापुर्यां "सोमपत्तीए" त्ति सोमनाम्नः-द्विजस्य पत्न्या-भार्यया, शेषं सुगमम् ॥ १०९-११० ॥ भावार्थस्तु दृष्टान्तगम्यः। स चायम्—

अतीतकाले चम्पायां, पुर्यामासंस्त्रयो द्विजाः। आद्यः सोमः परः सोमदत्तोऽन्यः सोमभूतिकः ॥ १ ॥ नागश्रीर्भूतश्रीर्यक्षश्रीरेपामभवन् स्त्रियः। सतश्च वारकेणैते, भुञ्जतेऽन्योन्यमन्वहम् ॥ २ ॥ सोमविप्रस्य नागश्रीप्रियाया वारकोऽन्यदा। आगादेकत्र मित्राणां, त्रयाणां जेमनक्रमात् ॥३॥ तया तु व्यञ्जनस्थाने, संस्कृतं कटुतुम्बकम्। भक्त(व्या)भव्यपरीक्षार्थं, विन्दुर्दत्तो निजानने ॥४॥ अतीवकटुकोऽमुत्तदेकत्रैव रक्षितम्। भोजनावसरे प्राप्ते, न तेषां परिवेषितम् ॥ ५ ॥ इतश्च धर्मरुच्याख्यो, मासक्षपणपारणे। तस्या गेहाङ्गणं प्राप्तो, मुनिर्भिक्षाकृते कृती ॥ ६ ॥ स(त)द् व्यञ्जनं वृथा नागश्रिया मा यातु संस्कृतम्। ध्यात्वेति मुनये तस्मै, दत्तं तत् कटुतुम्बकम् ॥ ७ ॥ तद्दानतोऽर्जितोऽनन्तः(न्त)संसारो दुःखदस्तया। अपूर्वलाभं मन्वानो, मुनिरागादुपाश्रये(यम्) ॥ ८ ॥ गुरवे धर्मघोषाय, तेनादर्शि स्वपात्रकम्। सोऽपि गन्धादिनाऽज्ञासीद्, व्यञ्जनं तद् विषोपमम् ॥ ९ ॥ परिष्ठाप्यं तदादिक्षत् श्रीधर्मरुचये गुरुः। ततस्तदर्थमत्ययं, निर्ममो निरगाद् बहिः ॥ १० ॥ एकस्मिन् पतिते विन्दौ, प्रमादात् स्थण्डिलावनौ। वीक्ष्यात्र कीटिकामृत्युं, दध्यौ कारुण्यतो मुनिः ॥ ११ ॥ भूयान् स्यात् प्राणिसंहारोऽस्मिन् परिष्ठापिते सति। तदेकस्यात्मनो युक्तं, मृत्युतः प्राणिरक्षणम् ॥ १२ ॥ ध्यात्वेत्याहारितं तेन, व्यञ्जनं

तावुभावपि । क्रीडतो भवने देव्यास्तथा त्रिपु वनेष्वपि ॥ १० ॥ दक्षिणाशावनेऽन्येद्युर्दुर्गन्धमुपलभ्य तौ । विस्मितौ पुरवो गन्तुं, प्रवृत्तौ पश्यतः शवान् ॥ ११ ॥ शूलारूढं नरं तत्रैकं क्रन्दन्तमपश्यताम् । पप्रच्छतुश्च तं कस्त्वं ?, केनेत्थं वा कदर्थितः ? ॥ १२ ॥ सोऽप्याचख्यावहं भद्रौ !, सांयात्रिकवणिक्सुतः । भग्नपोतोऽनया देव्याऽऽनीतो नीतिवाञ्छया ॥ १३ ॥ मया सममसौ भोगान्, भुक्तवत्येकदा पुनः । कस्मिंश्चिदपराधेऽल्पे, शूलायां मामदात् क्रुधा ॥ १४ ॥ एवं व्यापादिता देव्याऽनया हि शतशो नराः । तत् श्रुत्वा तौ भयभ्रान्तचेतस्कावित्यूचतुः ॥१५॥ भो भद्र ! कोऽप्युपायोऽस्ति ?, येनास्मात् सङ्कटाद् वयम् । छुटामः स पुमानाख्यदत्राऽऽस्ते पूर्वदिग्वने ॥ १६ ॥ प्रासादे सेलकाभिख्यो, यक्षोऽसौ वाजिरूपभृत् । चतुर्दश्यष्टमी-राका-ऽमावास्यासु भ्रमन् वने ॥१७॥ कं तारयामि ? कं पालयामीत्युच्चैर्वदेद् यदा । तदा भवद्भ्यां तत्पूजा, कर्त्तव्याऽऽर्त्तिविनाशिनी ॥१८॥ वाच्यं च पुरतस्तस्य, नाथ ! नौ तारयेति सः । तारयिष्यति तत् श्रुत्वा, गतौ तौ निजवेश्मनि ॥ १९ ॥ श्रुत्वा यक्षवचोऽन्येद्युः, पर्वाहे तौ तदन्तिकम् । गत्वोचिवांसौ भो ! आवां, नाथ ! तारय पालय ॥ २० ॥ यक्षोऽवादीदहो ! भद्रावारोप्य पृष्ठमात्मनः । युवां नेष्यामि चम्पायां, कार्यमेतद् वचः परम् ॥ २१ ॥ हावभावैर्यदि क्षोभं, यास्यथो दैवताकृतैः । तदा वां पातयिष्यामि, वार्द्धौ सा वां हनिष्यति ॥ २२ ॥ इत्युक्त्वाऽऽरोप्य तौ पृष्ठं, प्रतिचक्रं चचाल सः । इतश्च शोधयित्वाऽब्धिं, सा देवी गृहमागमत् (ता) ॥ २३ ॥ तत्राथ तावपश्यन्ती, विज्ञायावधिना द्रुतम् । क्षोभयामास तौ हावभावैस्तत्पृष्ठमेत्य सा ॥ २४ ॥ परं न क्षुभ्यतस्तौ तु, ततोऽसौ जिनरक्षितम् । क्षोभयामास यक्षोऽथो, चिक्षेपैपाऽवधीच्च तम् ॥ २५ ॥ हावभावैर्घनैर्देव्या, न क्षुब्धो जिनपालितः । नीतः क्षेमेण यक्षेण, चम्पायां मिलितः पितुः ॥ २६ ॥ सुखी जातः क्रमाद् वीरोपान्ते प्रव्रज्य शुद्धधीः । आद्ये कल्पे समुत्पेदे, विदेहे शिवमाप्स्यति ॥ २७ ॥ इति श्रीजिनपालितसम्बन्धः ॥

धर्मरुचिमुनिसम्बन्धः।

अथ धर्मरुचिमहर्षिरुच्यते—

तीयद्धाए चंपाए, सोमपत्तीइ जस्स कडुतुंबं। दिन्नं नागसिरीए, उवज्जिओऽणंतसंसारो ॥ १०९ ॥
सो धम्मघोससीसो, भुच्चा मासखमणपारणए। धम्मरुई संपत्तो, विमाणपवरम्मि सव्वट्ठे ॥ ११० ॥

व्याख्या—एतयोर्गाथयोरक्षरार्थः सुगम एव। नवरम्—"तीयद्धाए" त्ति अतीतकाले "चंपाए" त्ति चम्पापुर्यां "सोमपत्तीए" त्ति सोमनाम्नः-द्विजस्य पत्न्या-भार्यया, शेषं सुगमम् ॥ १०९-११० ॥ भावार्थस्तु दृष्टान्तगम्यः। स चायम्—

अतीतकाले चम्पायां, पुर्यामासंस्त्रयो द्विजाः। आद्यः सोमः परः सोमदत्तोऽन्यः सोमभूतिकः ॥ १ ॥ नागश्रीर्भूतश्रीर्यक्षश्रीरेपाममवन् स्त्रियः। सतत्रा वारकेणैते, भुञ्जतेऽन्योन्यमन्वहम् ॥ २ ॥ सोमविप्रस्य नागश्रीप्रियाया वारकोऽन्यदा। आगादेकत्र मित्राणां, त्रयाणां जेमनक्रमात् ॥३॥ तया तु व्यञ्जनस्थाने, संस्कृतं कटुतुम्बकम्। भक्ष(क्ष्या)भक्ष्यपरीक्षार्थं, बिन्दुर्दत्तो निजानने ॥४॥ अतीवकटुकोऽमुस्तदेकत्रैव रक्षितम्। भोजनावसरे प्राप्ते, न तेषां परिवेषितम् ॥ ५ ॥ इतश्च धर्मरुच्याख्यो, मासक्षपणपारणे। तस्या गेहाङ्गणं प्राप्तो, मुनिर्भिक्षाकृते कृती ॥ ६ ॥ स(त)द् व्यञ्जनं वृथा नागश्रिया मा यातु संस्कृतम्। ध्यात्वेति मुनये तस्मै, दत्तं तत् कटुतुम्बकम् ॥ ७ ॥ तद्दानतोऽर्जितोऽनन्वः(न्त)संसारो दुःखदस्तया। अपूर्वलाभं मन्वानो, मुनिरागादुपाश्रये(यम्) ॥ ८ ॥ गुरवे धर्मघोषाय, तेनादर्शि स्वपात्रकम्। सोऽपि गन्धादिनाऽज्ञासीद्, व्यञ्जनं तद् विषोपमम् ॥ ९ ॥ परिष्ठाप्यं तदादिक्षत् श्रीधर्मरुचये गुरुः। ततस्तदर्थमत्यर्थं, निर्ममो निरगाद् बहिः ॥ १० ॥ एकस्मिन् पतिते बिन्दौ, प्रमादात् स्थण्डिलावनौ। वीक्ष्यात्र कीटिकामृत्युं, दध्यौ कारुण्यतो मुनिः ॥ ११ ॥ भूयान् स्यात् प्राणिसंहारोऽस्मिन् परिष्ठापिते सति। तदेकस्यात्मनो युक्तं, मृत्युतः प्राणिरक्षणम् ॥ १२ ॥ ध्यात्वेत्याहारितं तेन, व्यञ्जनं

तद् विषोपमम् । मृत्वाऽनुत्तरविमानेऽभूद्, देवोऽनशनपूर्वकम् ॥ १३ ॥ ज्ञातव्यतिकरैर्भीवैर्क्षेपिघातातिपातकात् । गृहात् निष्कासिता
नागश्रीः सोमाद्यैर्द्विजन्मभिः ॥ १४ ॥ कास-श्वासादिभी रोगैस्तत्कालमतिपातकैः । भक्ता षोडशसङ्ख्याकैर्नागश्रीरतिदुस्सहैः ॥ १५ ॥
मृत्वाऽगात् नरके षष्ठे, ततो मत्स्येष्वथाभवत् । सप्तमोर्व्यां पुनर्मत्स्यस्ततः पष्ठ्यामगादसौ ॥ १६ ॥ एवं गोशालक इव, भ्रान्त्वाऽनन्तान् भवानपि । नागश्रीः कर्मदोषेण, दुःखं सेहेऽतिदुस्सहम् ॥ १७ ॥ चम्पापुर्यामथो सार्थवाहः सागरदत्तकः । भद्रा तस्य प्रिया
तस्याः, पुत्र्यभूत् सुकुमालिका ॥ १८ ॥ पावनं यौवनं प्राप्ता, सा क्रमात् कर्मयोगतः । परिणीता सागरेण, जिनदत्ताऽऽत्मजन्मना
॥ १९ ॥ तत्स्पर्शमनुभूयाग्निसदृक्षं निशि तत्पतिः । तां मुक्त्वाऽगाद् गृहं हा! हा!, कर्मणां विषमा गतिः ॥ २० ॥ जामातृपित्रोस्तत्पित्रा, रुदतीं वीक्ष्य तां प्रगे । उपालम्भोऽर्पितः सूनोराचारः कोऽयमत्र भोः ! ? ॥ २१ ॥ पितृभ्यां सागरोऽत्यन्तमुक्तोऽप्यूचे गतत्रपः ।
वरमग्नौ विशाम्यस्मि, स्पृशाम्येतां न पाणिना ॥ २२ ॥ पित्रा तन्निर्णयं ज्ञात्वा, द्रमकायान्यथाऽर्पिता । स्वपुत्री सोऽपि तां त्यक्त्वा, कृत्वाऽगात् कर्परं करे ॥ २३ ॥ ततः पितृगृहे भिक्षां, ददौ भिक्षाचराय सा । साध्वीपार्श्वेऽन्यदा धर्मं, निशम्योपाददे व्रतम् ॥ २४ ॥ षष्ठाष्टम-पक्ष-मासक्षपणादितपांस्यसौ । तेपेऽतिदुस्सहान्यार्या, सशक्त्या सुकुमालिका ॥ २५ ॥ वारिताऽऽर्याभिरन्याभिः, साऽगाद् बहिरुपाश्रयात् । साध्वीशिक्षायसहनादतितीव्रतपोभिपात्॥२६॥ गणिकां देवदत्ताख्यां, नटपञ्चनिषेविताम् । दैवात् तत्राऽऽगतां वीक्ष्याऽऽर्या दध्यौ
सुकुमालिका ॥ २७ ॥ धन्येयं यां निषेवन्ते, पञ्चामी युगपत् नराः । अधन्याऽहं यदेकोऽपि, पुमानाद्रियते न माम् ॥ २८ ॥ तदस्य
तपसः कश्चित्, प्रभावोऽस्ति यदा तदा । ममापि भूयात् प्रेत्यैवं, निदानमिति साऽवनोत् ॥ २९ ॥ ततः क्रमेण सा जज्ञे, देहोपकृतिबकुशा । मृत्वा चेशानकल्पेऽभूद्, देववेश्या विधेर्वशात् ॥३०॥ ततश्च्युत्वाऽथ काम्पील्यपुरे द्रुपदभूभुजः । कुक्षौ चुलन्यास्तत्पत्न्याः,

पुत्रीत्वेनोदपद्यत ॥ ३१ ॥ द्रौपदीत्याख्यया ख्याता, जाताऽसौ यौवनोन्मुखी । पित्राऽकार्येतिवाहभ्यात्, तत्स्वयंवरमण्डपः ॥ ३२ ॥ दशार्ह-कृष्णाद्याः पञ्च, पाण्डवाश्चापरे नृपाः । परे(रः)सहस्रा दूतेनाऽऽहूता द्रुपदभूभुजा ॥ ३३ ॥ द्रौपद्या पाण्डवाः पञ्च, वृताः स्वयंवरे वराः । प्रागनिदानवशात् कर्म, बद्धं भवति नान्यथा ॥ ३४ ॥ तत्पाणिग्रहणं जज्ञे, जग्मुः पञ्चापि पाण्डवाः । स्वस्थानमेतया सार्द्धं, भोगान् बुभुजिरे चिरम् ॥ ३५ ॥ इति श्रीज्ञाताधर्मकथाऽनुसारेण द्रौपद्युपलक्षितश्रीधर्मरुचिमहर्षिसम्बन्धः ॥ धर्मरुचिमुनिसम्बन्धः।

अथ जिनदेवाख्योत्तमपुरुषं प्रस्तावयन्ति—

**पालिय मंसनियत्तिं, विज्जेहिं पभणिओ वि गेलन्ने । पयइओ सिद्धिपुरं, संपत्तो जयउ जिणदेवो ॥ १११ ॥** जिनदेवर्षिसम्बन्धः।

व्याख्या—व्याख्या सुगमैव । नवरम्—"गेलन्ने" त्ति तीव्ररोगावस्थायामपि ॥ १११ ॥ भावार्थश्चायम्—

अर्हन्मित्रोऽभवत् श्रेष्ठी, द्वारवत्यामुपासकः । अनुद्धरीति तत्पत्नी, जिनदेवाह्वयः सुतः ॥ १ ॥ अन्येद्युरुग्ररोगेण, ग्रस्तोऽभूद् जिनदेवकः । वैद्यैर्विनाऽऽमिषं व्याधेर्न शान्तिरिति भाषितः ॥ २ ॥ पितृभ्यामपि रागेण, तदर्थमुदितस्तु सः । चक्रे नियमभङ्गं नो, प्रत्युतैवं व्यचिन्तयत् ॥ ३ ॥ "वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितं व्रतम् । वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम् ॥ ४ ॥" म्रियेऽहमिति सञ्चिन्त्य, दुस्साध्यव्याधिबाधया । प्रत्याचख्यौ स्वयं सर्वं, सावद्यं श्रेष्ठिनन्दनः ॥ ५ ॥ कथञ्चित् प्रगुणः कर्मक्षयोपशमतोऽभवत् । पुण्यमेकं महत्तेजो, जागर्त्ति जगति स्फुटम् ॥ ६ ॥ प्रत्याख्यातं तथाप्येवं, परिव्रज्यां चकार सः । शुभध्यानवशात् प्राप, केवलं च क्रमात् शिवम् ॥ ७ ॥ इत्यावश्यकोक्तजिनदेवर्षिसम्बन्धः ॥

अथ गाथाद्वयेन श्रीकपिलर्षिं स्तुवन्ति—

**दोमासकणयकज्जं, कोडीए वि हु न निट्ठियं जस्स। छम्मासं छउमत्थो, विहरिय जो केवली जाओ ॥११२॥ तथा—**
**यलभद्दप्पमुहाणं, इक्कडदासाण पंच य सयाइं। जेण पडिबोहियाइं, तं कपिलमहारिसिं वंदे ॥ ११३ ॥**

व्याख्या—एतयोर्गाथयोरक्षरार्थः कथानकादेवावसेयः । नवरम्—"दोमास" इत्यादि द्वयोर्माषयोः—दशरक्तिकामानरूपयोः कनकस्य—हेम्नः कार्यं—कृत्यं, 'कोट्यापि' शतलक्षात्मिकयाऽपि न 'निष्ठितं' पूर्णं जातमित्यर्थः । तथा "छम्मासं छउमत्थो" त्ति छद्मनि तिष्ठतीति 'छद्मस्थः' केवलहीनः, कियत्कालं ? षण्मासान् यावदिति गम्यं विहृत्य केवल्यभूदिति ॥ ११२–११३ ॥ तथैवम्—

पुर्यामस्त्यत्र कौशाम्ब्यां, जितशत्रुर्नृपाग्रणीः । यस्यासिधेनुश्चरति, द्विषतां शीर्षगोचरे ॥ १ ॥ नृपासद्वृत्तिस्तत्रैकः, काश्यपाख्यो द्विजोऽभवत् । चतुर्दशमहाविद्यास्थानाम्नायविशारदः ॥ २ ॥ तस्य प्रिया यशानाम्नी, नन्दनः कपिलाह्वयः । ममार काश्यपस्तस्मिन्नपावेव विधेर्वशात् ॥ ३ ॥ राज्ञा तद्वृत्तिरन्यस्मै, दत्ता स समहोत्सवम् । धृतच्छत्रो हयारूढस्तद्गेहाभ्यर्णमीयिवान् ॥ ४ ॥ यशा करोद तं वीक्ष्य, कपिलोऽपृच्छदम्ब ! किम् ? । रोदिष्येपाऽपि पुत्रं स्वं, प्रत्याचख्यौ रुदत्यदः ॥ ५ ॥ वत्सैवं त्वत्पिता पूर्वं, गतोऽभूदत्र वर्त्मनि । त्वपुर्विद्याविहीनस्त्वं, श्रीस्तेनान्यत्र ते गता ॥ ६ ॥ सोऽवक् तर्हि करिष्येऽहं, विद्याभ्यासं जनन्यथ । किं तेन सूनुना यस्य, पितुः श्रीर्भुज्यते परैः ? ॥७॥ न वत्स ! मत्सरादत्र, कोऽपि त्वां पाठयिष्यति । तदर्थी याहि ते तातमित्रान्ते किन्त्ववक् प्रसूः ॥ ८ ॥ ततोऽम्बां मुत्कलाप्यैष, श्रावस्तीमागतः पुरीम् । इन्द्रदत्तं पितुर्मित्रं, नमन्मौलिर्नमोऽकरोत् ॥९॥ अपृच्छदिन्द्रदत्तस्तं, कुतो वत्स ! त्वमागतः ? । कृताञ्जलिपुटः प्रोचे, कपिलो विनयादिदम् ॥ १० ॥ तात ! ते मित्रपुत्रोऽत्र, विद्यार्थमहमागमम् । प्रसीद विद्यादानेन, त्वं पितुर्निर्विशेषवान् (!_वत्,-वः) ॥ ११ ॥ उक्तोऽसाविन्द्रदत्तेनोद्वहत्वा प्रेम पुत्रजम् । विद्याऽऽदानोद्यमो वत्स !, साम्प्रतं तव साम्प्रतम् ॥ १२ ॥

पशुभ्यो निर्विशेषो यद्, विद्याहीनः पुमानपि । इहामुत्र भवेद् विद्या, सर्वसम्पन्निबन्धनम् ॥ १३ ॥ आदत्स्व स्वेच्छया वत्स !, तद् विद्यां मदुपान्तिके । बाह्या हि हेतवः सन्ति, स्ववशाः पुस्तकादयः ॥ १४ ॥ परं मे भोजनं गेहे, नो निष्परिग्रहत्वतः । तेनोक्तं भगवन् ! भिक्षामात्रेणाप्यस्तु भोजनम् ॥ १५ ॥ उपाध्यायोऽवदद् वत्स !, पठनं स्यात् न भिक्षया । प्रार्थयिष्ये कञ्चिदिभ्यं, भुक्त्यर्थं परमेहि ते ॥ १६ ॥ ततस्तेन समं शालिभद्रेभ्यस्याऽऽस्पदं ययौ । ॐभूर्भुवःस्वरित्यादिगायत्र्याऽस्याऽऽशिषं ददौ ॥ १७ ॥ दृष्टेन श्रेष्ठिना पृष्टः, किमागमनकारणम् ? । उपाध्यायोऽवदत् श्रेष्ठिन् !, महदस्ति प्रयोजनम् ॥ १८ ॥ तत् किं ? स श्रेष्ठिना पृष्टोऽभाषिष्ट स्पष्टवागमुम् । देहि विद्यार्थिनोऽमुष्य, भोजनं श्रेयसेऽसकृत् ॥ १९ ॥ ददामीत्यादरात् तेन, स्वीकृते भोजने ततः । निश्चिन्तस्तमुपाध्यायो, वेदादीनध्यजीगपत् ॥२०॥ आदिष्टा श्रेष्ठिना तस्य, दास्येका भोजनार्पणे । भुक्त्वा भुक्त्वा करे तस्याः, कपिलोऽधिजगेऽन्वहम् ॥ २१ ॥ तस्य हास्यस्वभावत्वाद्, दुर्जेयत्वात् मनोभुवः । रसानां विकारबाहुल्याद्, दास्यां चेतोऽन्वरज्यत ॥ २२ ॥ साऽप्यस्मिन्ननुरक्ताऽभूद्, रेमाते प्रेमतो मिथः । अन्येद्युस्तद्गुणस्यूता, रहो दासीदमाह तम् ॥ २३ ॥ तत्त्वतः प्राणनाथो मे, त्वमेवाकिञ्चनः परम् । निर्वाहार्थं चेत् सेवेऽन्यं, कार्यो रोषस्त्वयाऽत्र न ॥ २४ ॥ अन्येद्युरासीद् दासीनां, पुरे तस्मिन् महोत्सवः । मूल्याभावात् सुमादीनां चिन्ताऽऽर्त्ता दास्यभूत्तराम् ॥ २५ ॥ चिन्ताऽऽर्त्तां तां वटुर्वीक्ष्यापृच्छत् किं सुमुखीदृशी ? । साऽऽह दास्युत्सवोऽद्याऽऽस्ते, खाद्य-पानादिगोचरः ॥ २६ ॥ विगोपिष्यामि दासीनां, मध्येऽहं तदभावतः । तत् श्रुत्वाऽधृतितः सोऽपि, मौनमालम्ब्य तस्थिवान् ॥ २७ ॥ साऽऽहालं प्रिय ! खेदेन, धनो नामा धनी पुरे । एकोऽस्त्याशीर्वचोदातुः, स्वर्णमाषौ ददाति सः ॥ २८ ॥ तत् त्वं गच्छाविभातायां, विभावर्यां धनौकसि । मृदूक्तिभिः प्रबोध्यैनं, हेम्नो लात्वेहि माषकौ ॥ २९ ॥ प्रागन्यो यातु मा कश्चित्, सकालेऽचलदित्यसौ । बद्ध्वा नीतः पुरारक्षैः, स्पश(दस्यु)-

युद्धा पशूपमैः ॥ ३० ॥ स प्रसेनजितो राज्ञस्तैरानीतः पुरः प्रगे । स्वर्णमापकथां दध्यौ, तत्पृष्टः स्पष्टमब्रवीत् ॥ ३१ ॥ तत्सत्यवचनात् तुष्टो, नृपोऽवादीदहो! वटो! । याचस्व रुचिपर्यन्तं, सर्वं यच्छामि तेऽनघ! ॥ ३२ ॥ आलोच्य चेतसा सम्यग्, मार्गयिष्यामि तत् प्रभो! । इत्युक्त्वाऽशोकवनिकां, प्रविष्टः सेत्यचिन्तयत् ॥ ३३ ॥ स्याद् द्विमाष्या न वस्त्रादि, याचे स्वर्णशतं ततः । यानौको-वाहनादीनि, न स्युरल्पेन तेन मे ॥ ३४ ॥ स्वर्णलक्षं ततो याचे, तेनाल्पेन कियान् भवेत् । सुहृत्-स्वजन-सम्बन्धि-दीनाद्युद्धरणोद्यमः ? ॥ ३५ ॥ कोटिं कोटिशतं कोटिसहस्रं वा तदर्थये । एवमिच्छानिवृत्तिर्नो, कपिलस्याभवत् तदा ॥ ३६ ॥ शुभकर्मोदयाद् दध्यौ, लोभस्याहो! प्रगल्भता । द्विमापकार्यमर्यादा, यत् कोट्याऽपि न निष्ठिता ॥ ३७ ॥ अन्यच्च मम मूढत्वं, पश्यतोद्घाट्य चक्षुषी । कीदृशेऽहं कुले जातः ?, कीदृग् मे दुष्टचेष्टितम् ? ॥ ३८ ॥ ज्ञानदानं मयि गुरोः, स्थले कमललालनम् (सुस्थले लालनं तथा) । अकार्षं यदहं दास्या, दासत्वं प्राकृतोचितम् ॥ ३९ ॥ इति संवेगतो जातिस्मृतिज्ञानमवाप्य सः । देवतादत्तलिङ्गश्रीः, स्वयम्बुद्धोऽग्रहीद् व्रतम् ॥ ४० ॥ तत्रैत्य धर्मलाभेनैधस्व राजन्! ब्रुवन्निति । तत्पृष्टो लोभविस्तारं, स्वस्याऽऽख्यायाब्रवीदिदम् ॥४१॥ "यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्त्त(र्ध)ते । द्विमापचिन्तितं कार्यं, कोट्याऽपि हि न निष्ठितम् ॥ ४२ ॥" विस्मितो नृपतिः प्रोचे, कोटीरप्यर्पयामि ते । भुङ्क्ष्व भोगानिदं कष्टानुष्ठानं किमनुष्ठितम् ? ॥ ४३ ॥ कपिलोऽवगलं कोट्या, राजंस्त्यक्तो मयाऽधुना । गृहवासः स्तृतं भोगैर्भोगिभोगभयङ्करैः ॥ ४४ ॥ कृथास्त्वमपि मा पापं, दुर्गत्येकनिबन्धनम् । धर्मलाभोऽस्त्विति प्रोच्य, निर्ययौ कपिलस्ततः ॥ ४५ ॥ निर्ममो निरहङ्कारो, निरीहोऽस्खलितव्रतः । धात्रीं विहृत्य पण्मासान्, कपिलः प्राप केवलम् ॥ ४६ ॥ इतश्च विकरालाऽऽसीदटत्पाटचराटवी । राजगृहान्तरालेऽष्टादशयोजनविस्तृता ॥ ४७ ॥ तत्राऽऽसन् बलभद्राद्याश्चौराः पञ्चशतीमिताः । ज्ञानेनेक्कडदासाख्यान्, बोधार्हानबुधत् स तान् ॥ ४८ ॥ उपकारार्थ-

मेतेषां, तां प्रविष्टोऽटवीं मुनिः । वृक्षारूढो नरो दूरादायान्तं तं ददर्श च ॥ ४९ ॥ मा यातु नोऽभिभूयासौ, साधुरित्येष तस्करः । लात्वा साधुं(धं) क्रुधाऽनैषीत्, पार्श्वं पल्लीपतेर्द्रुतम् ॥ ५० ॥ सेनानीः स्माह दिष्ट्याऽद्याऽऽयातं क्रीडनकं महत् । अत्र आज्ञापयद् विज्ञं, नृत्य नृत्येति मुण्ड ! रे ॥ ५१ ॥ कपिलोऽप्याह भो ! नृत्यं, न हृद्यं(द्य)वादकं विना । यतः सामग्र्यधीनानि, स्युः कार्याण्यखिलान्यपि ॥ ५२ ॥ तालिकावादनं चक्रुस्ततस्ते दस्यवोऽखिलाः । समयज्ञो ननर्त्तर्षिर्जगौ कर्णामृतं ध्रुवः ॥ ५३ ॥ दुःखानुभयभूयिष्ठे, किं भवेऽस्मिन्नशाश्वते । भवेत् तत् कर्म येनाहं गच्छेयं न हि दुर्गतिम् ? ॥ ५४ ॥ प्रबुद्धा ध्रुवके चाऽऽद्ये, केचित् केचिद् द्वितीयके । चौराः पञ्चशतान्येवं, प्रबुद्धा ध्रुवकैः क्रमात् ॥ ५५ ॥ शिष्यानाधाय तान् सर्वांश्चौरान् कपिलकेवली । बोधयन् भव्यपद्मानि, विजहारोर्वरां चिरम् ॥ ५६ ॥

इति श्रीकपिलब्रह्मर्षिचरित्रम् ॥

अथ हरिकेशबलर्षिं नमस्कुर्मः—

दट्ठूण तवोरिद्धिं, पडिबुद्धा माहणा पउद्धा(ट्ठा) वि । जस्साइसेसनिहिणो, हरिएसबलं तयं नमिमो ॥ ११४ ॥

व्याख्या—हरिकेशाः–च(चा)ण्डालास्तेषु बलः–बलनामा तत्पुत्रविशेषस्तं नमस्कुर्म इति क्रियायोगः । "पउद्धा वि" त्ति प्रकर्षेण क्रुद्धा अपि मुनेर्यष्टि-मुष्ट्यादिप्रहारकरणोद्यतत्वादित्यर्थः, शेषं स्पष्टम् ॥ ११४ ॥ भावार्थः कथानकगम्यः । तथेदम्—

मथुरायामभूत् पुर्यां, शङ्खः शङ्खयशा नृपः । यत्प्रतापासहाः शत्रुघूका नेशुर्दिशोदिशम् ॥ १ ॥ त्रिवर्गसारं भुक्त्वा सञ्जीवनैक(-सौ, जीवलोक-)सुखं ततः । निर्विण्णकाम-भोगोऽन्ते, सूरीणामग्रहीद् व्रतम् ॥ २ ॥ गीतार्थो विहरन्नागात्, सोऽन्येद्युर्हस्तिनापुरे । भ्रमन् गोचरचर्यायां, पद्यामेकां प्रविष्टवान् ॥ ३ ॥ उष्णकाले भवेदुष्णा, मुर्मुराग्निसमा तु सा । अजानन् प्रविशेद् यस्तु, स विनश्यति निश्चि-

कपिलर्षि-चरित्रम् ।

हरिकेशबल-महर्षि-सम्बन्धः ।

हरिकेशबल-
महर्षि-
सम्बन्धः।

तम् ॥ ४ ॥ सोमदेवो गवाक्षस्थः, पुरोधाः साधुनोदितः । भो ! याम्यनेन मार्गेण, सोऽपि दध्याविदं हृदि ॥ ५ ॥ नाम्ना हुतवहरथ्या-गिमां यान् कूर्दतामसौ । पश्यामि कुतुकं दह्यमानस्यास्य तपस्विनः ॥ ६ ॥ ततोऽवादीद् द्विजो याहि, जगामर्षिः शनैः शनैः । ईर्यापथु-कस्तद्वीक्ष्याथाऽऽगान् तत्र पुरोहितः ॥ ७ ॥ महोष्णोऽप्यभवत् पन्था, हिमस्पर्शातिशीतलः । तत्स्पर्शात् सोमदेवोऽथ, तन्निरीक्ष्य विसि-ष्मिये ॥ ८ ॥ दध्यौ किं चिन्तितं दुष्टं ?, धिङ् मामेष तपोनिधिः । द्रष्टव्यो यत्तपःशक्त्या, शीतत्वं जातमध्वनः ॥ ९ ॥ ततो गतो, मुनेः पार्श्वं, भावसारं प्रणम्य तम् । ऊचे दुश्चिन्तितं सानुतापं विप्रो वहन् मनः ॥१०॥ संसारासारताऽदर्शि, कषायाणां दुरन्तता । जिनधर्मफलं चापि, वर्णितं मुनिना शिवम् ॥११॥ निवेदितः साधुधर्मस्ततः संवेगरङ्गवः । पुरोधाः कृततत्कालोचिताशेषप्रयोजनः ॥१२॥ तस्योपान्ते मुनेर्दीक्षामग्रहीत् साहसाग्रणीः । गृहीतशिक्षः श्रामण्यं, पालयामास निर्मलम् ॥१३॥ [युग्मम्] परं करोत्यहङ्कारमसावुत्तम-जातिजम् । रूपस्य च मदं नैवं, भावयेद् भवचेष्टितम् ॥१४॥ "सुरो[1] वि कुकुरो होइ, रंको राया वि जायए । दिओ वि होइ मायंगोसंसारे कम्मदोसओ ॥१५॥" एवं जात्यादिभिः स्तब्धः, कालं कृत्वा क्रमादसौ । त्रिदशालय उ(सु)त्पेदे, चरणादनणुप्रभः ॥ १६ ॥ ज्ञातपूर्वभवः क(कु)तसुरकल्पोऽप्सरोवृतः । स भोगान् भोक्तुमारेभेऽनेकपल्योपमस्थितिः ॥१७॥ श्वपाको बलकोट्टा(द्दा)ख्यो, गङ्गाकूले प्रियाऽस्य तु । गौरी तदुदरे च्युत्वा, ततोऽसावुदपद्यत ॥ १८ ॥ स्वप्ने ददर्श सा चूतं, वसन्तश्रीविकस्वरम् । पप्रच्छ स्वप्नशास्त्रार्थपाठकानां पुरः फलम् ॥ १९ ॥ तेऽप्यूचुर्गौरि ! ते चारुपुत्रोत्पत्तिर्भविष्यति । प्रासूत समये सूनुं, गौरी गौरीव कार्त्तिकम् ॥ २० ॥ अपि च—

1 "गुरोऽपि कुकुरो भवति, रङ्को राजाऽपि जायते । द्विजोऽपि भवति मातङ्गः, संसारे कर्मदोषतः ॥ १५ ॥"

हरिकेशबल-महर्षि-सम्बन्धः।

"जाईमयावलेवा, मायंगकुलम्मि एस उप्पन्नो। सोहग्ग-रूवरहिओ, नियबंधूणं पि हसणिज्जो"[1] ॥ २१ ॥ बल इत्याख्यया ख्यातो, वर्द्धमानः क्रमात्प्रभूत्। सर्वत्र भण्डनरतो, विषवद् दुःसहच्छद(त् त्व-)सौ ॥२२॥ बन्धूनां पान-भोजन-गीत-नृत्यादिकारिणाम्। स वसन्तोत्सवेऽन्येद्युश्चक्रेऽभैः सह भण्डनम् ॥ २३ ॥ बहिर्निष्कासितः क्रोधात्, क्रीडतस्तान् ददर्श सः। अत्रान्तरे विषधरस्तत्रागाद् विषभीषणः ॥ २४ ॥ व्यापादितोऽसौ मातङ्गैस्तवस्तत्रागतोऽपरः। सर्पोऽविष इति त्यक्तो, न मातङ्गैर्हतस्तु सः ॥ २५ ॥ तन्निरीक्ष्य बलो दध्यौ, शुभकर्मोदयादहो!। निर्गुणत्वं गुणत्वं वा, कारणं दुःख-सौख्ययोः ॥२६॥ विषवानेष इत्यात्मभयाद् व्यापादितः फणी। परो निर्विष इत्येवैर्जीवन् मुक्तो जनव्रजैः ॥ २७ ॥ आत्मनो गुण-दोषाभ्यां, पुंसां सम्पद्-विपत्फलाः। दोषांस्त्यक्त्वा तदधुना, गुणानेवाऽऽश्रयाम्यहम् ॥ २८ ॥ चिन्तयन्निति सस्मार, जातिं च त्रिविधस्थितिम्। जातिमदावलेपत्वात्, तथा श्वपकुलोद्भवम् ॥ २९ ॥ धर्मं निशम्य साधूनां, समीपे सम्यगार्हतम्। संवेगातिशयाद् जज्ञे, स मातङ्ग(ङ्गो)महामुनिः ॥ ३० ॥ षष्ठाष्टम-पक्ष-मास-चतुर्मासतपःक्रमैः(मात्)। शोषिताङ्गः रत्नधारं, विजहे पालयन् व्रतम् ॥ ३१ ॥ पुरीं वाराणसीमागात्, पार्श्वजन्मोपशोभिताम्। विहरन् मुनिरन्येद्युर्वनेऽस्थात् तिन्दुकाभिधे ॥३२॥ तद्गुणावर्जितस्तत्र, गण्डी तिन्दुकयक्षराट्। सेवते मुनिमेकाग्रचित्तस्त्यक्तापरक्रियः (-क्त्वाऽपरक्रियाम्) ॥ ३३ ॥ सुहृद् यक्षोऽपरस्तस्यान्यदाऽऽयातो वनान्तरात्। सुहृत्! न दृश्यसे कस्मात्?, पप्रच्छान्योऽप्यदोऽवदत् ॥ ३४ ॥ त्यक्तान्यकृत्यस्तिष्ठामि, सेवमानो मुनिं सुहृद्!। ततोऽवादीत् सुहृद् यक्षो, वने सन्ति ममापि ते ॥ ३५ ॥ तदेहि मित्र! गच्छामः, क्षणमेकं तदन्तिकम्। वन्दामहे महर्षीणां, तेषां स्वशिरसा क्रमान् ॥ ३६ ॥ ततस्तत्र गतो यक्षो, प्रमादात् कथमप्यमी। कुर्वाणा विकथां दृष्टास्तदानीं तदनर्घयः ॥ ३७ ॥

[1] "जातिमदावलेपात्, मातङ्गकुले एष उत्पन्नः। सौभाग्य रूपरहितो, निजबन्धूनामपि हसनीयः ॥ २१ ॥"

अनुरक्तावभूतां तौ, हरिकेशबले भृशम्। कालो यक्षस्य यात्येवं, सेवमानस्य तं मुनिम् ॥ ३८ ॥ राज्ञः कौशलिकस्याथ, सुता भद्राऽभिधाऽभवत्। उद्यौवना कलाऽभिज्ञा, ज्ञान-विज्ञानशालिनी ॥ ३९ ॥ साऽन्येद्युर्विहितस्नाना, नानाभरणभूषिता। चेटीधृताऽर्चोपकृतिर्गता तं यक्षमर्चितुम् ॥४० ॥ अर्चित्वा तत्र यक्षार्चां, सा ददाना प्रदक्षिणाम्। प्रणष्टरूप-लावण्यं, मलाविलकलेवरम् ॥ ४१ ॥ तपःशोषितसर्वाङ्गं, जरन्मलिनचीवरम्। मुनिं ददर्श निष्ठ्यूतं, तं वीक्ष्यावज्ञया तया ॥ ४२ ॥ [युग्मम्] तद् वीक्ष्याचिन्तयद् यक्षः, पापैषा या हि निन्दति। एवं मुनिमिति ध्यात्वा, यक्षेणाधिष्ठिता क्षुधा ॥ ४३ ॥ यत्किञ्चिद् वक्तुमारेभे, बलात् नीता गृहे ततः। वेत्तारो मन्त्र-तन्त्राणां, राज्ञाऽऽहूताः सहस्रशः ॥ ४४ ॥ धन्वन्तरिनिभैर्वैद्यैश्चतुर्धा विहिताः क्रियाः। प्रयुक्ता यन्त्र-तन्त्र-मन्त्र-रक्षामण्डलादयः ॥ ४५ ॥ तत् सर्वं निष्फलं जज्ञे, क्षेत्रे बीजमिवोषरे। अवतीर्णस्ततः पात्रे, यक्षोऽवादीदिदं वचः ॥ ४६ ॥ अनया निन्दितः साधुस्तत् तस्यैवार्पयन्ति चेत्। मुञ्चामि नान्यथा मोक्षः, साक्षादिन्द्रः समेति चेत् ॥ ४७ ॥ जीवतादिति सञ्चिन्त्य, स्वीकृतं भूभुजाऽपि तत्। ततः स्वस्थाऽभवद् भद्रा, यक्षाऽऽवेशवशात् क्षणात् ॥ ४८ ॥ ततो गृहीतवीवाहोपस्कराऽऽलीपरीवृता। नानालङ्कारसाराङ्गा, भद्राऽगादन्तिकं मुनेः ॥ ४९ ॥ नत्वोत्थाय मुनिं भद्राऽवादीत् साधो ! गृहाण मे। स्वयंवराया हस्तेन, हस्तं श्रुत्वाऽवदत् मुनिः ॥ ५० ॥ भद्रे ! सद्भिर्निन्दितया, सृतं सङ्कथयाऽनया। सिद्धिस्त्रीबद्धरागा हि, रज्यन्ति स्त्रीषु नर्षयः ॥ ५१ ॥ जातामर्षेण यक्षेण, वपुराच्छाद्य तन्मुनेः। भृशं मुक्ताऽखिलां रात्रिम्। कृत्वा रूपाण्यनेकशः ॥ ५२ ॥ भद्रे ! मम करस्पर्शं, मा कुरु व्रज दूरतः। यक्षाऽऽवेशोज्झितः साधुर्बभाषे, तामहर्मुखे ॥ ५३ ॥ मन्यमानेव सा स्वप्नं, परीवारपरीवृता। विमनस्का पितुः पार्श्वं, ययौ यक्षविडम्बिता ॥ ५४ ॥ प्रविशन्ती पुरा ज्ञातवृत्तान्तेन पुरोधसा। बभाषे रुद्रदेवेन, नृपाध्यक्षमिदं वचः ॥५५॥ ऋषिपत्नीश(!) तत्त्यक्ता, द्विजेभ्यः कल्पते ततः।

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे द्वितीयोंऽशः।

हरिकेशबलमहर्षिसम्बन्धः।

अनन्योपायतो राज्ञाऽनुमेनेऽस्यैव साऽर्पिता ॥ ५६ ॥ भुञ्जानस्य तया सार्द्धं, भोगानस्य पुरोधसः । याति कालोऽन्यदा तेनाऽऽरब्धो यागः पुराद् बहिः ॥ ५७ ॥ तत्रैयुश्चट्ट-भट्टाद्या, दूरदेशान्तरस्थिताः । यज्ञपत्नी कृता राजपुत्री सैव पुरोधसा ॥ ५८ ॥ इतश्च तत्र भिक्षार्थं, मासक्षपणपारणे । हरिकेशबलोऽभ्यागात्, श्रमणश्रेणिशेखरः ॥ ५९ ॥ ततः परं द्विजैः सार्द्धं, यदुक्तं यत् श्रुतं कृतम् । ज्ञेयमुत्तराध्ययनद्वादशाध्ययनाच्च तत् ॥ ६० ॥ न ग्रन्थगौरवादुक्तमिति भावः ॥ इति श्रीहरिकेशबलमहर्षिसम्बन्धः ॥

हरिकेशबल-महर्षि-सम्बन्धः ।

अथेषुकारपुरोत्पन्नपणिमत्रसम्बन्धाधिकारं प्ररूपयन्नाचार्यो आर्यात्रयेण—

पलिओवमाइ चउरो, भोए भोत्तूण पउमगुम्मम्मि । छप्पि य पुव्ववयंसा, इसुयारपुरे समुप्पन्ना ॥ ११५ ॥

इसुयारो पुहइवई, देवी कमलावई य तस्सेव । भिगुनामा य पुरोहिय, पवरा भज्जा जसा तस्स ॥ ११६ ॥

दुन्नि य पुरोहियसुया, ते जाया बोहिकारणं तेसिं । सव्वे ते पव्वइउं(या), पत्ता अयरामरं ठाणं ॥ ११७ ॥

व्याख्या—आसां तिसृणामपि गाथानामक्षरार्थः कथानकादेव स्पष्टः ॥ ११५–११६–११७ ॥ तच्चेदम्—

प्राग्जन्म-पणिमत्रर्षि-प्रबन्धः ।

श्रीसाकेतपुरे चन्द्रावतंसकनृपोऽभवत् । तत्सुतो मुनिचन्द्राख्यस्तद्दत्तं राज्यमन्वशात् ॥ १ ॥ निर्विण्णः काम-भोगेभ्यो, मुनिचन्द्रो नृपोऽन्यदा । भ्रातुः सागरचन्द्रस्योपान्ते व्रतमशिश्रयत् ॥ २ ॥ चचाल गुरुभिः सार्द्धमसौ देशान्तरं प्रति । ग्रामं प्रविष्टो भिक्षार्थं, सार्थभ्रष्टो बभूव च ॥ ३ ॥ अटव्यां क्षुत्-तृषाऽऽक्रान्तं, चत्वारो गोपदारकाः । सिषेविरे महर्षि तं, पयोदानाध्वदर्शनैः ॥ ४ ॥ तस्य देशनया बुद्धाश्चत्वारो जगृहुर्व्रतम् । जुगुप्सां चक्रतुर्द्वौ तु, चत्वारोऽपि ययुर्दिवम् ॥ ५ ॥ चित्र-सम्भूतिजीवौ तौ, जुगुप्सावशतो भवान् । भ्रेमतुश्चाधमान् दास-मृग-मातङ्गसङ्गतान् ॥ ६ ॥ द्वावप्यन्यौ दिवश्च्युत्वा, क्षितिप्रतिष्ठिते पुरे । सुताविभ्यकुलेऽभूतां, जामत्यु-

ण्योदयोन्मुखौ ॥ ७॥ चत्वारः सुहृदश्चान्येऽमिलन्निभ्यसुतास्तयोः । भुक्त्वा भोगान् पर्यन्ते, धर्मं श्रुत्वा तदुत्तमम् ॥ ८ ॥ चिरमाराध्य चारित्रं, ते प्रान्ते श्रायपूर्वकम् । मृत्वाऽवतेरुः सौधर्मे, विमाने पद्मगुल्मके ॥९॥ चतुःपल्योपमान्यायुर्भुक्त्वा तत्रेभ्यसूनवः । कुरुदेशे चेषुकारपुरे चत्वार एव ते ॥ १०॥ इषुकाराभिधो राजा, तत्प्रिया कमलावती । भृगुः पुरोधास्तत्पत्नी, यशेति क्रमतोऽभवन् ॥११॥ [ युग्मम् ] नित्यं शिचतेऽपत्यार्थमत्यर्थं स पुरोहितः । देवोपयाचितं चक्रे, निमित्तज्ञान् स पृच्छति ॥ १२ ॥ ज्ञातवन्तावबधिना, तौ गोपदारकामरौ । यथोत्पत्स्यावहे ह्यावां, गृहे भृगुपुरोधसः ॥ १३ ॥ साधुवेषं ततः कृत्वा, पुरोधोगृहमीयतुः । नतौ तेन सभार्येणोपविष्टौ चार्पितासने ॥ १४ ॥ भृगोरमे सभार्यस्य, धर्ममूचतुरार्हतम् । प्रबुद्धौ दम्पती श्राद्धधर्मं जगृहतुस्ततः ॥१५॥ भृगुः पप्रच्छ चिन्ताऽऽर्त्तो, भक्त्या तौ श्रमणोत्तमौ । निर्ग्रन्थौ! भविताऽपत्ययोगः स्यादावयोरपि? ॥ १६ ॥ वाचं वाचंयमावेतावूचतुश्चतुरोचिताम् । भवतोर्भविता भद्रौ! (विप्रौ!), पुत्रयुग्मं गृहेऽचिरात् ॥१७॥ केवलं बालकालेऽपि, प्रव्रजिष्यति तद् द्वयम् । कार्यो नाऽऽर्यैस्तस्य विघ्नो, बोधयिष्यति तद् बहून् ॥ १८ ॥ इत्युक्त्वा तौ गतौ देवौ, ततश्च्युत्वा पुरोधसः । पत्न्याः कुक्षाववतीर्णौ, तौ पुत्रत्वेन तत्क्षणात् (गृहे पुत्रौ समुत्पन्नौ, सुखप्रसूचितौ क्रमात्) ॥१९॥ ततः पुराद् भृगुस्तस्थौ, प्रत्यन्तग्राममेत्य सः । प्रसूता युगपत् तत्र, भृगुपत्नी सुतद्वयम् ॥२०॥ व्युद्ग्राहितौ पितृभ्यां तौ, गृह्णीत इति मा व्रतम् । गृह्णन्ति डिम्भरूपाणि, यथा प्रव्रजिता अमी ॥ २१ ॥ भक्षयन्ति च तन्मांसं, भूयास्तां तेषु माऽन्तिकम् । ततोऽन्यदा तौ क्रीडन्तौ, ग्रामाद् बहिरुपेयतुः ॥ २२ ॥ इतश्च दैवात् तत्रैयुरध्वखिन्ना महर्षयः । तान् निरीक्ष्य भयभ्रान्तौ, भृगुपुत्रौ पलायितौ ॥ २३ ॥ एकं वटद्रुमारूढौ, मध्याह्ने मुनयोऽपि हि । गृहीतशुद्धपानान्नास्तत्रैवेयुर्विधेर्वशात् ॥२४॥ विश्रम्य क्षणमेकान्ते, विधिवद् भोजनं व्यधुः । आरूढौ पश्यतस्तौ तु, शुद्धं भक्तं न चाऽऽमिषम् ॥२५॥ ततस्तौ चक्रतुरूहापोहं कापीदृशा दृशा ।



प्राग्जन्म-
षण्मित्रर्षि-
प्रबन्धः ।

रत्न आसन्नयोरेवे, प्राग्जातिस्मृतिरेतयोः ॥ २६ ॥ प्रबुद्धो तान् मुनीन् नत्वाऽऽयातो पित्रोरुपान्तिकम् । प्रबोध्य पितरौ ताभ्यां, सार्धं जगृहतुर्व्रतम् ॥ २७ ॥ महिष्या बोधितो भूभृदेवं ते सुहृदोऽपि षट् । प्रव्रज्य केवलज्ञानं, प्राप्य प्रापुः क्रमात् शिवम् ॥ २८ ॥ उत्तराध्ययनचतुर्दशाध्ययनतस्तयोः । प्रबोध(ध्य)वाक्यविस्तारो, ज्ञेयो नोक्तोऽत्र गौरवात् ॥ २९ ॥ इति प्राग्भवपण्मित्रर्षिसम्बन्धः ॥

प्राग्जन्म-षण्मित्रर्षि-प्रबन्धः ।

अथ संयतर्षेः सिद्धिगमनमाविर्भावयन्ति—

**खत्तियमुणिणा कहियाइं जस्स चत्तारि समवसरणाइं । तह पुव्वपुरिसचरियाइं संजओ सो गओ सिद्धिं ॥११८॥**

संयतमहर्षि-वक्तव्यता ।

व्याख्या—व्याख्यार्थः (••) कथानकादेव स्पष्टः(-ष्टा) । नवरम्—"समवसरणाइं" ति 'स्थानानि' क्रियाऽ(-ऽ)क्रियादीनि चतुः-सङ्ख्यानि, तथा "पुव्वपुरिसचरियाइं" ति पूर्वपुरुषाणां–चक्रवर्त्यादीनां चरितानि चेति ॥ ११८ ॥ तच्चेदम्—

श्रीकाम्पील्यपुराधीशः, संयताख्यो नृपोऽभवत् । प्रतापतपनाऽऽक्रान्तपृथुप्रत्यर्थिपार्थिवः ॥ १ ॥ मृगव्यां स गतोऽन्येद्युर्गजाश्व-रथ-पत्तिभिः । परीवृतश्चतुर्दिक्षु, नृलव्याजिगतः स्वयम् ॥ २ ॥ हयारूढोऽवधीद् भूपः, केसरोद्यानगान् मृगान् । मन्यमानः कृतार्थं स्वं, भयत्रस्तांस्तपस्विनः ॥ ३ ॥ अथ तत्र नृपोऽद्राक्षीद्, धर्मलीनं तपोधनम् । द्रुमाकीर्णमण्डपस्थं, स्वाध्याय-ध्यानतत्परम् ॥ ४ ॥ अथारूढोऽपश्यत् तत्र, मुनिपार्श्वगतान् मृगान् । हतांस्तत्राऽऽगतोऽद्राक्षीत्, मुनीन्द्रं च महीपतिः ॥५॥ दध्यौ इति स सम्भ्रान्तो, हा! मनाग(ग्)हतो मुनिः । मन्दभाग्येन भयका, रसगार्ध्या(गृद्ध्याऽ-)र्दितेन च ॥ ६ ॥ मुक्त्वाऽश्वं चरणान् साधोर्ववन्दे विनयात् नृपः । कृताञ्जलिपुटश्चोचे, क्षमस्वाऽऽगोऽत्र मे मुने ! ॥ ७ ॥ अथासौ भगवान् मौनमालम्ब्य ध्यानतः स्थितः । न प्रतिवक्ति राजानं, ततः सोऽभूद् भयद्रुतः ॥८॥ नृपोऽवक् संयतोऽस्म्यग्नि, भूपो व्याहर मां मुने ! । नरकोटीर्दहेत् क्रुद्धो, यत् मुनिस्तेजसा ज्वलन् ॥ ९ ॥ राज्ञेत्युक्ते मुनिरूचेऽभयं

तेऽभयदो भव(वेः)। अनित्ये जीवलोकेऽस्मिन्, हिंसायां रमसे कथम्?॥१०॥ राजन्! सर्वं परित्यज्य, गन्तव्यमवशस्य ते। अनित्ये जीवलोकेऽस्मिन्, किं राज्ये प्रसजस्यहो!?॥ ११ ॥ जीवितं चैव रूपं च, विद्युत्सम्पातचञ्चलम्। राजन्! मुह्यसि यत्र त्वं, प्रेत्यार्थं नावबुध्यसे ॥१२॥ दाराः सुताः सुहृद्वर्गो, बन्धवश्च सहोदराः। जीवन्तमनुजीवन्ति, मृतान्(तं) नानुव्रजन्त्यपि ॥ १३ ॥ निष्कासयन्ति पितरं, दुःखिता मृतमात्मजाः। तथा तेऽपि मृतं पुत्रमतो राजन्! तपश्चरेः॥ १४॥ तवत्तेनार्जितैर्द्रव्यैः, कलत्रैः परिरक्षितैः। क्रीडन्त्यन्ये नरा राजन्! हृष्ट-तुष्टाः स्व(-स्त्र)लङ्कृताः॥१५॥ तेनापि यत् कृतं कर्म, शुभं वाऽप्यथवाऽशुभम्। कर्मणा तेन संयुक्तोऽवशो याति भवान्तरम्(रे) ॥ १६॥ इति वैराग्यकृद्धर्मं, श्रुत्वा तस्यान्तिके मुनेः। भृशं संवेग-निर्वेदं, समापन्नो नराधिपः ॥ १७ ॥ ततो राज्यमसौ त्यक्त्वा, निष्क्रान्तो जिनशासने। गर्दभालेर्भगवतोऽनगारस्यान्तिके नृपः ॥ १८ ॥ सामाचारीं ततोऽभ्यस्यन्, मुनेराचारगोचराम्। संयतो विहरन्नागात्, सन्निवेशं तथाविधम् (तदाधिपम्) ॥ १९ ॥ इतश्च कश्चिद् देवत्वं, प्राप्योत्पन्नामले कुले। कुतश्चिद् हेतुतो ज्ञातप्राग्-जन्मोपाददे व्रतम् ॥ २० ॥ विहरन् संयतं तत्र, वीक्ष्यर्षिरिदमुक्तवान्। यथा ते दृश्यते रूपं, प्रसन्नं च मनस्तथा ॥ २१ ॥ पुनः प्रपच्छ किंनामा?, को गोत्रोऽर्थाय कस्य वा?। माहनः(न!) सेवसे वृद्धान्?, विनीतो वोच्यसे कथम्? ॥ २२ ॥ सोऽप्यूचे संयताख्योऽहं, तथा गोत्रेण गौतमः। विद्या-चरणयुक्ता मे, गुरवो गर्दभालयः ॥ २३ ॥ सोऽपृष्टोऽप्याख्यद्ज्ञानं, विनयं चा(वा)क्रियां क्रियाम्। चतुर्भिः स्थानकैरेभिर्मे यज्ञाः किं ब्रुवन्ति भोः!?॥२४॥ इत्याविरकरोद् बुद्धो, ज्ञातकः परिनिर्वृतः। विद्या-चरणसम्पन्नः, सत्यः सत्यपराक्रमः ॥ २५ ॥ पतन्ति नरके घोरे, येऽसत्प्ररूपका नराः (ये चासत्यप्ररूपकाः)। निषेव्याऽऽर्यो धर्ममार्यं(-र्यं!), दिव्यां गच्छन्ति सद्गतिम् ॥ २६ ॥ म(मा)योक्तं सर्वमेवत् तु, मृषाभाषा निरर्थका। संयच्छन्नेव तिष्ठाम्युपाश्रये यामि गोचरे ॥२७॥ सर्वेऽमी

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे द्वितीयोंऽशः।

संयतमहर्षिवक्तव्यता।

संयतमहर्षि-वक्तव्यता ।

विदितास्ते मेऽनार्या मिथ्यादृशो यथा । जानामि सम्यगात्मानं, विद्यमाने भवान्तरे ॥ २८ ॥ पुनश्च संयतोऽपृच्छत्, प्रेत्य जानासि तत् कथम् ? । उत्कृष्टायुर्महाप्राणे, स ऊचे प्राग्भवेऽभवम् ॥ २९ ॥ विमानाद् ब्रह्मलोकाख्यात्, च्युत्वाऽहं मनुजोऽभवम् । यथा तथाऽऽत्मनोऽन्येषा, जानाम्येवायुरादिकम् ॥३०॥ नानारुचिं च छन्दं च, संयतः परिवर्जयेत् । अनर्थांश्चापि व्यापारान्, विद्यामित्यनुसञ्चरेः(रे) ॥ ३१ ॥ निवर्त्ते·(र्ते)परमन्त्रेभ्यः, प्रश्नादिभ्यस्तथा पुनः । उच्छ्रितोऽहो ! अहोरात्र, विद्वानिति तपश्चरेः ॥ ३२ ॥ क्षत्रियस्तेन पृष्टोऽन्यगायुः पृच्छसि यच्च माम् । तत् प्रादुष्कृतवान् बुद्धस्तज्ज्ञान जिनशासने ॥३३॥ सत्क्रिया रोचयेद् धीरो, वर्जयेच्चाप्यसत्क्रियाम् । सद्दृष्टा दृष्टिसम्पन्नो, धर्मं सेवस्व दुश्चरम् ॥ ३४ ॥ उपदिश्यैतदखिल, क्षत्रियः संयतं मुनिम् । स्थिरीकर्तुं पुनः पूर्वनरोदाहरणान्यवक् ॥ ३५ ॥ तान्युत्तराध्ययनाष्टादशाध्ययनतो बुधैः । ज्ञेयानि ग्रन्थबाहुल्यात्, नोक्तान्यत्र यथा पुनः ॥ ३६ ॥ इति संयतराजर्षिसम्बन्धः ॥

निर्ग्रन्थर्षि-सम्बन्धः ।

अथ निर्ग्रन्थनिर्ग्रन्थं स्तौति—

**सेणियपुरओ जेणं, परूवियं अप्पणो अणाहत्तं । तं वंदे हयमोहं, अमोहचरियं नियंठमुणिं ॥ ११९ ॥**

व्याख्या—व्याख्या स्पष्टैव । नवरम्—"सेणियपुरओ" त्ति श्रेणिकस्य मगधाधीशस्य 'पुरतः' अग्रे 'प्ररूपितम्' उक्तमिति ॥ ११९ ॥

भावार्थश्चायम्—

सिद्धान् साधून् नमस्कृत्यानुशिष्टिमर्थ(-र्थ्य)धर्मगाम् । कथ्यमाना मया तथ्या, शृणुतोत्तमदेहिनः ! ॥ १ ॥ श्रेयःश्रेणिर्नृपः श्रेणिकाख्योऽन्येद्युर्विहिर्ययौ । अश्ववाहनिकाक्रीडार्थं चैत्ये मण्डिकुक्षिके ॥ २ ॥ तस्मिन् नानाद्रुमाकीर्णे, कानने नन्दनोपमे । साक्षाद् धर्ममिवाद्राक्षीत्, मुनीन्द्र द्रुतले नृपः ॥ ३ ॥ रूप वीक्ष्यास्य भूजानिस्तेजोऽतिक्रान्तभास्करम् । स विस्मयमना जज्ञे, तुष्टाव स्पष्टयन् वचः ॥ ४ ॥ अहो !

रूपमहो ! वर्णोऽहो ! आर्यस्यास्य सोमता । अहो ! क्षान्तिरहो ! मुक्तिरहो ! भोगेष्वसङ्गता ॥ ५ ॥ नृपस्तस्य क्रमान् नत्वा, कृत्वा तिस्रः प्रदक्षिणाः । नाऽऽसन्ने नाविदूरे(र)स्थः, पप्रच्छेदं कृताञ्जलिः ॥ ६ ॥ तारुण्ये भोगकाले त्वं, प्राव्राजीश्चोत्थितो व्रते । एनमर्थमहं तावत्, शृणोम्यनु त्वयोदितम् ॥ ७ ॥ मुनिराख्यदनाथोऽस्मीश ! नाथो मे न विद्यते । न कञ्चिदपि पश्यामि, सुहृदं चानुकम्पकम् ॥ ८ ॥ ततः प्रहसितो राजा, श्रेणिको मगधाधिपः । एवमृद्धिमतस्तेऽत्र, कथं नाथो न विद्यते ? ॥ ९ ॥ भुङ्क्ष्व भोगान् मुने ! नाथो, भयत्राणं भवामि ते । मित्र-ज्ञातिपरिवृतो, मानुष्यं हि सुदुर्लभम् ॥ १० ॥ मुनिराहाऽऽत्मनैव त्वमनाथः श्रेणिकासि भोः ! । आत्मनैव ह्यनाथः सन्, कस्य नाथो भविष्यसि ? ॥ ११ ॥ स एवं मुनिना प्रोक्तः, सुसम्भ्रान्तः सुविस्मितः । श्रुत्वेत्यश्रुतपूर्वं तद्, वचश्चोवाच पार्थिवः ॥ १२ ॥ हस्तिनोऽश्वा मनुष्या मे, पुरमन्तःपुरं च मे । भुञ्जे मानुष्यकान् भोगानाज्ञैश्वर्यं च मेऽधिकम् ॥ १३ ॥ सम्पत्प्रकर्ष ईदृक्षे, सर्वकामा(र्मा)र्पणक्षमे । कथं भवाम्यनाथोऽहं ?, मा भदन्त ! मृषा वद ॥१४॥ मुनिराह नार्थं पृच्छां(प्रोच्छां,-प्रोत्थां वा), वेत्स्यनाथस्य पार्थिव ! । यथा ह्यनाथो भवति, सनाथस्(श्च)नराधिप !(ः) ॥१५॥ राजन् ! कथयतः शृण्वव्याक्षिप्तेन हृदा मम । यथा नाथो भवेत् प्राणी, यथा प्रवर्तितं मया ॥१६॥ अत्र पूरस्ति कौशाम्बी, पुराणपुरभेदिनी । ममाऽऽसीद् जनकस्तत्र, प्रभूतधनसञ्चयः ॥ १७ ॥ वयसि प्रथमे राजंस्तदानीं वेदनाऽतुला । बभूव सर्वगात्रेषु, क्षापः(द्दः) स्तापोद्भवो मम ॥१८॥ शस्त्रं यथा (यथात्रास्त्रं) महातीक्ष्णं, शरीरविवरान्तरे । आपीडयेदरिः क्रुद्ध इत्थं मे वेदनाऽभवत् ॥ १९ ॥ त्रिकं ममाऽऽन्तरेच्छा चोत्तमाङ्गं पीड्यते भृशम् । इन्द्राशनिसमा घोरा वेदनाऽऽसीत् तदा मम ॥२०॥ उपस्थिता ममाचार्या, विद्या-मन्त्रचिकित्सकाः । अधीताः शास्त्रकुशला, मन्त्र-मूलविशारदाः ॥ २१ ॥ ते मे चिकित्सां कुर्वन्ति, चतुष्पादां यथाहितम् । मोचयन्ति च नो दुःखात्, तदेषाऽनाथता मम ॥२२॥ सर्वसारमपि पिता, मदर्थं दत्तवान् परम् । न मोचयति दुःखाच्च, तदेषाऽनाथता

निर्ग्रन्थर्षि-सम्बन्धः।

मम ॥ २३ ॥ माताऽपि मे महाराज !, पुत्रशोकार्दिता परम् । न मोचयति दुःखाच(मे दुःखं,-खात्), तदेषाऽनाथता मम ॥२४॥ ज्येष्ठाः कनिष्ठाश्चैकोदरोद्भवा मे सहोदराः। न(वि)मोचयन्ति(नो)दुःखाच(त्), तदेषाऽनाथता मम ॥२५॥ ज्येष्ठाः कनिष्ठा मे राजन् !, भगिन्यश्चैकमातृकाः । विमोचयन्ति नो दुःखात्, तदेषाऽनाथता मम ॥२६॥ भार्याऽपि मे महाराज ! साऽनुरक्ता त्वनुव्रता । नेत्राभ्यामश्रुपूर्णाभ्यामुरः सिञ्चति मेऽधिकम् ॥ २७ ॥ अन्यदन्नं च पानं च, स्नानं माल्य-विलेपनम् । अज्ञातं वा मया ज्ञातं, सा भुङ्क्ते नैव कर्हिचित् ॥ २८ ॥ नापयाति क्षणमपि, सा बाला पार्श्वतो मम । विमोचयति नो दुःखात्, तदेषाऽनाथता मम ॥ २९ ॥ ततोऽहमुक्तवानेवं, दुस्सहा एव वेदनाः । सकृदाभ्यश्चेत् मुच्येयं, ततो गृह्णामि संयमम् ॥ ३० ॥ एवमुक्त्वा तथा ध्यात्वा, प्रसुप्तोऽस्मि नराधिप ! । रात्रौ ततोऽतिक्रामन्त्यां, वेदना मे क्षयं गता ॥ ३१ ॥ प्रभातेऽहं ततः कल्यः, सर्वानापृच्छ्य बान्धवान् । क्षान्तो दान्तो निरारम्भः, प्रपन्नोऽनगारताम् ॥ ३२ ॥ ततोऽभवमहं नाथ आत्मनश्च परस्य च । त्रसाणां(नां) स्थावराणां च, सर्वेषां प्राणिनामपि ॥ ३३ ॥ आत्मा नदी वैतरणी, ममात्मा कूटशाल्मली । आत्मा कामदुघा धेनुरात्मा मे नन्दनं वनम् ॥३४॥ कर्त्ता विकरि(कर,-किर)ता चात्मा, दुःखस्य च सुखस्य च । आत्मा मित्रममित्रं(त्र-)च, दुःप्रस्थितः सुप्रस्थितः ॥ ३५ ॥ नृपैषाऽनाथताऽन्याऽपि, शृणु तामेकचित्ततः । निर्ग्रन्थत्वं यदासाद्य, सीदन्त्येकेऽधमा नराः ॥ ३६ ॥ यः प्रव्रज्य व्रतान्युच्चैः, प्रमादात् स्पृशतीह न । रसगृध्रोऽगृहीतात्मा, न च्छिनत्ति स बन्धनम् ॥ ३७ ॥ काचित् नायुक्तता यस्यास्तीर्या-भाषैषणादिषु । जुगुप्सनी(ना)यां नो धीर !, जातं मार्गमनुव्रजेत् ॥३८॥ चिरं मुण्डरुचिर्भूत्वा, तपोभ्रष्टोऽस्थिरमतः । आत्मानं क्लेशयित्वाऽपि, भवस्य स्यात् न पारगः ॥ ३९ ॥ पोल्ला मुष्टिर्यथाऽसारा, तथा कार्षापणोऽनृतः । राढामणिर्वैडूर्याभे, महर्घ्योऽज्ञेषु वै भवेत् ॥ ४० ॥ बृंहयित्वाऽऽजीविकार्थे, मुनिचिह्नं कुलिङ्गकम् । धृत्वा संयतमात्मानं, लपन् याति ( नमुपयाति ) विघात-

निर्ग्रन्थर्षिसम्बन्धः।

एवं विपययुग् धर्मो, व्यापन्नो हन्ति भूतवत् ॥ ४२ ॥ इत्यादि-
ताम् ॥ ४१ ॥ कालकूटं यथा पीतं, हन्ति शस्त्रं च दुर्धृतम्। व्रताचारगुणोपेतः, प्रपाल्यानुत्तरव्रतम्।
शिक्षणं श्रुत्वा, ज्ञानोपेतं सुभाषितम्। हित्वा मार्गं कुशीलानां, महर्षीणां व्रजेः पथा ॥ ४३ ॥ महायशा महाप्राज्ञो, विस्तरेण यथा-
निराश्रवः क्षयं नीत्वा, कर्मोपैति पदं ध्रुवम् ॥ ४४ ॥ एवमूचे महानिर्ग्रन्थीयं निर्ग्रन्थराडिदम्। साधो! लाभाः
श्रुतम् ॥ ४५ ॥ तुष्टश्च श्रेणिको राजा, कृताञ्जलिरदोऽवदत्। अनाथत्वं यथाभूतं, सुष्ठु मे दर्शितं त्वया ॥ ४६ ॥ महर्षेऽखिलदेहिनाम्।
सुलब्धास्ते, सुलब्धं च नृजन्म ते। सनाथाश्च भवन्तोऽत्र, स्थिता मार्गे यदर्हताम् ॥ ४७ ॥ नाथस्त्वमस्यनाथानां, भोगैस्तत्
भव(वि)ताऽऽत्मानमिच्छाम्यत्रानुशासयितुं मुने! ॥ ४८ ॥ आपृच्छ्य ध्यानविघ्नस्ते, यत् मया विहितो मुने!। निमन्त्रितश्च यद्
क्षमस्वाखिलं मम ॥ ४९ ॥ एवं स्तुत्वा स राट्सिंहो, मुनिसिंहं महादरात्। सावरोधः सतत्रश्च, शुद्धचित्तोपलक्षितः ॥ ५० ॥
उच्छ्वसितरोमकूपस्ततः कृत्वा प्रदक्षिणाम्। अभिवन्द्य च शीर्षेण, स्वस्थानमगमत् नृपः ॥ ५१ ॥ [युग्मम्] गुणैः समृद्धश्चान्योऽपि,
विप्रमुक्तो विहङ्गवत्। विजहारोर्वरापीठं, नष्टमोहस्तपोनिधिः ॥ ५२ ॥ इति श्रीनिर्ग्रन्थसम्बन्धः ॥

समुद्रपालमहर्षिवर्णनम्।

अथ श्रीसमुद्रपालर्षिनि(-र्षेर्नि-)र्वाणगमनमाहुः—[ ग्रन्थाग्रं ५००६ ]

**वज्झं नीणिज्जंतं, दट्ठु विरत्तो भवाउ निक्खंतो। निव्वाणं संपत्तो, समुद्दपालो महासत्तो ॥ १२० ॥**

व्याख्या—"वज्झं" ति 'वध्यं' वधार्हं–यथाविधान्यायकारिणं पुरुषविशेषं, "नीणिज्जंत" त्ति नीयमानं वध्यभूमाविति गम्यं, "दट्ठु" त्ति
दृष्टुं(दृष्ट्वा) विरक्तः 'भवात्' संसारात् निष्क्रान्त इति। शेषं सुगमम् ॥ १२० ॥ भावार्थस्तूत्तराध्ययनसूत्रानुसारादेवोच्यते। तथा हि—
चम्पाऽऽख्यायामभूत् पुर्यां, श्रावकः पालिताह्वयः। शिष्यो भगवतो वर्द्धमानस्य स्वामिनो वणिग् ॥ १ ॥ सोऽथ प्रवचनेऽत्यर्थं,

समुद्रपाल-महर्षि-वर्णनम् ।

निर्ग्रन्थे कोविदाग्रणीः। पोतेन व्यवहारार्थं, पिहुण्डं(ण्ड)पुरमाययौ ॥२॥ व्यवहारपरस्यास्य, कश्चित् कन्यां ददौ वणिक् । प्रतिगृह्य ससत्वां तां, स प्रतस्थे स्वनीवृति ॥ ३ ॥ सा प्रसूता सुतं वार्द्धिमध्ये पालितगेहिनी । समुद्रपालित इति, पित्रा नामास्य निर्ममे ॥ ४ ॥ आगात् क्षेमेण चम्पायां, पालितो निजवेश्मनि । सुखेन वर्द्धते तस्य, सौधे सूनुः सुखोचितः ॥ ५ ॥ द्वासप्ततिकलाभ्यासं, विदधे विधिवत् क्रमात् । पावनं यौवनं चाऽऽप, युवतीजनमोहनम् ॥ ६ ॥ कन्यकां रूपिणीं नाम्ना, पितृभ्यां परिणायितः । दोगुन्दुक इवावासे, स क्रीडति तया समम् ॥७॥ उच्चाऽऽवासगवाक्षस्थोऽद्राक्षीदिभ्यसुतोऽन्यदा । नीयमानं वध्यभूमौ, वध्यं वध्यक्रियाञ्चि(योचि)तम् ॥८॥ समुद्रपालितो दध्यौ, वीक्ष्य दीनाननं तकम् । अशुभानां पापकं हि, निर्यानं(-णं) कर्मणामहो ! ॥९॥ सम्बुद्धो भगवांस्तत्र, स संवेगं गतः परम् (संवेगमगमत्तराम्) । आपृच्छ्य माता-पितरौ, प्राव्राजीत् परमार्थवित् ॥ १० ॥ स्वं च शिक्षितवानेवं, त्यक्त्वा सङ्गं भयावहम् । रोचयेद् व्रतपर्यायं, व्रत-शील-परिग्रहैः ॥११॥ अहिंसा सत्यमस्तेयं, ब्रह्मचर्यापरिग्रहम् । महाव्रतान्युपादाय, चरेद् धर्मं जिनोदितम् ॥१२॥ क्षान्तिक्षमो ब्रह्मधारी, सर्वभूतदयापरः । सावद्यं वर्जयन् योगं, चरेद् भिक्षुः समाहितः ॥ १३ ॥ क्रियाकृद् विहरेद् राष्ट्रे, ज्ञात्वा स्वस्य बलाबलम् । त्रस्येत् न सिंहवत् शब्दं, श्रुत्वाऽसभ्यं वदेत् न तु ॥१४॥ उपेक्षमाणस्तद् गच्छेत्, सहेत प्रियमप्रियम् । पूजां गर्हां भवान् सर्वान्, न सर्वत्राभिरोचयेत् ॥ १५ ॥ अनेके स्युर्नृषु छन्दास्तस्यतो यान् श्रयेत् मुनिः । उपसर्गा व्रते रौद्रा, दिव्याद्याः सम्भवन्त्यपि ॥ १६ ॥ परीषहा दुस्सहाः स्युर्यत्र सीदन्ति कातराः । तत्रस्थो न व्यथेतर्षी, रणस्थ इव नागराट् ॥ १७ ॥ शीतोष्ण-दंश-मशगाः, स्पर्शाः स्पृशन्ति चाङ्ग(ङ्गि)कम् । अकुकूजः सहेतर्षिः, प्राक्कृतं क्षपयेद् रजः ॥१८॥ त्यक्त्वा रागं तथा द्वेषं, मोहं चर्षिर्विचक्षणः । मेरुवत् मरुताऽकम्प्यः, सहेतोग्रपरीषहान् ॥ १९ ॥ अनुन्नतो भा(ना)वनतः, सज्जे(जे)द् गर्हां न चार्हणाम् । ऋजुभावं प्रपद्यौघैर्मुक्तिमार्गमुपैति सः ॥ २० ॥

रत्यरतिसहः क्षीणसंस्तवो विरतोऽहसः । परमार्थपदे तिष्ठत्यशोकोऽकिञ्चनोऽममः ॥ २१ ॥ विव(वि)क्तोपाश्रयान् निर्लेपान् सेवेत ह्यसं-स्तृ(स्मृ,-स्तृ)तान् । अत एवर्षिसंसेव्यान्, स्पृशेत् तन्वा परीषहान् ॥ २२ ॥ स ज्ञानावगमोपेतश्चरित्वा धर्मसञ्चयम् । अनुत्तरज्ञानधरो, रविवद् भासतेऽम्बरम् ॥ २३ ॥ क्षपयित्वा पुण्य-पापे, विप्रमुक्तो निरञ्जनः ।' तीर्त्वा समुद्रपालर्षिर्भवौघमगमत् शिवम् ॥ २४ ॥

इति श्रीसमुद्रपालमहर्षिप्रबन्धः ॥

अथ जयघोष-विजयघोषयोः शिवगमनमाह—

**जयघोसेणं पडिबोहिऊण पव्वाविओ विजयघोसो । कासवगुत्ता ते दो वि, समणसीहा गया सिद्धिं ॥ १२१ ॥**

व्याख्या—गाथार्थः सुगम एव ॥ १२१ ॥ भावार्थस्तूच्यते—

पुरा वाराणसीपुर्यां, भ्रातरौ युग्मजौ द्विजौ । जयघोष-विजयघोषाभिधानौ बभूवतुः ॥ १ ॥ जयघोषोऽन्यदा प्रातः, स्नातुं भागीरथीं ययौ । ददर्श तत्तटे दैवादिदं संसारचेष्टितम् ॥ २ ॥ सर्पेण दर्दुरो ग्रस्तः, सर्पो ग्रस्तो वनोतुना । रसन्तं तं तथाऽप्युच्चैः, सर्पः खादति दर्दुरम् ॥ ३ ॥ इतस्ततः स्फुरन्तं तं, खादत्योतुर्महोरगम् । तद् वीक्ष्य जयघोषोऽथ, दध्यौ वैराग्यगर्भितः ॥ ४ ॥ अहो ! असारताऽसारसंसारस्यास्य कीदृशी ? । यो यस्य प्रभवत्यत्र, ग्रसते दुर्बलं स तम् ॥ ५ ॥ यमराजस्तु सकलान्, ग्रसते निर्दयं बलात् । तद् धर्म एव जन्तूनां, सर्वव्यसनरक्षकः ॥६॥ चिन्तयन्निति सम्बुद्धो, गङ्गामुत्तीर्य सत्वरम् । प्राव्राजीत् श्रमणोपान्ते, जयघोषो द्विजाग्रणीः ॥ ७ ॥ स मुनिर्विहरन् ग्रामानुग्रामं चान्यदाऽऽययौ । पुरीं वाराणसीं तस्थौ, बहिश्चारामभूमिषु ॥ ८ ॥ पुर्यां विजयघोषाख्य-स्तदा तत्राभवद् द्विजः । तेन धर्मधियाऽऽरब्धो, यज्ञो ज्ञानोज्झितात्मना ॥ ९ ॥ स मुनिस्तत्र भिक्षार्थं, तदाऽगात् मासपारणे । याज-



समुद्रपालमहर्षिवर्णनम् । जयघोषविजयघोषमहर्षिद्वयप्रबन्धः ।

केन निषिद्धश्च, भिक्षां दास्यामि नात्र ते ॥ १० ॥ ये च वेदविदो विप्रा, ये च यज्ञप्रयोजनाः । पारगा धर्मशास्त्राणां, ज्योतिषाङ्गविदश्च ये ॥ ११ ॥ ये समर्थाः समुद्धर्तुं, परमात्मानमेव च । तेषामन्नमिदं देयं, भो भिक्षो ! सर्वकामिकम् ॥ १२ ॥ [ युग्मम् ] प्रतिषिद्धः स तत्रैवं, याजकेन महामुनिः । न रुष्टो नैव तुष्टश्च, स्वोत्तमार्थगवेषकः ॥ १३ ॥ नान्नार्थं पानहेतुं वा, निर्वाहार्थं न चाऽऽत्मनः । मुनिस्तस्य विमोक्षार्थमिदं वचनमब्रवीत् ॥ १४ ॥ न वेदानां मुखं वेत्सि, यज्ञानां नापि यत् मुखम् । नक्षत्राणां मुखं यश्च, धर्माणां यत् च वा मुखम् ॥ १५ ॥ ये समर्थाः समुद्धर्तुं, परमात्मानमेव च । तानपि त्वं न जानासि, जानास्यथ तवो वद ॥ १६ ॥ प्रश्नप्रतिवचस्तस्याश-कुवन् दातुमग्रजः । सतत्रः प्राञ्जलिर्भूत्वा, तं पप्रच्छ महामुनिम् ॥ १७ ॥ वेदानां च मुखं ब्रूहि, यज्ञानां ब्रूहि यत् मुखम् । नक्षत्राणां मुखं ब्रूहि, धर्माणां ब्रूहि यत् मुखम् ॥ १८ ॥ ये समर्थाः समुद्धर्तुं, परमात्मानमेव च । एतान् मे संशयान् सर्वान्, पृष्टो वदे(द)ति संयत ! (तः) ॥ १९ ॥ अग्निहोत्रमुखा वेदा, यज्ञार्थी वेदसां मुखम् । नक्षत्राणां मुखं चन्द्रो, धर्माणामृषभो मुखम् ॥२०॥ चन्द्र(एवं)-महायास्तिष्ठन्ति, कृतप्राञ्जलयो यथा । वन्दमाना नमस्यन्तस्तथेन्द्रप्रमुखाः प्रभुम् ॥ २१ ॥ ते यज्ञवादिनोऽज्ञाना, विद्या-ब्राह्मण-सम्पदाम् । गूढाः स्वाध्याय-तपसां, भस्मच्छन्ना इवाग्नयः ॥ २२ ॥ यो लोके ब्राह्मणः प्रोक्तो, यथाऽग्निर्महितस्तथा । सदा कुशलसन्दिष्टं, तं ब्रूमो ब्राह्मणं वयम् ॥ २३ ॥ सङ्गं करोति नाऽऽत्मीयैः, स्थानाद् गच्छन् न शोचते । रमते योऽर्हतां वाक्ये, तं ब्रूमो ब्राह्मणं वयम् ॥ २४ ॥ जातरूपं यथा मृष्टमग्निनिर्ध्मातकिट्टिकम् । राग-द्वेष-भयातीतं, तं ब्रूमो ब्राह्मणं वयम् ॥ २५ ॥ त्रसांश्च स्थावरान् जन्तून्, त्रिविधेन न हन्ति यः । हास्य-लोभ-भय-क्रोधात्, मिथ्या वदति यश्च न ॥ २६ ॥ सचि(चि)त्ताचित्तमल्पं वाऽऽदत्तेऽदत्तं न वा बहु । न सेवते मैथुनं यस्तं ब्रूमो ब्राह्मणं वयम् ॥२७॥ [ युग्मम् ] यथा पद्मं जले जातं, वारिणा नोपलिप्यते । एवं कामैरलिप्तो यस्तं ब्रूमो ब्राह्मणं वयम् ॥२८॥

अलोलुपो मुधाजीव्यनगारोऽकिञ्चनश्च यः । असंसक्तो गृहस्थैर्यस्तं ब्रूमो ब्राह्मणं वयम् ॥ २९ ॥ पशुबन्धाः(वधाः) सर्ववेदा, यजनं पापकर्मकृत् । त्रायन्ते नैव यष्टारं, कर्माणि बलवन्ति यत् ॥ ३० ॥ न मुण्डितेन श्रमण ॐकारेण न ब्राह्मणः । मुनिर्नारण्यवासेन, वल्कलेन न तापसः ॥ ३१ ॥ श्रमणः स्यात् समत्वेन, ब्राह्मणो ब्रह्मचर्यतः(पालनात्) । ज्ञानेनैव मुनिः स्यात् च, तपसा तापसः पुनः ॥ ३२ ॥ कर्मणा ब्राह्मणोऽपि स्यात्, कर्मणा क्षत्रियो भवेत् । कर्मणा तु भवेद् वैश्यः, शूद्रो भवति कर्मणा ॥ ३३ ॥ एतान् प्रादुश्चकारार्हन्, स्नातको यैर्भवेदिह । सर्वकर्मविनिर्मुक्तं, तं ब्रूमो ब्राह्मणं वयम् ॥ ३४ ॥ एवं गुणसमायुक्ता, ये भवन्ति द्विजोत्तमाः । ते समर्थाः समुद्धर्तुं, परमात्मानमेव च ॥ ३५ ॥ एवं विजयघोषाख्यस्तद्वचश्छिन्नसंशयः । भ्रातरं जयघोषाख्यं, तं मुनिं ज्ञातवांस्तदा ॥ ३६ ॥ तुष्टो विजयघोषश्च, कृताञ्जलिरदोऽवदत् । ब्राह्मणत्वं यथाभूतं, महात्मन्! सुष्ठु दर्शितम् ॥ ३७ ॥ यज्ञानामपि यष्टारो, यूयं वेदविदस्तथा । ज्योतिषाङ्गविदो यूयं, यूयं धर्मस्य पारगाः ॥ ३८ ॥ समर्था यूयमुद्धर्तुं, परमात्मानमेव च । कुर्वन्तु भिक्षया भिक्षुमुख्याः तत् मय्यनुग्रहम् ॥ ३९ ॥ मुनिराह न कार्यं मे, भिक्षया प्रव्रज द्विज ! । भ्रमिष्यसि भयावर्त्ते, मा घोरे भवसागरे ॥ ४० ॥ उपलेपो भवेद् भोगैरभोगी नोपलिप्यते । भोगी भ्रमति संसारे, ह्यभोगी विप्रमुच्यते ॥ ४१ ॥ क्षिप्तावार्द्रश्च शुष्को द्वौ, गोलकौ मृत्तिकामयौ । द्वावप्यास्फालितौ कुड्ये, य आर्द्रः स लगत्यहो! ॥ ४२ ॥ दुर्मेधसो लगन्त्येवं, ये नराः कामलालसाः । न लगन्ति विरक्ताश्च, यथा शुष्कश्च गोलकः ॥ ४३ ॥ इत्थं विजयघोषोऽसौ जयघोषस्य सन्निधौ । अनगारत्व निष्क्रान्तः, श्रुत्वा धर्ममनुत्तरम् ॥ ४४ ॥ क्षपयित्वाऽऽत्मकर्माणि, तपसा संयमेन च । जयघोष-विजयघोषाख्यौ प्राप्तौ क्रमात् शिवम् ॥ ४५ ॥ इत्युत्तराध्ययनपञ्चविंशत्यध्ययनसूत्रोक्तानुसारेण जयघोष-विजयघोषमहर्षिसम्बन्धः ॥

अथाऽन्नि(न्वि)कापुत्राचार्यं वन्दनक्रियागोचरं चरीकरीमि—

**जायं पयागतित्थं, देवेहि कयाए(इ) जस्स महिमाए । गंगाए अंतगडं, तं वंदे अन्नियापुत्तं ॥ १२२ ॥**

व्याख्या—जातं प्रयागतीर्थं, देवैर्यस्य महिमायां कृतायां, कस्यां ? गङ्गायां, "अंतगड" ति अन्तकृत्केवलिनं, शेषं सुगमम् ॥१२२॥

भावार्थः कथानकेनोच्यते । तथा हि—

अस्त्यत्र भरतक्षेत्रे, मथुरानगरीद्वयम् । तत्रोत्तरस्यां विश्येका, दक्षिणस्यां परा पुनः ॥ १ ॥ अथोत्तरमथुरातस्तां याम्यमथुरापुरीम् । आगादेको वणिक्पुत्रो, दिग्यात्रार्थं महार्थवान् ॥ २ ॥ तत्रत्यश्रेष्ठिनैकेनामुष्य सख्यमभूत् समम् । न्यमन्त्रि तेन भुक्त्यर्थं, तस्याऽह्नि तदादिमम् ॥ ३ ॥ भोजनायोपविष्टेऽस्मिन्, श्रेष्ठिनोऽस्य स्वसाऽन्निका । तालवृन्तकरा वातोपचारैस्तमुपाचरत् ॥ ४ ॥ तस्याः स श्रेष्ठिसू रूपं, निर्वर्ण्य वर्णनातिगम् । पादादारभ्य शीर्षान्तं, रागमस्तोऽभवत्तराम् ॥ ५ ॥ साऽर्थिता स्वजनैरुक्तमेना दद्मस्तदा वयम् । यद्यापत्यसम्पत्तिं, यावत् त्वमिह तिष्ठसि ॥६॥ तथैव स्वीकृते तेन, जातोद्वाहोऽत्र तिष्ठति । ससुखं साऽन्वि(न्नि)काऽन्येद्युर्गुर्व्यभूद् गृह(हि)धर्मतः ॥ ७ ॥ इतश्च लेखस्तत्पित्रोरागात् तत्र लिपीकृतम् । यदश्रुभिर्दृशोः शोकाद्, यत्साऽऽन्ध्यं बाधतेऽधिकम् ॥ ८ ॥ जीवन्तौ प्रेक्षसे चेत् नौ, तदागच्छेद्रुत सुत ! । मुञ्चन्नश्रूणि त लेखं, वाचयामास दारकः ॥ ९ ॥ दृष्टः पृष्टस्तया नोचे, वाचयित्वा ततः स्वयम् । उक्तो मा खिद्यथा भर्तः !, सर्वं भव्यं भविष्यति ॥ १० ॥ ततस्तयोदित पित्रोस्ताभ्यां प्रस्थापितोऽथ सः । सकलत्रोऽर्द्धमार्गेऽपि, प्रासूत सुतमन्वि(न्नि)का ॥११॥ करिष्यतोऽभिधा सूनोः, पितराविति तेन न । मार्गे तस्यार्पितं नाम, पितृवक्त्रा हि सत्सुताः ॥१२॥ उल्लापयन् परिजनोऽन्निकापुत्रस्तमित्यवक् । सन्नायातस्तदेवास्य, पितरौ नाम चक्रतुः ॥१३॥ ववृधे चन्द्रलेखेवाऽन्वि(न्नि)कापुत्रः पितुर्गृहे । ययौ च

यावनवनप्रोढं प्रोढ इवोन्मदः ॥ १४ ॥ तदैव लघुकर्मत्वात्, लब्धभोगोऽग्रहीद् व्रतम् । विजहाराऽन्वि(न्नि)कासूनुर्भूत्वाऽऽचार्यः क्रमात् महीम् ॥ १५ ॥ पुष्पभद्रपुरेऽन्येद्युरागाद् गङ्गातटस्थिते । पुष्पकेतुर्नृपस्तत्र, तत्प्रिया पुष्पवत्यभूत् ॥ १६ ॥ सा पुत्र-पुत्रिकारूप, प्रासूत युगपद् युगम् । अन्योन्यं प्रेमसंयुक्तमपत्यमिव युग्मिनाम् ॥ १७ ॥ तद् वीक्ष्याचिन्तयद् भूपो, म्रियते हि वियोजितम् । तदेतद् गृहिधर्मत्वे, योजयामि परस्परम् ॥ १८ ॥ जनापवादरक्षार्थं, सदस्याहान्यदा नृपः । यदत्रोत्पद्यते रत्नं, सभ्याः ! स्यात् कस्य तद् वशे ? ॥ १९ ॥ सर्वे तेऽप्यूचिरे राज्ञे(ज्ञो), राजोचे तर्हि युग्मयोः । अनुरूपोऽस्तु संयोगः ( योजयामि विवाहं भोः ! ) स्वर्ण-मण्योरिवैतयोः ॥ २० ॥ पुष्पचूल-पुष्पचूलयोर्द्वयोर्युग्मजन्मनोः । राजा राज्या निषिद्धोऽपि, चक्रे पाणिग्रहोत्सवम् ॥ २१ ॥ मिथस्तावभिरेमाते, श्राविका पुष्पवत्यपि । तस्मात् प्रव्रज्य निर्वेदाद्, देवोऽभूत् परमर्द्धिकः ॥ २२ ॥ पुरे तस्मिन् मृते ताते, पुष्पचूलो नृपोऽभवत् । प्रियेऽप्यघेरधिस्नेहो ददर्शाऽश्वासुरः स(सु)ताम् ॥ २३ ॥ मा नरकेष्वघाद् याति, स्वप्ने तानि न्य(त्य)दर्शयत् । रात्रौ रात्रौ ततो भीता, पुष्पचूलाऽऽह भूभुजम् ॥ २४ ॥ प्रातः पाखण्डिनैः पृष्टा, राज्ञाऽऽहुस्ते यथा तथा । अन्निकासूनवस्तेषां, स्वरूपमिदमभ्यधुः ॥ २५ ॥ नित्यान्धकारा बीभत्साः, क्षुत्-तृड् रोगोग्रविमर्दैः । नारकैर्नित्यमाक्रान्ताः, स्मृता अपि भयावहाः ॥ २६ ॥ तयोक्तं भगवन् ! स्वप्नः किमद्य दृष्टो ? यतः । यथार्थं वित्थ तेऽप्यूचुर्विद्मोऽर्हद्वचनैर्वयम् ॥ २७ ॥ देवलोकाः पुनः कालान्तरेऽस्या दर्शितास्तया । पुनः पाखण्डिनः पृष्टा, वैपरीत्येन चाभ्यधुः ॥ २८ ॥ यथास्थानन्निकापुत्राचार्याः प्रोचुरथाऽऽह सा । देवलोकाः कथं लभ्याः ?, कथं न नरके गतिः ? ॥ २९ ॥ तैरुक्तः साधुधर्मोऽथ(-त्र), राज्ञी पप्रच्छ पार्थिवम् । प्रव्रार्थं सोऽवदद् भिक्षा, ग्राह्या खलु (यथादत्से भिक्षां) मदास्पदे ॥ ३० ॥ प्रपद्य तत् तया दीक्षां, गृहीता सूरयोऽप्यथ । तस्थुर्जङ्घाबलक्षीणा, गणं प्रस्थाप्य तत्र तु(नु) ॥ ३१ ॥ पुष्पचूला



अन्निकापुत्राचार्यकथा ।

अन्निका-पुत्राचार्य-कथा ।

नृपावासाद्, भक्तमानीय यच्छति । गुरुभ्यः शुभभावेनोत्पेदेऽस्याः केवलं क्रमात् ॥ ३२ ॥ प्राक्प्रवृत्तं न विनयं, भनक्ति किल केवली । कालोचितं मनश्चिन्त्यं, भक्तं तेभ्यः स यच्छति ॥ ३३ ॥ श्लेष्मघ्नं श्लेष्मणः काल इत्याद्यवसरोचितम् । भक्तं ह्यचिन्तितं वत्से', वेत्सि किं ? सूरयोऽवदन् ॥३४॥ अन्ये त्वाहुर्घने वर्षत्यानीतेऽन्नेऽथ तेऽभ्यधुः । किमेतत् साध्वि !? साऽऽहाऽऽगां, प्रासुकाम्भसि सूरयः ! ॥ ३५ ॥ प्रासुकाप्रासुकविधिं, वेत्सि वत्से ' घने कथम् ? । साऽऽहातिशयतः ? कीदृग्, स तु ? केवललक्षणः ॥ ३६ ॥ केवल्याशातना चक्रे, हा ! चक्रुः सूरयोऽधृतिम् । सोचे चोत्तरता गङ्गां, केवलं भावि वोऽपि हि ॥ ३७ ॥ उत्तस्थुर्द्रुतमाचार्याः, को लाभे ह्यलसायते ? । गङ्गायां नावमारूढाः, स्वयं सज्जीकृतां जनैः ॥ ३८ ॥ यत्राऽन्नि(न्नि)कासुताऽऽचार्यास्तस्थुः कोणे तथान्तरा । तत्र मज्जति नौः क्षिप्ता, जनैश्चोत्पाट्य तेऽम्भसि ॥ ३९ ॥ सुरेणाम्भस्यधःशूलं, दध्रेऽस्य प्राग्भववारिणा । तेन विद्धः शुभध्यानात्, केवलज्ञानमाप सः ॥ ४० ॥ सिद्धश्च निर्मितो देवैर्महिमा तस्य वर्ष्मणः । प्रयागं नाम तत् तीर्थं, प्रतस्थे (पप्रथे) तत्र विश्रुतम् ॥ ४१ ॥ कलेवरं जलचरैः, ग्लाघमानं तदम्भसि । गङ्गाकूले क्वचित् लग्नं, प्रेर्यमाणं अलोर्मिभिः ॥ ४२ ॥ दैवाद् दक्षिणदंष्ट्रायां, पाटलेर्बीजमाविशत् । भित्त्वा करोटिं तद् जज्ञे, शाड्वलः पाटलिद्रुमः ॥ ४३ ॥ तेनोपलक्षिते स्थाने, पाटलीपुत्रपत्तनम् । उदायिभूभुजा न्यस्तं, कूणिकस्य पितुः शुचा ॥ ४४ ॥ इत्यन्वि(न्नि)कासूसूरीणां, सम्बन्धोऽधिकसम्पदाम् । आवश्यकानुसारेणाऽऽविष्कृतः कृतिनां मुदे ॥ ४५ ॥ इत्यन्वि(न्नि)कापुत्राचार्यकथा ॥ अथ धर्मरुचिमहर्षेर्मुक्तिप्राप्तिः प्ररूप्यते—

धर्मरुचि-महर्षि-वक्तव्यता ।

**सुट्ठीभत्ते मासखंस, पारणए रोहिणीइ कडुतुंबं । दिन्नं दयाइ भुत्तं(त्तुं), धम्मरुई मुत्तिमणुपत्तो ॥ १२३ ॥**

व्याख्या—गाथार्थः सुगमः [एव] ॥ १२३ ॥ भावार्थश्चायम्—

रोहीतके पुरे जी(जू)र्णगणिका रोहिणीत्यभूत्। अनन्यजीविकोपाया, राध्नोति गोष्ठिकोदनम् ॥ १ ॥ संस्कृतं संस्कृतद्रव्यैः, कटुतुम्बं तयाऽन्यदा। स्वयं स्वादु(द)परीक्षार्थं, दत्तस्तद्विन्दुरानने ॥ २ ॥ अतीवकटुको लब्धस्तदेकत्रैव रक्षितम्। अन्यल्ललितगोष्ठ्यर्थं, पक्वं मा निन्दिताऽभवम् ॥ ३ ॥ गोष्ठ्यां गतायां मुक्त्वाऽन्नं, मासक्षपणपारणे। मुनिर्धर्मरुचिः प्राप्तो, भिक्षार्थं रोहिणीगृहम् ॥ ४ ॥ दत्तं तुम्बं तयाऽ(त)स्मै मा, मुधा याति(तु) धियेति तत्। अपूर्वलाभं मन्वानः, स गत्वाऽऽलोचयद् गुरोः ॥ ५ ॥ ज्ञातं(त्वा)विषोपमं तत् तैर्मुनिरुक्तो यहिस्त्यज। भक्षितं मृत्यवे ह्येतत्, तत् त्यक्तुं [illegible] गतोऽटवीम् ॥ ६ ॥ मुञ्चतः पात्रकं भूमौ, लिप्तस्तेन मुनेः करः। लुपितस्तत्र गन्धेनाऽऽयाता मधुश्च कीटिकाः ॥ ७ ॥ भूयसामङ्गिनां घातः, स्यात् ममैव मृतिर्वरम्। इति ध्यात्वा प्रतिलिख्य, मुमुक्षुर्मुखपोतिकाम् ॥ ८ ॥ एकत्र स्थण्डिले स्थित्वा, निन्दंस्तद् भुक्तवांस्ततः। तीव्राऽभूद् वेदना सम्यग्, विपह्याऽऽप शिवश्रियम् ॥ ९ ॥ इति श्रीधर्मरुचिकथा ॥

धर्मरुचिमहर्षिवक्तव्यता।

अथ चतुर्णां महर्षीणां सिद्धिगमनमाह—

**उज्जुय वंके पत्तेयबुद्ध रुद्दे य कोसियज्जे य। उज्झाए तब्भज्जा, जयंति चउरो वि सिद्धाइं ॥ १२४ ॥**

व्याख्या—'ऋजुकः' सरलप्रकृतिः स चाऽङ्गर्षिनाम्ना(मा) ख्यातः, 'वक्रः' दुष्टस्वभावः रुद्राख्यः, स प्रत्येकबुद्धोऽभूदिति योजना कार्या। 'चः' पुनः कौशिकार्याख्य उपाध्यायः 'तद्भार्या' उपाध्यायानी। जयन्ति चत्वारोऽपि सिद्धानि। प्रव्रज्येति शेषः। इति गाथार्थः ॥ १२४ ॥ भावार्थोऽप्ययम्—

चतुर्महर्षिकथा।

चम्पायां कौशिकार्याख्य उपाध्यायोऽभवद् द्विजः। तस्याऽङ्गर्षिस्तथा रुद्रः, शिष्यावेतौ बभूवतुः ॥ १ ॥ अङ्गको भद्रकस्तेनाऽङ्गर्षिस्तस्याभिधाऽभवत्। रुद्रको रौद्रहृद् ग्रन्थिच्छेदकस्तत्तथाऽस्य सा ॥ २ ॥ एधोऽर्थमन्यदा प्रेषि, गुरुणा तावुभौ वने। साय-

रन्त्वा सर्वदिनं स्मृत्वा, तमर्थं रुद्रकोऽचलत् । दध्यौ वीक्ष्य तमायान्तमथ निस्सारि-
मङ्गर्पिः काष्ठान्यादायाऽऽयाद् ऋजुवर्त्मना ॥ ३ ॥ दत्त्वा ज्योतिर्यशा भक्तं दारुभारादिवैति च ॥ ५ ॥ तां हत्वैकत्र
तोऽस्मि हा ! ॥ ४ ॥ इतश्च वत्सपालस्य, पन्थकस्य शिशोः प्रसूः । गुरो ! सुन्दरशिष्येण, तव ज्योतिर्यशा
गर्त्तायां, लात्वाऽस्या दारुभारकम् । एत्यन्यवर्त्मना रुद्रो, धुन्वन् हस्तावदोऽवदत् ॥ ६ ॥ जातजातिस्मृतिर्भवम् । प्रपद्य केवलं लेभे,
हता । स आगतो बहिर्निष्कासितः क्रोधाद् ययौ वनम् ॥ ७ ॥ चिन्तयंस्तत्र सद्ध्यानाद्, रुद्रोऽदः शुभकर्मतः ॥ ९ ॥
महिमाममरा व्यधुः ॥ ८ ॥ अभ्याख्यानं ददौ रुद्रोऽस्मै जनेभ्योऽभ्यधुः सुराः । निन्द्यमानो जनैर्दध्यौ, उपाध्यायः सभार्योऽपि,
अभ्याख्यानं मयाऽसत्यं, प्रदत्तमिति चिन्तयन् । सम्बुद्धः सोऽभवत् प्रत्येकबुद्धश्चाग्रहीद् व्रतम् ॥ १० ॥
वैराग्याद् व्रतमग्रहीत् । उत्पाद्य केवलज्ञानं, चत्वारोऽपि ययुः शिवम् ॥ ११ ॥ इति चतुर्महर्षिकथा ॥

चतुर्महर्षिकथा ।

अथ देविलासुतराजर्षेः शिवसुखाप्तिमाह—

देविलासुत-राजर्षि-वर्णनम् ।

**भवियव्वं भो ! खलु सव्वकामविरएण एयमज्झयणं । भासित्तु देविलासुयरायरिसी सिवसुहं पत्तो ॥ १२५ ॥**

व्याख्या—'भोः !' इति भव्यामन्त्रणे । 'खलु' इति निश्चयेन सर्वकामविरक्तैर्भाव्यं भवद्भिरिति गम्यम्, शेषं सुगमम् ॥ १२५ ॥

भावार्थः कथानकगम्यः । तच्चेदम्—

उज्जयिन्यामभूत् पुर्यां, पार्थिवो देविलासुतः । अनुरक्तलोचनाऽऽख्या, प्रियाऽस्याऽऽरक्तलोचना ॥ १ ॥ नृपोऽन्यदाऽस्ति(ऽऽस्ते)
शय्यायां, विवृणोति प्रिया कचान् । तदन्तः पलितं दृष्टं, जरालक्षणमक्ष(-लक्षि-)तम् ॥ २ ॥ साऽऽह देवाऽऽगतो दूतः, सम्भ्रान्तो भूमिभृद्

भृशम् । उत्थायेतस्ततः पश्यन्नापश्यत् तं तयोदितम् ॥३॥ क्वासौ प्रिये ! नृपोऽपृच्छत् ?, धर्मदूतस्तु साऽवदत् । तयाऽऽवेद्य ततोऽङ्गुल्या, शनैः पलितमुद्धृतम् ॥ ४ ॥ आच्छाद्य क्षौमयुग्मेन, स्वर्णस्थाले पुरान्तरे । भ्रामयित्वा तमधृतिं, चक्रे भूपो भृशं हृदि ॥ ५ ॥ प्रापुर्मेऽनागतेऽप्यस्मिन्, प्रव्रज्यां पूर्वजप्रजाः । ततः पद्मरथं राज्याधिष्ठातारं सुतं व्यधात् ॥ ६ ॥ स्वयं राज्या समं राजा, तापसव्रतमग्रहीत् । तथाऽनुमतिका दासी, दासः सङ्गतकोऽपि च ॥ ७ ॥ सर्वे सितगिरौ जग्मुस्तपोऽर्थं तापसाश्रमे । कालान्तरे व्रतं त्यक्त्वा, दासी दासश्च जग्मतुः ॥ ८ ॥ गर्भः पूर्वमनाख्यातो, महिष्या ववृधे तदा । अयशोभीरुणा राज्ञी, भूभुजा रक्षिता रहः ॥ ९ ॥ सौकुमार्यात् सुतां राज्ञी, प्रसुवाना व्यपद्यत । पिबन्ती स्तन्यमन्यासां, तापसीनां च सैधते ॥ १० ॥ कृतं नामाऽर्द्धसंकाशा, तस्याः सा प्राप यौवनम् । अटव्या आगतं तातं, श्रान्तं विश्रामयति स्म सा ॥११॥ सुकुमारकरस्पर्शात्, तस्यां रक्तोऽभवत् नृपः । गृह्णामि चाद्य कल्ये वा, चिन्तयन्निति वस्थिवान् ॥१२॥ तामाश्लेष्टुमधाविष्टोटजकाष्ठे नृपोऽन्यदा । चस्खाला( स्खलनाद-)चिन्तयत् चित्ते, धिङ् मां कामान्ध(न्ध्य)-यायितम् ॥ १३ ॥ प्रेत्य न ज्ञायते किं स्यादेतत्र फलमैहिकम् ? । सम्बुद्धश्चावधिज्ञानं, लेभे कर्मक्षयोद्भवम् ॥ १४ ॥ सर्वकामविरक्तेन, भाव्यं भोः ! खलु देहिना । बभाषेऽध्ययनं चैतद्, राजर्षिर्देविलासुतः ॥ १५ ॥ विरक्तां तां सुतां दत्त्वा, संयतीभ्यः स्वयं नृपः । उत्पाद्य केवलं सिद्धोऽर्द्धसङ्काशाऽपि निर्वृता ॥ १६ ॥ इति श्रीदेविलासुतराजर्षिकथा ॥



अथ कूर्मा(र्मी)पुत्रमहर्षिं नमस्करोति सूत्रकारः—



**दोरयणिपमाणतणू, जहन्नउगाहणाए जो सिद्धो । तमहं तिगुत्तगुत्तं, कुम्मापुत्तं नमंसामि ॥ १२६ ॥**



व्याख्या—तमहं कूर्मा(र्मी)पुत्रं "नमंसामि" त्ति नमस्ये इति सण्टङ्कः । कोऽसौ ? यः सिद्धः, कस्यां ? जघन्यावगाहनायां,

किम्भूतः ? "धीरयणिपमाणतणू" त्ति द्वौ रत्नी-सामयिकीमापया हस्तावुच्येते तौ प्रमाणं तनुः-शरीरं यस्य सः । शेषं सुगमम् ॥१२६॥ गम्भ्रशायन्तु विशिष्टाम्नायाभावान् नोक्तः । यथाज्ञातः समयज्ञैः स्वयमभ्यूह्यः ॥

अथ चण्डरुद्राचार्यशिष्यमभिधादयन्ति—

**जो भासयसुहहेऊ, जाओ गुरुणो वि उवसमसहावो । तं चंडरुद्दसीसं, वंदे सेहं पि वरनाणं(णिं)॥ १२७ ॥**

व्याख्या—गाथार्थः कथानिकयैव स्पष्टः ॥ १२७ ॥ सा चेयम्—

चण्डरुद्राचार्यशिष्यसम्बन्धः।

आचार्यश्चण्डरुद्राख्यो, यथार्थश्चण्डरोषवः । इहसुज्जयिनीमागाद्, रथयात्रामहोत्सवम् ॥१॥ तत्रेभ्यदारकः कश्चिद्, वेश्याऽऽवास-गिराहतः । सजाति-कुलसम्पन्न, एतर्षीणां पुरो जगौ ॥ २ ॥ दद्ध्वं भिक्षवो ! दीक्षां, तेनोक्तेऽश्रद्धानतः । प्रेषितश्चैर्गुरोः पार्श्वे (र्श्वं), धूम्यतां कलिना कलिः ॥ ३ ॥ ततस्तैर्दीक्षितो लोचं, कृत्वा स्वजनभीतितः । प्रावश्चाल शिष्योऽग्रे, पृष्ठतो रोपणो गुरुः ॥ ४ ॥ जग्रानं स्खलनायां स्याद्, गुरो(रु)र्दपदि पादयोः । दुष्टेक्षसे न दीत्युक्त्वा, शीर्षे दण्डेन हन्ति तम् ॥ ५ ॥ सेहे दीक्षः क्षमी सम्यक्, न दुदैवं व्यचिन्तयत् । हा ! हा ! (हहा !) मया महात्माऽसौ, साधुसङ्गा(ज्ञा)द् वियोजितः ॥ ६ ॥ अथाऽऽवश्यकवेलायां, शिष्यो गुरुनिरीक्षितः । शरद्रुधिरलिप्ताङ्गो, घातुमग्निरिवाद्रिवत् ॥ ७ ॥ मिथ्या मे दुष्कृतमिति, वैराग्याद् वदतो गुरोः । केवलज्ञानमुत्पेदे, तेनेन्न केवलमविचः ॥ ८ ॥ दीक्षस्यापि तदुत्पेदे, वदेव वहहो ! क्षमा । द्वयोर्निस्तारिणी चण्डरुद्र-शिष्यकयोरिव ॥ ९ ॥ इति श्रीचण्डरुद्राचार्यशिष्यसम्बन्धः ॥

अथ स्वरूपेण श्रीधन्यनहर्षेः मर्वार्थसिद्धिगमनमाह—

यत्तीसं जुवइवई, जो कायंदीपुरीइ पवइओ। छट्ठस्स सया पारणमुज्झियमायंबिलं तस्स ॥ १२८ ॥
वीरपसंसियतव-रूव-लच्छि(द्धि)नवमाससुकयपरियाओ। सो धन्नो सव्वट्ठे, पत्तो इक्कारसंगविऊ ॥ १२९ ॥

व्याख्या—द्वयोर्गाथयोरक्षरार्थः स्पष्ट एव। नवरम्—"छट्ठस्स सया पारणमुज्झियमायंबिलं" ति 'सदा' यावज्जीवं षष्ठस्य पारणं सावधारणवाक्यत्वाद् आचामाम्लमेव, "उज्झिय" त्ति पदैकदेशे पदसमुदायोपचाराद् उज्झितभिक्षाग्रहणमित्यर्थः। 'तस्य' धन्यस्य इति ॥ १२८ ॥ १२९ ॥ भावार्थः कथयोच्यते। सा चेयम्—



बभूव पुर्यां काकन्द्यां, जितशत्रुर्नृपाग्रणीः। सार्थवाहवधूस्तत्र, भद्रानाम्न्यस्ति विश्रुता ॥ १ ॥ धन्याख्योऽभूद् यथार्थोऽस्याः, सूनुरन्यूनदीप्तिमान्। कन्या द्वात्रिंशतं मात्रोद्यौवनः परिणायितः ॥२॥ मात्रा द्वात्रिंशदावासा, द्वात्रिंशद्दायसंयुताः। तदर्थं कारिता भोगान्, भुङ्क्ते तदुपरि स्थितः ॥३॥ इतश्च समवासार्षीत्, श्रीवीरस्तत्पुरो बहिः। वन्दनाय(या)ययौ धन्य, उद्यद्रोमाञ्चकञ्चुकः ॥ ४ ॥ धर्मं श्रुत्वाऽऽत्तवैराग्योऽपृच्छद् व्रतकृते प्रसूम्। राजार्पितराज(ज्य)चिह्नस्फीत्या धन्योऽश्रयद् व्रतम् ॥ ५ ॥ व्रताह्वेऽपि प्रभुं नत्वा, जग्राहोग्रमभिग्रहम्। षष्ठपारणकं यावज्जीवमाचाम्लतोऽस्तु मे ॥ ६ ॥ ग्राह्या भिक्षा न संसृष्टाऽसंसृष्टाऽस्तु तथोज्झिता। इत्युग्रतपसाऽऽत्मानं, भावयन् विजहार सः ॥ ७ ॥ भक्ताप्तिश्चेत् कथञ्चित् स्यात्, नाप्तिस्तस्याम्भसां पुनः। पठन्नेकादशाङ्गानि, सेहे क्षुत्-तृट्परीषहम् ॥ ८ ॥ इत्युग्रतपसाऽत्यर्थं, कृशीयान् सोऽभवत् मुनिः। न मनागपि दीनत्वं, तथापि क्वापि जग्मिवान् ॥ ९ ॥ एत्य राजगृहं वीरश्चैत्ये गुणशिले स्थितः। देशनान्ते प्रभुं नत्वा, पप्रच्छ श्रेणिकस्त्विदम् ॥ १० ॥ स्वामिंस्ते गौतमादीनां, शिष्याणां शीलशालिनाम्। चतुर्दशसहस्राणां, को दुष्करतपःक्रियः ? ॥ ११ ॥ स्वाम्याह राजन्! धन्यर्षिः, सर्वेष्वूग्रतपा भृशम्। एतत् श्रुत्वा प्रभुं नत्वाऽऽगत्य धन्यं

नृपोऽनमत् ॥ १२ ॥ धन्यः सुलब्धजन्माऽसि, यत् त्वां वीरजिनः स्वयम् । एवं वर्णयतीत्युक्त्वा नत्वाऽगात् श्रेणिको गृहम् ॥ १३ ॥ वर्ण्यमानोऽप्यसावेवं, नैवोत्कर्षमगात् मनाक् । पालयामास चारित्रं, नवमासानखण्डितम् ॥ १४ ॥ मासिक्या संलेखनया, कालं कृत्वोदपाद(द)सौ । सर्वार्थसिद्धे चोद्धृत्य, विदेहे शिवमाप्स्यति ॥ १५ ॥ इति नवमाङ्गमूलसूत्रोक्तधन्यमुनिसम्बन्धः ॥

अथ शीतलसूरेर्जयमाविर्भावयन्ति—

**सो जयउ सीयलसूरी, केवलनाणीण भायणिज्जाणं । दिंतेण भाववंदणमुवज्जियं केवलन्नाणं(लं जेणं) ॥१३०॥**

व्याख्या—गाथार्थः कथानकादेव स्पष्टः ॥ १३० ॥ तच्चेदम्—

श्रीहास्तिनपुरे वज्रसिंहः सिंहबलो नृपः । सौभाग्यमञ्जरी तस्य, प्रिया पुत्रस्तु शीतलः ॥ १ ॥ त्रैलोक्यसुन्दरी पुत्री, सा काञ्चनपुरप्रभोः । काञ्चनप्रभराजस्य, यौवने परिणायिता ॥ २ ॥ निर्विण्णः काम-भोगेभ्यः, कुमारः शीतलोऽन्यदा । प्राव्राजीत् स्थविरोपान्ते, सूरिश्चासीद् बहुश्रुतः ॥३॥ आसंस्त्रैलोक्यसुन्दर्याश्चत्वारः सूनवः क्रमात् । तेषां कथान्तरे नित्यं, सा वर्णयति शीतलम् ॥४॥ यथा यो मातुलो राज्यनिःस्पृहः शिश्रिये व्रतम् । कालो यात्येवमन्येद्युस्तत्रेयुः स्थविरर्षयः ॥ ५ ॥ निशम्य तदुपान्ते तेऽसारतां संसृतेर्भृशम् । प्रबुद्धा जगृहुर्दीक्षां, क्रमाद् जाता बहुश्रुताः ॥ ६ ॥ मातुलं शीतलाचार्यं, गुरुमापृच्छ्य वन्दितुम् । प्रचेलुस्तेऽन्यदा जग्मुस्तत्पावितपुरो बहिः ॥ ७ ॥ वहिर्विकाल इत्यस्थुस्ते देवकुलिकान्तरे । यान्तं पुरान्तः श्राद्धं तेऽवोचन् वाच्यं गुरोरदः ॥ ८ ॥ आत्तव्रतास्ते जामेया, वन्दितुं वो यदैयरुः । विकाल इति नाऽऽजग्मुरुक्तेऽहृष्यद् गुरुर्भृशम् ॥ ९ ॥ तत्र तेषां शुभध्यानादुत्पेदे केवलं निशि । प्रातस्ते तत्र नाऽऽयातास्ततो(दा) दध्यौ गुरुर्ध्रुवम् ॥ १० ॥ ते सूत्रपौरुषीं कृत्वैष्यन्ति तत्रापि नाऽऽययुः । अथाऽर्ध(-पार्ध)पौरुषीं तत्राप्येयुर्नैते

धन्यमहर्षिप्रबन्धः ।

शीतलाचार्यवक्तव्यता ।

तो गुरुः ॥ ११ ॥ सयमुत्कण्ठितोऽचालीत्, नाभ्युत्तस्थुर्न ते क्षमी। प्रामार्जयन् वीतरागा, गुरोर्न्यस्य सदण्डकम् ॥ १२ ॥ प्रतिक्रम्याऽऽलोच्य सूरिस्तान् वन्दे कुत ? इत्यवक्। प्रतिभाति यतस्ते ते वन्दस्वेत्यवदन् गुरुम् ॥ १३ ॥ निस्त्रपत्वमहो ! धार्ष्ट्यमेषामित्येष रोषतः। ययन्दे तान् मुनीन् सूरिर्वन्दित्वा तस्थिवान् पुरः(रः) ॥ १४ ॥ प्राक्प्रवृत्तं न(-त्तम-)विनयं, भि(भ)नक्ति(क्ति) किल केवली। जीतकल्पोऽयमित्येषां, तेषां (गुरो) तस्मिन् न चास्ति सः ॥ १५ ॥ तेऽवोचन् वन्दिता द्रव्यवन्दनेन पुरा पुनः। वन्दध्वं भाववन्दनविधिना विधिनाऽधुना ॥ १६ ॥ कषायकण्टकैर्वन्दमानं पश्यन्ति ते गुरुम्। षट्स्थानपतितं सोऽवग्, ज्ञायते किमदोऽपि हि ? ॥ १७ ॥ तेऽप्यूचुः सुतरां विद्मः, कथं ? नोऽतिशयोऽस्ति यत्। छाद्मस्थिकः ? कैवलिकः ?, प्रोचुः कैवलिकं च ते ॥ १८ ॥ हहा ! केवलिनो मन्दभाग्येनाऽऽशातिता मया। निनिन्द भृशमात्मानं, शीतलः शीतलाशयः ॥ १९ ॥ जातरोमोद्गमस्तोपात्, परं संवेगमागतः (-मत्)। ददानो वन्दनं सूरिः, कण्टकेभ्यो निवृत्तवान् ॥ २० ॥ क्रोधाद् यथा पुराऽवभ्रात्, कर्माण्याच्छोटयत् तथा। प्रविष्टोऽपूर्वकरणं, शुभाभिप्रायसम्भवम् ॥ २१ ॥ चतुर्थवन्दनस्यान्ते, शीतलः प्राप केवलम्। सैकैव कायिकी चेष्टाऽभूद् हेतुर्बन्ध-मोक्षयोः ॥ २२ ॥ इति श्रीशीतलाचार्यकथानकम् ॥



अथ श्रीसुबाहुसाधुं नमस्करोमि(ति) गाथात्रयेण—



**पियदंसणो मुणीण वि, जो मुणिदाणप्पभावओ जाओ। वीरसुसीसो पत्तो, मासं संलिहिय सोहम्मे ॥१३१॥**
**माणुस्सं सामन्नं, च पप्प कप्पे सणंकुमारम्मि। उववज्जिस्सइ एवं, बंभे सुक्के य आणयए ॥ १३२ ॥**
**आरणए सघट्ठे, तत्तो सिज्झिस्सई विदेहेसु। तमहं सुबाहुसाहुं, नमामि इक्कारसंगधरं ॥ १३३ ॥**

व्याख्या—गाथार्थः कथानकादेव स्पष्टः ॥ १३१–१३२–१३३ ॥ तच्चेदम्—

हस्तिशीर्षे(र्ष)पुरे दीनशत्रुर्नाम्ना नृपोऽभवत्। सहस्रमेकं तस्याऽऽसीद्, धारिणीमुख्ययोषिताम् ॥ १ ॥ अन्येद्युर्धारिणी देवी, सिंहस्वप्नोपलक्षितम्। पुत्रं सुबाहुनामानं, सुपुवे प्रियदर्शनम् ॥ २ ॥ यौवने पुष्पचूलाद्याः, कन्याः पञ्चशतीमिताः। युगपत् पितुरादेशात्, परिणीताः सुबाहुना ॥ ३ ॥ उच्चपञ्चशतावासोपरिष्टात् ताभिरन्वहम्। दोगुन्दुकामर इवा(व,)क्रीडते स्म यथासुखम् ॥ ४ ॥ अथ तत्रान्यदाऽऽयातः, श्रीवीरो विहरन् महीम्। श्रीसुबाहुकुमारोऽगात्, तद्वन्दनकृते कृती ॥ ५ ॥ प्रबुद्धो देशनां श्रुत्वा, सुबाहुरिदमब्रवीत्। स्वामिन्! ग्रहीतुमिच्छामि, श्राद्धधर्मं त्वयोदितम् ॥ ६ ॥ प्रतिबन्धो न कार्योऽत्र, स्वामिनेत्युदिते सति। सप्तशिक्षापदं पञ्चाणुव्रतं सोऽग्रहीद् वृषम् ॥ ७ ॥ प्रभु नत्वा गतो गेहमथ पप्रच्छ गौतमः। स्वामिन्! मुनीनामप्येष, किं कान्तः? प्रियदर्शनः? ॥ ८ ॥ किं वाऽनेन पुराऽऽचीर्णं?, पुण्यमित्युक्तवान् विभुः। श्रीहस्तिनापुरे पूर्वं, भद्रासीत् सुमुखो गृही ॥९॥ तत्रेयुर्धर्मघोषाख्या, मुनिपञ्चशतान्विताः। आचार्यास्तु सुदत्ताख्यस्तच्छिष्यो मासपारणे ॥ १० ॥ सुमुखाऽऽस्पदमायातो, धन्यंमन्यस्ततो गृही। उत्थाय परया प्रीत्या, सुदत्तं प्रत्यलाभयत् ॥ ११ ॥ नरायुस्तेन दानेन, बद्धं द्रव्यादिशुद्धितः। भवो ह्रस्वीकृतः पञ्च, दिव्यान्यस्याऽऽस्पदेऽभवन् ॥ १२ ॥ ददृशुः सुमुखस्येति प्रशशंसातिलो जनः। प्रपाल्यायुर्नृहूनब्दान्, सुबाहुर्गौतमाभवत् ॥ १३ ॥ भूयोऽपि गौतमोऽपृच्छत्, सुबाहुः स्वामिनोऽन्तिके। निष्क्रमिष्यति? चारित्रमेवमेवेत्यवग् विभुः ॥ १४ ॥ सुबाहुः पौषधागारेऽष्टमभक्तिकपौषधम्। राकायामाददेऽन्येद्युर्दध्यावर्द्धनिशि त्विदम् ॥१५॥ धन्या ग्रामाकराद्यास्ते, यान् पुनात्यंह्रिभिः प्रभुः। श्रीवीरश्चेद्विहायाति, प्रव्रजामि तदा ध्रुवम् ॥१६॥ ज्ञात्वा नाथोऽपि तद्भाव, शीघ्रमाजग्मिवानिह। फलन्ति कल्पशाखीव, कामितान्याशु धर्मिणाम् ॥ १७ ॥ ततोऽग्रहीद् व्रतं स्फीत्या, सुबाहुः स्वामिनोऽन्तिके। पठित्वैकादशाङ्गानि, तपस्तप्त्वाऽविदुश्चरम् ॥ १८ ॥ आलोचित-प्रतिक्रान्तः, कालं कृत्वा समाधिना। मासिक्या सलेखनया,

सुबाहुमुनि-वर्णनम्।

सौधर्म(र्मं)स्वर्गमासदत् ॥१९॥ [युग्मम्] ततश्च्युत्वाऽऽप्य मानुष्यं, सुकुले प्राप्य च व्रतम्। सनत्कुमार उत्पन्नस्ततश्च्युत्वा पुनर्नरः ॥२०॥ ब्रह्मलोके तथा शुक्रे चाऽऽनतेऽप्यारणे तथा। सर्वार्थसिद्धितश्च्युत्वा, विदेहेऽसौ शिवङ्गमी ॥ २१ ॥ इति श्रीसुबाहुमुनिकथा ॥

सुबाहुमुनिवर्णनम्।

अथ भद्रनन्द्यादिनवर्षीणां सुखप्राप्तिमाह—

**अन्ने वि भद्दनंदिप्पमुहा नव निवकुमारमुणिवसहा। संपत्तसुहविवागा, सुबाहुगमएण नायव्वा ॥ १३४ ॥**

व्याख्या—गाथा स्पष्टा ॥ १३४ ॥ भावार्थः किञ्चिदुच्यते। [redacted] चायम्—

आसीद् धनावहो राजा, श्रीऋषभपुरे पुरे। सरस्वती प्रिया तस्य, सुतः सुस्वप्नसूचितः ॥ १ ॥ भद्रनन्दी कुमारोऽभूदुपयेमे स यौवने। श्रीदेव्यादिप्रियापञ्चशतीमादेशतः पितुः ॥ २ ॥ पृच्छायाम्—नगर्यां पुण्डरीकिण्यां, कुमारो विजयाह्वयः। युगबाहुजिनं भक्त्या, प्राग्भवे प्रत्यलाभयत् ॥ ३ ॥ लात्वा व्रतमगात् स्वर्गं, नरत्वं स्वर्गतिः क्रमात्। ज्ञेयं सुबाहुवत् सर्वं, यावत् मोक्षपुराश्रयः ॥ ४ ॥ इति प्रथमः ॥ श्रीविजयपुरे श्रीवीरकृष्णमित्रो नृपः प्रिया। श्रीदेवी तनयस्तस्याः, सुजातोऽस्य प्रियाः पुनः ॥ १ ॥ बलश्र्याद्याः पञ्चशती, प्रागिषुकारपुरे भवे। पुष्पदन्तमुनेश्चर्षभदत्तो भक्तिमातनोत् ॥ २ ॥ प्राग्वद् व्रतक्रमेणैव, नृत्वं देवत्वमाप्य च। महाविदेहे दुष्कर्मक्षयात् मोक्षमवाप्स्यति ॥ ३ ॥ इति तृतीयः ॥ विजये नगरे वासवदत्ताख्यो नृपः प्रिया। कृष्णश्रीः सुवासवाख्यः, सूनुर्भद्राप्रियापतिः ॥ १ ॥ प्राग्भवे धनपालो राट्, कौशाम्बीनगरीपतिः। मुनिं वि(वै)श्रमणभद्रं, प्रतिलाभ्यागमत् शिवम् ॥ २ ॥ इति चतुर्थः ॥ पञ्चमः षष्ठ-सप्ता-ऽष्ट-नवमो दशमस्तथा। एकादशाङ्गतो ज्ञेया, नोक्ता ग्रन्थातिगौरवात् ॥ १ ॥ इति श्रीविपाकश्रुतोक्तसुबाह्वादिमुनिसम्बन्धः ॥

भद्रनन्द्यादिमहर्षिवर्णनम्।

अथ रोहकमुनिसम्बन्धमाह—

**लोए य अलोए वा, पुव्विं एमाइ पुच्छिओ वीरो । रोहा! सासयभावाण नाणुपुव्वि त्ति अकहिंसु ॥ १३५ ॥**

व्याख्या—व्याख्या सुगमैव । नवरम्—"अकहिंसु" त्ति अकथयत् ॥ १३५ ॥ भावार्थश्चायम्—

श्रीवीरस्याभवत् शिष्यो, रोहकाख्यो महामुनिः । प्रकृत्या भद्रकः शान्तो, विनीतो गुणसेवधिः ॥ १ ॥ प्रभोरदूरसामन्ते, ऊर्ध्वपादस्त्वधःशिराः । तप्यमानस्तपस्तीव्रं, स आस्ते(आस्ते स)मुनिरन्वहम् ॥ २ ॥ सञ्जातसंशयोऽन्येद्युः, पप्रच्छार्हन्तमन्तिमम् । लोकः पूर्वमलोको वा ?, प्रभो ! ब्रूहीति मत्पुरः ॥ ३ ॥ रोह ! लोकोऽप्यलोकोऽपि, पश्चादपि च प्रागपि । द्वावेतौ शाश्वतौ भावावाचष्ट स्पष्टवाग् विभुः ॥४॥ जीवः पूर्वमजीवो वा, सिद्धो वाऽसिद्ध एव च (वा ?) । प्रभुरित्यादिपृच्छायां, वदेवावददुत्तरम् ॥५॥ रोहक ! नानुपूर्व्येण, रोहोऽपृच्छत् पुनः प्रभुम् । अण्डकं कुकु(र्कु)टी प्राग् वा ? घनवातादयस्तथा ॥ ६ ॥ इत्याद्यनेकपृच्छायां, स्वाम्याह्वानादिसिद्धताम् । पश्चात् प्रागप्यनुलत्तेरमी भावा हि शाश्वताः ॥ ७ ॥ एवं प्रभोत्तरवृन्दं, भगवत्यां सहेतुकम् । सम्यग् व्यासार्थिना ज्ञेयं, सङ्क्षेपाद् दर्शितं मया ॥ ८ ॥ इति रोहकमुनिसम्बन्धः ॥

रोहकमुनिसम्बन्धः ।

अथ गाथात्रयेण स्कन्दकमुनिं स्तुतिगोचरं रचयामि—

**संते य असंते वा, लोए इचाइ पिंगलगमुणिणा । पुट्ठो निव्वागरणो, वीरसयासम्मि पव्वइओ ॥ १३६ ॥**
**एक्कारसंगधारी, गोयमसामिस्स पुव्वसंगइओ । बारसवासे बारस पडिमाओ तवं च गुणरयणं ॥ १३७ ॥**
**फासित्तु अचुए जो, मासं पाउवगमेण संपत्तो । सिज्झिस्सई य विदेहे, तं खंदयमुणिवरं वंदे ॥ १३८ ॥**

स्कन्दकमुनिवर्णना ।

स्कन्दकमुनिवक्तव्यता।

व्याख्या—गाथात्रयार्थः कथानकादेव बोद्धव्यः ॥ १३६–१३७–१३८ ॥ तच्चेदम्—

विहरन् भगवान् वीरोऽन्येद्युः कयङ्गलापुरि । चैत्ये छत्रपलाशाख्ये, समेत्य समवासरत् ॥ १ ॥ तत्पुरोऽदूरसामन्ते, श्रावस्त्याख्याऽभवत् पुरी । तत्राऽऽस्ते गर्दभाल्याह्वः, परिव्राड् बहुशिष्ययुक् ॥ २ ॥ तच्छिष्यः स्कन्दकः कात्यायनगोत्रोद्भवोऽभवत् । साङ्गोपाङ्गचतुर्वेदाद्यनेकागमकोविदः ॥ ३ ॥ वैशालिश्रावकश्चाथ, निर्ग्रन्थः पिङ्गलाह्वयः । पप्रच्छ स्कन्दकं लोकः, सान्तो वाऽसान्त इष्यते ? ॥४॥ जीवः सान्तस्त्वनन्तो वा ?, सिद्धोऽसिद्धश्च वा तथा ?। केन वा मृत्युना जीवो, वर्द्धते हीयतेऽथवा ? ॥५॥ प्रश्नानमूनसौ पृष्टः, स्कन्दकः पिङ्गलर्षिणा । तूष्णीकोऽभूद् विलक्षास्यो, न क्षमो दातुमुत्तरम् ॥ ६ ॥ वारद्वयं त्रयं चैतत्, पृष्टोऽसौ पिङ्गलर्षिणा । मौनेनास्थादविज्ञानां, मौनमेव हि लक्षणम् ॥ ७ ॥ अत्रान्तरे स शुश्राव, श्रीवीरं लोकवार्त्तया । कयङ्गलापुरीसंस्थं, स्कन्दकः संशयान्वि(धि)वः ॥ ८ ॥ वन्दे च यामि पृच्छामि, श्रीवीरं संशयानमून् । ततश्च स्वाश्रयं प्राप्तः, स्कन्दको भद्रकाशयः ॥ ९ ॥ धातुरक्तानि वस्त्राणि, छत्रोपानद्-गणेत्रिकाः । त्रिदण्ड-यज्ञसूत्राद्यामादायोपकर्वि स्वकाम् ॥ १० ॥ चचालोद्दिश्य सर्वज्ञं, सरलः सरलाध्वना । तं वीक्ष्य दूरादायान्तं, स्वाम्येवं प्राह गौतमम् ॥ ११ ॥ पूर्वसङ्गतिकं वत्स !, पश्याद्य स्कन्दकाह्वयम् । उक्तवत्यर्हतीत्येषोऽभ्यागाद् गौतमदृक्पथम् ॥ १२ ॥ ततोऽभ्युत्थाय पप्रच्छ, स्वागतं वत्स गौतमः । महान्तो नैव लुम्पन्ति, प्रतिपत्तिं यथोचिताम् ॥ १३ ॥ पुनस्तं गौतमोऽवादीत्, किमास्ते हृदये तव। लोकः सान्तस्त्वसान्तो वेत्यादिसंशयसञ्चयः ? ॥ १४ ॥ स्कन्दको विस्मितस्तान्तः, पप्रच्छ गणभृद्वरम् । कथमाप्यन्तरं भावं, वेत्सि ? ब्रूहि सुहृन् ! मम ॥ १५ ॥ गौतमः स्माह मे धर्माचार्योऽवादीदिदं समम् । तदेहि धर्माचार्यं मे, वन्दस्व सर्ववेदिनम् ॥ १६ ॥ ततोऽसौ गौतमेनामा, छत्रातिच्छत्रशोभितम् । तेजोऽतिक्रान्तमार्त्तण्डं, गत्वाऽद्राक्षीद् जगद्गुरुम् ॥ १७ ॥

श्रीमद्वीरार्यमालोकाद् झटिति स(स्कु)टितं तमः । द्विधाऽपि द्रुतं तस्य, तत्कर्मावरणक्षयात् ॥ १८ ॥ ततः प्रभुं नमश्चक्रे, स्कन्दको भक्तिनिर्भरः । ईशोऽपि पिङ्गलप्रश्नादिकं प्राग्वृत्तमभ्यधात् ॥ १९ ॥ मया चतुर्विधो लोकः, प्रोक्तः स्कन्दक! तद्यथा । द्रव्यतः क्षेत्रतः कालाद्, भावतश्चेत्यथ प्रभुः ॥ २० ॥ तत्रैको द्रव्यतो लोकोऽसान्तोऽस्ति क्षेत्रतः पुनः । विष्कम्भाऽऽयामतोऽसङ्ख्ययोजनकोटिकोटिभूम् ॥ २१ ॥ परिधावप्यसङ्ख्येययोजनकोटिकोटिकः । कालतो न कदा नाऽऽसीद्, ध्रुवो नित्यश्च शाश्वतः ॥ २२ ॥ भावतोऽनन्तपर्याय-वर्ण-गन्ध-रसात्मकः । हीयते म्रियमाणोऽङ्गी, तथा पण्डितमृत्युना ॥ २३ ॥ इत्यादिभगवत्यु(द्वो)क्तां, श्रुत्वा प्रश्नोत्तरावलीम् । स्कन्दक-श्छिन्नसन्देहो, नत्वा वीरं व्यजिज्ञपत् ॥ २४ ॥ भगवन्! श्रोतुमिच्छामि, धर्मं केवलिभाषितम् । ततो विस्तरतः स्वाम्यप्यापप्यौ धर्ममार्हतम् ॥ २५ ॥ तत् श्रुत्वा जातवैराग्यो, गत्वाऽथेशानको(कु)णके । मुक्त्वोपकरणं स्वस्य, सर्वं रत्नाम्बरादिकम् ॥ २६ ॥ पञ्चमुष्टि-कचोत्पाटं, कृत्वा गत्वा जिनान्तिके । संयोजितकरोऽवादीदिदं स्कन्दकतापसः ॥ २७ ॥ [ युग्मम् ] आत्मानं सारभाण्डाभं, प्रदीने भगवन्! जने । गृहाण निस्तारयिष्यामि, प्रदीतात् सारभाण्डवत् ॥ २८ ॥ क्षुत्-तृट्-शीतोष्ण-रोगाद्या, मा स्पृशन्तु ममाङ्गकम् । इच्छामि युष्मत्तो व्रतं, मन्तव्यामार्हतीं विभो! ॥ २९ ॥ ततस्तं दीक्षयामास, स्कन्दकं विधिवद् विभुः । ददौ शिक्षामिमां चास्य, सम्यग् साधुजनोचिताम् ॥ ३० ॥ स्थातव्यमित्थं वक्तव्यमित्थं चेत्यादिकां च ताम् । प्रपेदे सम्यगेषोऽपि, त्रिधा शुद्ध्या शुभाशयः ॥ ३१ ॥ ततः कयङ्गलापुर्या, विजह्रेऽन्यत्र तीर्थपः । पपाठैकादशाङ्गानि, स्कन्दकः स्थविरान्तिके ॥ ३२ ॥ ईर्या-भाषादिसमितो, गीतार्थः स्कन्दकोऽन्यदा । पप्रच्छ स्वामिनं मौनीं, वहामि प्रतिमामहम् ॥ ३३ ॥ प्रतिबन्धोऽत्र मा कार्यं, इत्यूचे तं जगद्गुरुः । सम्यगेषोऽप्यथ व्यधिष्ट द्वादश प्रतिमाः क्रमात् ॥ ३४ ॥ निषेव्य स्कन्दकर्षिस्ताः, पप्रच्छ स्वामिनं पुनः । गुणरत्नवत्सराख्यं, कुर्वे स्वामिंस्तपःक्रियाम् ॥ ३५ ॥

स्कन्दकमुनि-वक्तव्यता ।

तदेवोत्तरमासाद्य, स्कन्दकस्तत् तपोऽकरोत्। मासे चतुर्थस्त्वाद्ये, षष्ठो मासि द्वितीयके ॥ ३६ ॥ एकैकस्योपवासस्य, प्रतिमासं भवेत् पुनः। वृद्धिरस्मिंस्तपस्येवं, यावत् मासांश्च षोडश ॥ ३७ ॥ उत्कुटुकासने स्थेयं, रवेश्चाभिमुखं दिवा। रात्रावनावृतैर्वीरासने चैतत्तपःकरैः ॥३८॥ निर्माय तत्(एवं कुर्वन्)तपस्तीव्रं, तथा षष्ठाष्टमादिभिः। अस्थि-चर्मावशेषाङ्गः, स्कन्दकोऽभूत् महामुनिः ॥३९॥ इतश्च समयासार्षीत्, प्रभू राजगृहे पुरे। अर्द्धरात्रे मुनिर्दध्यौ, धर्मजागरिकां स्थितः ॥४०॥ यद्वा करोम्यहं प्रान्तप्रत्याख्यानं प्रगे प्रभुम्। ततोऽसौ प्रातरागत्य, नमश्चक्रेऽन्तिमं जिनम् ॥ ४१ ॥ विभावरीभवं भावं, विज्ञाय ज्ञानवान् विभुः। स्कन्दक! प्रतिबन्धोऽत्र, कार्यो नेत्यवदत् स्वयम् ॥४२॥ व्रतारोपं स्वयं कृत्वा, क्षमयित्वाऽऽर्यिका मुनीन्। कृ(क्र)तिभिः स्थविरैः सार्द्धं, सोऽचालीत् प्रति पर्वतम् ॥४३॥ कश्चित् पर्वतमारुह्य, शिलापट्टोपरि स्वयम्। दर्भसंस्तरमास्तीर्य, स्थित्वा तत्रेदमब्रवीत् ॥ ४४ ॥ नमोऽत्थु अरिहंताणमित्यादीन्द्रस्तवस्तुतिम्। पठित्वाऽस्तु नमो धर्मगुरवे मेऽन्तिमार्हते ॥ ४५ ॥ तत्साक्षिकं प्रत्योचारं, पुनः कुर्वेऽस्मि साम्प्रतम्। व्युत्सृजाम्युपधिं देहं, चोच्छ्वासैरन्तिमैरपि ॥ ४६ ॥ प्रत्याख्याय त्वनशनं, षष्टिभक्तान्यपास्य च। स्कन्दको द्वादशाब्दानि, पूर्णान्याराध्य संयमम् ॥ ४७ ॥ आलोचित-प्रतिक्रान्तश्चक्रे कालं समाधिना। निर्वाणप्रत्ययं कायोत्सर्गं ते स्थविरा व्यधुः ॥ ४८ ॥ पात्र-चीवरमादाय, तस्यैः स्थविरास्ततः। श्रीवीरायार्पयामासुः, शशंसुश्च तदायतिम् ॥ ४९ ॥ स्वामिपादांस्ततो नत्वाऽपृच्छद् गणभृदादिमः। कोत्पेदे स्कन्दकः कालं, कृत्वा शिष्यस्तव प्रभो!? ॥५०॥ गौतमादीन् मुनीनूचे, स्वामी मृत्वा स संयमी। समुत्पेदेऽच्युते कल्पे, द्वाविंशत्युदधिस्थितिः ॥ ५१ ॥ पूर्णं तत्रोपभुज्यायुश्च्युत्वोत्पद्योत्तमे कुले। महाविदेहे श्रामण्यं, स्कन्दकः प्राप्य सेत्स्यति ॥ ५२ ॥ इति श्रीस्कन्दकमहर्षिसम्बन्धः ॥

स्कन्दकमुनिवक्तव्यता।

अथ गाथात्रयेण तिष्यक-कुरुदत्तयोर्वक्तव्यतामाह—[ ग्रन्थाग्रं ५३०९ ]

चरमजिणसीसतीसगमुणी तवं छट्ठमट्ठवरिसाइं। काउं मासं संलिहिय सक्कसामाणिओ जाओ ॥ १३९ ॥
कुरुदत्तसुओ छम्मासमट्ठमायवणपारणायामं। काउं ईसाणसमो, जाओ संलिहिय मासद्धं ॥ १४० ॥
छट्ठऽट्ठम-मासो अद्धमासो वासाइं अट्ठ छम्मासा। तीसग-कुरुदत्ताणं, तव-भत्तपरिण्ण-परियाओ ॥ १४१ ॥

व्याख्या—गाथाद्वयं सुगममेव ॥ १३९–१४० ॥ तृतीयगाथा तु पूर्वोक्तार्थसङ्ग्रहरूपा श्रीभगवद्युक्ता स्पष्टार्थाऽप्यव्युत्पन्नविनेयहितार्थं व्याख्यायते—"छट्ठट्ठम" त्ति यथाक्रमं योजनात् तिष्यस्य षष्ठतपो यावज्जीवं, कुरुदत्तसुतस्य चाष्टमतपः। तथा भक्तपरिज्ञायामनशने तिष्यस्य मासः परस्य चार्द्धमासः "परियाउ" त्ति प्रव्रज्यापर्यायः तिष्यस्याऽष्ट वर्षाणि, कुरुदत्त[सुत]स्य षण्मासा इति गाथार्थः ॥ १४१ ॥ भावार्थश्चायम्—

अन्येद्युः सपरीवारः, श्रीवीरः समवासरत्। पुर्यां मोकाभिधानायां, चैत्ये नन्दननामनि ॥ १ ॥ द्वितीयो गणभृत् तत्राऽग्निभूतिगौतमान्वयः। नत्वेशं परया प्रीत्या, पप्रच्छेदं कृताञ्जलिः ॥२॥ स्वामिन्! प्रोक्तः कियत्सौख्यः, शक्रो देवेन्द्र(न्द्रो) देवराट्। पुरन्दरः सहस्राक्षः?, कश्चास्य विषयः स्मृतः? ॥३॥ स्वाम्याह केवलज्ञानभास्करः शृणु गौतम!। द्वात्रिंशल्लक्षसङ्ख्यानां, विमानानां सुरेश्वरः ॥ ४ ॥ चतुरशीतिसहस्रदेहरक्षाविधायिनाम्। सप्तानामप्यनीकानां, तदीशानां च तावताम् ॥ ५ ॥ अष्टाग्रमहिषीनां(णां) च, सतत्राणामहर्निशम्। बह्वीनां पुनरन्यासां, देवीनां च सुपर्वणाम् ॥ ६ ॥ आधिपत्यं च पौरस्त्यं, स्वामित्वं भर्तृतामपि। पालयन् कारयन् भोगान्, भुञ्जानो विहरत्ययम् ॥ ७ ॥ [ चतुर्भिर्विशेष[ः कलाप-]कम् ] विषयोऽस्य पुनर्देव-देवीरूपैर्निरन्तरम्। जम्बूद्वीपद्वयं शक्त्या, शक्तः पूरयितुं स्यात् ॥ ८ ॥ ततस्तिर्यगसङ्ख्येयोदधि-द्वीपान् निरन्तरम्। तद्रूपैर्वैक्रियैः पूर्णीकर्तुं शक्तः पुरन्दरः ॥ ९ ॥ अधिकृत्योच्यते शक्तिमात्रमस्य

तिष्यक-कुरुदत्तसुत-मुनिद्वय-सम्बन्धः।

तु नाप्यसौ । चकार कुरुते नैतत्, न करिष्यति कर्हिचित् ॥ १० ॥ अग्निभूतिः पुनः प्राह, यथा स्वामिन् ! पुरन्दरः । एतावच्छक्तिरास्यातो, विर्यावच(श्च)रिवैस्तथा ॥ ११ ॥ शिष्योऽयं श्रीमतां तिष्यकाख्यः प्रकृतिभद्रकः । षष्ठेन तपसाऽऽत्मानं, भावयन् नित्यमाव्रतात् ॥ १२ ॥ श्रामण्यमष्ट वर्षाण्याराध्यातिचारवर्जितम् । संलिख्य मासमात्मानं, षष्टिभक्तान्यपास्य च ॥ १३ ॥ आलोचित-प्रतिक्रान्तः कालं कृत्वा समाधिना । स्वविमाने समुत्पेदे, सौधर्मे जन्मपर्षदि ॥ १४ ॥ [ चतुर्भिः सम्बन्धः ] प्राच्यां त्यक्त्वाऽङ्गुलासङ्ख्यभागमात्रावगाहनाम् । पर्याप्तीरखिलाश्चक्रे, आहाराद्याः सुरश्च सः ॥ १५ ॥ पर्याप्तं तं ततो ज्ञात्वा, सामानिकसभोद्भवाः । [illegible] संवर्द्धयामासुर्जयेन विजयेन च ॥ १६ ॥ कराऽऽवर्त्तं दशनखं, शीर्षे कृत्वाऽञ्जलिं ततः । सुराः सामानिकाः सामानिकेन्द्रमिदमूचिरे ॥ १७ ॥ देवानुप्रिय ! देवर्द्धिर्दिव्या प्राप्ता त्वयाऽधुना । सुरेन्द्रसदृशी भोगसम्पत्तिः सुकृतोद्भवा ॥ १८ ॥ अपृच्छदग्निभूतिस्तु, भगवंस्तत्र कीदृशी । तस्य सामानिकेन्द्रस्य, भोगर्द्धिस्तिष्यकस्य वै ? ॥ १९ ॥ स्वाम्याख्यत् तस्य देवस्य, भोगर्द्धिं शृणु गौतम ! । चतुःसहस्रास्तद्वश्याः, सामानिकसुरेश्वराः ॥ २० ॥ देहरक्षाकरा देवाः, सहस्राण्यस्य षोडश । चतस्रोऽग्रमहिष्यश्च, ससानीकानि वद्वरे ॥ २१ ॥ तावन्तः स्वामिनस्तेषामन्येऽपि बहवः सुराः । देवीवृन्दानि चैतेषां, प्रभुत्वं पालयत्यसौ ॥ २२ ॥ सुरेन्द्रसदृशी शक्तिस्तस्य द्वीपादिपूरणे । दिव्यरूपादिभिः किन्तु, बभूवैतत् कदापि न ॥ २३ ॥ एवं सामानिका लोकपालाग्रमहिषीसुराः । एतावच्छक्तयो ज्ञेया, जम्बूद्वीपादिपूरणे ॥ २४ ॥ अथापृच्छत् तृतीयोऽपि, वायुभूतिर्गणाधिपः । भगवन् ! शक्तिर्भोगर्द्धिरीशानेन्द्रस्य कीदृशी ? ॥ २५ ॥ स्वाम्याख्यद् भोगसम्पत्तिः, सुरेन्द्रसन्निभाऽस्य तु(नु) । जम्बूद्वीपद्वयं शक्तिविषयं किन्तु साधिकम् ॥ २६ ॥ ईदृशी शक्तिर्भोगर्द्धिर्यथेशानाधिपेऽधिप ! । तथाऽस्मिन् श्रीमतां शिष्ये, कुरुदत्तसुतेऽपि किम् ? ॥२७॥ कृत्वाऽष्टमतपः कुर्वन्नाचामाम्लेन पारणम् । तप्यतेऽसौ तपांस्यूर्ध्ववाहुश्चाभि-

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे द्वितीयोऽशः।

तिष्यक-कुरुदत्तसुत-मुनिद्वय-सम्बन्धः।

मुखं रवेः ॥ २८ ॥ पूर्णानाराध्य षण्मासान्, कुरुदत्तसुतो व्रतम् । पक्षसंलेखनापूर्वं, त्रिंशद् भक्तान्यपाकरोत् ॥ २९ ॥ आलोचित-प्रतिक्रान्तः, कालं कृत्वा समाधिना । सामानिकेन्द्र ईशाने, स्वविमाने ह्यजायत ॥ ३० ॥ वक्तव्यताऽत्र वक्तव्या, यादृशी तिष्यके मुनौ । अतः परं परं द्वीपादिकं ज्ञेयं तु साधिकम् ॥ ३१ ॥ इत्थं निशम्य कुरुदत्तसुतस्य तस्य, तिष्याभिधस्य च मुनेश्चरितं पवित्रम् । भव्यास्तपश्चरणकर्मणि शश्वदेवोद्युक्ता भवन्तु शिवसौख्यरमाभिकाङ्क्षाः ॥ ३२ ॥ इति श्रीतिष्यक-कुरुदत्तसुतमुनिद्वयसम्बन्धः ॥

तिष्यक-कुरुदत्तसुत-मुनिद्वय-सम्बन्धः ।

अथाऽभयकुमारमुनेर्विजयविमानगमनमाह—

**पव्वइओ जो मायासमन्निओ वीरपायमूलम्मि । सो अभयकुमारमुणी, पत्तो विजयं वरविमाणं ॥ १४२ ॥**

व्याख्या—कोऽसौ अभयकुमारमुनिरित्याशङ्कानिरासार्थं तद्वक्तव्यतोच्यते—गाथार्थस्तु सुगमः ॥ १४२ ॥ सा चेयम्—

अभयकुमारमुनि-प्रबन्धः ।

अतीतकाले भरतक्षेत्रे क्षत्रकुलोद्भवः । जितशत्रुरभूद् भूपः, पुरे क्षितिप्रतिष्ठिते ॥ १ ॥ कालात् तत्पुरवास्तूनां क्षयाद् वास्तुविशारदैः । पश्यद्भिश्चनकक्षेत्रं, दृष्टं फलित-पुष्पितम् ॥ २ ॥ तत्राऽऽसीत् चनकपुरं, कालाद् वास्तुक्षयात् पुनः । वास्तुविद्भिर्वने दृष्टो, बलिष्ठो वृषभोऽन्यदा ॥ ३ ॥ स जीयते वृषैर्नान्यैः, शूर(रः)क्षेत्रवशात् ततः । तत्रर्षभपुरं न्यस्तमात्मनो वृद्धिमिच्छुभिः ॥ ४ ॥ क्रमात् तस्मिन्नपि क्षीणे, कुशस्तम्बाङ्किताऽऽस्पदे । समस्तवस्तुविस्तीर्णं, न्यस्तं कुशाग्रपत्तनम् ॥ ५ ॥ तत्र प्रसेनजिद् राजा, राज्यं चक्रे क्रमागतम् । बभूवुस्तस्य भूयांसः, कुमाराः श्रेणिकादयः ॥ ६ ॥ कर्तुं परीक्षां राज्यार्हकुमाराणां नृपो ददौ । करण्डान् मोदकभृतान्, समुद्रान् वार्घटांस्तथा ॥ ७ ॥ तानादिशच्च भुञ्जीध्वं, मोदकान् पिबतोदकम् । मुद्राच्छेदं तथा च्छिद्रमकुर्वाणाः कुमारकाः ! ॥८॥ बुद्धेरभावात् तैः सर्वं(वैः)भुक्तं पीतं न तत् तथा । शुद्धधीः श्रेणिकस्त्वेवं, बुभुजे च पयः पपौ ॥९॥ करण्डभ्रमणक्षुन्न(ण्ण)मोदकक्षोदमोदनम् । चक्रे शला-

काच्छिद्रालं, किं दुस्साध्यं धियां निधेः ? ॥ १० ॥ अम्भःपूर्णकोरपूर्णकुम्भाधो न्यस्य राजतः । शुक्तीर्गलज्जलैस्तत्र, चिच्छेद श्रेणिकस्तृपम् ॥ ११ ॥ चित्ते चमत्कृतो राजा, श्रेणिकस्य धिया तया । पुनस्तेषां परीक्षार्थं, स्थाले चिक्षेप पायसम् ॥ १२ ॥ तेषूपतेषु तद् भोक्तुं, मुक्ता व्यात्ताऽऽननाः शुनाः । तच्छुनिभीतास्ते नेशुः, कुमाराः श्रेणिकस्तु न ॥१३॥ तन्मुक्तस्थालकेभ्योऽदात्, पायसं स शुनां पुनः । यावल्लिलेहिरे ते त्थाकण्ठं तावत् स मुक्तवान् ॥१४॥ ज्ञातवृत्तो नृपो दध्यौ, परानेष यथातथा । रोत्स्यति भोक्ष्यते राज्यं, प्राज्याज्यपरमान्नवत् ॥ १५ ॥ शीघ्रं शीघ्रं पुरे तत्रोपद्रवोऽग्नेर्भवेत् ततः । अचीकरत् नृपः पौरलोकेषूद्घोषणामिमाम् ॥ १६ ॥ यस्य कस्याऽऽस्पदादुत्थास्यति प्रागाशुशुक्षणिः । पुरात् निर्यासनीयोऽसौ, यथा पामामयी(या)मयः ॥१७॥ प्रमादात् सूपकाराणां, राज्ञ एवान्यदाऽऽस्पदात् । उदस्थाद्वह्निर्हि, स्थानास्थानं स नेक्षते ॥१८॥ वर्द्धमानेऽधिकं वह्नौ, कुमारानादिशत् नृपः । यो यत् मदास्पदात् निष्कासयेत् तस्यैव वस्तु तत् ॥१९॥ ततस्तेऽन्ये गजाश्वादि, स्वेच्छयाऽऽदाय निर्ययुः । भम्भां यद् भूभृतामाद्यं, वाद्यं तत् श्रेणिकः पुनः ॥२०॥ किं कृष्टं ? केन केनेति, पृष्टे राज्ञा परेऽवदन् । वस्तु स्वाभीष्टमाकृष्टं, तां भम्भां श्रेणिकः पुनः ॥ २१ ॥ भम्भाऽऽकृष्टा त्वया किं रे ! ?, राज्ञोक्तः श्रेणिकोऽवदत् । जयचिह्नमियं राज्ञां, रक्षणीया तदादरात् ॥ २२ ॥ ततो ददे(ऽदाद्-)भिधां भम्भासार इत्यस्य पार्थिवः । राज्यार्हतां चासन्दिग्धां (-र्हतमसन्दिग्धं), विवेद वेदवाक्यवत् ॥ २३ ॥ सस्मारादो वचः स्वोक्तं, यस्योत्थास्यति वेश्मतः । वह्निर्निर्वासनीयोऽसौ, पुराद् भूपः प्रसेनजित् ॥ २४ ॥ विनाऽनुशासनं स्वस्यान्येषां कर्तुं न साम्प्रतम् । पुरात् क्रोशान्तरे राजाऽरचयत् शिबिरं ततः ॥ २५ ॥ कश्चित् पृच्छति यासि क ?, सोऽवग् राजगृहं प्रति । आगतोऽसि कुतश्चान्यः ?, सोऽवग् राजगृहादिति ॥ २६ ॥ ततो राजगृहाख्यं तत्, पुरं कालान्तरेऽभवत् । दध्यौ राजाऽथ राज्यार्हं, मैनं जानन्तु सूनवः ॥ २७ ॥ ततः सर्वकुमाराणां, देश-ग्रामादिकं पिता । न किञ्चित् श्रेणिक-



अभयकुमारमुनिप्रबन्धः ।

स्यादाद्, राज्यमस्याऽऽयतावितिः ॥ २८ ॥ तया चावज्ञया दूनः, श्रेणिको निर्ययौ गृहात् । अपमानं मनाग् मानधनाः सोढुं हि न क्षमाः ॥ २९ ॥ वे(वे)न्नातटपुरं प्राप्तो, भद्राख्यश्रेष्ठिनो भ्रमन् । भूर्त्तं लाभोदयमिव, कर्मोपाविशदापणे ॥ ३० ॥ तदा तत्र पुरे दैवादासीत् कश्चित् महोत्सवः । दिव्याङ्गराग-कर्पूरपूरपौराऽऽकुलत्वकृत् ॥ ३१ ॥ बहुभिः क्रायकैस्तस्याऽऽकुलस्य श्रेणिको द्रुतम् । बद्ध्वा सुगन्धद्रव्यस्वादात् पुटापुटिकादिकम् ॥ ३२ ॥ तत्साहाय्याद् दिने तस्मिँल्लाभोऽभूत् श्रेष्ठिनो महान् । पुण्यपुंसोऽनुभावाच्च, प्रभूतव्यवसायतः ॥ ३३ ॥ श्रेष्ठी पप्रच्छ तं कस्यातिथिः पुण्यवतोऽसि भोः !? । श्रेणिकः स्माह भवतामेवान्यस्य न कस्यचित् ॥ ३४ ॥ ततो दध्यौ धनी नन्दानन्दनार्हो वरो निशि । स्वप्नेऽद्य दृष्टो यः साक्षाद्, दैवादेयाऽऽगतोऽस्ति सः ॥ ३५ ॥ स्प(स्प्र)ष्टरोमोद्गमः श्रेष्ठ्याचष्टेऽभीष्टं ममाप्यदः । मध्येऽलसानामायाता, किं न प्रीणाति जाह्नवी ? ॥ ३६ ॥ संवृत्ताट्टं ततः श्रेष्ठी, तमादायागमद् गृहम् । भोजयामास सद्भक्त्या, संस्नाप्य परिधाप्य च ॥ ३७ ॥ तिष्ठतोऽस्यान्यदा श्रेष्ठ्यभाषिष्ट स्पष्टतुष्टितः । नररत्न ! कनीरत्नं, नन्दां परिणय द्रुतः ॥ ३८ ॥ श्रेणिकः स्माह मेऽज्ञातकुल-शीलस्य नन्दनाम् । किं दत्से ? श्रेष्ठ्यवग् ज्ञातं, कुलं शीलं गुणैस्तव ॥ ३९ ॥ शुभे क्षणे मुहूर्त्तेऽह्नि, पर्यणैपीत् तदाग्रहात् । कुशाग्राधीशसूर्नन्दां, सुनन्दां नाभिभूरिव ॥ ४० ॥ भुञ्जानः श्रेणिकोऽतिष्ठत् ततो भोगांस्तया समम् । चरैः प्रसेनजित् सूनोस्तत्स्वरूपं विवेद च ॥ ४१ ॥ स्वान्तं विदन् पिताऽन्येद्युर्दुःसाध्यव्याधिबाधितः । प्राहिणोदौष्ट्रिकान् श्रेणिकस्याऽऽनयनहेतवे ॥ ४२ ॥ ततोऽर्त्तिवार्त्तयाऽऽर्त्तोऽसौ, पत्न्यै दत्त्वेति वर्णभृत् । पत्रं राजगृहे गोपा वयं पाण्डुरभित्तयः ॥ ४३ ॥ अर्त्तेर्मदर्त्तिर्मोऽन्याऽभूत्, पितुः सत्वरमित्यसौ । सम्बोध्य श्वशुरमारुह्योष्ट्रीं राजगृहं ययौ ॥ ४४ ॥ तद्दर्शनात् पिता तोषादिव जातः पुनर्नवः । राज्याभिषेकं चक्रेऽस्य, कुम्भाम्भोभिर्मुदश्रुभृत् ॥ ४५ ॥ स्वान्ते पार्श्वजिनं पञ्चनमस्कारान् स्मरन् मुहुः । चतुःशरण-

मासाद्य, विपद्य धामगात् नृपः ॥ ४६ ॥ विश्वं विश्वम्भराभारं बभार श्रेणिकः पुनः । तन्मुक्तगर्भा नन्दाऽपि गर्भभारं सुदुर्वहम् ॥४७॥ गर्भानुभावादभवत्, शुभभावद्दोहदः । भवान्यभयदेत्यसा, आरुह्येभं पुरान्तरे ॥ ४८ ॥ स्वपुत्र्या दोहदः पित्राऽपूरि विज्ञप्य पार्थिवम् । पूर्णे काले च साऽसूत, सुतं प्राचीव भास्करम् ॥ ४९ ॥ दोहदार्थानुगां तस्याऽभय इत्यभिधां व्यधात् । मातामहो महोत्साहं, ददानो दानमर्थिनाम् ॥ ५० ॥ कलाकलापकौशल्यं, स याल्ये(लो)ऽल्पदिनैर्दधौ । प्राज्ञोत्तरप्रदः सद्यो, न हेतुस्तेजसां वयः ॥ ५१ ॥ बालकेलिकलौ तस्य, सवयाः कश्चिदूचिवान् । रेऽज्ञाततात ! तावत् नः, सार्द्धं जल्पसि किं मुधा ? ॥ ५२ ॥ ततोऽभयोऽभ्यधाद् भद्र !, भद्रश्रेष्ठी पिता मम । स ऊचे स पिता मातुस्तव मातामहो ह्यसौ ॥ ५३ ॥ नन्दां नन्दाऽऽत्मजोऽवादीत्, पितरं दर्शयाम्ब ! मे । सोचे भद्रः पिता भद्र !, सोऽप्याहैष पिताऽम्ब ! ते ॥ ५४ ॥ तत्त्वतस्तावमाख्याहि, सर्वथाऽत्स्यामि नान्यथा । ततो नन्दा निरानन्दा, सगद्गदमदोऽवदत् ॥ ५५ ॥ वत्स ! देशान्तराऽऽयातः, कश्चित् मां परिणीतवान् । त्वयि गर्भगते तावत्, तस्यैयुः केचिदौष्ट्रिकाः ॥ ५६ ॥ आलोच्य किञ्चिदेकान्ते, तैः सहैवाचलद् द्रुतम् । श्रुतस्त्यस्तव पिता(त्वतः) कश्चिद्, वेत्स्यापि न वेद्मि तम् ॥५७॥ स गच्छन् किञ्चिदूचे स्वामित्युक्ताऽन्याऽभयेन सा । ऊचे किञ्चित् न किञ्चैकं, पत्रं मे दत्तवानिदम् ॥ ५८ ॥ तद् विभाव्याऽभयो दध्यौ, शुद्धधीर्मे पिता ध्रुवम् । राजा राजगृहेऽस्तीति, तद् यामस्तत्र साम्प्रतम् ॥ ५९ ॥ ततो मातामहं पृष्ट्वा, नान्देयो नन्दया समम् । प्रतस्थे सर्वसामग्र्या, द्राक् च राजगृहं ययौ ॥ ६० ॥ इतश्च मत्रयेतॄणां, मन्त्रिणां श्रेणिकेन तु । एकोना मीलिता पञ्चशत्यस्ति शस्त(स्वस्ति)काम्यया ॥६१॥ पूर्णा(र्णां)कर्त्तुं च तां पञ्चशतीमुत्कृष्टधीवरम् । नरं नरपतिर्द्रष्टुमुपायं चक्रवा(च कृतवा-)नमुम् ॥ ६२ ॥ शुष्ककूपेऽङ्गुलिमुद्रां, क्षिप्त्वा क्षितिपतिर्जनान् । प्राहैतां कूपकण्ठस्थः, करेणाऽऽदास्यते हि यः(यकः) ॥६३॥ सुत्यतां मन्त्रिणां पुत्रीं, चार्द्धराज्यश्रियं तथा । सद्बुद्धिवेतनक्रीतां, तस्मै दास्यामि निश्चि-



अभयकुमारसुनिप्रबन्धः ।

तम् ॥ ६४ ॥ तस्मिन्नशक्यानुष्ठानेऽपटिष्ठोऽस्पष्टधीर्जनः । प्रोचे स्पृशति यस्तारास्, करेणैतां स उद्धरेत् ॥ ६५ ॥ इतश्च नन्दां नान्देयोऽवस्थाप्य नगराद् बहिः । वने स्वल्पपरीवारः, पुरान्तः प्राविशत् स्वयम् ॥६६॥ वीक्ष्यात्र जनसम्मर्दं, समेत्य स्माह सस्मितम् । किमेतदपि दुःसाध्यं ?, ज्ञातव्यतिकरोऽभयः ॥ ६७ ॥ तं वीक्ष्य सुभगाकारं, तत्र यत्राऽऽकृतिर्गुणाः । सम्भाव्येति जनोऽवोचद्, भद्र ! निष्कासयोर्मिकाम् ॥ ६८ ॥ गृहाण मन्त्रिमुख्यत्वमर्द्धराज्यं तथाऽऽत्मजाम् । ततोऽभयो धियां धामापश्यत् तां प्राग् दृशाऽऽत्मनः ॥ ६९ ॥ आर्द्रगोमयपिण्डेन, तां हत्वा तृणपूलकम् । ज्वलन्तममुचत् तस्योपरि शोषकृते द्रुतम् ॥ ७० ॥ भृत्वा जलं च चित्रेण, कूपं सारणिवारिणा । समुद्र(द्र)गोमयं कूपकण्ठस्थस्त्वरदाददे ॥ ७१ ॥ साधु साध्विति पौराणामुल्लेसुर्वदने गिरः । राज्ञा ज्ञातस्वरूपेणाऽऽहूतोऽसावात्मसन्निधौ ॥७२॥ पुत्रप्रेम्णा परिष्वज्य, भूपालश्चालपाप तम् । कस्त्वं भोः ! ? कुत आयातः ?, सोऽप्यूचेऽद्रौ नमच्छिराः ॥ ७३ ॥ वे(वे)न्नातटपुरात् स्वामिन्नायातो युष्मदन्तिकम् । स्मृत्वाऽथ श्रेणिको नन्दामिदं पप्रच्छ तं प्रति ॥ ७४ ॥ भद्र ! भद्राभिधः श्रेष्ठी, तत्राऽऽस्ते तस्य चाऽऽत्मजा । नन्दा सा गर्भवत्यासीत्, किमपत्यं तयाऽजनि ? ॥ ७५ ॥ स ऊचेऽभयनामानं, साऽसूत सुतमद्भुतम् । कियद्वयाः ? किंगुणोऽसावित्यपृच्छत् नृपोऽभयम् ॥ ७६ ॥ सोऽवक् तं मत्समं विद्धि, राजन् ! रूप-वयो-गुणैः । त्वमेव नासि किं ? पृष्टो, राज्ञैवमिति सोऽवदत् ॥ ७७ ॥ ततस्तोपात् निजोत्सङ्गमारोप्याऽऽघ्राय मूर्द्धनि । नेत्राम्भोभिः स्नपयितुमिवासिञ्चत् नृपोऽभयम् ॥ ७८ ॥ भद्रं भद्रास्ति ते मातुरिति पृष्टो नृपेण सः । प्राहेश ! ते पदाम्भोजसंज्ञं भृङ्गीव सेच्छति ॥ ७९ ॥ साऽधुनाऽऽयुष्मती बाह्योद्यानेऽस्ति जननी मम । श्रुत्वेति मुदितो राजा, केकीव जलदध्वनिम् ॥ ८० ॥ कृत्वा समग्रसामग्रीमग्रे कृत्वाऽभयात्मजम् । नन्दामभियो राजा, राजहंस इवाब्जिनीम् ॥८१॥ तनोस्तनिम्ना तन्वन्तीं, द्वितीयेन्दुकलातुलाम् । कपोलफलकं(क)लमालकां मलिनचीवराम् ॥८२॥

श्रधीभूतकरावाप्यां(वापां), निरञ्जनदर्शं भृशम्। श्रेणिकोऽवद्धवेणीं तां, तत्रापश्यत् प्रमोदभाक् ॥ ८३ ॥ [युग्मम्] करेणुकायामारोप्याऽऽनीय स्वीयगृहे नृपः। पट्टराज्ञीपदे नन्दां, चक्रे शक्रः शचीमिव ॥ ८४ ॥ विभज्य निजराज्यार्द्धं, सुसेनायाः स्वसुः सुताम्। सर्वमन्त्रिषु धुर्यत्वमभयायार्पयत् नृपः ॥ ८५ ॥ स्वस्य भक्तिवशात् ताते, मन्वानः पत्तितुल्यताम्। दुःसाध्यं साधयामास, साध्यं शुद्धधियाऽभयः ॥ ८६ ॥ भग्नः प्राक् चण्डप्रद्योतस्तस्मात् मुक्तोऽभवत् स्वयम्। बुद्ध्या बद्धः पुनः सोऽपि, सत्कृत्य प्रेषितो गृहम् ॥ ८७ ॥ आम्रापहारकश्चो(श्चौ)रो, ज्ञातस्तातात् विमोचितः। हारोऽप्यपहृतः प्राप्तः, चेल्लणाया गुरोर्गले ॥ ८८ ॥ कृतपुण्यः प्रिया-पुत्रैर्योजितो य(द)क्षदम्भतः। शुद्धान्तज्वालनादेशविलम्बात् तोषितः पिता ॥८९॥ मुद्राचौरमिषात् तातो दुर्गन्धां परिणायितः। बोधितश्चाऽऽर्द्रकासूनुः, प्रेषणादर्हदाकृतेः ॥ ९० ॥ इत्याद्यनेकसद्बुद्धिधौरेयाऽभयमन्त्रिणः। अवदातावदाताली, ज्ञेया ग्रन्थान्तराद् बुधैः ॥ ९१ ॥ इत्थं निर्यू(निर्व्यू)ढभारं तमन्येद्युः श्रेणिकोऽवदत्। राज्यमादत्स्व वत्सेदं, भवाम्यन्ते व्रती प्रभोः ॥९२॥ ताताऽऽज्ञाभङ्गभीः संसारभीरुरभयोऽभ्यधात्। तदनिच्छुः प्रतीक्षध्वं, कालक्षेपमिषात् क्षणम् ॥ ९३॥ इतश्चोदायिनं भूपं, प्रव्राज्य मरुमण्डलात्। विहृत्याऽऽगत्य वैभाराद्रौ वीरः समवासरत् ॥ ९४ ॥ नान्देयोऽप्युदानन्दो, गत्वा नत्वा प्रभुं जगौ। राजर्षिर्भरते कोऽन्त्यः? स्वाम्यशंसदुदायनः ॥ ९५ ॥ ततो नत्वा प्रभुं सद्यैत्याऽभयः श्रेणिकं जगौ। ताताऽऽदिश यथा दीक्षां, गृह्णामि स्वामिसन्निधौ ॥ ९६ ॥ राजाऽऽह वत्स! राज्यार्हस्त्वमेवान्यः सुतो न मे। तद् गृहाणाधुना दीक्षाऽऽशां मुञ्च समयेऽस्तु सा ॥ ९७ ॥ ततोऽभयोऽभ्यधात् तात!, राजर्षिर्भरतेऽन्तिमः। उदायनोऽर्हताऽऽख्यातस्तद् राज्यात् स्यात् न मे व्रतम् ॥ ९८ ॥ नाम्नाऽभयोऽस्मि सभयो, भवतो भवतोऽङ्गजः। श्रीवीरं प्रभुमाप्यापि, तं नोच्छेत्स्येऽसि तत् मुधा ॥ ९९ ॥ निर्बन्धादेवमासाद्य, नान्देयः पितृशासनम्। महर्द्ध्या वीरपादान्ते, शिश्रिये श्रेयसे व्रतम् ॥१००॥

नन्दाऽतु नन्दनं दीक्षां, कक्षीचकेऽर्हतोऽन्तिके । क्षौम-कुण्डलयोर्युग्मं, दत्त्वा हल्ल-विहल्लयोः ॥ १०१ ॥ चिरमाराध्य चरित्रमुग्राभिग्रहपूर्वकम् । मृत्वा सर्वार्थसिद्धेऽभूत्, सुरज्येष्ठोऽभयो मुनिः ॥ १०२ ॥ इति श्रीअभयकुमारमहामुनिकथानकम् ॥

अथ गाथाद्वयेन श्रीमेघकुमारमुनेर्विजयविमाने(न)प्राप्तिमाह—

**रायवरकन्नगाओ, अवगन्नि(णि)य अट्ठ गहियपवज्जो । पुव्वभवकहणपुव्वं, वीरेण थिरीकओ धम्मे ॥ १४३ ॥** तथा—

**भिक्खुपडिमाउ बारस, काउं गुणरयणवच्छरं च तवो । पत्तो मेघकुमारो, विजए इक्कारसंगधरो ॥ १४४ ॥**

व्याख्या—गाथार्थः कथानकादेव सुगमः ॥ १४३–१४४ ॥ तच्चेदम्—

श्रेणिकस्य प्रियैकाऽऽसीद्, धारिणी शीलधारिणी । गर्भस्तस्यामुदपादि, द्विरदस्वप्नसूचितः ॥ १ ॥ गर्भानुभावाद् जज्ञेऽस्या, जलदस्नानदोहदः । अभयाऽऽराद्धदेवेनापूर्यकालाम्बुदोद्गमात् ॥ २ ॥ कालेऽसूत सुतं सा तु, दोहदार्थानुगं ततः । पितृभ्यां मेघकुमार इति नाम प्रतिष्ठितम् ॥ ३ ॥ राजन्यजन्यास्तारुण्ये, परिणिन्येऽष्ट कन्यकाः । कुमारो मेघकुमारस्ताभिर्भोगांश्च भुक्तवान् ॥ ४ ॥ इतश्च वैभारगिरौ, चैत्ये गुणशिलाह्वये । श्रीवीरः समवासार्षीदहार्षीदीतिदुर्णयम् ॥ ५ ॥ सुरैर्निर्मितसमवसरणेऽस्थाद् जिनोऽन्तिमः । सपुत्रामात्य-सामन्तः, श्रेणिको वन्दितुं ययौ ॥ ६ ॥ श्रुत्वाऽर्हद्देशनां सम्यक्, सम्यक्त्वं श्रेणिकोऽश्रयत् । अन्येऽभयकुमाराद्याः, कुमाराः श्रावकव्रतान् ॥७॥ कृतकृत्यः कृतिज्येष्ठो, नत्वाऽन्त्यपरमेष्ठिनम् । श्रेणिकः सपरीवारः, स्वसद्माऽऽगाद् जिनं स्तुवन् ॥८॥ मेघो मेघोपमध्वानां, श्रुत्वाऽन्त्यजिनदेशनाम् । वैराग्यात् पितरावेत्य, विनयादिदमब्रवीत् ॥ ९ ॥ इयन्तं पितरौ ! कालं, पालितो लालितोऽस्म्यह(ह)म् । चकितो दुःखसम्भारात्, संसारात् साम्प्रतं पुनः ॥१०॥ प्रव्रज्यामनुमन्येथां, तदुच्छेदाय तां श्रये । वर्द्धमानप्रभूपान्ते, पितरा-

मेघकुमार-मुनि-वक्तव्यता ।

नूपतुलवः ॥ ११ ॥ कर्कशक्रिययाऽऽक्रान्तं, वत्स ! नेपत्करं व्रतम् । तत् तारुण्येऽधुना स्वस्थो, भव तत् समये श्रयेः ॥ १२ ॥ मेघोऽनघमनाः स्माह, भीतानां भवतोऽङ्गिनाम् । व्रतं सुकरमेव स्यात्, कृतान्तत्रस्तचेतसाम् ॥ १३ ॥ पितुर्मातुरपि क्रोडादाच्छिनत्ति सुतादिकम् । यतः कृतान्तो दुर्दान्तः, कश्चिद् रक्षाक्षमोऽत्र न ॥ १४ ॥ तदुक्तयुक्तवाक्येन, नृ(भू)पोऽवादीत् निरुत्तरः । निर्वापय दृशौ राज्यं, वत्साऽऽदत्स्व प्रतार्थ्येपि ॥ १५ ॥ एवमस्त्विति तेनोक्ते, राज्यं दत्त्वा नृपोऽवदत् । किं करवाणि भूयस्ते ?, तोषात् मेघोऽप्यदोऽब्रवीत् ॥ १६ ॥ आनीय दीयतां तावेदानीं मे कुत्रिकापणात् । रजोहरण-पात्रादि, साधुवेषं धृपौपधम् ॥ १७ ॥ स्ववचश्छलबद्धोऽथ, राजाऽऽनीयास्य तद् ददौ । गत्वा महर्द्ध्या मेघोऽपि, श्रीवीरान्तेऽग्रहीद् व्रतम् ॥ १८ ॥ ग्रहणाऽऽसेवनाशिक्षाशिक्षार्थं सोऽर्पितोऽर्हता । स्थविराणां शायितस्तैर्द्वारे ज्येष्ठ-लघुक्रमात् ॥ १९ ॥ आगच्छद्भिश्च गच्छद्भिः, साधुभिर्बहुभिर्भृशम् । तथाऽघट्यत पादाद्यैर्निद्रां नाऽऽपदसौ यथा ॥ २० ॥ मेघो दुर्ध्यानतो दध्यौ, निर्द्धनं साधवो ह्यमी । न मन्यन्ते व्रतं त्यक्त्वा, प्रातर्यास्यामि तद् गृहम् ॥ २१ ॥ इत्यर्त्या घट्टनात् चैषां, नीत्वा कृच्छ्रेण तां निशा(श)म् । त्यक्तुकामो व्रतं प्रातः, प्रभुमुद्दिश्य सोऽचलत् ॥२२॥ प्रभुणाऽभाणि तद्भावं, ज्ञात्वा ज्ञानेन चाऽऽत्मनः । वत्सर्षिघट्टनाद् दूनः, स्मरसि प्राग्भवान् न किम् ? ॥२३॥ इतो भवात् तृतीये त्वं, भवे वैताढ्यभुव्यभूः । सहस्रहस्तिनीनाथो, हस्ती मेरुप्रभाभिधः ॥ २४ ॥ दवाग्नेरन्यदा भीतस्तृपार्त्तोऽगाः सरोऽम्भसि । दन्तेन दन्तिनाऽन्येन, विद्धः पङ्कान्तरस्थितः ॥ २५ ॥ सविंशतिशतं तत्राब्दानामायुः प्रपाल्य सः । सप्ताहान्तेऽर्त्तितो मृत्वा, विन्ध्याद्रौ कर्यभूः पुनः ॥ २६ ॥ चतुःसप्तशतीनाथः, ख्यातोऽत्र प्राग्भवाख्यया । दवं दृष्ट्वाऽन्यदा भीतोऽस्मार्षीः प्राग्जातिमात्मनः ॥ २७ ॥ भीतस्तृणलतावृन्दमुन्मूल्य स्थण्डिलत्रयम् । करी चकार रक्षार्थं, मृत्योः सर्वो बिभेति हि ॥ २८ ॥ ग्रीष्मे ग्रीष्मे दवे लग्नेऽनग्ने तृणलतादिभिः । विविशुर्विवशाः सत्त्वाः, शशाद्याः,

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे द्वितीयोंऽशः । मेघकुमारमुनिवक्तव्यता । ॥१४६॥

स्थण्डिलत्रये ॥ २९ ॥ दन्त्यायातोऽतिसम्मर्दात्, नापश्यः स्थानमात्मनः । तृतीयेऽस्मिंश्चतुष्पादावस्थानस्थानकं विना ॥ ३० ॥ स्थितस्तत्रैक उत्क्षिप्तः, कण्डूयनकृते पदः । विवेश शशकस्तत्रात्यर्थसम्मर्दमर्दितः ॥ ३१ ॥ अस्थास्तथैव नामुञ्चस्त्वं चास्य कृपया पदम् । सार्द्धाद् द्व्यहाद् दवे शान्ते, सर्वे स्थानं निजं ययुः ॥ ३२ ॥ तृषार्त्तो धावितोऽम्भोऽर्थं, खिन्नपादोऽपतः क्षितौ । त्र्यहात् मृत्वा शताब्दायुस्त्वमभूः श्रेणिकाऽऽत्मजः ॥ ३३ ॥ कृपा कृता त्वयेदृक्षा, तदानीं निर्विवेकिना । विवेकिन्! साधुसङ्घट्टादेवं किं दूयसेऽधुना? ॥ ३४ ॥ एकस्य शशकस्यानुकम्पाया हीदृशं फलम् । सद्भोगयोगसामग्री, सौभाग्यं सत्कुलोद्भवः ॥ ३५ ॥ सारासारविचारज्ञोऽधुना भूत्वोत्तमाग्रणीः । जगद्वन्द्यसाधुपादपादस्पर्शो मुदे न किम्? ॥ ३६ ॥ इति स्वामिगिरा मेघः, प्रबुद्धोऽभूद् व्रते स्थिरः । प्रासादः पतितप्रायः, स्तम्भेन ध्रियते न किम्? ॥ ३७ ॥ द्वादश प्रतिमाः साधोर्गुणरत्नाभिधं तपः । तप्त्वाऽधीत्य तथा चैकादशाङ्गान्यविगानधीः ॥३८॥ एवं मेघकुमारर्षिराराध्योग्रव्रतं चिरम् । मृत्वाऽभूद् विजये देवो, विदेहे शिवमाप्स्यति ॥ ३९ ॥ इति श्रीमेघकुमारमहर्षिदृष्टान्तः ॥

अथ प्रसिद्धरत्नराशिपातनामोघदेशनालब्धिप्रबोधितानेकभव्यसत्त्वः केनापि विस्मृतत्वादिना हेतुना सूत्रकारेणान्यैरप्युपेक्षितोऽपि पङ्क्तिक्रमप्राप्तो नन्दिषेणमहर्षिः स्वोपज्ञगाथयैवाभिधीयते—

**वेसावासे वासं, कुणमाणो जयउ नंदिसेणमुणी। दस दस दिवसे दिवसे, पुरिसे पडिबोहिऊण वलइ ॥१४५॥**

व्याख्या—अक्षरार्थः सुगम एव । नवरम्—"कुणमाणो" त्ति कुर्वाणोऽपि, अपिर्लुप्तो द्रष्टव्यः । "वलइ" त्ति "धातवोऽर्थान्तरेऽपि" इति प्राकृतसूत्रेण खादति भोजनं करोति वा (च), सूत्रस्य त्रिकालविषयत्वाद् भुङ्क्ते स इत्यर्थः ॥ १४५ ॥ भावार्थश्चायम्—

पुरा कश्चिद् धनी विप्रो, यष्टुमारभत क्रतुम् । यज्ञपाटकरक्षार्थं, दासमेकमुवाच च ॥ १ ॥ सोऽवादीद् यदि मे शेषं, भक्तं (शेषं)

मेघकुमारमुनिवक्तव्यता।

नन्दिषेणमहर्षेः प्रबन्धः।

यशस्य दास्यति(सि)। तदा स्वाम्यन्यथा नो, मेने विप्रोऽपि तद्वचः ॥२॥ तत् सर्वं सर्वदा सोऽपि, दासोऽर्पयति साधवे। दानेन तेन देयायुर्बद्धं मृत्वाऽभवत् सुरः ॥ ३ ॥ स दासजीवश्च्युत्वेतः, श्रेणिकस्याऽऽत्मजोऽभवत्। नन्दिषेणाभिधो विप्रस्तूत्पेदेऽनेकयोनिषु ॥ ४ ॥ इहासि हास्तिकं काप्यरण्ये तारुण्यगर्वितः। दिग्वारणकुमाराभः, स्वामैकस्तत्र यूथपः ॥ ५ ॥ दुर्धीः स दध्यौ तारुण्ये, मा मद्यूथं ममाऽऽत्मजः। हरतीति ततो जातान्, जातान् पोतानमारयत् ॥६॥ कुक्षौ करिण्याश्चैकस्या विप्रजीवः स आययौ। सा दध्यौ पाप्मनाऽनेनानेकशो मत्सुता हताः ॥ ७ ॥ परं केनाप्युपायेन, रक्षाम्येकममुं सुतम्। भवितव्यानुसारेण, धीर्जागर्ति हि देहिनाम् ॥ ८ ॥ वातभमपदेयासौ, कुण्टाऽभूत् मायया शनैः। चचाल यूथनाथोऽपि, मुक्तेऽन्यो, मेत्यपालयत् ॥ ९ ॥ शनैरेत्यामिलद् यूथे, सा यामेऽह्नि द्व्यहे तथा। चिरादप्येत्यशक्तैव, विशश्वासेति यूथपः ॥ १० ॥ दूरे गते गजेऽन्येद्युः, सा ययौ तापसाश्रमे। तापसानां पपातांह्रौ, मस्तकन्यस्तपूत्करा ॥ ११ ॥ तैरक्षायि वराकीयं, करिणी शरणार्थिनी। उक्तं वत्से! सुखं तिष्ठ, कन्येवात्र पितुर्गृहे ॥१२॥ आसन्नप्रसवा तस्थौ, काले चासूत हस्तिनी। पोतं तत्राऽऽश्रमे मुक्त्वा, गत्वा यूथेऽमिलत् स्वयम् ॥१३॥ पोतं पाययति स्तन्यं, सा तत्रैत्यान्तराऽन्तरा। पशू(प्रसू)-नामप्यहो! मोहो, महान् (सत्सु) पुत्रेषु मातृगः ॥१४॥ नीवार-सल्लकीग्रासैराश्रयाशासिव द्विजाः। प्रेम्णा स्वपोतवत् पोतं, तापसास्तमपोषयन् ॥ १५ ॥ ववन्ध सिन्धुरो मूर्ध्नि, जटामुकुटमुत्कटम्। अङ्के पर्यस्तिकाबन्धं, स्वकरेण तपस्विनाम् ॥ १६ ॥ सिषिचुस्तापसा बालतरून् कुम्भाम्भसाऽन्वहम्। सिषेचैषोऽपि तान् वीक्ष्य, वृक्षान् भृत्वाऽम्भसा करम् ॥ १७ ॥ सिञ्चनात् सेचनक इत्यस्य तैर्नाम निर्मितम्। एवमारामशालीव, सैधते तापसाश्रमे ॥ १८ ॥ करसन्नोन्नवाङ्गस्तुङ्गदन्तो मधुपिङ्गदृक्। मूलप्रपुष्करः ग्रेप(त्र)त्पूर्वासनसमुन्नतः ॥१९॥ उच्चैःकुम्भो लघुग्रीवः, क्रमाचनतवेणुकः। शुण्डेपदूनलाङ्गूलः, सोऽभूद् मदमुखः क्रमात् ॥ २० ॥ [ युग्मम् ] पातुं पयोऽन्यदाऽऽयातं,

वातं वीक्ष्य सरित्तटे । क्रोधान्धः सोऽवधीत् लुब्धो, जज्ञे यूथपतिः स्वयम् ॥ २१ ॥ दध्यौ यथाश्रमेऽमुष्मिन्, रक्षितो माययाऽम्बया । ततः कर्मेदृशं तातेऽकार्यं क्षणनलक्षणम् ॥ २२ ॥ तत् माऽन्या करिणी काऽपि, रक्षतात् पोतमाश्रमे । निश्चित्येत्युच्चखानैष, समूलं तापसाश्रमम् । ॥ २३ ॥ तापसाः स्वाश्रमध्वंसोद्वेजितास्तेन दन्तिना । राजार्हं श्रेणिकायाऽऽख्यंस्तं पूर्णं सर्वलक्षणैः ॥ २४ ॥ तं वद्ध्वा सिन्धुरं बुद्ध्या, भूधनोऽनयदास्पदम् । असाध्यं धीधनानां किमिव दुर्भेद्यमम्भसाम् ॥ २५ ॥ आलानितं प्रसह्याप्यसह्यप्राणं नृपौकसि । प्रीणितास्तापमास्तत्राऽऽगत्येति तमतर्जयन् ॥ २६ ॥ रेरे ! दुराशयास्माभिः, पालितो वर्द्धितो भृशम् । आश्रयाश इवाभाङ्क्षीः, स्वाश्रयं(मं) भुङ्क्ष्व तत्फलम् ॥ २७ ॥ तत् श्रुत्वा स गजो दध्यौ, ध्रुवं धूर्त्तैरिमामहम् । अवस्थां प्रापितो दुःस्थां, नृपायाऽऽख्याय तापसैः ॥ २८ ॥ कदलीस्तम्भवत् स्तम्भमभाङ्क्षीत् मङ्क्षु स क्रुधा । वन्धनं त्रटित्यत्रोटयत् तूर्णं जीर्णरज्जुवत् ॥ २९ ॥ आध्मातताम्रताम्रास्यो, दधावेऽभिवनं करी । इतस्ततो विक्षिपंस्तांस्तापसान् वमथूनिव ॥ ३० ॥ श्रेणिकोऽगात् तमानेतुं, हयारूढैः सुतैर्वनम् । मृगयाऽऽप्तं मृगमिव, परितः पर्यवेष्टयत् ॥ ३१ ॥ प्रलोभनवचोवृन्दं, सादिनां मृदुवादिनाम् । मेने मनाग् गजो नासौ, भूतग्रस्त इवार्भकः ॥ ३२ ॥ नन्दिषेणवचः श्रुत्वा, प्राग्जन्मस्नेहतो गजः । जानन्नवधिनाऽऽत्मानं, तस्थौ स्तम्भ इव स्थिरः ॥ ३३ ॥ नन्दिषेणो गजं वेगात्, कक्षामालम्ब्य दक्षधीः । अपरायां दत्तपादोऽध्यारोहत् मुष्टिभिस्त्रिभिः ॥ ३४ ॥ आनीय वद्ध आलाने, ततोऽस्मै हस्तिने नृपः । प्रीतिपात्रपदे पट्टं, यौवराज्यमिवार्पयत् ॥ ३५ ॥ अन्येद्युर्देशनां श्रुत्वा, प्रबुद्धश्चरमार्हतः । व्रतार्थं श्रेणिकं नन्दिषेणोऽपृच्छदतुच्छधीः ॥ ३६ ॥ पित्रा कृच्छ्रादनुज्ञातो, व्रतार्थं, वेश्मतोऽचलत् । नन्दिषेणोऽथ देव्यूचे, वाचमित्थं नभःस्थिता ॥ ३७ ॥ वत्सोत्सुकायसे किं ? त्वमद्याप्यस्ति यतस्तव । भोगफलमलङ्कर्मीणं कर्म व्रतवारकम् ॥ ३८ ॥ तद् भुक्त्वाऽऽदत्स्व चारित्रं, नाभुक्तं क्षीयते हि तत् । तीर्थनाथा अप्यशक्ता, ह्यत्र भग्ना महा-

रयाः ॥३९॥ नन्दिषेणोऽवदत् साधुसङ्घसङ्गजुषो मम । किं करिष्यति कर्मेदमित्युक्त्वाऽगाद् जिनान्तिके(कम्) ॥४०॥ तथैवोक्तोऽर्हताऽप्येष निषिद्धोऽतिभृशायितः । रभसाददे दीक्षां, श्रीवीरचरणान्तिके ॥ ४१ ॥ षष्ठाष्टमादिकं शश्वत्, तेपे दुस्तपं तपः । विभावयंश्च सूत्रार्थं, विजह्रे स्वामिना समम् ॥ ४२ ॥ भोग्यकर्मोदयाद् भोगेच्छाऽभूत् तस्यान्यदाऽथ सः । तपसा कृशयामासात्यन्तं स्वव्रतभङ्गभीः ॥ ४३ ॥ चकारेन्द्रियविकारतिरस्कारकृते कृती । आतापनां श्मशानादौ, कर्कशामकृशक्रियः ॥ ४४ ॥ वीक्ष्येन्द्रियाणां विकृतेराधिक्यं देहनिःस्पृहः । मर्तुकामो गलेऽक्षेप्सीत्, पाशं चिच्छेद देव्यपि ॥ ४५ ॥ शस्त्रेणाऽऽस्मानमाघ्नानो, देव्या कुण्ठीकृतं च तत् । विषं मुमूर्षुरघसत्, तत्(तं)निर्वीर्यं व्यधात् सुरी ॥४६॥ विवेश वह्नावह्नाय, सोऽप्यभूद् हिमशीतलः । तेनाथ मृत्यवे स्पृष्टा, जलभूः स्थलभूरभूत् ॥ ४७ ॥ अतनोत् पतनं शैलाद्, बलाद् धृत्वाऽन्तराऽमरी । तमूचे व्रतकालोक्तं, किं न स्मरसि मद्वचः ? ॥ ४८ ॥ अभुक्त्वा न क्षमाः क्षेप्तुं, भोग्यकर्म जिना अपि । तत्प्रतीपं मुधा मुग्धोत्तिष्ठसे किमि(म)हान्वहम् ? ॥४९॥ देव्या उक्तमिति श्रुत्वा, साशङ्कः श्रेणिकाऽऽत्मजः । ययौ भिक्षार्थमेकाकी, चिकीर्षुः षष्ठपारणम् ॥५०॥ विवेश वेश्यावेश्मान्तरनाभोगादिदोषतः । धर्मलाभश्चेत्युवाच, वाचंयमाग्रणीः ॥ ५१ ॥ सस्मितं स्माह वेश्याऽपि, महर्षे! न प्रयोजनम् । अस्माकं धर्मलाभेन, द्रम्मलाभोऽस्तु नः परम् ॥ ५२ ॥ हसत्यसौ पराकी मां, किं ? ध्यात्वेत्यात्मलब्धितः । कृष्ट्वा नीव(ध्र)तृणं रत्नराशिं मुनिरपातयत् ॥५३॥ अस्तु ते द्रम्मलाभोऽयमित्युक्त्वाऽस्या गृहाद् ययौ । सा ससम्भ्रममुत्थायानुधाव्येति तमब्रवीत् ॥ ५४ ॥ तपोऽदो दुष्करं मुक्त्वा, भुङ्क्ष्व भोगान् मया समम् । प्राणनाथान्यथा प्राणांस्त्यक्ष्यामि त्वां विनाऽधुना ॥ ५५ ॥ भृशमुक्तस्तयैवं स, भोगान् दुःखात्मकान् विदन् । भोग्यकर्मोदयात् मेने, तद्वचो बलवान् विधिः ॥ ५६ ॥ प्रतिज्ञां चाकृत कृती, यदा दशाथवाऽधिकान् । बोधयिष्यामि नाऽऽदास्ये, तदा दीक्षामहं ध्रुवम् ॥ ५७ ॥ त्यक्तर्षिलिङ्गस्तद्गेहेऽ-

यासीत् स्वच्छाशयोऽप्यसौ । स्मरन् भागवतीं वाचं, दे(दै)वीं च प्रवचारकाम् ॥५८॥ दशायवाऽधिकान् पुंसः, प्रबोध्योपजिनं मुनिः । दीक्षार्थं प्राहिणोद् भोगान्, भुञ्जानः सह वेश्यया ॥ ५९ ॥ क्षीणे भोगफलेऽन्येद्युरस्य बोधयतो नव । अबुधन् दशमष्टक्कजातीयो न पुनः पुमान् ॥ ६० ॥ सोऽनुद्रुमानेऽस्मिन् भोक्तुं, नोत्तिष्ठति यदा तदा । कृत्वां रसवतीं वेश्या, तस्मै स्माह मुहुर्मुहुः ॥ ६१ ॥ प्रविशा-गर्भीर्नन्दिषेणः कर्ममलीमसम् । तं दशमं बोधयन्नस्थात्, सादरं विविधोक्तिभिः ॥ ६२ ॥ वेश्याऽप्यवसरज्ञोचे, प्राक् सिद्धान्नं विरस्यभूत् । निष्पन्नेऽन्ने नवीनेऽस्मिन्, किं विलम्बयसे प्रभो ! ? ॥६३॥ उवाच नन्दिषेणस्त्वां, बोधितो दशमोऽत्र न । अहमेवाद्य दशमो, भविष्यामि प्रबोधने ॥ ६४ ॥ विदन् भोग्यफलं कर्म, क्षीणमक्षीणधीनिधिः । प्राव्राजीन् नन्दिषेणर्षिः, पुनर्वीरजिनान्तिके ॥ ६५ ॥ सदुश्चरितमा-लोच्याऽऽराद्धसंयमतोऽशंसा । सार्द्धं विहृत्य मृत्वाऽसौ, स्वर्गसंसर्गभागभूत् ॥ ६६ ॥ इति श्रीनन्दिषेणमहर्षिकथा [ नकं गमानम् ] ॥

नन्दिषेण-महर्षेः सम्बन्धः ।

अथ हल्ल-विहल्लौ(ल्लौ)कुमारौ प्रस्तावयन्ति—

**सामिस्स घयं सीस त्ति पत्तवेरा सुरीइ साहरिया । सेयणए रयणाए, उववन्ने हल्लय-विहल्ला ॥ १४६ ॥**

हल्ल-विहल्ल-कुमारयोर्-द्वितय-सम्बन्धः ।

व्याख्या—गाथार्थः सुगमः । नवरम्—"सेयणए" त्ति 'सेचनके' गजराजे "रयणए" त्ति रत्नप्रभायाम् उत्पन्ने मृते मृतो इति यावत् ॥ १४६ ॥ केषुचिदादर्शेषु प्रक्षेपरूपा विशेषार्थप्रतिपादका सोपयोगा चेयमपि गाथाऽत्र दृश्यते—

**कयगुणरयणा इक्कारसंगिणो सोलसवासचरिसवया । हल्ल(ल्ल) जयंते पत्तो, अवरो अंबराइयविमाणे ॥ १४७ ॥**

व्याख्या—अक्षरार्थः स्पष्टः ॥ १४७ ॥ भावार्थस्त्वयम्—

श्रेणिकस्य सुतौ हल्ल-विहल्लौ चेल्लणोद्भवौ । अभूतां भाग्य-सौभाग्यभूमी सज्जनवल्लभौ ॥ १ ॥ क्षौम-कुण्डलयोर्द्वन्द्वं, दीक्षाक्ष-

लेऽभयाम्वया । नन्दया देवतादत्तं, दत्तं प्रेम्णा तयोर्द्वयोः ॥ २ ॥ इतश्च कूणिकः क्ष्मापोऽक्षमः सोढुं पितुः शुचम् । स्वस्थापितायां चम्पायां, पुर्यां साम्राज्यमन्वशात् ॥ ३ ॥ सेचनकद्विपाऽऽरूढौ, क्षौम-कुण्डलमण्डितौ । दिव्यहारवरोरस्कौ, रूपश्रीनिर्जिताश्विनौ ॥४॥ तौ चलन्मन्दराऽऽरूढौ, साक्षात् कल्पद्रुमाविव । क्रीडन्तौ स्वेच्छयाऽद्राक्षीद्, राज्ञः पद्मावती प्रिया ॥५॥ [युग्मम्] सा दध्यौ दिव्य-कुण्डल-हार-सेचनका-ऽम्बरैः । विनाऽऽननमिवाचक्षुरिदं राज्यं न राज(शोभ)ते ॥ ६ ॥ तान्याहर्तुं ततो राज्ञी, राज्ञे स्मा(साऽऽ)ह्वाय सोऽवदत् (-व्यवक्र) । पितृदत्तं तयोर्वस्त्वाहर्तु मेऽदो न युज्यते ॥ ७ ॥ प्रत्युतैतौ प्रसादार्हौ, तातमृत्युशुचार्दितौ । अत्याग्रहाऽऽवेशवशात्, तत् मेनेऽस्या वचो नृपः ॥ ८ ॥ तद्वस्तु त्यक्तसौभ्रात्रो, ययाचे तौ नृपोऽन्यदा । एवमुक्त्वेति सचैतामन्त्रयेतां धियां निधी ॥ ९ ॥ नाभिप्रायः शुभो भ्रातुः, कोऽर्थोऽनेन तदावयोः ? । सर्वत्र यत्र कुत्रापि, कर्मच्छायाऽनुगामिनी ॥१०॥ इति निश्चित्य चित्तान्तः, सान्तः-पुरपरिग्रहौ(धृतौ) । कुमारौ रत्नरक्षार्थं, वैशालीं जग्मतुर्निशि ॥११॥ तयोर्मातामहस्तत्र, चेटकः परिरभ्य तौ । युवराजाविव प्रीतो(तो), मेने स्नेहेन सर्वतः ॥ १२ ॥ ज्ञात्वा गतौ तौ वैशाल्यां, कूणिको ह्यचिन्तयत् । जातोऽहमुभयभ्रष्टस्त्यक्ताऽऽमिषशृगालवत् ॥१३॥ अथाऽऽनयामि तौ नो चेत्, तदा स्यात् मे पराभवः । ध्यात्वेति [मनसा] दूतं सद्भूतं(०), प्राहिणोदुपचेटकम् ॥१४॥ गत्वोपचेटकं दूत, उपविश्य यथाऽऽस्पदम् । स सौष्ठवमभाषिष्ट, स्वाम्यादेशोपदेशतः ॥१५॥ राजन्! हल्ल-विहल्लाख्यौ, रत्नान्यादाय तेऽन्तिकम् । आयातौ भ्रातरौ राज्ञः, कूणिकस्यार्पयाथ तौ ॥ १६ ॥ चेत् नार्पयसि तद् राज्यभ्रंशमासादयिष्यसि । तस्मात् त्वं भव ( तस्मात् ) कीलिकार्थे, मा महद् वेश्म पातय ॥ १७ ॥ चेटकः स्माह रे मुग्ध !, क्षत्रियाः शरणागतम् । नार्पयन्त्यन्यमप्येतौ, दौहित्रौ किं ददामि वः ? ॥ १८ ॥ सोऽवग् ददासि चेत् नैतौ, तदाऽऽच्छिद्यानयोर्बलात् । मत्प्रमोदेहि रत्नानि, सर्वतः क्षेममस्तु ते ॥१९॥ चेटकः पुनरप्याह, धर्मोऽयं राज-रङ्कयोः ।

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे द्वितीयोंऽशः।

हल्ल-विहल्ल-कुमारभ्रातृद्वितय-सम्बन्धः।

यदन्योऽन्यस्य या(वा)ऽऽदातुं वित्तमीशेत न क्वचित् ॥ २० ॥ इमौ तु मम दौहित्रौ, दानार्हौ शरणागतौ ? । तत् प्रसह्याथवा साम्ना दास्ये
किञ्चित् न चानयोः ॥ २१ ॥ चेटकस्येति गां श्रुत्वा, निराशो दूत एत्य सः । तत् सर्वं कूणिकस्याऽऽख्यत्, तत्क्रोधाग्नितृणोपमम् ॥२२॥
तत्कालं कूणिकः क्रोधाद्, जयभम्भामवीवदत् । सर्वे सर्वाभिसारेण, सैनिकाः सज्जतां ययुः ॥ २३ ॥ मत्तीनभूवुः कालाद्या, भ्रातरोऽस्य
दशापि हि । त्रीणि त्रीणि सहस्राणि, रथ-द्विरद-वाजिनाम् ॥ २४ ॥ पत्तीनां कोटयस्तिस्रोऽभूवंस्तेषां पृथक् पृथक् । तावन्मानं बलं कूणिक-
स्येशत्वं त्वथाधिकम् ॥ २५ ॥ सैन्येनैतावताऽचालीत्, चम्पेशश्चेटकं प्रति । धरणिं तरणिं चापि, तिरयन् सैन्यरेणुभिः ॥ २६ ॥
चेटकः प्रकटैर्बद्धमुकुटैः कटकोत्कटैः । वृतोऽष्टादशभिर्भूपैः, कूणिकमभ्यषेणयत् ॥ २७ ॥ रथ-सान्वरमा-ऽश्वानां सहस्राश्च त्रयस्त्रयः ।
पदातिकोटयस्तिस्रस्तद्बलेऽभूत् पृथक् पृथक् ॥२८॥ तावन्मानं बलं चेटकस्याऽऽदायाऽऽत्मसीम्नि तत् । कृत्वाऽस्थात् सागरव्यूहं, चेटकः
स्वा(श्वा)न्यसेनयोः(या) ॥२९॥ चम्पाधिपोऽपि प्रागुक्तमानया सेनयाऽनया । कृत्वाऽस्थाद् गरुडव्यूहं, दुर्भेदं शत्रुसैनिकैः ॥३०॥ रोदसी-
रोदनानीयाताऽवन्त सैन्ययोर्द्वयोः । रणतूराणि घोराणि, कातरत्रासदान्यमि(पि) ॥३१॥ रटीरररण्डितकराः, सञ्चेरुः सैन्ययोर्द्वयोः । कीर्त्ति-
स्तम्भैरियोत्तस्थैः शंस(सश)पूरा नराः वरैः ॥३२॥ सेनानीः कूणिकबले, कालोऽभूत् आत्तलाञ्छनन् । पूर्वं प्रवघृते योद्धुं, चेटकस्य स सैनिकैः
॥ ३३ ॥ युयुधे सादिना सादी, निषादी च निषादिना । रथी रथिना पत्तिः, पत्तिनेति बलद्वये ॥ ३४ ॥ कुन्तानां(न्तैन)पातितैर्पातितैर्वीरैर-
श्वैरिभैरपि । तदा तत्र शैल-गण्डशैलभूरिव भूरभूत् ॥ ३५ ॥ सुभटैर्भटकोटीनां, हतानां रक्तनिम्नगाः । धातुमच्छैलशृङ्गोत्थाशैलुर्यपापगा
इव ॥ ३६ ॥ वीराणां रक्तपातेनोच्छलद्भिर्भुजपङ्कजैः । आपीडश्रीदां मु(कौ)णपाः, पूरयामासुरुन्मुदः ॥ ३७ ॥ युद्धायाऽऽदिशन्त इवा-
प्यासान् स्वान् हुङ्कृतैः कृतैः । मूर्द्धानः पेतुरसिभिश्छिन्ना उत्तीय पक्षिवत् ॥ ३८ ॥ विगाहैवं परं पारनियागान् चेटकान्विकम् । स

हल्ल-विहल्ल-कुमारभ्रातृ-द्वितय-सम्बन्धः ।

काळः सागरव्यूहं, पोतः श्रो(स्रो)तःपतिं यथा ॥३९॥ इष्टकालमकालेऽपि, कालमालोक्य चेटकः। दध्यौ केनाप्ययं नैव, वज्रवद् दुर्जयोऽ-
स्त्यति ॥४०॥ तदेनं हन्मि बाणेन, देवतेनेति चेटकः। ध्यात्वा प्रह(हृ)त्य तेनैव, कालं कालमचीकरत् ॥ ४१ ॥ तदा गभस्तिरप्यस्तकालं
काल इवागमत्। शुचेव चम्पेशबलं, तमसा जग्रसे जगत् ॥४२॥ कुर्वन्तश्चेटकसैन्ये, वीरा वीरजयन्तिकाम्। रजनीं जयवाद्येन, निन्यु-
श्चारिबलं शुचा ॥ ४३ ॥ चक्रे सेनान्यमन्याहे, महाकालं च कूणिकः। चेटको निकटायातं, जघान तमपीषुणा ॥ ४४ ॥ एवमेवा-
वधीदन्यांश्चेटकोऽष्टौ बलाधिपान्। एकैकमह्न्येकैकस्मिन्, पूर्ववत् श्रेणिकाऽऽत्मजान् ॥ ४५ ॥ हतेषु चाऽऽत्मतुल्येषु, तेषु भ्रातृषु
( भ्रातृषु स तु ) कूणिकः। दध्यौ पितामहोऽजय्यः, शत्रुभिर्दिव्यशक्तितः ॥ ४६ ॥ तत् मयाऽजानता हा! धिक्, सोदराः सुरसो-
दराः। मुधैव निधनं नीताः, कालप्रभृतयो दश ॥ ४७ ॥ यादृक्षा नु गतिस्तेषां, तादृक्षाऽद्य ममापि सा। नापसर्तुमपि श्रेयस्करं माना-
पमर्दनात् ॥ ४८ ॥ दिव्यानुभावाद् दुर्जेयं, काञ्चिदाराध्य देवताम्। जयाम्येनं हि दिव्यानुभावो दिव्येन बाध्यते ॥ ४९ ॥ ध्यात्वेत्य-
ष्टमभक्तेन, सोऽस्थादुद्दिश्य देवताम्। प्राग्जन्मसङ्गतत्वेन, पुण्यै तत्तपसाऽपि च ॥ ५० ॥ सौधर्मेन्द्रोऽसुरेन्द्रश्च, सद्यः प्रादुर्बभूवतुः।
आहतुस्तच किं कुर्वस्तुष्टौ तावा(स्तोऽथाऽऽ)ह कूणिकः ॥ ५१ ॥ [ युग्मम् ] हन्यतां चेटकः शत्रुरथाभाषिष्ट वासवः। साधर्मिकं न
हन्म्येनं, किञ्चिदन्यच याच्यताम् ॥ ५२ ॥ राजंस्तव करिष्येऽङ्गरक्षोपायं यथा तथा। कूणिकोऽस्त्वेवमित्याख्यदसुरेन्द्रोऽप्यथावदत्
॥ ५३ ॥ रथ-मुशल-महाशिला-कण्टकमथापरम्। करिष्ये त्वद्वशेऽवश्यं, सङ्ग्राममरिदुर्जयम् ॥ ५४ ॥ तत्राऽऽद्ये रथ-मुशले,
भ्राम्यतो भ्रमकं विना। परितः पिष्यते ताभ्यां, शत्रुसैन्यं, रणोन्मुखम् ॥ ५५ ॥ द्वितीयेऽस्मिन् शिलातुल्यः, स्यात् न्यस्तः प्रस्तरोऽपि
हि। कण्टकोऽपि महाशस्त्राधिककार्यकरो भवेत् ॥ ५६ ॥ ततो युयुधिरे देवासुर-मर्त्याधिपास्त्रयः। समं चेटकसैन्येन, तेनाथात्यर्थम-
र्थितः ॥ ५७ ॥ सम्यग्दृष्टिः सदा षष्ठभोजी सर्वास्तिकव्रती। वरुणो नागरथिनः, पौत्रो भव विरक्तधीः ॥ ५८ ॥ राजाभियोगतः



हल-विहल-
कुमारभ्रातृ-
द्वितय-
सम्बन्धः।

पञ्चभक्तान्तेऽपि कृताष्टमः। विवेश रथ-मुशले, तादृशे(क्षे) दुस्सहे रणे ॥ ५९ ॥ आक्षिपन्नन्यसेनान्यं, रणाय वरुणोऽचलत्। रथिनौ तौ डुढौकाते, भानु-स्वर्भानुमीपणौ ॥६०॥ ऊचे चम्पेशसेनानीर्वरुणं प्रहरेति मा(गा)म्। सोऽप्याहानिघ्नते घातं, प्राक् कुर्वे वैरिणो(णि, विरणे)ऽपि न॥६१॥ साधु साधु महासत्त्वेत्युक्त्वा चम्पेशसैन्यपः। विव्याध व्याधवत् सिंहं, वरुणं मर्मणीपुणा॥६२॥ सत्यसन्धो महाश्राद्धो, वरुणोऽरुणदृक् ततः। अनैषीदिषुणैकेन, सेनान्यं तं यमौकसि ॥ ६३ ॥ प्रहारविधुरोऽत्यन्तं, निर्गत्य वरुणो रणात्। तृणसंस्तरमास्तीर्य, निषद्येदमचिन्तयत् ॥ ६४ ॥ सर्वात्मना मया स्वामिकार्यमार्यमनुष्ठितम्। कालोऽधुनाऽऽत्मनोऽर्थस्येत्यर्हन् वीरोऽस्तु मे गतिः ॥ ६५ ॥ सम्यगाराधनां कृत्वा, स्मरन् पञ्चनमस्क्रियाम्। मृत्वोत्पेदे सौधर्मे, विमाने नाम्नाऽरुणप्रभे ॥ ६६ ॥ चतुःपल्योपमान्यायुस्तत्राऽऽपूर्यो-समान्वये। महाविदेहेपूत्पद्य वरुणः शिवमाप्स्यति ॥ ६७ ॥ सुभटाश्चेटकस्याऽऽसन्, वरुणे रणदारुणे। हते द्विगुणितोत्साहाः, पाण्डवाष्टा(ष्ट्र)वराहवत् ॥ ६८ ॥ अकुट्टि चेटकभटैर्लकुटैश्चैव तद्बलम्( श्चम्पेशस्य बलं तकम्)। कुट्यमानं तद् वीक्ष्य स्वं, दधावे कूणिकः क्रुधा ॥ ६९ ॥ क्रीडन्निव रणे वीरकुञ्जरः कूणिकोऽम्भसि। पद्मखण्डमिवाक्षेप्सीद्, दिशोदिशि रिपोर्नलम् ॥ ७० ॥ अस्खल्यमानं केनापि, वीक्ष्याऽऽयान्तं तमन्तिके(कम्)। कूणिकं चेटको बाणं, दिव्यं धनुषि सन्दधे ॥ ७१ ॥ अथ कूणिकरक्षार्थं, पश्चसन्नाहममतः। चक्रे शक्रोऽसुरेन्द्रश्च, पृष्ठे कङ्कटमायसम् ॥७२॥ आकृष्य चापमाकर्णं, सायकं चेटकोऽमुचत्। विघाले स्खलितस्तस्य, धर्मणा कर्मणेव सः ॥ ७३ ॥ सदाऽप्यमोघबाणस्य, चेटकस्य चमूभटाः। वत्सेषोः स्खलनालोकात्, मेनिरे श्रेयसः क्षयम् ॥ ७४ ॥ व्रतभङ्गभयाद् बाणं, नामुचत् चेटकः परम्। निवृत्तोऽह्नि द्वितीयेऽपि, युद्धे मोघशरोऽभवत् ॥ ७५ ॥ एवं दिने दिने रौद्रो, रणोऽभूत् सैन्ययोस्त(र्द्व)योः। भटानां तत्र कोट्येकाऽशीत्या लक्षैर्हताऽधिका ॥ ७६ ॥ सर्वोदपादि दुर्ध्यानात्, तिर्यक्षु नरकेषु च। गणराजा ययुः

हल्ल-विहल्ल-कुमारभ्रातृ-द्वितय-सम्बन्धः।

स्थानं, पुर्यन्तश्चेटकोऽविशत् ॥ ७७ ॥ रुरोध कूणिकोऽप्येवामथ हल्ल-विहल्लकौ । भ्रातुर्बले गजाऽऽरूढौ, ददतुर्निशि सौप्तिकम् ॥ ७८ ॥ धर्तुं प्रहर्तुं केनापि, स्वप्रहस्तीव हस्त्यसौ । नाशाकि सौप्तिकायातो, हत्वा क्षेमेण यात्यपि ॥ ७९ ॥ मन्त्रिणः कूणिकोऽवोचद्, विद्रुतं प्रायशोऽखिलम् । वलं हल्ल-विहल्लाभ्यां, कोऽप्युपायोऽस्ति तद्वधे ? ॥ ८० ॥ तेऽप्यूचुरेतौ नो जेतुं, शक्यौ कोटिभटैरपि । यावत् सेचनकाऽऽरूढौ, कुमारौ वीरकुञ्जरौ ॥ ८१ ॥ तस्यैव हस्तिनस्तस्माद् वधोपाये यतामहे । कार्यतां खादिराङ्गारपूर्णाऽस्याध्वनि खातिका ॥८२॥ काष्ठैराच्छाद्य दुर्लक्ष्या, सा वारीव करिष्यते । वेगात् सेचनकस्तत्राऽऽगच्छन्नन्तः पतिष्यति ॥ ८३ ॥ इति मन्त्रिवचोयुक्तो, गजावस्कन्दवर्त्मनि । कूणिकः खातिकां चक्रे, खादिराङ्गारपूरिताम् ॥८४॥ अथ हल्ल-विहल्लौ तौ, गजाऽऽरूढौ निरीयतुः । अवस्कन्दकृते निश्यजानन्तौ तस्य विक्रियाम् ॥ ८५ ॥ खातिकोपान्तमायातौ, यावत् तौ तावदग्रतः । विभङ्गज्ञानतो जानन्, गजोऽस्थादूर्ध्व (द् दूर) एव ताम् ॥ ८६ ॥ रे रे ! पशुरसि व्यक्तमकृतज्ञ ! यदाहवात् । भीतो हल्ल-विहल्लाभ्यामिति निर्भर्त्सितः करी ॥ ८७ ॥ विरोधो बन्धुभिर्देशत्यागो दुर्व्यसनार्णवे । क्षिप्ता आर्यपादाः, कृतमेतत् कृते तव ॥ ८८ ॥ वराकः पोषितः श्वाऽपि, वरं यो भक्तिमान् विभौ । न तु त्वंसदृशः स्वस्योपेक्षकोऽर्थस्य यः प्रभोः ॥ ८९ ॥ कर्यैवं तर्जितस्ताभ्यां, भक्तंमन्यो बलादपि । वेगादुत्तारयामासाऽऽयुष्मन्तौ तौ स्वपृष्ठतः ॥ ९० ॥ स्वयं झम्पामदात् तस्यां, खातिकायां करी पुनः । सद्यो विपद्य चाऽऽयायामुत्पेदे नरकावनौ ॥ ९१ ॥ तद् वीक्ष्य दध्यतुस्तौ धिग् धिगावाभ्यां हि किं कृतम् ? । व्यक्तमावां पशू नायं, पशुरीदृग्विवेकवान् ॥ ९२ ॥ हस्तिरत्नं विनाश्येदं, क्षिप्त्वाऽऽर्यान् व्यसनाम्बुधौ । नीत्वाऽप्यबन्धुतां बन्धून्, जीवावोऽतः परं कथम् ? ॥ ९३ ॥ जीवावश्चेत् परं तर्हि, शिष्यीभूयाऽन्तिमार्हतः । नान्यथा शरणं तस्य, चरणास्त्यक्तवैरयोः ॥ ९४ ॥ भावश्रमणतां प्राप्तौ, नीतावुत्पाट्य तौ ततः । वीरान्ते शासनदेव्याऽद्भुतं



हल्ल-विहल्लकुमारभ्रातृद्वितय-सम्बन्धः ।

जगृहतुर्व्रतम् ॥ ९५ ॥ पठित्वैकादशाङ्गानि, द्वादश षोडशाब्दकान्। तौ प्राप्तौ व्रतमाराध्याऽपराजित-जयन्तयोः ॥ ९६ ॥ इति श्रीहल्ल-विहल्लकुमारमहर्षिकथा(-नकम्) ॥

अथ पृथक् पृथगेकैकगाथया सर्वानुभूति-सुनक्षत्र-सिंहमहामुनीन् नमस्करोति सूत्रकारः—

**धम्मायरियाणुराएण चत्तजीयं पडी(पीड)ण जाणवयं। सव्वाणुभूइमेगावयारिसहसारगं वंदे ॥ १४८ ॥**

**जो तेयपरिगयतणुं, कासी मुणिसामणाइ तं नमिमो। कोसलजाणवयं अच्चुयम्मि पत्तं सुनक्खत्तं ॥ १४९ ॥**

**मिंढियगामे रेवइपडिलाभियमोसहं सुवणगुरुणो। पाणिं सुनिसिद्धं जेण वंदिमो तमिह सीहमुणिं ॥ १५० ॥**

व्याख्या—गाथार्थः सुगमः ॥ १४८–१४९–१५० ॥ भावार्थस्तु(स्)त्रयाणामपि महर्षीणामेकेनैव कथानकेनोच्यते तथाहि—

अन्येद्युर्विहरन्नागात्, श्रावस्त्यामन्तिमो जिनः। तद्बहिः समवासार्षीदुद्याने कोष्ठकाभिधे ॥ १ ॥ तेजोलेश्याहृताराविस्तत्रागागतोऽस्ति सः। गोशालोऽष्टाङ्गनिमित्तज्ञानज्ञातजनाशयः ॥ २ ॥ अजिनोऽपि जिनंमन्यः, स्वस्य सर्वज्ञतां वदन्। जने हालाहला-कुम्भकार्याः सोऽवसदापणे ॥ ३ ॥ इतश्च षष्ठतपसश्चिकीर्षुः पारणं प्रभुम्। आपृच्छ्य गौतमोऽगच्छद्, भक्तार्थं नगरान्तरे ॥ ४ ॥ शुश्राव श्रव(म)णश्रेष्ठो, गिरः पौराननोद्गताः। अर्हन्नत्रास्ति सर्वज्ञो, गोशाल इति सर्वतः ॥ ५ ॥ श्रवसोर्दुःश्रवं श्रुत्वा, तद्वचो गौतमो द्रुतम्। एत्याप्रच्छत् प्रभुं सर्वज्ञो गोशालोऽथवाऽन्यथा? ॥ ६ ॥ प्रभुराख्यद् जनाध्यक्षं, गोशालो मङ्खलेः सुतः। मङ्खस्य नायं सर्वज्ञोऽर्हत्त्वं मिथ्यैव भाषते ॥ ७ ॥ मयैव दीक्षितश्चायं, शिक्षितोऽयं मयैव च। मयि प्रपन्नो मिथ्यात्वं, सर्वज्ञोऽयं न गौतम! ॥८॥ निशम्येति विभोर्वाचः, प्रोचुः पौराः पुरान्तरे। हंहो! अर्हन् महावीर इहायातोऽस्ति पूर्वहिः ॥ ९ ॥ स आख्याति न सर्वज्ञो,

गोशालः किन्तु मङ्खलेः । मङ्खस्य सूनुर्मच्छिष्योऽर्हन्मानी मानवो मुधा ॥ १० ॥ वचः श्रुत्वाऽश्रुतपूर्वं, तद् गोशालो महाह्वियत । अन्तर्निहितकोपेन, तस्थावाजीवकावृ(ह)तः ॥११॥ अथाऽऽनन्दाभिधः साधुः, शिष्यमुख्योऽन्तिमार्हतः । चिकीर्षुः षष्ठतपसः, पारणं प्राविशत् पुरि ॥ १२ ॥ हालाहलागृहासन्ने, गच्छन्तं वीक्ष्य तं मुनिम् । आकार्यानार्यगोशालः, साधिक्षेपमदोऽवदत् ॥१३॥ आनन्द ! भवदाचार्यो, वीरः सत्कारमात्मनः । जनादिच्छन् सभाऽध्यक्षं, मां तिरस्कुरुतेतराम् ॥ १४ ॥ यथाऽऽख्याति न गोशालः, सर्वज्ञोऽर्हन्न मङ्खलेः । सूनुरित्येष मां वेत्ति, तेजोलेश्योत्कटं न किम् ? ॥१५॥ तं तेजोलेश्यया भस्मीकरिष्ये सपरिच्छदम् । मुक्त्वैकं त्वां वचोमित्रं, प्रागत्राऽऽख्यानकं शृणु ॥ १६ ॥ क्षेमिलायां पुरि पुराऽवसरः प्रसरस्तथा । संवादः कारको लभनः पञ्च वणिजोऽभवन् ॥ १७ ॥ तेऽन्यदा व्यवसायार्थं, भृत्वा भाण्डैरनांस्यगुः । विविशुश्चापयोऽरण्यं, यान्तः कस्मिंश्चिदध्वनि ॥ १८ ॥ पथश्रान्तास्तृपा क्रान्तास्तेऽटन्तश्चोत्कटाटवीम् । जलं गवेषयामासुः, स्खलाध्वगवदध्वगाः ॥ १९ ॥ इतश्च शक्रमूर्द्धानं, भ्राम्यन्नवसरो वणिक् । ददर्श पञ्चशिखरं, चतुर्णामप्यदर्शयत् ॥ २० ॥ एकत्र भूत्वा तैः सर्वैर्भिन्नं प्राक्शृङ्गमस्य तु । ततः प्रापुः पयः स्वच्छं, तत् पीत्वा सुस्थतां ययुः ॥ २१ ॥ प्रसरः प्रसरल्लोभोऽथावोचद् याम्यशृङ्गकम् । दीर्यतां किञ्चिदप्यन्यद्, वस्तु लप्स्यामहे यतः ॥ २२ ॥ उवाचाऽवसरो नास्य, कर्त्तव्यः खननोद्यमः । उत्थास्यत्यहिरेतस्मात्, प्रायोऽहीनां ह्यदो गृहम् ॥ २३ ॥ संवादोऽवददत्राऽऽसीद्, विसंवादोऽम्बुनिर्गमात् । पूर्वस्मात् शिखरात् नाहिः स्फोटितादुत्थितोऽधुना ॥ २४ ॥ अथाऽऽहाऽवसरो दैवयोगादेवात्र वार्यभूत् । कारकोऽप्याह तर्ह्यत्र, दैवाद् द्रम्मा हि भाविनः ॥ २५ ॥ खनितुं तत् खनित्रेणेत्युक्त्वाऽऽरभत कारकः । मतं मेऽवसरो नेदमित्युक्त्वा शकटं ययौ ॥ २६ ॥ वभापे लभनो यातोऽवसरो यातु तर्ह्ययम् । वयमेते खनिष्याम इत्युक्त्वा तेऽखनन् समे ॥ २७ ॥ दैवतः स्फोटितात्

सर्वानुभूति-सुनक्षत्र-सिंहमहर्षि-त्रयवर्णनम् ।

तस्मात्, शृङ्गाद् द्रम्मा विनिर्ययुः । विभज्याऽवसरवर्जं, चत्वारो जगृहुश्च तान् ॥ २८ ॥ लब्धलाभास्तृतीयस्मात्, नाकुशृङ्गाद् विदारितात् । रूप्यं प्रापुस्ततो द्रम्मांस्त्यक्त्वोपाददिरे च तत् ॥ २९ ॥ चतुश्चतुर्थं चत्वारस्ते नाकोः शिखरं ततः । लेभिरे भूरि भूर्यत्र, त्यक्त्वा रूप्यं खलुर्वसु ॥ ३० ॥ लोभाभिभूतास्ते दध्युर्ध्रुवं रत्नानि पञ्चमे । भाविनः शृङ्ग इत्येते, सश्रखुस्तच्च पञ्चमम् ॥ ३१ ॥ अत्यन्तमधितावच्चेः, फालकूट इवोत्कटः । खातात् तस्मादथो शृङ्गाद् दृग्विषो निरगादहिः ॥ ३२ ॥ स वल्मीकाग्रमारुह्य, प्राग् दृशाऽऽलोक्य भास्करम् । भस्मीचकार तान् सर्वान्, सगन्त्री-वृषभान् क्रुधा ॥ ३३ ॥ निर्लोभत्वादधिष्ठात्री, तस्याहेः स्थानमीप्सितम् । मुमोचाऽवसरं प्रीत्या, क्षणाद् गन्त्री-वृषैः समम् ॥ ३४ ॥ चतुरोऽहिर्यथाऽधाक्षीत्, तांस्तथाऽहं भवद्गुरुम् । धक्ष्यामि त्वां तु मोक्ष्यामि, यथा मुक्तोऽहिना स ना ॥३५॥ आनन्दोऽपि निरानन्दो, नाऽऽत्तभिक्षोऽस्य वाग्भयात् । द्रुतमेत्य प्रभूपान्ते, पप्रच्छेदं कृताञ्जलिः ॥३६॥ गोशालजल्पितं स्वामिन्!, सत्यं ? योन्मत्तभाषितम् ? । किमीशः किञ्चिदीशानामपि कर्तुमुपप्लवम् ? ॥३७॥ अथाऽऽख्यत् प्रभुरन्यत्राऽर्हतां दाहक्षमो ह्यसौ । कुर्यादनार्यः सन्तापमात्रमत्राऽर्हतामपि ॥ ३८ ॥ तत् वत्स! गौतमादीनां, गत्वा शंस यथाऽऽगतम् । नुदन्ति नो नोदनया, धर्म(र्म्य)याऽप्यहितं हितम् ॥३९॥ गत्वाऽऽनन्दोऽवदत् तेषां, गोशालस्तावदागतः । प्रभोः पुरस्तादास्थाय, स्फुरदोष्ठोऽब्रवीदिति ॥४०॥ भोः काश्यप! वदस्येवं, गोशालो मङ्खलेः सुतः । न सर्वज्ञो विनेयो मे, मृषोक्तं ते ह्यदोऽखिलम् ॥ ४१ ॥ शुक्लाभिजाती गोशालः, स शिष्यो योऽभवत् तव । स धर्मध्यानतो मृत्वोत्पेदे त्रिदशसद्मनि ॥ ४२ ॥ परीषहसहेऽमुष्मिंस्तद्देहेऽस्म्यविशं पुनः । उदायाऽऽख्यो निजं त्यक्त्वा, महर्षिर्दुर्बलं वपुः ॥ ४३ ॥ तत् सम्यगपरिज्ञाय, गोशालं मङ्खलेः सुतम् । किं मां वदसि शिष्यं स्वं ?, गुरुर्मे नासि सर्वथा ॥ ४४ ॥ स्वाम्याख्यद् दस्युराक्रम्यमाण आरक्षकैर्यथा । गर्त्तं दुर्गं वनं वाऽपि, स्वान्तर्द्धानमनाप्नुवन् ॥ ४५ ॥ ऊर्णालोम्ना शणलोम्ना,

सर्वानुभूति-
सुनक्षत्र-
सिंहमहर्षि-
त्रयवर्णनम्।

तृणांशेन तृणेन वा। मन्यतेऽन्तर्हितं चाक्षिमीलनेन स्वमावृतम् ॥४६॥ तथा त्वमपि गोशालः, स एवासपरो न हि। किमन्यथा वृथाऽऽत्मानं, जल्पसीत्यात्तचौरवत् ॥ ४७ ॥ प्रभोरिति गिरा क्रुद्धो, लेष्टुस्पृष्टमृगेन्द्रवत्। गोशालः प्रभुमाह स, भो! भ्रष्टोऽस्यद्य काश्यप! ॥४८॥ सर्वानुभूतिर्भगवच्छिष्यः स्वगुरुरागवान्। तद्वचोऽक्षमः सोढुं, गोशालमिदमूचिवान् ॥ ४९ ॥ दीक्षितः शिक्षितश्चासि, गुरुणा करुणात्मना। अनेन हेतुना केन, निह्नुषे त्वं गुरुं निजम्? ॥ ५० ॥ मर्माविद्ध इव क्रुद्धो, गोशालो वचसाऽमुना। तेजोलेश्यां मुमोचास्मै, दग्ज्वालां दृग्विषाहिवत् ॥५१॥ सर्वानुभूतिस्तत्तेजोलेश्याऽऽवेशतया तया। दग्धः सद्ध्यानभृत् मृत्वा, सहस्रारे सुरोऽभवत् ॥ ५२ ॥ गोशालश्चाऽऽललापालमालप्यालं प्रभुं प्रति। सुनक्षत्रोऽनुशास्ति स्मेशभक्तः पूर्वसाधुवत् ॥५३॥ गोशालमुक्तया तेजोलेश्यया-ऽसौ (स्याद्) ज्वलद्वपुः। प्रभुं प्रदक्षिणीकृत्य, प्रत्योचारं चकार च ॥ ५४ ॥ आलोचित-प्रतिक्रान्तः, क्षमयित्वाऽखिलान् मुनीन्। साध्वीश्चर्षिः सुनक्षत्रो, मृत्वा कल्पेऽच्युतेऽगमत् ॥ ५५ ॥ गोशालः पुनराक्रोशन् भृशमुक्तोऽर्हता मया। दीक्षितः शिक्षितश्चास्यवर्णवादी ममैव किम्? ॥ ५६ ॥ श्रुत्वेत्यर्हद्वचः क्रुद्धो, गोशालः कालसर्पवत्। अपेत्य किञ्चिदमुचत्, तेजोलेश्यां प्रभुं प्रति ॥ ५७ ॥ प्रभविष्णुः प्रभोर्नाङ्गे, साप्यौ विशुदिवोसु(य)ता। विवेशास्यैव पापस्य, देहे गेहेऽग्निहेतिवत् ॥५८॥ गोशालो दह्यमानोऽन्तः, स्वतेजोलेश्यया तया। धार्ष्ट्यादाचष्ट दुष्टात्मा, स्खलद्वर्णमिदं प्रभोः ॥ ५९ ॥ मत्तेजोलेश्यया पित्तज्वराक्रान्तो विपत्स्यसे। छद्मस्थोऽपि हि भोः षण्मासान्ते काश्यप! निश्चितम् ॥ ६० ॥ स्वाम्याहान्यानि गोशाल!, षोडशाब्दानि केवली। विहरिष्यामि किन्तु त्वं, सप्ताहान्ते विपत्स्यसे ॥ ६१ ॥ सन्तापमात्रं स्वाम्यङ्गेऽभूत् तेजोलेश्ययाऽपतत्। दह्यमानस्तु गोशालः, शालद्रुरिव वायुना ॥ ६२ ॥ रक्तातीसार-पित्तज्वरार्त्तः स्वाम्यभवत् कृशः। तेजोलेश्यावापतसो, न चक्रे भेषजं पुनः ॥६३॥ अथो मिथोऽवदन् लोकास्तद् दृष्ट्वा यद् जिनोऽन्तिमः।

गोशालतेजसा स्पृष्टः, पण्मासान्तर्विपत्स्यते ॥ ६४ ॥ जनप्रवादं तं श्रुत्वा, शिष्यः सिंहाभिधोऽर्हतः । रहो रुरोद दुःखार्त्तस्तत्र धैर्यं क्व तादृशाम्? ॥ ६५ ॥ ज्ञात्वा ज्ञानेन सर्वज्ञस्तमाहूयाऽऽह सिंह ! किम् । जनप्रवादाद् भीतोऽर्हन्, किमित्थं हि विपद्यते? ॥ ६६ ॥ सिंहः प्राह तथाऽप्यर्हन्!, मादृशां धृतिहेतवे । आदत्स्व भेपजं द्रष्टुं, पीडितं त्वां क्षमोऽस्मि न ॥ ६७ ॥ ततः प्राह प्रभुस्तर्हि, रेवत्या श्रेष्ठिभार्यया । मदर्थं पक्वकूष्माण्डकटाहः संस्कृतोऽस्ति यः ॥ ६८ ॥ तं त्यक्त्वा बीजपूरस्य, कटाहं स्वार्थसंस्कृतम् । तमादायाऽऽगच्छ वत्स !, तत् करोम्येप भेपजम् ॥ ६९ ॥ ततः सिंहोऽगमद् गेहं, रेवत्यास्तत् तयाऽर्पितम् । स्वर्णवृष्टिरभूत् तत्र, तत्रत्वाऽऽगात् मुनिर्द्रुतम् ॥ ७० ॥ सिंहाऽऽनीतं तदासेव्य, प्रभुः प्रापाङ्गपाटवम् । बोधयन् भव्यपद्मांश्च, सञ्चचारार्कवत् चिरम् ॥ ७१ ॥ इति श्रीसर्वानुभूति-सुनक्षत्र-सिंहमहर्षीणां सम्बन्धः ॥

सर्वानुभूति-सुनक्षत्र-सिंहमहर्षि-त्रयवर्णनम् ।

अथ गाथाद्वयेन श्रीशालिभद्र-धन्ययोः सर्वार्थसिद्धिगमनमाहुः—

अज्ज वि अट्ठिनिवेसा, जेसिं अच्छेरयं व दीसंति । वेभारपव्वयवरे, जमलसिलारूवसंथारे ॥ १५१ ॥

ते धन्न-सालिभद्दा, अणगारा दो वि तवमहड्ढिया । मासं पाउवगया, पत्ता सव्वट्ठसिद्धम्मि ॥१५२॥ [युग्मम्]

व्याख्या—"अट्ठिनिवेस" त्ति अस्थ्नां निवेशः–रचनावस्थानमिति यावत् । "अच्छेरयं व" त्ति आश्चर्यमिव, शेषं सुगमम् ॥ १५१–१५२ ॥ भावार्थस्तूच्यते—

शालिभद्र-धन्यमहर्षि-द्वयसम्बन्धः ।

राजगृहपुरासन्ने, शालिग्रामेऽन्यदाऽऽययौ । काचिदुच्छिन्नवंशा स्त्री, धन्याऽऽख्या ससुतान्विता ॥ १ ॥ सङ्गमाख्यः सुतस्तस्या, वत्सरूपाण्यचारयत् । धनिनां गृहकर्माणि, जीविकार्थं करोति सा ॥ २ ॥ तत्र कश्चित् महो जज्ञेऽन्येद्युर्धनिजनप्रियः । पायसं सङ्गमोऽप-

शालिभद्र-धन्यमहर्षि-द्वयप्रबन्धः।

श्यद्, भुज्यमानं गृहे गृहे ॥ ३ ॥ सङ्गमोऽपि ययाचेऽम्बां, पायसं परमाग्रहात्। स्मृतप्राग्विभवाऽप्राप्त्या, रुरोदोच्चैर्जनन्यपि ॥ ४ ॥ पप्रच्छुः प्रतिवेशिन्यः, किं रोदिषि तपस्विनि!?। पुत्रयाच्ञामुवाचैषा, स्वर्द्धिख्यापनपूर्वकम् ॥ ५ ॥ पायसोपस्करं तस्यास्ता ददुर्दययाऽखिलम्। सिद्धेऽस्मिन् भोक्तुमासीनः, सूनुः साऽगाद् गृहान्तरम् ॥ ६ ॥ अत्रान्तरेऽर्भभाग्येन, तुन्नः पुण्यमिवाह्वयत्। महर्षिः पारणार्थ्यगात्, स्वान्यनिस्तारणक्षमः ॥७॥ तं वीक्ष्यासौ सुधीर्दध्यौ, किं स्वारत्नं सचेतनम्?। अपशुः कामगौः? किं वाऽकाष्ठः कल्पद्रुमो ह्ययम्? ॥ ८ ॥ अहो! मम वराकस्य, कोऽपि भाग्योदयो महान्। चित्तं वित्तं च पात्रं यत्, त्रिवेणीसङ्गमोऽभवत् ॥ ९ ॥ विवेकवानिति स्थालमुत्पाट्य मुनये ददौ। पायसं सङ्गमः साधुर्जग्राह कृपयाऽस्य तत् ॥ १० ॥ महर्षिर्निर्ययौ गेहात्, मध्याद् धन्याऽपि वेश्मनः। रिक्तस्थालं तमालोक्य, दध्यौ भुक्तं तपस्विना ॥ ११ ॥ पुनर्धन्या ददौ तस्मै, पायसं सोऽप्यतृप्तितः। आकण्ठं बुभुजेऽजीर्णात्, स्मरन् साधुं मृतो निशि ॥ १२ ॥ साधुध्यानात् च दानानुभावाद् राजगृहे पुरे। गोभद्रेभ्यस्य भद्रायाः, पत्न्याः कुक्षाववातरत् ॥ १३ ॥ स्वप्नेऽपश्यत् सुनिष्पन्नं, शालिक्षेत्रं धनिप्रिया। पत्युः शशंस सोऽप्यस्याः, स्माहाद्भुतसुतोद्भवम् ॥ १४ ॥ सद्धर्मकर्मनिर्माणलक्षणो दोहदोऽभवत्। श्रेष्ठिन्याः श्रेष्ठ्यपि श्रेष्ठगर्भगांस्तानपूरयत् ॥ १५ ॥ पूर्णकाले च साऽसूत, सुतरत्नं महाद्युति। वज्रं वज्रक्षितिरिव, स्वस्तरुं चैव मेरुभूः ॥ १६ ॥ सवर्द्धापनकं स्वप्नानुसारात् तस्य सद्दिने। शालिभद्र इति प्रीता, पितृभ्यां नाम निर्मितम् ॥ १७ ॥ धात्रीभिर्मोतृकल्पाभिर्लाल्यमानः स पञ्चभिः। किञ्चिदूनाष्टवर्षः सन्, ग्राहितः सकलाः कलाः ॥ १८ ॥ सवयोभिः सवयोभिरामक्रीडाभिराप्तवान्। पावनं यौवनं क्रीडन्, स्त्रीहृन्मोहनमोहनम् ॥ १९ ॥ तत्पुर(रः)श्रेष्ठिभिर्दत्ताः, कन्या द्वात्रिंशतं स्वयम्। महर्द्ध्या शालिभद्रेण, गोभद्रः पर्यणाययत् ॥ २० ॥ स ताभिर्दिव्यरूपाभिः, सार्द्धं सौधोपरिस्थितः। चिक्रीड विविधक्रीडारसैरिव हरिर्दिवि ॥ २१ ॥ अद्वैताऽऽनन्दस-

॥१५४॥

ग्रोऽसौ, विवेद न दिनं निशा(श)म् । समग्रां भोगसामग्रीं, गोभद्रः पर्यपूरयत् ॥२२॥ वैराग्यादथ गोभद्रः, श्रीवीरान्तेऽग्रहीद् व्रतम् । प्रपाल्यान्तेऽनशनेन, त्रिदशोऽभूत् महर्द्धिकः ॥ २३ ॥ ज्ञातपूर्वभवः सोऽथ, पुत्रे प्रेमाधिकं दधौ । सकलत्रस्य पुत्रस्य, ततो भोगानपूरयत् ॥ २४ ॥ दिव्याङ्गराग-नेपथ्याद्यन्वहं स सुरोऽर्पयत् । गृहकार्यं करोत्यम्बा, भोगान् भुङ्क्ते स केवलम् ॥ २५ ॥ इतश्च वणिजः केचिद्रानिन्यू रत्नकम्बलान् । राज्ञः सदसि नो राजा, बहुमूल्यतयाऽग्रहीत् ॥ २६ ॥ ततस्ते वणिजो भद्राश्रेष्ठिनीगृहमाययुः । भद्रा तदुक्तमूल्येन, तान् सर्वान् स्वेच्छयाऽऽददे ॥२७॥ राज्ञी विज्ञाततद्वृत्ता, श्रेणिकं साऽऽह चेल्लणा । स्वामिन् ! महार्घं(र्घ्यं)मप्येकं, देहि मे रत्नकम्बलम् ॥ २८ ॥ पृष्टास्ते भूभुजेत्यूचुर्भद्रा तानग्रहीत् समान् । भद्रा राज्ञा जनं प्रेष्य, मूल्येनैकं समर्थिता ॥ २९ ॥ भद्रोचे भद्र ! तांश्छित्त्वा, पादप्रोञ्छनकर्मणे । स्वसूनोः शालिभद्रस्य, पत्नीनां दत्तवत्यहम् ॥ ३० ॥ कार्यं चेदस्ति तैर्जीर्णैस्तदापृच्छय नृपं नय । ततः पुमान् प्रवीणोऽसौ, सर्वं राज्ञे व्यजिज्ञपत् ॥ ३१ ॥ तत् श्रुत्वा चेल्लणाऽवादीद्, देव ! पश्यान्तरं कियत् । आत्मनां वणिजां चाग्र, पित्तला-स्वर्णसन्निभम् ? ॥ ३२ ॥ तं पुमांसं पुनः प्रेष्याऽऽजूहवत् कौतुकात् नृपः । शालिभद्रं ततो भद्राऽभ्येत्य भूपमदोऽवदत् ॥ ३३ ॥ यद्दिर्नैहि सुतः स्वामिन्नायाति मम कर्हिचित् । प्रसादः क्रियतां तेनाऽऽगमनाद्य गृहे स्वयम् ॥ ३४ ॥ शालिभद्रेक्षणोत्तालो, भूपालोऽङ्गीचकार तत् । भद्रा क्षणं प्रतीक्षध्वमित्युक्त्वा प्राग् गृहं ययौ ॥ ३५ ॥ ततोऽट्टशोभामाराजागारं भद्राऽऽत्ममन्दिरात् । विचित्रचित्रसद्वस्त्र-स्वर्ण-रत्नमयीं व्यधात् ॥ ३६ ॥ स्वर्णस्तम्भोपरिप्रेङ्खन्मयूरमणितोरणम् । मौक्तिक-स्वस्तिकश्रेणिदन्तुरद्वारभूतलम्(-पणम्) ॥ ३७ ॥ पञ्चदुल्लोचसङ्कीर्णं, विकीर्णकुसुमोत्करम् । धूपनैर्धूपितं साक्षाद्, विमानमिव दीप्तिमत् ॥ ३८ ॥ तद् विवेश विशामीशः, शालिभद्रगृहं क्रमात् । चतुर्थभूमिकां प्राप्तः, सिंहासनमुपाविशत् ॥ ३९ ॥ सप्तमोर्व्यां ततो भद्राऽभ्येत्य पुत्रमभाषत । वत्साऽऽगच्छाध-

स्वनोर्व्यां, पश्य श्रेणिकमागतम् ॥ ४० ॥ शालिभद्रोऽप्यधात् मातः!, श्रेणिकं तत् क्रयाणकम्। स्वैरं गृहाण कोशान्तः, क्षिप किं पृच्छसीह माम्? ॥ ४१ ॥ भद्राऽवादीदिदं वत्स!, क्रेतव्यं वस्तु नास्ति हि। किन्त्वेषोऽखिललोकानां, प्रभुरेव तवापि च ॥ ४२ ॥ निशम्यापूर्वपूर्वं तत्, शालिभद्रो व्यचिन्तयत्। सांसारिकं धिगैश्वर्यं, यत्र ममाप्युपरि प्रभुः ॥ ४३ ॥ तदेभिर्भोगिभोगाभैर्भोगैर्मेऽतः परं कृतम्। श्रीवीरान्ते ग्रहीष्यामि, चारित्रं प्रभुतावहम् ॥ ४४ ॥ एवं संवेगवान् शालिभद्रो भद्रोपरोधतः। सभार्यस्तत उत्तीर्य, विनयेनानमत् नृपम् ॥ ४५ ॥ सलज्जे श्रेणिकेनालं, क्रोडे सुत इवासितः। आघ्रातो मूर्ध्नि च स्नेहात्, प्रस्नुताश्रूणि सोऽमुचत् ॥ ४६ ॥ भद्रोचे देव! देवत्वं, प्राप्तः पूरयतीप्सितान्। दिव्यभोगान् पिताऽस्मै तत्, नृभोगैरेष बाध्यते ॥ ४७ ॥ राज्ञा मुक्तो गतः शालिभद्रः सप्तमभूमिकाम्। भद्राऽर्थितो नृपो मेने, दाक्षिण्याद् तद्गृहेऽशनम् ॥ ४८ ॥ भद्रा समग्रसामग्रीं, राज्ञो भक्तिकृतेऽकृत। सद्य एवेप्सितं वस्तु, सिद्धं सुकृतिकाम(युक्तं निकाम)वत् ॥ ४९ ॥ स्नातौ स्नानीयपानीय-तैल-चूर्णैर्नृपाग्रणीः। पपात सहसा तावद्, गृहवाप्यां नृपोर्मिका ॥ ५० ॥ भद्राऽऽदेशेन दासीभिर्वाप्यम्भसि बहिष्कृते। ददर्श मुद्रां राजेन्द्रो, दिव्याभरणमध्यगाम् ॥ ५१ ॥ अङ्गाराऽऽभां तदन्तःस्थां, तामालोक्य विसिस्मिये। पप्रच्छ श्रेणिको दासीं, साऽप्यूचे विनयादिदम् ॥ ५२ ॥ निर्माल्यं शालिभद्रस्य, सभार्यस्य विधीयते। देवाग्यालङ्कृतिरूपं, प्रत्यहं पुष्पदामवत् ॥ ५३ ॥ तत् श्रुत्वा श्रेणिको दध्यौ, धन्योऽयं पुण्यवान् धनी। यस्येदृशर्द्धिर्धन्योऽस्मि, यत्पुरेऽस्तीदृशः पुमान् ॥ ५४ ॥ भद्रया सर्वसामग्र्या, भोजितो भूपतिर्भृशम्। सत्कृतो दिव्यवस्त्राद्यैः, स्तुवन् धाम जगाम ताम् ॥ ५५ ॥ इयेष शालिभद्रोऽप्याऽऽत्मनः संसृतिमोक्षणम्। यावद् धर्मसुहृत् तावत्, तत्रैत्य तमदोऽवदत् ॥ ५६ ॥ सुहृदद्य पुरोद्याने, धर्मघोषाख्यसूरिराट्। चतुर्ज्ञान्यस्ति सम्प्राप्तः, प्रीतैः सेव्यः सुरासुरैः ॥ ५७ ॥ तदेहि तं नमस्कर्तुं, यामः सोऽपि सुहृद्युतः। तत्रैत्य नत्वा सूरीन्द्रं,

पप्रच्छेदं कृताञ्जलिः ॥ ५८ ॥ भगवन्! कर्मणा केन, प्रभुरन्यो न जायते । गुरुराख्यद् व्रतं यस्तूपादत्ते हि भवेत् न सः ॥ ५९ ॥ यद्येवं भगवंस्तर्हि, यावदापृच्छ्य मातरम् । प्रव्रजामि तवोपान्ते, स्थेयं तावदिहैव हि ॥ ६० ॥ गुरुराह प्रमादो न, कार्यो भद्राऽऽत्मजस्ततः । तं नत्वेत्य गृहं भद्रां, संविग्न इदमूचिवान् ॥ ६१ ॥ धर्मोऽद्य शुश्रुवे मातर्धर्मघोषमुखात् मया । दुःखक्षयक्षमः सोचे, धन्यस्तस्य सुतोऽसि हि ॥ ६२ ॥ शालिभद्रोऽभ्यधात् तर्हि, देह्यादेशं प्रसीद मे । प्रव्रजामि पितुस्तस्य, येन स्यां तत्त्वतः सुतः ॥ ६३ ॥ भद्रोचे भद्र! भद्राऽऽशा, तवेयं किन्तु दुष्करम् । व्रतं तस्मिन्नचर्वणीयाश्मनकाश्मायसाश्चिरम् ॥ ६४ ॥ रम्भागर्भमृदुर्भोगलालितः कर्कशक्रियाम् । कथं रथं वत्स! वत्स इव वक्ष्यसि तद्धुरम्? ॥ ६५ ॥ शालिभद्रोऽभ्यधाद् भूयो, मातस्तद् दुष्करं व्रतम् । कातराणां न शूराणां, वार्द्धि लङ्घयतामपि ॥ ६६ ॥ भद्रोचे मुञ्च तद्भोगान्, मर्त्यगन्धान् सहस्व च । इत्यभ्यासवशाद् दीक्षा, सुकरा स्याद् यतस्तव ॥ ६७ ॥ स्वीचक्रे शालिभद्रस्तत्, मात्रोक्तं युक्तिमद् वचः । दिने दिने मुमोचैकां, ललनां तूलिकामपि ॥ ६८ ॥ इतश्चास्ति पुरे तस्मिन्, धन्यो धन्याह्वयो धनी । धनवान् पुण्यवान् भर्त्ता, शालिभद्रलघुस्वसुः ॥ ६९ ॥ शालिभद्रस्वसा साश्रुः, स्नपयन्ती पतिं तदा । किं रोदिषि प्रिये!? पृष्टा, भर्त्रेत्याह सगद्गदम् ॥ ७० ॥ प्राणप्रिय! मम भ्राता, मुञ्चत्येकां दिने दिने । व्रतं जिघृक्षुर्वैराग्यात्, पत्नीं तेनास्मि रोदिमि ॥ ७१ ॥ सस्मितं स्माह धन्यस्तां, भीरुः फेरुरिव व्रते । तव भ्राता कथङ्कारं, युगपत् ता न मुञ्चति? ॥ ७२ ॥ तस्याथान्याः प्रियाः प्रोचुर्नर्मणा कर्मणेरिताः । किं स्वयं क्रियते नैतत्, सुकरं नाथ! चेद् व्रतम्? ॥ ७३ ॥ धन्यः स्माह न युष्माकं, विघ्नभीत्या व्रतं श्रये । अनुमत्योऽधुना पुण्यात्, ताः श्रयिष्याम्यतो व्रतम् ॥ ७४ ॥ ताः प्रोचुर्नर्मणा नाथास्माभिरुक्तमिदं वचः । कथङ्कारं प्रियोऽस्मांश्च, त्यजसि प्रेमवर्द्धिताः? ॥ ७५ ॥ धन्योऽवक् स्त्री-धनाद्येवदस्थिरं सरिदूर्मिवत् । प्रोज्झ्य नित्यं श्रयिष्यामीत्युक्त्वोत्तस्थौ स्थिराशयः

शालिभद्र-धन्यमहर्षिद्वयप्रबन्धः ।

मनोज्ञां, पश्य श्रेणिकमागतम् ॥ ४० ॥ शालिभद्रोऽभ्यधात् मातः !, श्रेणिकं तत् क्रयाणकम् । स्वैरं गृहाण कोशान्तः, क्षिप किं पृच्छसीह माम् ? ॥ ४१ ॥ भद्राऽवादीदिदं वत्स !, क्रेतव्यं वस्तु नास्ति हि । किन्त्वेषोऽखिललोकानां, प्रभुरेव तवापि च ॥ ४२ ॥ निशम्याश्रुतपूर्वं तत्, शालिभद्रो व्यचिन्तयत् । सांसारिकं धिगैश्वर्यं, यत् ममाप्युपरि प्रभुः ॥ ४३ ॥ तदेभिर्भोगिभोगाभैर्भोगैर्मेऽतः परं धृतम् । श्रीवीरान्ते महीष्यामि, चारित्रं प्रभुतावहम् ॥ ४४ ॥ एवं संवेगवान् शालिभद्रो भद्रोपरोधतः । सभार्यस्तत उत्तीर्य, विनयेनानमत् नृपम् ॥ ४५ ॥ सलज्जे श्रेणिकेनालं, क्रोडे सुत इवासितः । आघ्रातो मूर्ध्नि च स्नेहात्, प्रत्युताश्रूणि सोऽमुचत् ॥ ४६ ॥ भद्रोचे देव ! देवत्वं, प्राप्तः पूरयतीप्सितान् । दिव्यभोगान् पिताऽस्मै तत्, नृभोगैरेष बाध्यते ॥ ४७ ॥ राज्ञा मुक्तो गतः शालिभद्रः सप्तमभूमिकाम् । भद्राऽर्थितो नृपो मेने, दाक्षिण्याद् तद्गृहेऽशनम् ॥ ४८ ॥ भद्रा समग्रसामग्रीं, राज्ञो भक्तिकृतेऽकृत । सद्य एवेप्सितं वस्तु, सिद्धं मुक्तविकाम(युक्तं निकाम)वत् ॥ ४९ ॥ स्नातो स्नानीयपानीय-तैल-चूर्णैर्नृपाग्रणीः । पपात सहसा तावद्, गृहवाप्यां नृपोर्मिका ॥ ५० ॥ भद्राऽऽदेशेन दासीभिर्वाप्यम्भसि बहिष्कृते । ददर्श मुद्रां राजेन्द्रो, दिव्याभरणमध्यगाम् ॥ ५१ ॥ अङ्गाराऽऽभां तदन्तःस्थां, तामालोक्य विसिष्मिये । पप्रच्छ श्रेणिको दासीं, साऽप्यूचे विनयादिदम् ॥ ५२ ॥ निर्माल्यं शालिभद्रस्य, सभार्यस्य विधीयते । देवाग्रालङ्कृतिरूपं, प्रत्यहं पुष्पदामवत् ॥ ५३ ॥ तत् श्रुत्वा श्रेणिको दध्यौ, धन्योऽयं पुण्यवान् धनी । यस्येदृशर्द्धिर्धन्योऽस्मि, यत्पुरेऽस्तीदृशः पुमान् ॥ ५४ ॥ भद्रया सर्वसामग्र्या, भोजितो भूपतिर्भृशम् । सत्कृतो दिव्यवस्त्राद्यैः, स्तुवन् धाम जगाम तम् ॥ ५५ ॥ इयेष शालिभद्रोऽथाऽऽत्मनः संसृतिमोक्षणम् । यावद् धर्मसुहृत् तावत्, तत्रैत्य तमदोऽवदत् ॥ ५६ ॥ सुहृदद्य पुरोद्याने, धर्मघोषाख्यसूरिराट् । चतुर्ज्ञान्यत्र सम्प्राप्तः, प्रीतैः सेव्यः सुरासुरैः ॥ ५७ ॥ तदेहि तं नमस्कर्तुं, यामः सोऽपि सुहृद्युतः । तत्रैत्य नत्वा सूरीन्द्रं,

पप्रच्छेदं कृताञ्जलिः ॥ ५८ ॥ भगवन्! कर्मणा केन, प्रभुरन्यो न जायते । गुरुराख्यद् व्रतं यस्तूपादत्ते हि भवेत् न सः ॥ ५९ ॥ यद्येवं भगवंस्तर्हि, यावदापृच्छ्य मातरम् । प्रव्रजामि तवोपान्ते, स्थेयं तावदिहैव हि ॥ ६० ॥ गुरुराह प्रमादो न, कार्यो भद्राऽऽत्मजस्ततः । तं नत्वैत्य गृहं भद्रां, संविग्न इदमूचिवान् ॥ ६१ ॥ धर्मोऽद्य शुश्रुवे मातर्धर्मघोषमुखात् मया । दुःखक्षययक्षमः सोचे, धन्यस्तस्य सुतोऽसि हि ॥ ६२ ॥ शालिभद्रोऽभ्यधात् तर्हि, देह्यादेशं प्रसीद मे । प्रव्रजामि पितुस्तस्य, येन स्यां तत्त्वतः सुतः ॥ ६३ ॥ भद्रोचे भद्र! भद्राऽऽशा, तवेयं किन्तु दुष्करम् । व्रतं तस्मिंश्चर्वणीयाश्चनकाश्चायसाश्चिरम् ॥ ६४ ॥ रम्भागर्भमृदुर्भोगलालितः कर्कशक्रियाम् । कथं रथं वत्स! वत्स इव वक्ष्यसि तद्धुरम्? ॥ ६५ ॥ शालिभद्रोऽभ्यधाद् भूयो, मातस्तद् दुष्करं व्रतम् । कातराणां न शूराणां, वार्द्धि लङ्घयतामपि ॥ ६६ ॥ भद्रोचे मुञ्च तद्भोगान्, मर्त्यगन्धान् सहस्व च । इत्यभ्यासवशाद् दीक्षा, सुकरा स्याद् यतस्तव ॥ ६७ ॥ स्वीचक्रे शालिभद्रस्तत्, मात्रोक्तं युक्तिमद् वचः । दिने दिने मुमोचैकां, ललनां तूलिकामपि ॥ ६८ ॥ इतश्चास्ति पुरे तस्मिन्, धन्यो धन्याह्वयो धनी । धनवान् पुण्यवान् भर्त्ता, शालिभद्रलघुस्वसुः ॥ ६९ ॥ शालिभद्रस्वसा साश्रुः, स्नपयन्ती पतिं तदा । किं रोदिषि प्रिये!? पृष्टा, भर्त्रेत्याह सगद्गदम् ॥ ७० ॥ प्राणप्रिय! मम भ्राता, मुञ्चत्येकां दिने दिने । व्रतं जिघृक्षुर्वैराग्यात्, पत्नीं तेनास्मि रोदिमि ॥ ७१ ॥ सस्मितं स्माह धन्यस्तां, भीरुः फेरुरिव व्रते । तव भ्राता कथङ्कारं, युगपत् ता न मुञ्चति? ॥ ७२ ॥ तस्याथान्याः प्रियाः प्रोचुर्नर्मणा कर्मणेरिताः । किं स्वयं क्रियते नैतत्, सुकरं नाथ! चेद् व्रतम्? ॥ ७३ ॥ धन्यः स्माह न युष्माकं, विघ्नभीत्या व्रतं श्रये । अनुमत्योऽधुना पुण्यात्, ताः श्रयिष्याम्यतो व्रतम् ॥ ७४ ॥ ताः प्रोचुर्नर्मणा नाथास्माभिरुक्तमिदं वचः । कथङ्कारं श्रियोऽस्मांश्च, त्यजसि प्रेमवर्द्धिताः? ॥ ७५ ॥ धन्योऽवक् स्त्री-धनाद्येतदस्थिरं सरिदूर्मिवत् । प्रोज्झ्य नित्यं श्रयिष्यामीत्युक्त्वोत्तस्थौ स्थिराशयः

॥ ७६ ॥ विलक्षास्ताः प्रियाः प्रोचुर्वयमप्यनु नायकम् । ग्रहीष्यामो व्रतं धन्यो, धन्यंमन्योऽन्वमन्यत ॥ ७७ ॥ अत्रान्तरे धर्मसुहृत्, समेत्याऽन्त्यजिनागमम् । प्रोचे पुण्यात्मनां सद्यः, पच(भव)ति स्वान्तचिन्तितम् ॥ ७८ ॥ ददद् दानं धनी धन्य, आरुह्य शिविकां ततः । महर्द्ध्या वीरपादान्ते, सदारोप्याऽऽददे व्रतम् ॥ ७९ ॥ प्रतत्वरे जितंमन्यः, शालिभद्रो निशम्य तत् । श्रेणिकेनान्वीयमानः, श्रीवीरान्तेऽग्रहीद् व्रतम् ॥ ८० ॥ परोपकारसारैकसञ्चारोऽर्हन् गतोऽन्यतः । खड्गधारं व्रतं शालिभद्रो धन्योऽप्यपालयत् ॥ ८१ ॥ क्रमाद् बहुश्रुतौ पक्षात्, मासात् मासद्वयाच्च तौ । त्रिमासाच्च चतुर्मासात्, चक्रतुः पारणं मुनी ॥ ८२ ॥ भृशं शोषितसर्वाङ्गावस्थि-चर्मावशेषकौ । अत्युग्रतपसा शालिभद्र-धन्यौ बभूवतुः ॥ ८३ ॥ पुना राजगृहेऽन्येद्युः, स्वामिना सार्द्धमीयतुः । काले प्रणेमतुर्वीरं, भिक्षार्थं मासपारणे ॥ ८४ ॥ स्वाम्याख्यदद्य ते भावि, पारणं मातृपार्श्वतः । इच्छामीति भणन् शालिभद्रो धन्यान्वितोऽचलत् ॥ ८५ ॥ प्राप्तौ भद्रागृहद्वारे(रं), तपःशोषितविग्रहौ । अन्यं भवमिवायातौ, न केनाप्युपलक्षितौ ॥ ८६ ॥ श्रीवीरं शालिभद्रं च, पुत्रं धन्यं सुतापतिम् । यामोऽद्य वन्दितुं सद्योऽन्नासीद् भद्रोत्सुकेति न ॥ ८७ ॥ क्षणं स्थित्वा गृहद्वारे, नाऽऽत्तभिक्षौ निरीयतुः । पुरः प्रतोलीमुल्लङ्घ्य, बहिः प्राप्तावुभौ मुनी ॥ ८८ ॥ तदा च शालिभद्रस्य, धन्याऽऽख्या प्राग्भवप्रसूः । पुरान्तः प्रविशन्त्यासीद्, विक्रेतुं दधि-सर्पिषी ॥ ८९ ॥ शालिभद्रेक्षणोद्भूतस्नेहतः प्रस(स्र)वस्तनी । धन्यंमन्या ददौ धन्या, नत्वा भक्त्या तयोर्दधि ॥ ९० ॥ स्वामिनोऽग्रे तदालोच्य, विनयाद् योजिताञ्जलिः । पप्रच्छासौ कथं नाथ !, पारणं मम मातृतः ? ॥ ९१ ॥ स्वाम्याख्यत् वत्स ! ते माता, धन्येयं प्राग्भवोद्भवा । जीवत्यप्यचिन्त्या हि, देहिनां गतिरीदृशी ॥ ९२ ॥ विधाय पारणं दध्ना, विधिनाऽऽपृच्छ्य च प्रभुम् । सद्भूतोद्भूतसंवेगौ, वैभारगिरिमीयतुः ॥ ९३ ॥ सधन्यः शालिभद्रर्षिः, प्रतिलिख्य शिलातलम् । पादपोपगमं(मनं)

नाम, तत्रानशनमादृदे ॥ ९४ ॥ भद्रा राज्ञा सहाऽऽगत्य, नत्वाऽऽपृच्छद् जगद्गुरुम्। स्वामिन्! किं नाऽऽगतौ शालिभद्र-धन्यौ गृहेऽद्य मे? ॥ ९५ ॥ स्वाम्याख्यदागतौ तौ तु (तु), त्वद्गृहे व्यग्रया त्वया। न ज्ञातौ प्राग्भवमात्रा, दध्ना तु प्रतिलाभितौ ॥ ९६ ॥ विधाय पारणं दध्ना, सत्वरं भवमुज्झितुम्। प्रायेण तस्थतुर्वैभाराऽऽद्रौ वैराग्यगर्भितौ ॥ ९७ ॥ ततो भद्रा समं राज्ञा, तत्र गत्वा ददर्श तौ। महर्षी निश्चलाऽऽत्मानौ, दृषत्पुत्तलकाविव ॥ ९८ ॥ स्मरन्ती गृहसौख्यानि, पश्यन्ती तद्व्यथां तदा। रुरोद रोदयन्तीव, तं भद्राऽद्रिं प्रतिस्वनैः ॥ ९९ ॥ विललापोचकैर्भद्रा, भद्राऽऽयातोऽसि वेश्मनि। न प्रमादात् मया ज्ञातोऽप्रसादं मा कृथा मयि ॥ १०० ॥ सर्वथाऽसि त्वया त्यक्ता, तपश्चरणकर्मणा। द्रक्ष्यामि त्वां दृशा किन्तु, गुर्व्याशाऽऽसीत् पुरा मम ॥ १०१ ॥ साऽप्याच्छेत्तुं किमारब्धा, ममाऽऽशा पाशवत् त्वया। शरीरत्यागरूपेणामुनाऽनशनकर्मणा? ॥ १०२ ॥ विध्रीभवामि तेनाहं, प्रारब्धं यत् तपस्त्वया। किन्त्वेतां फर्केशां मुञ्च, शिलां मृद्वीं श्रयापराम् ॥ १०३ ॥ इति ब्रुवाणां तामूचे, राजैकाऽसि त्वमेव हि। धन्या यस्याः सुतोऽसीदृग्, हर्षस्थाने हि काऽत्र शुक्? ॥ १०४ ॥ अर्हेच्छिष्यानुरूपं चेत्, तप्यतेऽयं मुनिस्तपः। मुधाऽनुतप्यते मुग्धे!, तर्हि किं लौल्यवत्त्वया? ॥ १०५ ॥ बोधिता श्रेणिकेनैवं, भद्रा भद्राऽऽत्मयुक्तिभिः। विमनस्का समं राज्ञा, नत्वा धाम जगाम सा(तौ) ॥ १०६ ॥ प्रपाल्यानशनं मासमेकं कृत्वाऽथ तौ मुनी। सुरावभूतां सर्वार्थसिद्धे स्थाने पराऽऽयुषौ ॥ १०७ ॥ इति श्रीशालिभद्र-धन्यमहामुन्योः कथानकम् ॥ [ ग्रन्थाग्रं ५९०३ ]

अथ श्रीमदुदायनचरमराजर्षि(-र्षेः) परमपदप्राप्तिमाह—

चंपाओ वीयभए, गंतुं वीरेण दिक्खिओ जो उ। संपत्तो परमपयं, उदायणो चरमरायरिसी ॥ १५३ ॥

शालिभद्र-धन्यमहर्षि-प्रबन्धः।

उदायनचरमराजर्षि-परियम्।

व्याख्या—गाथार्थः सुगम एव ॥ १५३ ॥ भावार्थः कथानकगम्यः । तच्चेदम्—

अत्राऽऽसीत् सिन्धुसौवीरदेशे वीतभयं पुरम् । उदायनाह्वयस्तत्र, राजा राज्यरमाऽऽस्पदम् ॥ १ ॥ सिन्धुसौवीरमुख्यानां, षोडशानां स नीवृताम् । त्रिषष्टित्रिशतीवीतभयादीनां महापुराम् ॥२॥ महाराज्ञां(जानां) महासेनादीनां मौलिकिरीटिनाम् । दशानामीश्वरोऽजय्यः, प्राज्यं राज्यमपालयत् ॥ ३ ॥ [युग्मम्] देवी प्रभावती तस्य, श्राविकाऽऽस्यास्तु नन्दनः । अभीचिर्भूभुजो भागिनेयः केश्याह्वयस्त्वभूत् ॥ ४ ॥ इतश्चम्पापुरि स्वर्णकारः कुमारनन्द्यभूत् । अपश्यदशृणोद् यां यां, चारुरूपां कनीं धनी ॥ ५ ॥ स्वर्णपञ्चशतीं दत्त्वा, तां तां परिणिनाय सः । एवं पञ्चशती स्त्रीणां, लम्पटस्यास्य चाभवत् ॥ ६ ॥ रेसे स ताभिरीर्ष्यालुरेकस्तम्भे(म्भ)गृहेऽन्वहम् । पञ्चाणुव्रतभृत् तस्य, श्राद्धोऽभूत् नागिलः सखा ॥ ७ ॥ प्राक्षिपातां पञ्चशैलद्वीपस्थे व्यन्तरस्त्रियौ । सुरेन्द्राऽऽदेशतो नन्दीश्वरयात्रार्थमेकदा ॥ ८ ॥ विद्युन्माली च्युतः पञ्चशैलेशस्तत्पतिस्तदा । ते दध्यतुश्च व्युद्ग्राहः, कश्चिद् यो नौ भवेत् पतिः ॥ ९ ॥ हृष्टः स्त्रीलम्पटस्ताभ्यां, यान्तीभ्यां स ललम्बिह । व्युद्ग्रहार्थं चावतीर्णे, तत्पार्श्वे ते पतीच्छया ॥ १० ॥ दृष्ट्वाऽद्भुते ते सोऽपृच्छत्, के युवां ? ते अथाऽऽहतुः । देव्यौ हासा-प्रहासाऽऽख्ये, पञ्चशैलाधिपे हि नौ ॥ ११ ॥ मुमूर्च्छ लब्धसंज्ञोऽप्यार्थयाञ्चके स हेमकृत् । रिरंसुरूचतुस्ते भो !, आगच्छेः पञ्चशैलके ॥ १२ ॥ इत्युक्त्वोत्पतिते ते तु, विद्युदुद्योतवत् क्षणात् । पटहोद्घोषणां राज्ञे, दत्त्वा सोऽकारयद् धनम् ॥ १३ ॥ यो नयेत् पञ्चशैले मां, द्रव्यकोटिं लभेत सः । पस्पर्श पटहमेकः, स्थविरश्चामहीद् धनम् ॥ १४ ॥ पुत्रेभ्यस्तद् धनं दत्त्वा, कुमारनन्दिना समम् । प्रतस्थे स्थविरोऽम्भोधौ, पोतेनाऽऽदाय शम्बलम् ॥ १५ ॥ दूरं(रे) गत्वाऽऽह वृद्धोऽब्धौ, स्वर्णकृत् ! पश्य नन्वितः । शैलपादेऽम्बुधेः कूले, वटद्रुद्रुवोऽस्त्यसौ ॥ १६ ॥ अस्य प्राप्तस्य पोतस्य, तस्याधो विलोजेवात् । शाखायां तत्र चैष्यन्ति,

भारु(र)ण्डास्त्रिपदाः खगाः ॥१७॥ सुप्तानां मध्यमे पादे, तेषामेकस्य कस्यचित् । बद्ध्वा दृढं पटेन स्वं, विलगेर्दृढमुष्टिना ॥१८॥ प्रातरुड्डीय
ते पञ्चशैलं यास्यन्ति निश्चितम् । पोतो विनङ्क्ष्यत्यावर्ते विलमस्त्वमपि द्रुमे ॥ १९ ॥ तथैव स्वर्णकृत् चक्रे, तदुक्तविधिना क्रमात् । पञ्च-
शैलं गतस्तत्रारज्यतद्धर्षा तयोर्भृशम् ॥२०॥ ताभ्यामुक्तोऽमुनाऽङ्गेन, नृ(नृ)णां भोग्योऽसि नाऽऽवयोः । भव त्वं पञ्चशैलेशोऽग्निप्रवेशादिना
ततः ॥२१॥ किं करोमि ? क यामीति जल्पन्नुत्पाठ्य पाणिना । चम्पापुरीवहिर्मुक्तस्ताभ्यां स स्वर्णकृत् क्षणात् ॥ २२ ॥ उपलक्ष्य जनैः
पृष्टः, स्पष्टं(ष्टं) सोऽवक् कथां निजाम् । तदाऽत्युत्सुकवामसः, प्रारेभे वह्निसाधनम् ॥ २३ ॥ वत्सरा नागिलोऽथोचत्, प्रारब्धं किमिदं
त्वया ? । मानुष्यं दुर्लभं सम्भोगकार्ये नयसि किं मुधा ? ॥ २४ ॥ भोगार्थ्येवासि चेद् धर्ममार्हतं सुहृदाश्रयेः । स्वर्गापवर्गदोऽप्येषोऽन्त-
राले भोगयोगदः ॥ २५ ॥ स एवं वोध्यमानोऽपि, नागिलेन निदानतः । इङ्गिनीमृत्युना मृत्वा, पञ्चशैलेश्वरोऽभवत् ॥ २६ ॥
निर्विण्णो नागिलस्तादृग्मृत्युनाऽस्य तपस्विनः । प्रव्रज्य चाऽच्युते कल्पे, सुरोऽभूत् परमर्द्धिकः ॥ २७ ॥ अथो प्रतस्थिरे नन्दीश्वरयात्रा-
कृते सुराः । हासा-प्रहासे चाभूतां, पुरो गातुं तदाज्ञया ॥२८॥ विद्युन्माली पतिस्ताभ्यां, तुम्नः पटहवादने । प्रौढाहङ्कारहुङ्कारमुखरास्यो-
(रः सो-)ऽनवीदिदम् ॥२९॥ को(का) मामादिशतीतीयं, ब्रुवाणस्यास्य दुन्दुभिः । मूर्त्तं कर्मेवाभियोग्यं, व्यलगद् गलकन्दले ॥३०॥ तं शशाको-
त्तारयितुं, हस्त-पादादिवत् न सः । लज्जयाऽधोमुखस्तस्थौ, ते इत्यस्योचतुः स्त्रियौ ॥३१॥ मा त्रपिष्ठाः प्रतिष्ठस्व, वाद्योऽवश्यं त्वयाऽऽनकः ।
तयोः पुरस्ताद् गायन्त्योर्हीमांस्तं सोऽप्यवादयत् ॥ ३२ ॥ स नागिलसुरो यात्राऽऽयातोऽद्राक्षीत् तमानकम् । वादयन्तं तयोर्वृन्दे,
मित्रं चमुपासरत् ॥ ३३ ॥ तेजोऽस्यासहमानोऽसौ, घूकवत् तिग्मरोचिषः । कुर्वन् पलायनं भीत्या, विद्युन्मालीक्षितोऽमुना ॥ ३४ ॥
ततः स्वतेजः संहृत्य, सायाह्नार्क इवामरः । ऊचे हासा-प्रहासेश'(शं), किं भो जानासि मां ? न वा ? ॥३५॥ सोऽवक् कोऽहं वराकः ? को

न वेत्सीन्द्रान् भवादृशान्? नागिलश्चाद्धरूपं स, शक्त्या चक्रेऽच्युतो(ता)ऽमरः ॥३६॥ तं प्रत्यबोधयत् मित्र! विद्युन्मालिन्! मया तदा । निषिद्धोऽप्यग्निमरणं, त्वमकार्षीः पतङ्गवत् ॥ ३७ ॥ सर्वज्ञधर्मविज्ञोऽस्म्यभूवं मृत्वेदृशः सुरः । ग्रीष्मर्तु-शिशिरर्त्वर्केखद्योतयोः ॥ ३८ ॥ दृष्ट्वाऽच्युतसुरो विद्युन्मालिनं खेदशालिनम् । आह स मा स शोचीर्मोः !, कृतस्य करणं नहि ॥ ३९ ॥ कारयेः किन्तु गार्हस्थ्यावस्थास्थस्याऽन्तिमार्हतः । चित्रशालाऽन्तरे कायोत्सर्गस्थस्याधुनाऽऽकृतिम् ॥४०॥ कारितायां ततस्तस्यां, भवेऽन्यस्मिन् भविष्यति । बोधिवीज(जं)धर्मबीजमचिरात् मोक्षसौख्यदम् ॥४१॥ कुजन्म कुगतिर्दैन्यं, न दौर्भाग्यं दरिद्रता । कारकाणां जिनार्चानामिहान्यस्मिन् भवे भवेत् ॥ ४२ ॥ विद्युन्माल्यतिनिर्वेदादङ्गीकृत्यास्य शासनम् । भावश्रमणमद्राक्षीत्, श्रीवीरं प्रतिमास्थितम् ॥ ४३ ॥ महाहिमवतो लात्वा, स सुरो जात्यचन्दनम् । यथादृष्टामलङ्कारसारां मूर्त्तिं विभोर्व्यधात् ॥ ४४ ॥ गोशीर्षचन्दनमयेऽक्षेप्सीत् तां काष्ठसम्पुटे । इतश्चैकस्य पोतस्य, षण्मासी भ्रमतोऽभ्यगात् ॥ ४५ ॥ विद्युन्माल्येत्य तत्राब्धौ, तस्मै सांयात्रिकाय तम् । समुद्गं प्रतिमागर्भं, दत्त्वाऽवादीदिदं पुनः ॥ ४६ ॥ स्वस्ति तुभ्यमनुत्पातं, गच्छेः सान्निध्यतो मम । सिन्धुसौवीरविषये, श्रीवीतभयपत्तने ॥ ४७ ॥ स्थित्वा चतुष्पथे तत्र, कुर्वीथा घोषणामहो ! । देवाधिदेवप्रतिमां, गृह्णतां गृह्यतामियम् ॥ ४८ ॥ सांयात्रिकोऽपि तत्कालं, तत्कृतोत्पातशान्तितः । क्षेमेणाऽऽगात् तटं तीर्त्वा, नदीमिव नदीश्वरम् ॥ ४९ ॥ तदुक्तविधिना चक्रे, घोषणां स चतुष्पथे । आगादुदायनस्तत्र, नृपश्चान्ये द्विजादयः ॥ ५० ॥ स्मृत्वा द्विजादयोऽभीष्टं, विष्णुं ब्रह्माणमीश्वरम् । स्वदेवं पर्शुना जघ्नुरविघ्नं काष्ठसम्पुटम् ॥ ५१ ॥ कुठाराः कुण्ठतां भेजुरायसाश्चापुपा इव । दत्तघाता भृशं भग्नाः, सम्पुटेऽस्मिन् सुराश्रयात् ॥ ५२ ॥ नृपादिसर्वलोकानामाश्चर्यादप्यहर्मुखात् । ललाटंतपस्तपनो, मध्याह्नसमयोऽजनि ॥ ५३ ॥ ततः प्रभावती राज्ञी, प्रतिमाह्वातुमादिशत् । भोजनातिक्रमात् चेटीं, पतिभक्तोचितं ह्यदः ॥ ५४ ॥ राज्ञाऽऽज्ञप्ता

तदाश्चर्यं, द्रष्टुमागात् प्रभावती । किमेवदित्यपृच्छच, राजाऽप्याख्यद् यथास्थितम् ॥ ५५ ॥ प्रभावत्याह देवाधिदेवा ब्रह्मादयो न हि । भगवानेव देवाधिदेवोऽर्हन् देवसेवितः ॥ ५६ ॥ तदन्यनामस्मरणाद् दत्ते मूर्तिर्न दर्शनम् । प्रादुष्करिष्ये तामस्मि, पश्यन्तु कुतुकं जनाः ! ॥ ५७ ॥ इत्युक्त्वा साऽभिषिच्यैनं, सम्पुटं यक्षकर्दमैः । देवी पुष्पाञ्जलिक्षेपपूर्वं नत्वाऽस्तवीदिति ॥ ५८ ॥ गतराग ! गतद्वेष !, सर्वज्ञ ! जगदर्चित ! । देवाधिदेव ! मे पुण्यस्पर्शनं देहि दर्शनम् ॥ ५९ ॥ देव्या इत्युक्तमात्रेण, मक्षेणेवाऽऽहवः स्वयम् । व्यदारीत् प्रातरम्भोजकोशवत् काष्ठसम्पुटः ॥ ६० ॥ तदन्तरर्हतो दृष्टा, स्पष्टालङ्कारधारका । गोशीर्षचन्दनमयी, प्रतिमा देवनिर्मिता ॥ ६१ ॥ तदार्हच्छासनैकातपत्रमात्रं प्रभावना । अभूत् प्रभावती साक्षादेव देवमथास्तवीत् ॥ ६२ ॥ सोममूर्ते ! स्फुरत्कीर्ते !, कारुण्यामृतनीरधे ! । देवाधिदेव ! निरसङ्ग !, जगच्चिन्तामणे ! जय ॥ ६३ ॥ सत्कृत्य बन्धुवत् सांयात्रिकं प्रीत्या प्रभावती । अन्तरन्तःपुरं निन्ये, प्रतिमां तां महामहात् ॥ ६४ ॥ तत्र चैत्यं विधाप्योच्चैर्न्यस्यान्तः स्नानपूर्वकम् । प्रभावती त्रिकालं तां, मूर्तिमर्चति सस्पृहम् ॥ ६५ ॥ अन्येद्युरर्चामर्चित्वा, पत्या सार्द्धं प्रभावती । प्रारेभे स्फारसङ्गीतमविगीतं स्पृहावती ॥ ६६ ॥ व्यक्तरागाक्षरं श्रव्यं, वीणां भूसुगवादयत् । देवी ननर्त व्यक्ताङ्गहारसारक्रमक्रमम् ॥ ६७ ॥ नृत्यत्कबन्धमन्येद्युर्ददर्शोऽऽजिकबन्धवत् । नृत्यन्त्याः पार्थिवो देव्या, दुर्निमित्तोपसूचकम् ॥ ६८ ॥ नृपस्योन्निद्रनिद्रस्येवारिष्टदर्शनात् तदा । पपात कम्बिका हस्तादकस्माद् रङ्गभङ्गदा ॥ ६९ ॥ अकाण्डताण्डवच्छेदकोपात् प्राह प्रभावती । तालभ्रष्टाऽस्मि किं स्वामिन् !, स्थिताः स्थ वाद्यवादनात् ? ॥७०॥ अत्याग्रहतया पृष्टः, कम्बिकापातकारणम् । राजाऽप्याख्यत् प्रभावत्या, दुर्ग्रहः स्त्रीग्रहः खलु ॥ ७१ ॥ देव्यूचे दुर्निमित्तेनामुनाऽल्पायुरहं प्रिय ! । परं श्रेयस्करं मेऽदो, व्रतावसरसूचनात् ॥ ७२ ॥ इत्युक्त्वाऽन्तःपुरं प्राप्ता, विना खेदं प्रभावती । अर्हद्धर्माऽऽविद्धकर्णा, राजा तु व्यमनायत ॥ ७३ ॥ कृतस्नानाऽन्यदा देवी, दास्या

भाऽऽरूढः प्रद्योतभूपतिः । निरयागादैरावतस्थवासवश्रियमाश्रयन् ॥ १११ ॥ कुब्जायै रुरुचे दृष्टमात्रोऽसौ तस्य साऽपि हि ।
अब्जाक्षि ! हे(स्ये)हि कुब्जाऽऽख्ये !, प्रद्योतः स्माह मत्पुरीम् ॥ ११२ ॥ कुब्जाऽऽख्यत् क्षणमप्येकं, विना जीवाम्यहं न याम् ।
देवाधिदेवप्रतिमां, तां विना यामि न क्वचित् ॥ ११३ ॥ तद् गच्छास्याः प्रतिकृतिं, कारयित्वाऽऽनय द्रुतम् । मुक्त्वाऽत्र तां नयावो
नौ, मूर्त्तिं सुरकृतामिमाम् ॥ ११४ ॥ ततो निरूप्य तां सम्यग्, गत्वा रात्रौ तया समम् । चण्डप्रद्योतभूमीन्द्रोऽवन्तीं प्रावरगाद् द्रुतम्
॥ ११५ ॥ अचीकरद् यथादृष्टां, जात्यश्रीखण्डदारुणा । प्रद्योतः प्रतिमां तत्र, किमसाध्यं हि भूभुजाम् ? ॥ ११६ ॥ सोऽपृच्छत्
मन्त्रिणो वृद्धान्, प्रतिष्ठास्यति को न्विमाम् ? । तेऽप्यूचुरागतोऽत्राऽऽस्तेऽधुना कपिलकेवली ॥ ११७ ॥ प्रतिष्ठास्यत्यसौ राजन् !
कपिलोऽपि नृपाऽऽग्रहात् । तूर्णं चूर्णं क्षिपन् मूर्त्तिं, प्रलष्ठात् मन्त्रसंस्कृतम् ॥ ११८ ॥ चर्चयित्वाऽर्चयित्वा च, निधानमिव तद्धनः ।
उत्पाट्य दोर्भ्यां प्रद्योतस्तां हृदि प्रतिमां न्यधात् ॥ ११९ ॥ आरुह्याऽनिलवेगेभं, वातादप्यतिवेगिनम् । ययौ नृपोऽल्पकालेन, निशि
वीतभयं पुरम् ॥ १२० ॥ तत्रान्तःपुरचैत्यान्तर्न्यस्य मूर्त्तिं स्वकारिताम् । विद्युन्मालिकृतां तां राट्, कुब्जां चाऽऽरोपयद् गजम्
॥१२१॥ ततः प्रतस्थे प्रद्योतः, कृतार्थः स्वां पुरीं प्रति । स वेगात् सम्मुखमिवाऽऽययौ राजगृहं क्रमात् ॥१२२॥ तत्र प्रद्योत-कुब्जाभ्यां
क्षमाभ्यां भोगकर्मणि । भायलस्वामिनो नाम्नो(म्ना), वणिजो विदिशापुरः ॥ १२३ ॥ देवाधिदेवप्रतिमा, साऽर्चनायार्पिताऽन्यदा ।
सोऽद्राक्षीत् पुरुषौ तेजोराशी पूजोपहारिणौ ॥ १२४ ॥ [युग्मम्] वीक्ष्याक्षिपारणाकल्पौ, तौ स्निग्धाविव भायलः । पप्रच्छ कौ युवां
मद्रौ ! ?, तावपीत्यमशंसताम् ॥१२५॥ भद्राऽऽवां नागकुमारौ, सुरौ पातालवासिनौ । नाम्ना कम्बल-शम्बलौ, धरणेन्द्रस्य सेवकौ
॥ १२६ ॥ स्वाम्यादेशादिमां मूर्त्तिमायावोऽन्वहमर्चितुम् । विदिशापूर्नदी-नदाध्वनोन्मज्जनमज्जनात् ॥ १२७ ॥ भायलः स्माह

मे दर्शयतं शभवनानि भोः ! । शाश्वतीः प्रतिमास्तत्र, वन्दितुं मे मनोरथः ॥ १२८ ॥ सम्पूर्यतां प्रसादाद् वां, न मुधा देवदर्शनम् । ताभ्यामर्द्धक्षत्रार्चोऽसौ, नीतस्तेनाप्यनोत्सुकः ॥ १२९ ॥ पाताले शाश्वतीस्तेन, मूर्चयोऽनेकशो नताः । धरणेन्द्रोऽप्यधात् प्रीतः, प्रसादो भद्र ! याच्यताम् ॥ १३० ॥ भायलः साह मन्नाम, ख्यायते भूतलेऽखिले । यथा तथा कुरु स्वामिन् !, नामैवालङ्करणं(-ङ्कृतिर्) नृणाम् ॥ १३१ ॥ धरणेन्द्रोऽप्यधात् श्राद्ध !, त्वन्नाम्नोज्जयिनीपतिः । देवकीयं पुरं तत्र, कारयिष्यति निश्चितम् ॥ १३२ ॥ आयासीयंत् क्वार्द्धार्चस्तेन कालेन गच्छता । मिथ्यादृग्भिरत्वसौ गुप्ता, प्रतिमा पूजयिष्यते ॥ १३३ ॥ बहिः प्रतिकृतिस्तस्यास्तैः क्रूरैरर्चयिष्यते । भायलस्वामिनामाऽयमादित्य इति वादिभिः ॥ १३४ ॥ भायलोऽवददाः ! पापमित्याहितमनाहि(ह)तम् । आपतितं कृतं मेऽदो, यदर्क इति वादिभिः ॥ १३५ ॥ मम नाम्नाऽऽर्हती मूर्त्तिर्हाहा ! तैः पूजयिष्यते । धरणोऽथाऽऽह मा शोचीः, कलेर्लीलायितं ह्यदः ॥ १३६ ॥ ततो नागकुमाराभ्यां, ह्रदमध्येन वर्त्मना । भायलः स्वप्नदर्शीव यथास्थानममुच्यत ॥ १३७ ॥ इतश्चोदायनो राजा, प्रातर्देवगृहं ययौ । म्लानमाल्यां पुरो देवाधिदेवार्चां ददर्श ताम् ॥ १३८॥ दध्यौ चाऽऽरोपितास्तस्यां, प्रतिमायां परेऽह्न्यपि । तत्कालावचिता हीयादृश्यन्त कुसुमोत्कराः ॥ १३९ ॥ देवदत्ताह्वया दासी, सदा पाञ्चालिकेव या । स्तम्भलमाऽभवत् साऽपि, विलीनेव न दृश्यते ॥ १४० ॥ यूनो भुक्ताङ्गनस्येव, गलितो दन्तिनां मदः । आयातोऽनिलवेगस्तत् निश्चितं गन्धसिन्धुरः ॥ १४१ ॥ तदारूढो ध्रुवं चण्डप्रद्योतोऽत्राऽऽगतो निशि । प्रतिमां देवदत्तां च, जहार स च चौरवत् ॥ १४२ ॥ ततोऽप्यर्पेणयत् क्रोधात्, प्रद्योतं प्रत्युदायनः । दशान्यगुर्नृपा बद्धमुकुटास्तं परे पुनः ॥ १४३ ॥ मरीचिकास्ततसैन्यानां, प्रादुरासन् पुरश्च(स्स)राः । पयायमानसूर्यांशुमध्यो जाङ्गलमुल्यय ॥ १४४ ॥ तृषाऽऽर्त्ताः सैनिकाः पेतुरास्फलन्तो मिथः क्षितौ । नाद्राक्षुश्चक्षुषा किञ्चिदुलूका इव वासरे ॥१४५॥ अनन्योपायतो राजाऽ-

उदायनचरमराजर्षिचरित्रम्।

स्मार्यीत् प्रभावतीसुरम्। विशेषाद् व्यसनाऽऽलीढे, ह्यभीष्टस्मरणं स्मृतम् ॥१४६॥ स्मृतमात्रोपतस्थेन, तेन दिव्येन वारिणा। त्रिपुष्कराण्यपूर्यन्त, सैन्यचित्तानि चोन्मुदा ॥ १४७ ॥ सैनिकाः सुस्थितां जग्मुः, पायं पायं पयश्चयम्। जीव्यतेऽन्नं विनाऽप्यम्बु, विना न स्वरगात् सुरः ॥ १४८ ॥ प्रापुरेकादशाप्यल्पकालादुज्जयिनीं पुरीम्। रुद्रा इवापरे स्वाम्नोदायनाद्या महीभुजः ॥१४९॥ ततो दूतमुखेनाभूद्, रथसङ्गरसङ्गरः। मिथो वीतभयेशस्याऽवन्तिनाथस्य तत्र तु(तु) ॥ १५० ॥ आरुरोह रथं धन्वी, साङ्ग्रामिकमुदायनः। प्रद्योतोऽनिलवेगेभं, ज्ञात्वाऽजय्यं निजं रिपुम् ॥ १५१ ॥ गजाऽऽरूढं तं प्रेक्ष्योचे, वादयन् ज्यामुदायनः। पाप्मन्नसत्यसन्धोऽसि, तथाऽपि हि जयो न ते ॥ १५२ ॥ इत्युक्त्वा भ्रमयन् भूपः, स्वं मण्डलिकया रथम्। स्यय(स्पन्द)मानो महायोद्धा, धन्वी योद्धुमढौकत ॥ १५३ ॥ वक्रचूर्णनभयोत्पादितांह्रितलान्यलम्। विव्याधाऽनिलवेगस्योदायनोऽयोमुखैः शरैः ॥ १५४ ॥ दर्भसूचीभृतपात्रमुखाभैश्चरणैर्गजः। विष्वग्विद्धोऽभवद् गन्तुमसमर्थोऽपतद् भुवि ॥ १५५ ॥ पातयित्वा गजात् तस्मात्, चण्डप्रद्योतमात्मनः। करेणोदायनो बद्ध्वा, यशोराशिमिवाग्रहीत् ॥ १५६ ॥ भाले दासीपतिरिति, स्वां प्रशस्ति नवामिव। चक्रे बाणाक्षरैरङ्कं, कृत्वा दासमिवाङ्कितम् ॥ १५७ ॥ ततोऽगाद् विदिशापुर्यामानेतुं मूर्त्तिमार्हतीम्। तां तत्राऽऽदातुमारेभे, नृपोऽचालीत् न साऽद्रिवत् ॥ १५८ ॥ सविशेषमथार्चित्वा, नत्वा भक्त्या कृताञ्जलिः। उदायनोऽवदत् किं मे भाग्यं? नैषि जिनेन्द्र! यत् ॥ १५९ ॥ देवो देवाधिदेवस्योऽवादीत् मा गाः शुचं नृप!। स्थलं भावि रजोवृष्ट्या, त्वत्पुरं तेन नैम्यहम् ॥ १६० ॥ बोधितो दि(दै)व्यवाचैवं, निवृत्तः स्वागुदायनः। अन्तरायोऽन्तरालेऽभूत्, प्रावृड् प्रस्थानवारणी ॥ १६१ ॥ न्यस्यास्यात् शिविरं तत्रोदायनः पत्तनोपमम्। कृत्वा तस्थू रजोवप्ररक्षार्थं पापरे नृपाः ॥१६२॥ तेषां शिविरमुव्यासीत्, नाम्ना दशपुरं पुरम्। मेने रणाऽऽत्तं प्रद्योतं, चाऽऽत्मतुल्यमुदायनः ॥ १६३ ॥ अथ

पर्युषणापर्वदिनेऽकार्षीदुपोषणम् । उदायनो महाश्राद्धस्तत्प्रबोधदिनादनु ॥ १६४ ॥ सूदः प्रद्योतमपृच्छत्, राजंस्त्वं भोक्ष्यसेऽद्य किम् ? । श्रुत्वा क्षोभादसौ दध्यौ, प्रश्नोऽयं क्षेमकृत् न मे ॥ १६५ ॥ ततोऽपृच्छत् नृपः सूदं, पृच्छसि त्वं किमद्य मे ? । विधाऽऽकृष्टा इवाभीष्टा रसवत्योऽभवन् सदा ॥ १६६ ॥ सूदोऽवादीदहो ! राजन् !, अद्य पर्युषणोत्सवः । सान्तःपुरपरीवारोऽस्माकं स्वाम्यस्त्युपोषितः ॥१६७॥ स्वाम्यर्थसंस्कृतैर्भोज्यैर्भोजितोऽसि भवान् सदा। उपोषितोऽस्त्यसावद्य, तेन त्वं पृच्छ्यसे पुनः ॥१६८॥ निशम्य तदविश्वासाद्, राजाऽऽख्यत् साधु सूद! भोः । पर्वेदं ज्ञापितं श्राद्धौ, पितरौ यत् ममापि हि ॥ १६९ ॥ उपोषितोऽहमप्यद्य, तत् सूदोऽप्यवदद् विभोः । उदायनोऽवदद् धूर्त्तः प्रद्योतो वेत्ति वैशिकम् ॥१७०॥ यादृशस्तादृशो वाऽस्तु, परं पर्युषणा न मे । साध्वी कारागृहस्थेऽस्मिंस्ततस्तममुचत् नृपः ॥१७१॥ क्षमयित्वाऽपराधं स्वं, प्रद्योतस्याप्युदायनः । मालाङ्काऽऽच्छादनकृते, पट्टबन्धं तदा ददौ ॥१७२॥ बद्धन्धुर्भूभुजः सर्वे, प्राग् मौल्यं(लिं) मौलिमण्डनम् । पट्टबन्ध(न्धा)स्तदाऽऽसीत् (सन्), कस्येष्टं न महत्कृतम् ? ॥१७३॥ दत्त्वाऽथोज्जयिनीदेशं, प्रद्योतस्य ह्युदायनः । प्रावृडन्ते सतश्चोऽगाद्, जयी वीतभयं पुरम् ॥१७४॥ तस्थुस्तथैव तत्स्थाने, वणिजो लाभमिच्छवः । वसमानैस्तैरेवाभूत्, ख्यातं दशपुरं पुरम् (नाम दशपुरम्) ॥१७५॥ प्रद्योतो द्वादशग्रामसहस्रान् शासने ददौ । विद्युन्मालिकृतार्चायै, तथा दशपुरं पुरम् ॥१७६॥ गृहं ग्रासोऽन्यदा गत्वा, विदिशायां पुरि न्यधात् । देवकीयं पुरं भूभृद्, भायलस्वामिनामकम् ॥१७७॥ इतश्चोदायनं भूपमेत्य प्रभावतीसुरः । बोधयामास यत् पापात्, निवर्त्तयत्नसौ सदा ॥ १७८ ॥ नृपेयमपि जीवन्तस्वामिमूर्त्तिर्गरीयसी । ब्रह्मर्षिणा केवलिना कपिलेन प्रतिष्ठिता ॥ १७९ ॥ महातीर्थमतः पूज्या, प्राक्तनीव प्रयत्नतः । समये सर्वविरतिरपि ग्राह्या शिवावहा ॥ १८० ॥ उदायनः प्रपेदे तद्वाचं देवस्तिरोदधे । पाक्षिकं पौषधौकःस्थः पौषधं, (पौषधं पौषधौकःस्थः) सोऽन्यदाऽऽददे ॥ १८१ ॥ धर्मजागरिकासंस्थो, दध्यौ

सद्धर्मधीर्नृपः । धन्यास्ते नगर-ग्रामाः, पाविता येऽन्तिमार्हता ॥ १८२ ॥ धन्यास्तेऽप्यर्हतो वाचमाचम्य येऽखिलं मलम् । प्रक्षालयन्ति सपदि, सर्वसावद्यवर्जनात् ॥ १८३ ॥ पुनाति पावनैः पादैरिदं चेदवनीवलम् । श्रीवीरोऽर्हंस्तदा दीक्षां, श्रेयसा(श्रेयोधा)माऽऽश्रयां श्रये ॥ १८४ ॥ चिन्तानन्तरमेवास्यानुग्रहार्थं जिनोऽन्तिमः । द्रुतं विहृत्य चम्पातस्तत्पुरे समवासरत् ॥ १८५ ॥ चिन्तितोपनतं वीरं, गत्वा नत्वाऽभ्युदायनः । धर्मं श्रुत्वा गृहं प्राप्तो, दध्याविरथं विवेकवान् ॥ १८६ ॥ यच्छाम्यभीचये राज्यं, प्रतेच्छुः सूनवेऽसि चेत् । संसारनाटकनटस्तत् कृतः स्यात् मया ह्यसौ ॥ १८७ ॥ नरकान्तमिदं राज्यमूचुश्चेह विपश्चितः । तद्धितः स्वां ददानोऽस्मै, तत् कथं वस्तु शस्य(स्त)इम्(-स्तभित्) ? ॥१८८॥ ततः सङ्क्रामयामास, तेजोऽग्नाविव भास्करः । राज्यं केशिनि जामये, सपदि स्वमुदायनः ॥ १८९ ॥ जीवन्तस्वामिने प्रादाद्, भूरिग्रामाऽऽकरादिकम् । पूजार्थं शासनेनाथ, पार्थिवः परमार्थवित् ॥ १९० ॥ ततः केशिकृतात्स-न्वव्रतग्रहमहामहः । अग्रहीद् वीरपादान्ते, परिव्रज्यामुदायनः ॥१९१॥ षष्ठाष्टम-दशमाद्युग्रतपोभिस्तपोधनः । कर्मवाशोषयद् देहं, सरो रविरिवांशुभिः ॥ १९२ ॥ अन्येद्युस्तस्य राजर्षेरकाला(लेऽ)पथ्यभोजनैः । वपुषि व्याधिरुत्पेदे, पयोदे इव बुद्बुदः ॥१९३॥ अनवद्यैस्ततो वैद्यैरुक्तोऽसौ देहनिःस्पृहः । भुङ्क्ष्व साधो! दधि व्याधिबाधध्वंसि(स)पर्शुधिम् ॥ १९४ ॥ व्यहार्षीद् दधि लाभार्थं, गोष्ठेपूदायनस्ततः । सुप्रापं तत्र तत् प्रायोऽन्येद्युर्वीतभयं ययौ ॥ १९५ ॥ तत्राऽऽयातं तमालोक्य, केशिनं मन्त्रिणोऽवदन् । निर्विण्णस्तपसामागाद्, राज्यार्थी मातुलो हि ते ॥ १९६ ॥ केश्याह स्वीकरोत्वार्योऽस्यैव राज्यमहं हि कः ? । धनिको धनमादत्ते, कोपो गोपस्य कः पुनः ? ॥१९७॥ तमूचुस्ते पुना राज्यं, तव पुण्यैरुपस्थितम् । दातुं नेशो विनाऽन्यस्ते, राजधर्मोऽपि नेदृशः ॥१९८॥ पितुर्भ्रातुर्मातुलाद् वा, मित्राद् वा ह्रियते बलात् । अयत्नोपनतं तस्मै, किं दातुं तव युज्यते ? ॥१९९॥ इति तद्वचसा केशी, त्यक्तभक्तिरुदायने । प्राह किं क्रियते तर्हि ?,

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे द्वितीयोऽंशः ।

उदायनचरमराजर्षिचरित्रम् ।

तेऽप्यूचुर्दीयते विषम् ॥ २०० ॥ ततोऽसौ दापयामास, पशुपालिकया नृपः । विषेण दधि संस्कृत्य, धिग् राज्यं हि मलीमसम् ॥ २०१ ॥ हृत्वा देवी विषं प्रीत्या, प्राह साधो ! दधि त्वया । न ग्राह्यं यद् विषग्रस्तं, निवृत्तोऽसौ ततस्ततः ॥ २०२ ॥ व्यापमापू रुजोऽस्याङ्गे, व्योम्नीवाभ्राणि वाततः । दध्याददे पुनः साधुरसाधुजनतार्ऽपितम् ॥ २०३ ॥ त्रीन् वारान् सा विषं जह्रे, प्रमादात् नान्यदा पुनः । भुक्त्वा तत् सविषं सोऽभूद्, विषवेगैरचेतनः ॥ २०४ ॥ प्रपन्नोऽनशनं ज्ञात्वाऽवसानाऽऽसन्नतां ततः । उदायनो हि सज्ज्ञानी, नौचित्याद् भ्रश्यति क्वचित् ॥ २०५ ॥ प्रपाल्यानशनं त्रिंशद्दिनान्येष समाधिना । उत्पाद्य केवलज्ञानं, विषयागात् महोदयम् ॥ २०६ ॥ ततस्तत्राऽऽगता देवी, तद् ज्ञात्वोपाधिकं मुनेः । अतनिष्ट रजोवृष्टिं, कोपाद् वीतभयोपरि ॥ २०७ ॥ सततं वृष्टितः प्रद्योताऽऽनीता प्रतिमाऽभवत् । भूगतैकः कुलालस्त्वमुष्य शय्यातरो मुनेः ॥ २०८ ॥ निर्मन्तुं तं सुरी हृत्वा सित(न)पल्यां तदाख्यया । कुम्भकारकृतमिति, स्थापयामास पत्तनम् ॥ २०९ ॥ चरमराजऋषेश्चरितं हितं, श्रवणयोः श्रवणप्रगु(व)णीकृतम् । इह यदर्जितवान् सुकृतं कृती, भवतु तेन जनः सकलः सुखी ॥ २१० ॥ इति श्रीखरतरगच्छशृङ्गारहार–श्रीगुण(कीर्त्ति)रत्नाचार्यशिष्यवर्यवाचनाचार्य–पद्ममन्दिरगणिविरचितायां कथार्णवाङ्कायां श्रीऋषिमण्डलप्रकरणवृत्तौ श्रीआर्द्रकुमारकथा-उदकमुनिकथा-श्रीसुदर्शनश्रेष्ठिकथा-गाङ्गेयमुनिकथा-जिनपालितमुनिकथा-धर्मरुचिमुनिकथा-जिनदेवमुनिकथा-कपिलमुनिकथा-हरिकेशबलर्षिकथा-इषुकारीय[क]नृपादिषण्मित्रकथा-संयतमुनिकथा[11]-अनाथीयनिर्ग्रन्थमुनिकथा-समुद्रपालमुनिकथा[13]-जयघोष-विजयघोषमुनिकथा-अन्निकासुताचार्यकथा-धर्मरुचिमुनिकथा-ऋजु-वक्रादिचतुर्मुनिकथा-देविलासुतराजर्षिकथा-कूर्मापुत्रस्तवेन-चण्डरुद्राचार्यशिष्यकथा-धन्यमुनिकथा-श्रीशीतलाचार्यकथा-सुबाहुसाधुकथा[23]-भद्रनन्द्यादिनवमुनिसम्बन्धं-रोहकमुनिकथा-स्कन्दकमुनिकथा[26]-तिष्यक-कुरुदत्तसुतकथा-श्रीअभयकुमारमुनिकथा-श्रीमेघ-

कुमारमुनिकथा-श्रीनन्दिषेणमुनिकथा-श्रीहल्ल-विहल्लकुमारकथा-सर्वानुभूति-सुनक्षत्र-सिंहमुनिकथा-धन्य-शालिभद्रमुनिकथा-श्रीउदायनचरमराजर्षिकथावर्णनाधिकारे पञ्चमविश्रामे द्वितीयोंऽशः ॥ [ ग्रन्थाग्र ६२२९ ]

---

अथ श्रीवीरजिनतीर्थोत्पन्नस्थविरगुरुपरम्परास्वरूपप्ररूपणाऽऽविर्भावकस्तृतीयोंऽशः प्रारभ्यते । तत्रादौ तदादिभूतत्वात् चरमकेवलिनः श्रीजम्बूस्वामिनो जयमाविर्भावयन्ति । सत्र केषुचित् नवीनादर्शेषु परकृताः प्रक्षेपरूपाः पूर्वे(वं) सप्त गाथा दृश्यन्ते । ताश्चेमाः—

जस्स य अभिनिक्खमणे, चोरा संवेगमागया खिप्पं । तेणं सह पव्वइया, जंबुं वंदामि अणगारं ॥ १५४ ॥
सीहत्ता निक्खंतो, सीहत्ता चेव विहरिओ भयवं । जंबू पवरगणहरो, चरणाणचरित्तसंपन्नो ॥ १५५ ॥
मगहासु सुग्गामे, रट्ठउडो अज्जवं च रेवइया । तेसिं चिय भवदत्तो, भवदेवो जिट्ठ पव्वइओ ॥ १५६ ॥
तेण कणिट्ठो भाया, परिणीओ नागवासुकीधूयं । कवडेणं(ण य)पव्वाविय, भवदेवो तो सुरो जाओ ॥ १५७ ॥
पउमरहरायगेहे, वणमालादेवी(वि)उयरसरहंसो । नामेण सिवकुमारो, कुमारो अंतेउरम्मि ठिओ ॥ १५८ ॥
छट्ठं छट्ठेण तवं, आयंबिलपारणेण जो कासी । दढधम्मकयाहारो, भावमुणी वरिसबारसगं ॥ १५९ ॥
होऊण विज्जुमाली, देवो बंभे चइत्तु रायगिहे । इब्भउसहस्स धारिणीपुत्तो पडिबोहियकलत्तो ॥ १६० ॥

व्याख्या—अक्षरार्थः कथानकादेव स्पष्टः ॥ १५४–१५५–१५६–१५७–१५८–१५९–१६० ॥ तथा—

जो नवजुव्वणपसरो, वियलियकंदप्पदप्पमाहप्पो । सो जंबू परमरिसी, अपच्छिमो केवली जयउ ॥ १६१ ॥

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे द्वितीयांशसमाप्तिस्तृतीयांशप्रारम्भश्च ।

चरमकेवलिजम्बूनिर्वर्णनम् ।

चरमकेवलिजम्बूमुनिवर्णनम्।

व्याख्या—मूलसूत्रकृता कृता गाथा सुगमा चेयम् ॥ १६१ ॥ भावार्थश्चायम्—
सम्यगुच्छिन्नसंसारवरवो गुरवोऽन्वहम् । जयन्तु जन्तुजीवातुवाचो वाचामगोचराः ॥ १ ॥ श्रीवीरं समवसृतं, पुरे राजगृहेऽ-
न्यदा । श्रेणिकोऽपृच्छदुच्छेदः, क भावी केवलस्य भोः ! ? ॥ २ ॥ चतुर्देवीपतिर्ब्रह्मेन्द्रस्य सामानिको ह्ययम् । विद्युन्माली पुरस्थोऽ-
सिमुच्छेदोऽस्ये(दे से)त्यवग् विभुः ॥३॥ च्युत्वाऽमुष्माद् दिनात् सप्तमेऽह्नि भावी भवत्पुरे । सूनुर्ऋषभदत्तस्य, जम्बू नाम्नाऽन्त्यकेवली
॥ ४ ॥ तेजःक्षयाविनाऽऽसन्नच्युतिचिह्नं किमीक्ष्यते ? । प्रभुराहाऽन्त्यदेहानां, राजन्नाविर्भवत्यदः ॥ ५ ॥ अनादृताख्यस्तत् श्रुत्वा, जम्बू-
द्वीपाधिपः सुरः । उच्चैरुच्चैः स्वरेणोचे, कुलं मेऽहो ! महत्तमम् ॥६॥ नृपोऽपृच्छत् करोत्येप, किमेवं कुलवर्णनम् ? । स्वाम्याख्यद् गुप्तिम-
त्याख्यः, श्रेष्ठ्यत्रैव पुरेऽभवत् ॥ ७ ॥ तस्यर्षभदत्त-जिनदासौ पुत्रौ बभूवतुः । ज्येष्ठः सदा सदाचारो, द्यूतादिव्यसनी लघुः ॥ ८ ॥
धीमतर्षभदत्तेन, त्यक्तो भ्राता लघुर्लघु । सर्वस्वजनप्रत्यक्षं, दुराचारीति जल्पता ॥ ९ ॥ ज्येष्ठः श्रेष्ठिसुतः स्पष्टं, ब्रुवन् भ्राता न मे-
ऽयम् । गृहेऽप्यदात् प्रवेष्टुं नो, तं श्वानमिव कर्हिचित् ॥ १० ॥ न्यहन्यतान्यदा दीव्यन्नन्येन द्यूतकारिणा । जिनदासोऽस्त्रघातेन, द्यूतखे-
लनकन्दले ॥ ११ ॥ उत्पाट्य गृहमानीत, इदं द्यूततरोः फलम् । शस्त्रघातव्यथा(थां) रङ्कवल्लुठन् भूतलेऽन्वभूत् ॥ १२ ॥ ऊचुर्ऋषभदत्तेभ्यं,
स्वजनाः परमार्हतम् । दययैवान्यजीवानामुज्जीवय निजानुजम् ॥ १३ ॥ जनानुवृत्त्या तद्गेहं, गत्वाऽसावनुजं जगौ । धीरो भवौषधा-
द्यैस्त्वां, करिष्याम्येष नीरुजम् ॥ १४ ॥ जिनदासोऽवदद् भ्रातः !, क्षान्त्वा मद्दुर्णयान् बहून् । मुक्त्वाऽऽशां जीवितव्यस्यैतदवस्थोचितं
कुरु ॥ १५ ॥ प्रयच्छ पुण्यपाथेयं, परलोकाध्वगस्य मे । ज्ञात्वा तन्निर्णयं सोऽप्यनुजं तं सम्यगन्वशात् ॥ १६ ॥ स्मर पञ्चनमस्कारं,
निर्ममत्वं भजानुज ! । आराधनां सानशनामङ्गीकुरु समाहितः ॥ १७ ॥ सर्वमङ्गीकृतं तेन, मृत्वैवं धीरमृत्युना । जम्बूद्वीपाधिपत्वेनो-

तप्तोऽयममराग्रणीः ॥ १८ ॥ स चाशीपीद् वचोऽस्माकं, यत् कुले केवली मम । अन्तिमो भवितेत्येष वर्णयत्यात्मनः कुलम् ॥ १९ ॥
राजाऽपृच्छत् पुनः स्वामिन्!, विद्युन्माल्येष निर्जरः । महेभ्य इव मार्त्तण्डो, तेभ्यो दीप्त्याऽधिकः कथम्? ॥ २० ॥ स्वाम्याह जम्बू-
द्वीपस्य, भरते मगधावनौ । ग्रामः सुग्रामनामाऽभूद्, भूमालतिलकोपमः ॥२१॥ आर्यवान् राष्ट्रकूटोऽभूत्, प्रिया तस्य तु रेवती ।
भवदत्त-भवदेवावभूतां तत्सुतावुभौ ॥ २२ ॥ भवदत्त उपादत्त, सुस्थिताचार्यसन्निधौ । व्रतं तत् पालयन्नुग्रं, विजह्रे गुरुभिः समम्
॥ २३ ॥ तस्मिन् गच्छेऽन्यदा साधुः, सूरीनेको व्यजिज्ञपत् । गच्छामि स्वजनान् द्रष्टुं, भगवन्! भवदाज्ञया ॥ २४ ॥ तत्रास्ति मे
लघु(र्)भ्राता, स्नेहलो मयि कर्हिचित् । लाति व्रतं ससाधुः स, साधुभिः प्रेषितस्ततः ॥ २५ ॥ ग्रामस्तत्रर्षिरभ्येयः विवाहव्याकुलस्तदा ।
तत्रैयाऽऽसीत् मुनेर्भ्रातुः, सर्वोऽपि स्वजनो भृशम् ॥ २६ ॥ विवाहोत्सवव्यग्रत्वात्, मुनिर्ज्ञातोऽनुजेन न । का कथा व्रतवार्त्तायाः ?,
केनाप्याभाषितोऽपि न ॥ २७ ॥ विलक्षो मुनिरागत्य, गुरुभ्यः सर्वमुक्तवान् । तत् श्रुत्वा भवदत्तर्षिरूचे सर्वर्षिसाक्षिकम् ॥ २८ ॥
काठिन्यमनुजस्याहो!, यद् ज्ञातो नाऽऽगतोऽग्रजः । साधुरन्योऽवदद् विद्वान्, भवदत्त! त्वमस्यहो! ॥ २९ ॥ परं यद्यनुजं दीक्षा-
सम्मुखीनं करिष्यसि । सोऽप्याह कौतुकं तत्र, ग्रातैर्वो दर्शयिष्यते ॥ ३० ॥ ईयुर्विहारयोगेन, गुरवो मगधेषु ते । पप्रच्छ भवदत्तर्षिः,
स्वजनान् द्रष्टुमुत्सुकः ॥ ३१ ॥ अथैकाकिनमप्येनमादिदेश गुरुर्हितम् । एकाकिताऽपि योग्येऽर्हा, क्रमात् ग्रामस्तदासदम् ॥ ३२ ॥
स भ्राता नागदत्तस्य, वासुक्याश्च सुतां तदा । उपयेमे तदुद्वाहव्यग्रोऽभूदखिलो जनः ॥ ३३ ॥ स तमायातमाकर्ण्याऽऽनन्दादुत्थाय
तत्पदम् । ववन्दे पाद्यमप्यस्य, मन्वानस्तीर्थवारिवत् ॥ ३४ ॥ धन्यंमन्यान् मुनिर्बन्धून्, यामोऽन्यत्र वयं हि वः । धर्मलाभोऽस्तु
वीवाहव्याकुलाः स्वाब्रवीदिति ॥ ३५ ॥ ततस्तैः प्रासुकैर्भक्तैर्भक्त्याऽसौ प्रतिलाभितः । भवदेवः कुलस्थित्या, तदाऽऽदौ(-दर्श) मण्डयन्नभूत्

कथार्णवा-
ङ्कायां वृत्तौ
पञ्चमवि-
श्रामे वृती-
योंऽशः ।

चरमकेव-
लिजम्बूमु-
निवर्णनम् ।

॥ ३६ ॥ चक्रेऽसौ चान्दनं चाङ्गरागमङ्गेऽङ्गनामुदे । ववन्ध मूर्द्ध्नि धम्मिल्लं, पुष्पैः पुष्पेषुहस्तकैः ॥ ३७ ॥ कस्तूरीतिलकान् सूक्ष्मान्, स चक्रेऽस्याः कपोलयोः । रूप्यस्थालविशालाश्मगर्भचित्रेन्दिरासुरः ॥ ३८ ॥ क्रमेणाभूत् स कुर्वाणः, कुचमण्डलमण्डन(ना)म् । भवदत्ताऽऽगमं तावत्, शुश्राव भवदेवकः ॥ ३९ ॥ ससम्भ्रमं स उत्तस्थौ, प्रियां हित्वाऽर्द्धमण्डिताम् । वारितो नाशृणोत् मूक, इव प्रियाप्रियालिभिः ॥ ४० ॥ नमस्कृत्याधुनैवेनमेष्याम्येवैष यालिकाः ! । इत्युक्त्वा मुदितः पादान्, ववन्दे भ्रातुरात्मनः ॥ ४१ ॥ मुनिस्तस्य करे दीक्षासत्यङ्कारमिवार्पयत् । स्नेहपात्रं स्नेहपात्रं, तं मन्वानः स आददे ॥ ४२ ॥ ततः कृतार्थवत् साधुर्निर्ययौ पितुरास्पदात् । बन्धुस्तमन्वगात् सर्वोऽनुजोऽपि घृतपात्रभृत् ॥ ४३ ॥ स बन्धून् दूरमायातान्, न कांश्चन विसृष्टवान् । स्वयं व्याजुघुट्ः सर्वे, पूर्वे(र्व) नार्यस्ततो नराः ॥४४॥ व्यावृत्तान् वीक्ष्य तान् दध्यौ, भवदेव इदं हृदि । निवर्त्तन्वेऽविसृष्टास्ते, भ्रातरो न कथं न्य(त्व)हम् ? ॥४५॥ भक्तादिभूरिभारेणाऽऽक्रान्तः श्रान्तः पथश्रमात् । घृतपात्रं न शक्नोति, वोढुं यत् प्रेषयेत् न माम् ॥ ४६ ॥ माऽसौ पश्चाद् वलेवेति, मुनिर्वार्त्तामिषेण तम् । वार्त्तयामास गार्हस्थ्यावस्थाऽऽचीर्णक्रियोक्तिभिः ॥ ४७ ॥ सौम्यैते ते द्रुमा येष्वावां कपिवदरम्वहि । एतास्ता वालुका यासु, रजश्चैत्यमकुर्वहि ॥४८॥ वार्त्तयन्निति वर्त्तन्यां, गुर्वन्ते तं निनाय सः । वसतिद्वारमायाताः, क्षुल्लाः स्मित्वोचुरीदृशम् ॥ ४९ ॥ दिव्यवेपोऽयमानीतोऽनुजोऽहो ! मुनिनाऽमुना । दीक्षार्थी स्ववचः सत्यं, कर्त्तुं यद् जल्पितं पुरा ॥ ५० ॥ पृष्टो गुरुभिरप्येष, महर्षे! कः पुमानयम् ? । दीक्षार्थी भगवन्नेष, इत्याख्यत् शृण्वतोऽस्य सः ॥ ५१ ॥ तैः पृष्टो भवदेवोऽवत्, किमित्याहैवमेव सः । मा भूपाभापको भ्राता, मम स्यादिति मोहतः ॥ ५२ ॥ स पर्यव्राज्यथाऽऽचार्यैः, परोपकृतिदीक्षितैः । साधुद्वययुतोऽन्यत्र, विहर्त्तुं च न्ययोज्यत ॥ ५३ ॥ इतश्च भवदेवं तेऽपश्यन्तस्तत्र बन्धवः । द्रागेत्य भवदत्तस्य, पृष्टवन्तश्च(श्चेद)मूचिरे ॥ ५४ ॥ हित्वाऽर्द्धमण्डितां कान्तां, यस्त्वामनुगोऽनुजः ।

चरमकेवलिजम्बूसुनिवर्णनम् ।

द्रष्टुं द्रष्टुं वयं श्रान्ताः, कथय क्वाधुना हि सः? ॥ ५५ ॥ नवोढा तद्वियोगेन, चक्रवाकीव खिद्यते । वहत्यश्रान्तमक्ष्णाऽम्बु, कुल्यया सस्यकूपवत् ॥ ५६ ॥ यावि सोऽस्माननापृच्छ्य, न क्वापीत्यस्ति निर्णयः । जीवन्मृता विना तेन, तेन त्वं (तं) दर्शयाऽऽशु नः ॥ ५७ ॥ तान् दृष्ट्वा नष्टसर्वस्वानिव शोकाऽऽकुलान् मुनिः । धर्मार्थमनुजस्यैवं(त्थं), मिथ्याऽकथयदप्यथ ॥ ५८ ॥ आयातः सोऽभवत् किन्त्वागतमात्रो गतः क्वचित् । अ(य)तोऽध्वना गतोऽन्येन, केनचित् मिलितो न वः ॥५९॥ इत्युक्त्वोत्थाप्य तान् सर्वान्, भवदत्तो निजायुषः । क्षयाद् व्रतविधिना मृत्वा, सौधर्मेऽभूत् सुरामणीः ॥६०॥ भवदेवः स्मरन् कान्तां, स्वान्तान्तर्मन्त्रवर्णवत् । सशल्यां भ्रातृभक्त्यै(भीत्यै)व, प्रव्रज्यां पर्यपालयत् ॥ ६१ ॥ भ्रातृमृत्युमसौ श्रुत्वा, दध्यौ चिरमपालयम् । व्रतं तदुपरोधेनाऽधुना तत् मे न साम्प्रतम् ॥ ६२ ॥ प्रेयसी नागिला सा मे, तस्याः प्रेयानहं पुनः । न तथा व्रतकष्टं मेऽसहस्तद्विरहो यथा ॥ ६३ ॥ पद्मिनीव हिमप्लुष्टा, मरालीव मरुस्थिता । यूथभ्रष्टा कुरङ्गीव, सा मन्ये दैन्य(दुःख)भाक् न किम् ? ॥ ६४ ॥ यदि प्राप्स्यामि तां मुग्धां, तदा रंस्ये तया समम् । चिन्तातन्तुभिरेवं स्वं, बद्धवानूर्णु(र्ण)नाभवत् ॥ ६५ ॥ भवदेवोऽन्यदाऽपृष्ट्वा, निर्ययौ स्थविरान् मुनीन् । सुग्राममाममायातः, तस्थौ देवकुलान्तिके ॥ ६६ ॥ (पाठान्तरे तु–एवं विचिन्त्य सुग्रामं, समेतो द्रव्यलिङ्ग्यसौ । जिनालये पितुः क्षेममपृच्छत् नागिलां मुनिः ॥ ६६ ॥) गन्ध-माल्यधरा तत्र, ब्राह्मण्या सममेकया । नार्येकाऽगात् मुनिं तत्राप्यायातं वन्दते स्म सा ॥ ६७ ॥ तामपृच्छत् मुनिर्भद्रेऽत्राऽऽर्यवान् रेवती च सा । जीवन्तो स्तोऽथ साऽवोचत्, मृतौ तौ वह्वभूद् दिनम् ॥ ६८ ॥ पुनराह मुनिस्त्यक्ता, नवोढा तत्सुतेन या । नागिला भवदेवेन, सा जीवति? मृताऽथवा? ॥ ६९ ॥ भवदेवस्त्वमस्यूचे, साधु साधूपलक्षितः । व्यावृत्तरूप-वेषां नोपलक्षयति मामसौ ॥ ७० ॥ विचिन्त्येति तथैतस्य, तावत् चित्तपरीक्षणम् । करोमीति तमाहैषा, किं कार्यं भोः! तया तव? ॥ ७१ ॥ सोऽवदद् भव-

चरमकेवलिजम्बूमुनिवर्णनम् ।

देवोऽस्मि, नागिलाजीवितेश्वरः । अपालयमियत्कालं, व्रतमग्रजशङ्कया ॥ ७२ ॥ निरङ्कुशो मृते तस्मिन्, पुनस्त्वां द्रष्टुमागतः । तत् श्रुत्वा नागिलाऽऽत्मानं, ज्ञापयामीत्यचिन्तयत् ॥ ७३ ॥ महर्षे ! नागिला साऽहं, सोऽवादीदीदृशी कथम् ? । साऽऽचख्यौ भवतीदृक्षमेव गात्रमसंस्कृतम् ॥७४॥ हि(दि)त्वा प्रतिभुवं रत्नत्रयं स्वर्गापवर्गयोः । मा (मां) मा स्म काकिणीकल्पां, महीराग्रहगर्हितः ॥७५॥ मा भूर्भेद्यः स्मरास्त्राणां, नरकावासवेश्मनाम् । मा मुञ्च दर्शितं मार्गं, भ्रात्राऽऽप्तेनाऽऽप्तसम्मतम् ॥ ७६ ॥ मयि रागकृतं पापं, गुरोरालोचयाग्रतः । मा गजाऽऽरोहणं कृत्वा, खराऽऽरोहस्पृहां कुरु ॥ ७७ ॥ इत्यन्वशात् मुनिं यावत्, सा तावद् ब्राह्मणीसुतः । तत्राऽऽगात् पायसं भुक्त्वा, प्रोचे चैवं स्वमातरम् ॥ ७८ ॥ वान्त्वैतत् पायसं भुक्तं, धारयाधोऽम्ब ! भाजनम् । पुनर्भोक्ष्ये क्षणे तद् द्विर्भुक्त्वा लात्वाऽन्यदक्षिणाम् ॥ ७९ ॥ माताऽऽह वत्स ! मा वादीरेवं निन्दाऽऽस्पदं वचः । जुगुप्सनीयं य(त)द् द्रष्टुं, दृष्टाऽप्यर्भे ! न कल्पते ॥ ८० ॥ तत् चासमञ्जसं श्रुत्वा, भवदेवोऽप्यदोऽवदत् । भुञ्जानोऽर्भे ! तदुद्वान्तं, कुर्कुरादतिरिच्यसे ॥ ८१ ॥ नागिलाऽऽह त्वमप्येवं, मुने ! वेत्स्याह सोऽप्यलम् । वेद्मीति तर्हि मां वान्त्वा, किं पुनर्भोक्तुमिच्छसि ? ॥ ८२ ॥ पश्यस्यद्रिं ज्वलन्तं त्वं, न पश्यसि पदोरधः । यत् शिक्षयसि नाऽऽत्मानं, शिक्षयस्येवमर्भकम् ॥८३॥ रसासृक्-मांस-विण्-मूत्रगात्रायां का रुचिर्मयि ? । तत् त्यक्त्वाऽमुं कदाचारं, सदाचारं गुरुं(रोः) श्रय ॥ ८४ ॥ धर्मशिक्षाऽर्पणात् न्यस्तः, साध्वि ! साध्वधुनाऽध्वनि । निवृत्तोऽस्मि तपस्तप्स्ये ह्यालोच्याऽऽगोऽमतो गुरोः ॥८५॥ बन्धून् पश्यामि साऽवोचत्, किं कार्यमार्य ! तैस्तव ? । कुरु स्वार्थं हिते श्रेयः, प्रत्यूहव्यूहहेति(त)वः ॥ ८६ ॥ स्वच्छाऽऽत्मन् ! गच्छ गुर्वन्ते, त्वा-(ऽन्वा)दास्येऽहमपि व्रतम् । नत्वाऽर्हतां प्रतिकृतीस्ततोऽगात् सोऽन्तिके(कम्) गुरोः ॥८७॥ स्वाऽऽगस्त्वालोच्य कालेन, मृत्वाऽसौ शुभमृत्युना । सौधर्मसौधमध्यास्त, शक्रसामानिकत्वतः ॥ ८८ ॥ इतश्च पुष्कलावत्यां, विजये पुण्डरीकिणी । पुर्यस्ति वज्रदत्ताख्यस्तत्र

द्रष्टुं द्रष्टुं वयं श्रान्ताः, कथय क्वाधुना हि सः? ॥ ५५ ॥ नवोढा तद्वियोगेन, चक्रवाकीव खिद्यते । वहत्यश्रान्तमक्ष्णाऽम्बु, कुल्यया सस्य-
कूपवत् ॥ ५६ ॥ याति सोऽस्माननापृच्छ्य, न कापीत्यस्ति निर्णयः । जीवन्मृता विना तेन, तेन त्वं (तं) दर्शयाऽऽशु नः ॥ ५७ ॥ तान्
दृष्ट्वा नष्टसर्वस्वानिव शोकाऽऽकुलान् मुनिः । धर्मार्थमनृजस्यैवं(सत्यं), मिथ्याऽकथयदप्यथ ॥ ५८ ॥ आयातः सोऽभवत् किन्त्वागतमात्रो
गतः क्वचित् । अ(य)तोऽध्वना गतोऽन्येन, केनचित् मिलितो न वः ॥५९॥ इत्युक्त्वोत्थाप्य तान् सर्वान्, भवदत्तो निजायुषः । क्षयाद्
व्रतविधिना मृत्वा, सौधर्मेऽभूत् सुराग्रणीः ॥६०॥ भवदेवः स्मरन् कान्तां, स्वान्तान्तर्मग्नवर्णयत् । सशल्यां भ्रातृभक्त्यै(भीत्यै)व, प्रव्रज्यां
पर्यपालयत् ॥ ६१ ॥ भ्रातृमृत्युमसौ श्रुत्वा, दध्यौ चिरमपालयम् । व्रतं तदुपरोधेनाऽधुना तत् मे न साम्प्रतम् ॥ ६२ ॥ प्रेयसी नागिला
सा मे, तस्याः प्रेयानहं पुनः । न तथा व्रतकष्टं मेऽसह्यस्तद्विरहो यथा ॥ ६३ ॥ पद्मिनीव हिमप्लुष्टा, मरालीव मरुस्थिता । यूथभ्रष्टा
कुरङ्गीव, सा मन्ये दैन्य(दुःख)भाक् न किम्? ॥ ६४ ॥ यदि प्राप्स्यामि तां मुग्धां, तदा रंस्ये तया समम् । चिन्तातन्तुभिरेवं स्वं, बद्ध-
वानूर्णु(र्ण)नाभवत् ॥ ६५ ॥ भवदेवोऽन्यदाऽपृष्ट्वा, निर्ययौ स्थविरान् मुनीन् । सुग्राममागमायातः, तस्थौ देवकुलान्तिके ॥ ६६ ॥
( पाठान्तरे तु–एवं विचिन्त्य सुग्रामं, समेतो द्रव्यलिङ्ग्यसौ । जिनालये पितुः क्षेममपृच्छत् नागिलां मुनिः ॥ ६६ ॥ ) गन्ध-माल्य-
धरा तत्र, ब्राह्मण्या सममेकया । नार्येकाऽऽगात् मुनिं तत्राप्यायातं वन्दते स्म सा ॥ ६७ ॥ तामपृच्छत् मुनिर्भद्रेऽत्राऽऽर्यवान् रेवती
च सा । जीवन्तौ स्तोऽथ साऽवोचत्, मृतौ तौ बह्वभूद् दिनम् ॥ ६८ ॥ पुनराह मुनिस्त्यक्ता, नवोढा तत्सुतेन या । नागिला
भवदेवेन, सा जीवति? मृताऽथवा? ॥ ६९ ॥ भवदेवस्त्वमस्यूचे, साधु साधूपलक्षितः । व्यावृत्तरूप-वेषां नोपलक्षयति मामसौ
॥ ७० ॥ विचिन्त्येति तयैतस्य, तावत् चित्तपरीक्षणम् । करोमीति तमाहैषा, किं कार्यं भोः! तया तव? ॥ ७१ ॥ सोऽवदद् भव-



चरमकेव-
लिजम्बूसु-
निवर्णनम् ।

देवोऽस्मि, नागिलाजीवितेश्वरः । अपालयमियत्कालं, व्रतमग्रजशङ्कया ॥ ७२ ॥ निरङ्कुशो मृते तस्मिन्, पुनस्त्वां द्रष्टुमागतः । तत् श्रुत्वा नागिलाऽऽत्मान, ज्ञापयामीत्यचिन्तयत् ॥ ७३ ॥ महर्षे ! नागिला साऽहं, सोऽवादीदीदृशी कथम् ? । साऽऽचख्यौ भवनीदृक्षमेव गात्रमसस्कृतम् ॥७४॥ द्वि(दि)त्वा प्रतिभुवं रत्नत्रयं स्वर्गापवर्गयोः । मा (मा) मा स्म काकिणीकल्पां, महीरामहगार्हितः ॥७५॥ मा भूर्भवः स्मराखाणां, नरकावासवेश्मनाम् । मा मुञ्च दर्शितं मार्गं, भ्रात्राऽऽप्तेनाऽऽप्तसम्मतम् ॥ ७६ ॥ मयि रागकृतं पापं, गुरोरालोचयामतः । मा गजाऽऽरोहणं कृत्वा, खराऽऽरोहस्पृहां कुरु ॥ ७७ ॥ इत्यन्वशात् मुनिं यावत्, सा तावद् ब्राह्मणीसुतः । तत्राऽऽगात् पायसं भुक्त्वा, प्रोचे चैव स्वमातरम् ॥ ७८ ॥ वान्त्वैतत् पायस भुक्त, धारयाधोऽम्ब ! भाजनम् । पुनर्भोक्ष्ये क्षणे तद् द्विर्भुक्त्वा लात्वाऽन्यदक्षिणाम् ॥ ७९ ॥ माताऽऽह वत्स ! मा वादीदेवं निन्दाऽऽस्पद वचः । जुगुप्सनीयं य(त)द् द्रष्टुं, दक्षाऽप्यर्भ ! न कल्पते ॥ ८० ॥ तत् घास-मञ्जसं श्रुत्वा, भवदेवोऽप्यदोऽवदत् । भुञ्जानोऽर्भ ! तदुद्वान्तं, कुर्कुरादतिरिच्यसे ॥ ८१ ॥ नागिलाऽऽह त्वमप्येवं, मुने ! वेत्स्याह सोऽप्यलम् । वेद्मीति तर्हि मां वान्त्वा, किं पुनर्भोक्तुमिच्छसि ? ॥ ८२ ॥ पश्यस्यद्रिं ज्वलन्तं त्वं, न पश्यसि पदोरधः । यत् शिक्षयसि नाऽऽत्मानं, शिक्षयस्येवमर्भकम् ॥८३॥ रसासृक्-मांस-विण्-मूत्रगात्रायां का रुचिर्मयि ? । तत् त्यक्त्वाऽमुं कदाचारं, सदाचारं गुरुं(रोः) श्रय ॥ ८४ ॥ धर्मशिक्षाऽर्पणात् न्यस्तः, साध्वि ! साध्वधुनाऽध्वनि । निवृत्तोऽस्मि तपस्तप्स्ये ह्यालोच्याऽऽगोऽग्रतो गुरोः ॥८५॥ बन्धून् पश्यामि साऽवोचत्, किं कार्यमार्ये ! तैस्तव ? । कुरु स्वार्थं हिते श्रेयः, प्रत्यूहव्यूहहेति(त)वः ॥ ८६ ॥ स्वच्छाऽऽत्मन् ! गच्छ गुर्वन्ते, त्वा-(ऽन्वा)दास्येऽहमपि व्रतम् । नत्वाऽर्हता प्रतिकृतीस्ततोऽगात् सोऽन्तिके(कम्) गुरोः ॥ ८७ ॥ स्वाऽऽगस्त्वालोच्य कालेन, मृत्वाऽसौ शुभ-मृत्युना । सौधर्मसौधमध्यास्त, शक्रसामानिकत्वतः ॥ ८८ ॥ इतश्च पुष्कलावत्यां, विजये पुण्डरीकिण्यी । पुर्यस्ति वज्रदत्ताख्यस्तत्र

चरमकेव-लिजम्बूमु-निवर्णनम् ।

पद्मीन्द्रविक्रमः ॥ ८९ ॥ प्रिया यशोधरा तस्य, तस्याः कुक्षाववातरत् । अच्युतं भवदत्तस्य, जीवः स्वर्गायुषः क्षयात् ॥ ९० ॥ जातो मातुस्तदुत्पत्तौ, समुद्रस्नानदोहदः । स तस्याश्चक्रिणा सीतानद्याः स्नानेन पूरितः ॥ ९१ ॥ सा राज्ञी समयेऽसूत, सुतमद्भुतदर्शनम् । प्राचीवार्कपतिं गङ्गा, गाङ्गेयाब्जमिवामलम् ॥ ९२ ॥ पिता सागरदत्ताख्यां, चक्रेऽस्यादोहदानुगाम् । पयःपानादसौ धात्रीक्रोडस्थो ववृधे द्रुवत् ॥ ९३ ॥ लवासुतस्य सीरादीन्, वक्तुं शक्तोऽप्यजीगपत् । वर्द्धमानः सुहृद्भिश्च, स रेमे रत्नकन्दुकैः ॥ ९४ ॥ क्रमात् कलाः कलाचार्यान्तेऽग्रहीदुग्रधीनिधिः । पावनं यौवनं प्राप, प्रमदाजनमोहनम् ॥ ९५ ॥ पित्रा(तुरा)ग्रहायोपयेमेऽसौ, कन्याः स्वयंवराऽऽगताः । करेणुकाभिर्दन्तीव, रेमे ताभिः समं युवा ॥ ९६ ॥ प्रासादस्थोऽन्यदाऽद्राक्षीत्, कुमारो मेरुसन्निभम् । अभ्रमण्डलमाकाशे, दध्यावेवं च चेतसि ॥ ९७ ॥ आगमे यादृशो मेरुः, श्रूयतेऽदोऽपि तादृशम् । दृश्यतेऽपश्यदुत्पश्यो, यावदेषोऽनिमेषदृक् ॥ ९८ ॥ तावद् बुद्बुदवद् भ्रष्टं, तदभ्रं मरुतां भ्रमात् । तत् तथाभूतं वीक्ष्यैष, दध्यौ धिग् भवचेष्टितम् ॥ ९९ ॥ एवं सर्वेऽप्यमी भावाः, क्षणिकाः संस्तुतावहो ! । श्रयामि तदसारस्य, संसारस्यास्य सारताम् ॥ १०० ॥ इति वैराग्यतोऽपृच्छत्, पितरौ व्रतहेतवे । तावूचतुर्जात ! सर्वं, शोभतेऽवसरे नृणाम् ॥ १०१ ॥ युवराजो भवान् भूत्वा, भूत्वा भूपः क्रमात् ततः । गृहाण भुक्तभोग्यः सन्, व्रतं ह्यवसरोचितम् ॥ १०२ ॥ सागरो व्याहरत् पूज्यौ !, प्रत्याख्याताः श्रियो मया । इति तन्निर्णयं ज्ञात्वा, त्वमन्येतामनिच्छया ॥ १०३ ॥ सिंहवद् वर्द्धितोत्साहो, बहुराजसुतान्वितः । सोऽमृतसागराऽऽचार्योपान्ते व्रतमशिश्रयत् ॥ १०४ ॥ पपाठोत्कण्ठयाऽकुण्ठः, पूर्वाण्यपि चतुर्दश । उत्पेदे चावधिज्ञानमुमं तस्य तपस्यतः ॥ १०५ ॥ इतश्च विजयेऽत्रैव, वीतशोका महापुरी । राजा पद्मरथस्तस्य, वनमाला प्रियाऽभवत् ॥ १०६ ॥ तत्कुक्षौ भवदेवस्य, जीवश्च्युत्वा सुरालयात् । शिवो नाम्ना समुत्पेदे, सूनुरन्यूनलक्षणः ॥ १०७ ॥ राजन्यकन्यास्तारुण्ये, परिणिन्येऽन्यदा पितुः । शासनात्

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे तृतीयोंऽशः ।

चरमकेवलिजम्बूसुनिर्वाणनम् ।

समं सामी रेमे रम्याऽऽस्पदोपरि ॥१०८॥ अथ तत्र गतोऽन्येद्युर्मासक्षपणपारणम् । चक्रे कामसमृद्धस्य, सागरो गृहिणो गृहे ॥१०९॥ वसुधाराऽपतत् तत्र, पात्रदानानुभावतः । तदद्भुतं शिवः श्रुत्वा, भक्त्यैत्य तमवन्दत ॥ ११० ॥ कृताञ्जलिरपृच्छच्च, भगवंस्तव दर्शनात् । किं ममात्यर्थमुल्लासोऽम्बुधेश्चन्द्रोदयादिव ? ॥ १११ ॥ मुनिर्ज्ञानानुभावेन, ज्ञात्वाऽऽख्यत् प्राग्भवे भवान् । भ्राताऽभीष्टः कनिष्ठोऽभूद्, पश्चात् प्रव्राजितो मया ॥ ११२ ॥ सुरावभूतां सौधर्मे भ्रातरौ स्नेहतत्परौ । नीरागोऽहं ततो जज्ञे, त्वमद्यापि सरागयसि ॥११३॥ संसारासारतां श्रुत्वा, विशेषात् तन्मुनेर्मुखात् । शिवोऽवक् प्राग्भवे पूज्याः!, प्रव्रज्या माहिता यथा ॥ ११४ ॥ तथाऽत्राप्यर्पणेनास्याः, प्रसादं कुरुतर्षयः ! । परोपकारसारा हि, प्रवृत्तिः परमात्मनाम् ॥ ११५ ॥ [ युग्मम् ] पितरौ यावदापृच्छ्याऽऽयामि स्थेयमिहर्षयः ! । इत्युक्त्वाऽऽगात् शिवः पार्श्वे, पित्रोरेवमुवाच च ॥११६॥ पितरौ ! सागरोपान्ते, संसारासारता श्रुता । तपस्यामहमादास्ये आ(स्ता)गादेशः प्रदीयताम् ॥ ११७ ॥ तावूचतुर्न चाद्यापि, वत्साऽऽयां दृष्टपूर्विणो । त्वत्क्रीडालोकजं सौख्यं, तत् माऽऽदस्त्वाधुना व्रतम् ॥ ११८ ॥ यदि भद्रो भवान् नास्मानापृच्छ्य क्वापि यास्यसि । तत् नकारैक्यातुलां, लोलां नौ विद्धि धीनिधे ! ॥ ११९ ॥ ज्ञात्वेति निर्णयं पित्रोस्तत्र धीरिल्यवक् शिवः । शिष्योऽहं सागरर्षेः, सर्वसावद्यवर्जकः ॥ १२० ॥ स तस्थौ मौनमालम्ब्य, तद् हि सर्वार्थसाधकम् । भोजनायाऽऽसितो गद्यं, रोचते नान्नमित्यवक् ॥१२१॥ उद्वेजिताभ्यां पितृभ्यां, दृढधर्माभिधालिकः । आकार्योक्तो महात्मन्! भोः, शिवं कारय भोजनम् ॥ १२२ ॥ कुर्वता कार्यमेतत् नः, किं किं नोपकृतं त्वया ? । प्रेमपाशैरयं बद्धोत्पतन्तं रक्ष पक्षिवत् ॥ १२३ ॥ तदाज्ञां दृढधर्मोऽपि, स्वीचक्रे शिरसाऽऽत्मनः । प्रभूणां प्रभविष्णूनामादेशो ह्यमृतायते ॥ १२४ ॥ इभ्योऽभ्येत्य शिवाभ्यर्णे, कृत्वा नैषेधिकां-(कीं) गृहे(हम्) । प्रविष्टः(स्य) प्रतिक्रम्येर्यापथिकीं यथाविधि ॥ १२५ ॥ प्रदाय द्वादशावर्त्तवन्दनं निषसाद स । मामित्युक्त्वाऽनु-

परमकेव-
लिजम्बूगु-
निवर्णनम् ।

जानीहि, तन्निशम्यान्वीत् शिवः ॥ १२६ ॥ साधूनां सागरोपान्ते, दृष्टोऽयं विनयो मया । नायं ममोचित इति, श्रुत्वा श्राद्धोऽभ्यधा-
दिदम् ॥ १२७ ॥ समभावो भवेद् यस्तु, सम्यग्दृष्टिर्नृपाऽऽत्मज ! । स वन्दनार्हो नैवात्र, दोषशङ्काऽर्हदागमे ॥ १२८ ॥ किन्तु त्वां प्रष्टु-
मायातः, किं त्वयाऽत्याजि भोजनम् ? । व्रतानुज्ञां न पितरोऽर्पयन्तीत्यवदत् शिवः ॥ १२९ ॥ विना भोजनमुद्दिश्यानुजानन्ति कदाऽ-
प्यमी । इभ्यपुत्रोऽभ्यधाद् भद्र !, धर्मार्थेऽयमुपक्रमः ॥ १३० ॥ परं शरीरमाहाराधीनं धर्माय कल्पते । तदाहारं गृहाण त्वं, स कुमार !
न तद्विना ॥ १३१ ॥ शिवोऽवोचदिदं सत्यं, शुद्धान्नो नाऽऽप्यते परम् । तेनाहं तत् न गृह्णामि, तत् श्रुत्वेभ्योऽभ्यधादिदम् ॥ १३२ ॥
त्वं गुरुस्तव शिष्योऽहं, शुद्धाऽऽहारं तवोचितम् । एष सम्पादयिष्यामि, गृहाणानुगृहाण माम् ॥१३३॥ शिवोऽवक् तर्हि षष्ठेनाऽऽचामा-
म्लेनास्मि पारणम् । करिष्ये खीचकारेभ्यः, किं भव्यं ? न किमप्युत ? ॥ १३४ ॥ ततो भावमुनीभूय, तिष्ठन् स्वान्तःपुरे शिवः ।
षष्ठेन द्वादशाब्दान्याचामाम्लैः पारणं व्यधात् ॥ १३५ ॥ दृढधर्मोऽपि तद्धर्मदार्ढ्यार्थं साधयन् विधिम् । तस्मै सम्पादयन् शुद्धमन्ध-
स(न्धोऽन्तेऽ)स्य क्रियापटुः ॥१३६॥ तथाऽप्यनुज्ञां पितृभ्यो, व्रतार्थं नाऽऽप्नुवन् शिवः । मृत्वा समाधिना विद्युन्माल्येषोऽभूत् सुरामणीः
॥ १३७ ॥ तस्य सामानिकेन्द्रस्य, ब्रह्मेन्द्रस्य समा द्युतिः । पुराऽऽसीदधुनाऽऽसन्नच्यवनस्येदृशी पुनः ॥१३८॥ अतो दिनात् सप्तमेऽह्नि
च्युत्वाऽत्रैव पुरे ह्यसौ । ऋषभस्याऽऽत्मजो भावी, जम्बूनामाऽन्त(न्त्य)केवली ॥१३९॥ इति श्रुत्वा प्रभुं नत्वा, विद्युन्माली गतोऽन्ति-
कं(दिव)म् । प्रसन्नपेश्चतुःपत्न्यस्तस्याापृच्छन्निदं मुनिम् ॥१४०॥ भगवन् ! भविता विद्युन्मालिना क्वापि सङ्गमः ? । इतोऽस्माकं वियुक्तानां,
किं न वेत्याह केवली ॥ १४१ ॥ समुद्रप्रिय-समुद्र-कुबेर-सागराह्वयाः । इभ्याः पुरेऽत्र चत्वारस्तेषां पुत्र्यो भविष्यथ ॥ १४२ ॥
पुनस्तत्रामुना विद्युन्मालिना सह सङ्गमः । भावीभ्यसूनोर्वोऽमुष्य, मनुष्यत्वमुपेयुषः ॥ १४३ ॥ इतश्च श्रेणिको राजा, राज्यं राजगृहे

चरमकेवलिजम्बूसुनिर्वर्णनम्।

पुरे। राजेवापालयत् प्रीतिपात्रं चक्षुष्मतां सताम् ॥ १४४ ॥ तस्य श्रेष्ठिशिरोरत्नं, सभारत्नं श्रियां प(प्रियाऽऽस-)दम्। आसीद् ऋषभदत्ताख्यः, श्रेष्ठिश्रेष्ठो महाऽऽस्तिकः ॥ १४५ ॥ सद्धर्मचारिणी धर्मधारिणी तस्य धारिणी। वाक्सुधासारणी जज्ञे, प्रेमनिर्झरणी प्रिया ॥ १४६ ॥ नख-मांसवदन्योन्यं, तयोः प्रेमानुविद्धयोः। कालः सुखमयो यात्यर्हद्धर्माधिष्ठिताऽऽत्मनोः ॥ १४७ ॥ अन्येद्युर्धारिणी वृध्यायनपत्याधियाधिता। हा! धिङ् मे निष्फलं जन्मावकेशीव निराश्रयम् ॥ १४८ ॥ प्रिये! किं विधुराऽसीति, पत्या पृष्टाऽऽह धारिणी। चिन्तामसन्ततिभयां, तन्मनःशल्यदोहदाम् ॥ १४९ ॥ श्रेष्ठी तद्दुःखमोक्षार्थं, प्राह यावो मनस्विनि!। रन्तुं वैभारशैलेऽद्य, पत्न्यपि प्रत्यपद्यत ॥ १५० ॥ दम्पती अधिरूढौ तौ, योजिताश्वमथो रथम्। स्थानानि तानि तान्यसौ, दर्शयन् श्रेष्ठ्यगाद् गिरिम् ॥ १५१ ॥ रथादुत्तेरतुरथाऽऽदाय पत्नीं स्वं पाणिना। गिरिमारोपयामास, तांस्तान् प्रदर्शयन् द्रुमान् ॥ १५२ ॥ सिद्धपुत्रं यशोमित्रं, पश्यतस्तौ पुरस्सरम्। यन्मनःकल्पनाकल्पं, श्राद्धं बन्धुमिवागतम् ॥ १५३ ॥ श्रेष्ठी पप्रच्छ तं साधर्मिक! क्व प्रस्थितो भवान्?। सोऽप्याख्यत् समवसृतः, शिष्योऽत्राऽन्त्यार्हतो वने ॥ १५४ ॥ पञ्चमो गणभृत् सुधर्माख्योऽहं तं विवन्दिषुः। चलितोऽस्मि त्वरध्वं चेदस्ति वोऽपि विवन्दिषा ॥ १५५ ॥ ओमित्युक्त्वा दम्पती तौ, चेलतुस्ते त्रयोऽप्यथ। दत्त्वा वन्दनकं तस्थुः, सुधर्मस्वामिनः पुरः ॥ १५६ ॥ निपीय कर्णाञ्जलिभिर्गणभृद्देशनामृतम्। पप्रच्छावसरे सिद्धपुत्रः सन्देहमात्मनः ॥ १५७ ॥ स्वामिन्! यदाख्यया ख्यातो, जम्बूद्वीपोऽयमादिमः। सा जम्बूः कीदृशीत्याख्यत्, सुधर्माऽपीदमुत्तरम् ॥ १५८ ॥ जात्यरत्नमयी साऽस्ति, मान-वर्णेन चेदृशी। इत्युक्तेऽत्रान्तरेऽपृच्छद्, धारिणी गणधारिणम् ॥ १५९ ॥ भगवन्! भविता सूनुः, किं कदाऽप्यथवा न मे?। सिद्धपुत्रोऽवदत् नैतान् सावद्यं प्रष्टुमर्हसि ॥ १६० ॥ अहमेव निमित्तज्ञो, जिनपादोपदेशतः। किन्तु त्वां कथयिष्यामि, तदाकर्णय धार्मिकि! ॥ १६१ ॥

यद्वपुर्म(र्मा)नसाधारः, शिलोत्सङ्गे निषेदिवान्। पृष्टोऽपृष्ट्यः सुधर्माख्यो, भगवानरिदुर्जयः ॥ १६२ ॥ तद् यदा द्रक्ष्यसि स्वप्ने, सिंहं
सिंहोपमः सुतः। भावी तदैव दैवज्ञ, कथयन्नसि ते ध्रुवम् ॥ १६३ ॥ यत् त्वयाऽपृच्छि जम्बूद्रुविचारावसरे मुनिः। तद् भावी
तेऽचिराद् जम्बूनाम्ना ख्यातोऽद्भुतः सुतः ॥ १६४ ॥ धारिणी चाऽऽख्यदाचाम्लानामष्टोत्तरं शतम्। जम्बूदेवमुद्दिश्य, करिष्ये
तर्हि धार्मिक! ॥ १६५ ॥ ततो नत्वा सुधर्माणं, विविशुस्ते त्रयः पुरम्। धारिणी-ऋषभौ पुत्राऽऽशया कालं व्यतीयतुः ॥ १६६ ॥
अन्येद्युर्धारिणी स्वप्नेऽङ्कस्थं सिंहं न्यभालयत्। पत्युराख्यच्च सोऽप्यूचे, नान्यथा सिद्धपुत्रगीः ॥ १६७ ॥ अत्ययेनामुना पत्नि!, भावी
जम्ब्वाह्वयः सुतः। विद्युन्माली सुरश्च्युत्वोत्पेदे तदुदरे तदा ॥ १६८ ॥ दोहदो देवपूजादावुत्पेदेऽस्याः सुगर्भतः। निखिलं तमपूरिष्ट,
धनी घनधनव्ययात् ॥ १६९ ॥ साधिकेर्नवभिर्मासैर्व्यतीतैरनया सुतः। प्रसूतो देवताऽऽकारः, स्फारत्नेव सन्मणिः ॥ १७० ॥
ईयुरक्षतपात्राणि, नेदुस्तूर्याणि तद्गृहे। जगुर्गीतानि ननृतुर्दत्तहस्ताः कुलस्त्रियः ॥ १७१ ॥ पितृभ्यां परमप्रीत्या, जम्बूनामास्य निर्ममे।
मित्रकुक्षः वधृधे, मेरूत्सङ्गे सुरद्रुवत् ॥ १७२ ॥ पिप्रिये मन्मनोल्लापैस्तस्यांह्रिचलनैः पिता। तथा यथा सुधास्नानमग्नात्मानममन्यत
॥ १७३ ॥ कलाचार्यसाक्षिमात्रीकृत्यैषोऽपात् कलामृतम्। पावनं चाऽऽप तारुण्यं, तरुणीजनवल्लभम् ॥ १७४ ॥ समुद्रप्रिय-समुद्र-
दत्त-सागरदत्तकाः। कुबेरदत्त इत्याद्याश्चत्वारोऽत्र पुरेऽभवन् ॥ १७५ ॥ पद्मावती-कनकमाला-विनयश्री-धनश्रियः। तेषां पत्न्यः
क्रमादेताश्चतस्रोऽपि हि जज्ञिरे ॥ १७६ ॥ कुक्षावुत्पेदिरे तासां, विद्युन्मालिसुरप्रियाः। च्युत्वाऽऽयुषः क्षयादेभिर्नामभिर्विश्रुतास्तथा
॥ १७७ ॥ समुद्रश्रीश्च पद्मश्रीः, पद्मसेना तथाऽपरा। तुर्या कनकसेनेति, कन्यकात्वेन जज्ञिरे ॥ १७८ ॥ तथा कुबेरसेनस्य,
पत्नी कनकवत्यभूत्। श्रेष्ठिश्रवणदत्तस्य, श्रीषेणाऽऽख्या पुनः प्रिया ॥ १७९ ॥ श्रेष्ठिनो वसुषेणस्य, जज्ञे हरिमती प्रिया। वसुपा-

लितनाम्नोऽभूत्, जयसेनेति गेहिनी ॥ १८० ॥ नभःसेनाऽपरा कनकश्रीः कनकवत्यपि । जयश्रीश्चाऽऽख्यया ख्यातास्तेषां पुत्र्योऽभवन् क्रमात् ॥ १८१ ॥ श्रेष्ठिनोऽष्टावपीत्येवं, ते राजगृहवासिनः । प्रार्थनां(थां)चक्रुर्ऋषभं, स्वकन्योद्वाहहेतवे ॥ १८२ ॥ कलाब्धिपारदृश्वर्यैः, श्रेष्ठिनष्टापि नः सुताः । सन्ति तासां सुवो जम्बूकुमारस्ते वरो वरः ॥ १८३ ॥ कुल-शील-वयो-रूपादयो वरगुणाः समे । त्वत्सूनावेव सम्बन्धं, तदस्माभिः समं कुरु ॥ १८४ ॥ प्रागेव स सुतोद्वाहोत्सुकस्तैः प्रार्थितः पुनः । पिपासुः प्राप्तपीयूष इव सर्वममन्यत ॥ १८५ ॥ वयं जम्बूकुमाराय, दत्ताः स्म इति कन्यकाः । धन्यंमन्या दधुः प्रेम, योग्ययोग्या(गा)भियोगतः ॥ १८६ ॥ अत्रान्तरे सुधर्माख्यो, गणभृत् समवासरत् । तदागमं जनश्रुत्या, शुश्राव श्रावकाऽऽर्षभिः ॥ १८७ ॥ अधिरुह्य रथं जम्बूकुमारोऽगात् तदन्तिकम् । नत्वाऽऽसीनः सुधादेश्या, देशनामशृणोद् गुरोः ॥ १८८ ॥ श्रुत्वा तां देशनां जम्बूः, संवेगैकतरङ्गितः । प्रोचे कृताञ्जलिः पूज्यैः, स्थेयमत्रैव तावता ॥ १८९ ॥ आपृच्छ्य पितरावेमि, यावद् व्रतकृते द्रुतम् । ते यथासुखमित्यूचुर्ववले सोऽथ सद्मनि ॥ १९० ॥ रथ्यामपश्यदायातनरेभाश्व-रथाकुलाम् । प्रवेष्टुं शक्नुवन्नासाविति दध्यौ स्वचेतसि ॥ १९१ ॥ तत्रावस्थापिताः पूज्याः, कालक्षेपोऽथ मे पुनः । तद् गच्छाम्यन्यमार्गेण, ततोऽगादन्यगोपुरम् ॥ १९२ ॥ तत्र वप्रोपरि यन्त्रगोलका दृषदां शिलाः । सज्जिताः सन्ति तान् दृष्ट्वाऽऽर्षभिश्चेदमचिन्तयत् ॥१९३॥ अस्मिन् को याति सन्देहोऽपन्ने ( ह्याऽऽपन्ने ) ऽध्वन्यधुना ततः ( -ऽऽत्मनः ) । प्रत्यावृत्त्य गुरोः सेवां, कुर्वे व्यावृत्तवानिति ॥ १९४ ॥ यावज्जीवं ब्रह्मचर्याभिग्रहस्त्वदनुग्रहात् । ममास्तु गुरवोऽप्यूचुर्मा व्यं भद्राप्रमादिना ॥ १९५ ॥ ततो नत्वा गुरून् गेहमेत्याऽऽख्यत् पितरावसौ । पूज्याः ! श्रुतो मया धर्मः, कर्मच्छेद्यन्तिके गुरोः ॥ १९६ ॥ संसारासारता ज्ञाताऽनुजानीत व्रताय माम् । अकस्माद् वज्रपाताभं, तत् श्रुत्वा तौ बभूचतुः ॥ १९७ ॥ वत्साभूद् ज्ञातमावाभ्यां, यद् द्रक्ष्यामो वधूमुखम् । तथा पौत्रमुखं

चरमकेवलिजम्बूमुनिवर्णनम् ।

चापि, कुलोत्पत्तिनियन्त्रणम् ॥ १९८ ॥ तद् भोगानधुना भुङ्क्ष्व, यौवने नोचितं व्रतम् । त्वं निर्बन्धपरोऽप्येतत्, कुर्वीमह्वशेन नः ॥१९९॥
कुरु पाणिगृहीता(ती)स्ताः, श्रेष्ठिनामष्ट कन्यकाः । याचामहे पितृभक्त¹, स्वेच्छयाऽनु व्रतं चरेः ॥२००॥ पूज्याः¹ भवत्विदं किन्तु, वार्यो नाहं
ततो व्रतात् । ततः श्रेष्ठ्यष्टकन्यानां, पितृणामिदमब्रवीत् ॥ २०१ ॥ भो भो¹ जम्बूर्व्रतादानं, सद्य एव करिष्यति । कथयिष्यथ नोक्तं
प्राग्, मा पश्चात्तापमाप्नुव ॥२०२॥ किंकर्त्तव्यतया मूढास्त एकीभूय बन्धुवत् । पर्यालोचं मिथश्चक्रुः, श्रेष्ठिनोऽष्टापि सप्रियाः ॥२०३॥
ततस्तेषां कुमार्यस्तं, विज्ञायाऽऽलोचगोचरम् । इत्यूचुः स्वस्वपितॄणा, प्रगल्भं पण्डितं वचः ॥२०४॥ ततोऽस्माकं वरो जम्बूः, परो नात्रेति
निर्णयः । गार्हस्थ्यं वा व्रतं वाऽसौ, यत् कुर्यात् तत् मतं हि नः ॥ २०५ ॥ तैर्मिलित्वर्षभायोक्तं, कन्यावार्तैः सुतोदितम् । दैवज्ञैर्दर्शितं
लग्नं, तद्दिनात् सप्तमे दिने ॥ २०६ ॥ विवाहार्हाः क्रियाः प्रादुर्बभूवुर्भवनद्वये । कुमारो वर्णके क्षिप्तः, कुमार्यश्च पृथक् पृथक् ॥२०७॥
एकस्मिन् मण्डपेऽष्टाप्युद्वाहितास्तेन कन्यकाः । सन्मङ्गल-कुलाचारविधिना परमर्द्धिभिः ॥ २०८ ॥ तद्वधू-वरयोस्तत्र, यद् यौतक-
पदेऽभवत् । स्वर्णादि तेन सौवर्णगिरितुल्यो भवेद् गिरिः ॥ २०९ ॥ नवोढाभिः सह स्त्रीभिर्गीयद्धवलमङ्गलम् । अश्वाऽऽरूढो धृतच्छत्रः,
ससद्याऽऽसदद्दार्पभिः ॥ २१० ॥ आदौ ववन्दे देवाधिदेवं स्वकुलदेवताम् । वासवेश्माविशद् जम्बूः, कृतकङ्कणमोक्षणः ॥ २११ ॥
तत्राष्टाभिः सह स्त्रीभिः, स तस्थौ ब्रह्मचर्यभृत् । पितृभ्यां पूजितः प्रीत्या, जम्बूद्वीपपतिस्तदा ॥ २१२ ॥ इतश्च भरतेऽत्राभूदुपविन्ध्या-
चलं महत् । पुरं जयपुरं नाम्ना, तत्र विन्ध्याभिधो नृपः ॥ २१३ ॥ तस्याभूतां सुतौ राज्ञो, नाम्नेमौ प्रभव-प्रभू । प्रभवे सत्यपि
ज्येष्ठेऽदाद् राज्यं प्रभवे प्रभुः ॥ २१४ ॥ निर्ययौ प्रभवो मानाद्, विन्ध्याद्रिविषमावनौ । सन्निवेशं निवेश्यास्थात्, चौर्यवृत्त्या
जिजीव च ॥ २१५ ॥ अन्येद्युस्तचरैरुक्ता, जम्बूद्वाहक्रिया श्रियः । ज्ञातपञ्चमितैश्चो(चौ)रैः, प्रभवः प्राचलत् ततः ॥ २१६ ॥ तालोद्-

चरमकेवलिजम्बूनिवर्णनम्।

घाटिन्यप(व)स्वापिनीविद्याभ्यां महाबली । विवेश वासवेश्मान्तः, प्रभवो दस्युरार्यभैः ॥ २१७ ॥ तत्राप(व)स्वापिनीविद्याबलाद् जाग्रतमप्यलम् । निरिलं तत्परीवारं, विना जम्बूमसूषुपत् ॥ २१८ ॥ तेषां निद्रायमाणानां, नृणामाभरणादिकम् । लुण्टाकेषु च लुण्टत्सु, न क्षुक्षोभाऽऽर्यभिर्मनाक् ॥ २१९ ॥ ऊचे च मा स्म लुण्टाकाः !, स्पृशतैनं निमन्त्रितम् । जनं शयानं विश्वस्तं, जागरूकोऽस्मि यामिकः ॥२२०॥ तद्वाचा स्तम्भपुपश्चित्राऽऽलेख्या इवाभवन् । दस्यवोऽत्रान्तरेऽपश्यत्, प्रभवो वृषभाऽऽत्मजम् ॥२२१॥ दस्युराहाऽऽर्यभं भो ! मां, विद्धि विन्ध्यनृपाऽऽत्मजम् । तस्करं प्रभवं नाम, तव सख्यमुपेयुषम् ॥ २२२ ॥ स्तम्भिनीं मोक्षणीं विद्यां, समार्पय महाशय ! । अपस्वाप(पि)निकी-तालोद्घाटिन्यौ तेऽर्पयाम्यहम् ॥२२३॥ जम्बूः प्राह प्रियास्त्यक्ता(क्त्वा), नवोढाः प्रभव ! प्रगे । न कार्यं विद्याऽऽद्याले, दीक्षां देहेऽपि निःस्पृहः ॥ २२४ ॥ इदानीमप्यहं भावयतीभूय स्थितोऽस्मि भोः ! । तेनापस्वापिनी नेयं, प्रभव ! प्राभवत् मयि ॥ २२५ ॥ ततोऽपस्वापिनीं त्यक्त्वा, प्रणम्याऽऽर्यभिमभ्यधात् । कृताञ्जलिपुटः पाटुपटः पाटच्चरामणीः ॥ २२६ ॥ इत्याभिः सह सुभ्रूभिर्भुङ्क्ष्वा भोगान् भयान् पुनः । भुक्तभोग्यो व्रती भूयात्, स्त्रीरत्नं दुर्लभं भवे ॥ २२७ ॥ जम्बूः प्राह सुखं वैषयिकं सर्षपतोऽप्यणु । दुःखं मेरूपमं मधुबिन्द्वास्वादिमनुष्यवत् ॥२२८॥ तथाहि पुरुषः कश्चिद्, देशाद् देशान्तरं व्रजन् । सार्थेनाविशदटवीमदस्पाटचरोत्कटाम् ॥२२९॥ चो(चौ)रधाटीपतत् सार्थे, जना नेशुर्दिशोदिशम् । व्याघ्रीपातादिव मृगाः, सोऽप्यरण्यमगात् पुमान् ॥२३०॥ तत्रास्य कान्दिशीकस्य, पृष्ठेऽधावत सिन्धुरः । आध्मातताम्रताम्रास्यः, क्रोधान्धोऽथ मदोत्कटः (-ऽभूद् घरोद्धुरः) ॥ २३१ ॥ तस्याग्रे गच्छतः पृष्ठे, स करी करशीकरैः । जघान मारयिष्यामि, याहीति कथयन्निव ॥ २३२ ॥ उत्पतन् कन्दुक इव, पतन्नेष भयाद् भुवि । प्रातः प्रायो गजेनाऽऽपद्यटं तृणगह्वरम् ॥२३३॥ करी प्राणहरोऽयमित्यात्मानं स रक्षितुम् । झम्पापातं व्यधात् तत्र, जीविताशा हि दुस्त्यजा

॥ २३४ ॥ वटोऽस्त्यवटेऽस्यैकस्यैकपाद आया(य)तः । कूपान्तः स पतन्नाप, दैवात् तत्पादमन्तरा ॥ २३५ ॥ पाण्यंह्रिदृढबन्धेनास्थात् पादं तं विलम्ब्य सः । करेणाशक्नुवन् दन्त्यादातुं परपर्श तच्छिरः ॥ २३६ ॥ दत्तदृष्टिरधोऽद्राक्षीत्, स नरोऽजगरं गुरुम् । तत्पातभक्ष्यपाताऽऽशाव्यात्ताऽऽस्यं यान्यकूपवत् ॥ २३७ ॥ चतुरोऽहींश्चतुर्दिक्षु, करालान् दष्टुमुद्यतान् । ददर्श स्फारफूत्कारप्रारब्धधमनीक्रियान् ॥ २३८ ॥ घटघटिति चक्राणौ, ददर्शाऽऽखू सितासितौ । क्रकचाकुञ्चितैर्दन्तैस्तत्पादकृन्तनोद्यतैः ॥ २३९ ॥ तं गजोऽनाप्नुवन् क्रोधी, वटशाखामकम्पयत् । तस्या मध्वण्डमुत्सृज्योड्डियिरे मधुमक्षिकाः ॥ २४० ॥ स ताभिस्तीक्ष्णतुण्डाभिर्दश्यमानो भृशं तदा । कृतपक्ष इवालक्ष्युत्पक्षाभिर्निर्गमोत्सुकः ॥ २४१ ॥ मधुबिन्दुः पपातास्य, वटस्थमधुकोशतः । भालादास्ये तदास्वादादसौ मेने महत् सुखम् ॥ २४२ ॥ माहाऽऽर्यभिः सखेऽमुष्यैषा दृष्टान्तस्य भावना । यः पुमान् स हि संसारी, याऽटवी सा तु संसृतिः ॥ २४३ ॥ यो गजः स यमो यस्तु, कूपः स मर्त्यजन्म भोः ! । योऽजगरः स नरको, येऽहयस्ते क्षुधादयः ॥ २४४ ॥ वटपादो यस्तदश्चायुराखू पक्षी सितासितौ । मक्षिकाः व्याधयो मधुबिन्दुर्वैषयिकं सुखम् ॥ २४५ ॥ देवो विद्याधरो वाऽथ, यदि कश्चित् समुद्धरेत् । स इच्छेत् किं न वा मित्र ! ?, चौरोऽवग् बाढमिच्छति ॥ २४६ ॥ तर्हि कूपोपमात् संसारतो निस्तारके मम । तिष्ठामि तत्र मग्नः किं, विद्यमाने सुधर्मणि ? ॥ २४७ ॥ प्रभवो व्याहरद् जम्बूः ! माता-पितृनिमाः प्रियाः । कथं त्यक्ष्यसि ? दक्षोऽसि, प्रेमगह्वरितान्तरान् ॥ २४८ ॥ प्राह जम्बूः सखेऽमुष्मिन्, भवे बन्धुरबन्धुवाम् । निर्बन्धो याति कुबेरदत्तोऽत्र यत् निदर्शनम् ॥ २४९ ॥ वेश्या कुबेरसेनाऽभूत्, मथुरायां पुरा पुरि । बाधिता साऽऽद्यगर्भेण, वैद्येभ्यो दर्शिताऽक्कया ॥ २५० ॥ ज्ञात्वाऽस्या नीरुजां नाडीं, वैरुक्तो हेतुरर्त्तिजः । अपत्यद्वयमुत्पन्नं, गर्भेऽस्यास्तत् महद्व्यया ॥ २५१ ॥ पातयाम्यौषधैर्गर्भं, दुःखदं तेऽम्बयोदिता । साऽऽह स्वस्त्यस्तु गर्भाय, सहिष्ये क्लेशमप्यदः

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे तृतीयोऽशः ।

चरमकेवलिजम्बूसुनिवर्णनम् ।

॥ २५२ ॥ ततो गर्भावधि क्लेशं, सहित्वा सा पणाङ्गना । समयेऽजीजनद् युग्मं, पुत्रिका-पुत्रलक्षणम् ॥ २५३ ॥ कुबेरसेना मात्रोक्ता,
त्याजयेदं पुरीषवत् । यौवनाजीववेश्यानां ह्यपत्यं यौवनापहम् ॥ २५४ ॥ साऽऽह युग्ममिदं मातर्दशाहं पालयाम्यहम् । निर्बन्धात्
सा ततः स्तन्यदानाद्यैस्तद(निर्बन्धात् स्तन्यदानाद्यैस्तदपत्यम-) पोषयत् ॥ २५५ ॥ एकादशाहे सम्प्राप्तेऽपत्याङ्गुल्योर्न्यधात् प्रसूः ।
कुबेरदत्ता-कुबेरदत्ताख्ये मुद्रिके उभे ॥ २५६ ॥ ततो विधाप्य मञ्जूषां, भृत्वा रत्नैस्तदन्तरे । प्रक्षिप्य बालौ कालिन्द्यां, वेश्या
प्रावाहयद् जले ॥ २५७ ॥ दत्त्वा बाष्पाञ्जलिं प्रत्यावृत्ता वेश्याऽप्यपत्ययोः । पेटा सूर्यपुरद्वारे, प्लवमानाऽऽगमत् प्रगे ॥ २५८ ॥
दृष्टोभाभ्यां महेभ्याभ्यां, पेटामुद्घाट्य तद् द्वयम् । विभज्योपात्तमेकेन पुत्रोऽन्येन च पुत्रिका ॥ २५९ ॥ तद्गृहे तदवर्द्धिष्ट, रक्ष्यमाणं
निधानवत् । वर्द्धमानं क्रमाद् जज्ञे, तद् युग्मं यौवनोन्मुखम् ॥ २६० ॥ कुबेरदत्ता-कुबेरदत्तौ मुद्राक्षरेक्षणात् । नाम्ना ख्यातौ
जगृहतुस्तौ कलां स्वकुलोचिताम् ॥ २६१ ॥ अनुरूपाविमावेवान्योन्यमित्यनयोर्द्वयोः । विवाहोऽभि शुभेऽकारीभ्याभ्यां ताभ्यां विधेर्व-
शात् ॥ २६२ ॥ पुं-स्त्रीव्ययहृतिर्जज्ञे, द्यूतक्रीडाक्रमेऽन्यदा । सख्या कुबेरदत्ताया, हस्ते न्यस्ता धवोर्मिका ॥ २६३ ॥ कुबेरदत्ता
तां मुद्रां, करस्थां वीक्ष्य चाऽऽत्मनः । ददर्श मुद्रासादृश्यं, पर्यस्यन्ती मुहुर्मुहुः ॥ २६४ ॥ दध्यौ वर्णेन मानेनाऽऽकृत्या नामाक्षरेण
च । अनयोर्मुद्रयोर्बाढं, सादृश्यं दृश्यते कियत्! ॥ २६५ ॥ शिल्पिनैकेन घटिते, चैकदेशोद्भवे इमे । यथाऽनुहरतोऽन्योन्यं, तथा-
ऽऽवामपि पुं-स्त्रियौ ॥ २६६ ॥ तदावां युग्मजे भ्रातृ-भगिन्यौ निर्विशेषतः । पितृभ्यामावयोर्योगोऽकारि धिग् दैवचेष्टितम् ॥ २६७ ॥
तत् मेऽस्मिन् पतिधीः पत्नीधीरस्यापि न युज्यते । विचिन्त्य चेतसा सेति, पत्युरार्पयदूर्मिके ॥ २६८ ॥ मुद्रे कुबेरदत्तोऽपि, परिधाय
द्वयोस्तयोः । सादृश्यं चाऽऽत्मनो वीक्ष्य, विषसादाधिकं हृदि ॥ २६९ ॥ अपृच्छत् (दत्रिमः) कृत्रिमः पुत्रो, मातस्तेऽसि ? किमौ-

चरमकेव-
लिजम्बूमु-
निवर्णनम् ।

रसः ? । तेनेत्यम्बाऽऽग्रहात् पृष्टा, सर्वमाख्यद् यथातथम् ॥ २७० ॥ अकृत्यं कारितो मातर्जानन्त्याऽहं कथं त्वया ? । साऽऽहानुरूप-सम्यग्धामावादेव कृतं मया ॥ २७१ ॥ स्वभाग्यभाजिनी साऽम्बा, तत्याजाऽऽत्रां प्रसूर्यया । धन्यो न मृत्यवे पापात्मनोर्योऽभूत् नदीरयः ॥ २७२ ॥ इति चिन्ताचिताचान्तचित्तं वीक्ष्याऽऽह तं प्रसूः । वीवाह एव ते जातोऽकृत्यं पुं-स्त्रीभवं ननु (तु) ॥ २७३ ॥ कुमारस्त्वं कुमारी तामप्याप्युक्त्या कथां त्यज । देशान्तरादागतस्त्वं, परिणीयाः परां कनीम् ॥ २७४ ॥ ओमिति कुबेरदत्तः, प्रोच्याम्बापुरतस्ततः । गत्वा कुबेरदत्तायै, सर्वमाख्यद् यथास्थितम् ॥ २७५ ॥ आहाऽऽवां कारितौ कर्म, पितृभ्यां हा ! धिगी-दृशम् । स्वसाऽस्यतः परं स्वैरं, परेः पितृगृहं व्रज ॥ २७६ ॥ स पण्यभाण्डमादाय, जगाम मथुरापुरि । वाणिज्यकलयाऽत्यर्थमर्थसार्थ-मथार्जयत् ॥ २७७ ॥ कुबेरसेनां तत्राम्यां, दत्त्वा द्रविणमीप्सितम् । कुबेरदत्तः स्वां पत्नीं, चक्रे चाजीजनत् सुतम् ॥ २७८ ॥ अथो कुबेरदत्ताऽपि, श्रुत्वाऽन्याऽऽस्यात् कथां तथा । प्राव्राजीदुग्रवैराग्याद्, रहः सङ्गोप्य मुद्रिकाम् ॥ २७९ ॥ विहरन्ती प्रवर्तिन्यादेशादेषा तपस्विनी । आससादावधिज्ञानं, पुण्यमुग्रतपस्तरोः ॥ २८० ॥ ततः कुबेरदत्तं स्वज्ञानादेनं ददर्श सा । भुञ्जानं मातरं पापपङ्काविलक-लेवरम् ॥ २८१ ॥ ततस्तत्प्रतिबोधार्थं, तत्राऽऽगात् संयतीयुता । ययाचे कुबेरसेनां, साऽऽर्योपाश्रयभूमिकाम् ॥ २८२ ॥ साध्वीं प्रणम्य सेनाऽपि, प्राहाहं गणिकाऽभवम् । अधुनैकभर्तृ(पति)त्वेन, कुलस्त्रीवेष एष मे ॥ २८३ ॥ आसन्नोपाश्रये तिष्ठ, भगवत्यार्यिके ! मम । तयेति दर्शितायां सा, वसतावसत् सुरम् ॥ २८४ ॥ तस्या लुठन्तं पादाग्रे, सा स्वाभिमसुचद् भुवि । यथा तथा परो बोध्य इति तं सोदलापयत् ॥ २८५ ॥ भ्राता पुत्रोऽसि भ्रातृव्यः, पितृव्यः पौत्रे(त्रो) देवरः । यस्तातस्ते स मे भ्राता, पिता पितामहः पतिः ॥ २८६ ॥ श्वसुरश्च सुतो या च, माता ते सा मम प्रसूः । पितामही वधूः श्वश्रूः सपत्नी भ्रातृपत्न्यपि ॥ २८७ ॥ कुबेरदत्तस्तत् श्रुत्वो-

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे तृतीयोंऽशः ।

चरमकेवलिजम्बूसुनिवर्णनम् ।

दूधुप्यमाणं मुहुर्मुहुः । प्राहाऽऽर्ये! किमसम्बद्धं, भाषसे ? साऽप्यदोऽवदत् ॥ २८८ ॥ भ्राता ममैकमातृत्वात्, पत्युः सुतत्वतः सुतः । भ्रातृव्यो भ्रातृपुत्रत्वात्, पितृव्यः पितृबन्धुतः ॥ २८९ ॥ पौत्रः सपत्नीपौत्रत्वाद्, देवरः पतिभ्रातृतः । ततः मम भ्रातैकमातृत्वेन पिताऽपि सः ॥ २९० ॥ मातृपतित्वात् पितृव्यतातत्वाच्च पितामहः । मत्पाणिग्रहणाद् भर्त्ता, श्वशुरो देवृपितृतः ॥ २९१ ॥ पुत्रः सपत्नीपुत्रत्वाद्, याऽम्बाऽस्याम्बा ममापि सा । पितामह्यपि पितृव्यमातृत्वेन तथा वधूः ॥२९२॥ सपत्नीसुतपत्नीत्वात्, श्वश्रूश्च पतिमातृतः । सपत्नी पतिपत्नीत्वाद्, भ्रातृदं तत्प्रियात्वतः ॥२९३॥ [ पञ्चभिः सम्बन्धः ] इत्यष्टादशधाऽऽदर्श्य, स्वस्य सम्बन्धमार्यिका । मुद्रां कुबेरदत्तायादर्शयद् विस्मिताय ताम् ॥ २९४ ॥ तद्दर्शनेन सञ्जातप्रत्ययोऽसौ महामनाः । प्रव्रज्य च तपस्तप्त्वा, मृत्वाऽभूत् स (स्वः-) सुरोत्सुरः ॥ २९५ ॥ वेश्या कुबेरसेनाऽपि, शिश्राय श्राविकाव्रतम् । आर्याऽपि कृतकार्योऽगात्, प्रवर्त्तिन्यन्तिके पुनः ॥ २९६ ॥ प्रभवैवं मुधा प्राणी, कर्मणा बध्यते खलु । तत्त्वतः श्रमणो बन्धुरन्ये नाम्नैव बन्धवः ॥ २९७ ॥ प्रभवोऽवक् पुनः पुत्रमुत्पाद्य प्रव्रज(जेः) सखे ! । अपुत्रस्तु पुमान् न स्यात्, स्वःश्रीनेत्राब्जभृङ्गवाम् ॥२९८॥ जम्बूः प्राह मुधा मोहः, पितृतारणकारणम् । पुत्रेषु यत् महेश्व(स)रदत्तस्तत्र निदर्शनम् ॥२९९॥ तथा हि तामलिप्त्याख्यपुर्यां श्रेष्ठ्यभवत् पुरा । नाम्ना महेश्वरदत्तः, समुद्र-बहुलाऽऽत्मजः ॥३००॥ लोभाभिभूतस्तत्तातः, प्रभूताऽऽरम्भसम्भवः । मृत्वा तत्रैव देशेऽभूत्, सैरिभो ही !( हा !) भवो(वे)द्भवः ॥३०१॥ तद(दाऽऽ)र्त्तिबहुला मृत्वा, बहुलाऽप्यभवत् शुनी । गाङ्गिलाऽऽख्या महेश्वरदत्तस्याऽऽसे प्रिया प्रिया ॥ ३०२ ॥ गृह(रहः)स्यैकाकिनी रेमे, समं जारेण साऽसती । स्त्रीणामेकाकिनीनां हि, कामाग्निर्वो(-मोऽङ्गे घा-)धतेऽधिकम् ॥३०३॥ रममाणां प्रियां भर्त्ता, जारेण सममन्यदा । अन्यद्वारागतोऽकस्माद् ददर्शाहो हि पच्यते ॥३०४॥ तौ स्रस्तकुन्तलौ त्रस्तनेत्रौ कम्प्रवपुर्लतौ । सोऽपश्यद् रतभीताऽऽत्वपरावर्त्तोचरीयकौ ॥३०५॥ धृत्वा केशेषु जारं

चरमकेवलिजम्बूमुनिर्वर्णनम् ।

चरमकेवलिजम्बूनिवर्णनम् ।

स मद्भूकं व्याधयत् क्रुधा । पर्पटाभिरिवाविष्टं, माश्रिकस्तमकुट्टयत् ॥ ३०६ ॥ ममर्द निर्दयं पल्लां, कुलाल इव मृत्तिकाम् । यष्टिभिः गुरुरमिव, सापराधमताडयत् ॥ ३०७॥ प्रणश्यार्द्धमृतो जारः, किञ्चिद् गत्वाऽपतद् भुवि । मूर्खोऽकार्षं मुमूर्षुः किं ?, कण्ठस्थासुरचिन्तयत् ॥ ३०८ ॥ मृत्वा स्वबीज एवासौ, पुत्रभूयमवाप्तवान् । कालेन गाङ्गिला सूनुं, सुषुवे सुखवेदनम् ॥ ३०९ ॥ तमात्मजातं मन्वानः, श्रेष्ठी कुण्डमलालयत् । वर्द्धमानः कूर्चकचाऽऽकर्षकार्ही बभूव सः ॥ ३१० ॥ ततश्च पुंश्चलीदोषं, पुत्रप्रेम्णा महेश्वरः । गाङ्गिलाया विसस्मार, प्रायः क्षीवार्द्रहृद् गृही ॥३११॥ अथाऽऽयाते पितुर्मृत्युवासरावसरोत्सवे । सोऽक्रीणात् पितृजीवं तं, महिषं मूर्खशेखरः ॥ ३१२ ॥ तं हत्वा महिषं मांसं, क्रोडस्थकुण्डसूनवे । ददानोऽश्नाति श्रेष्ठी स, धिगज्ञानं हि देहिनाम् ॥ ३१३ ॥ कुर्कुरी बहुलाजीवा, समांसं पतिकीकसम् । कटकटिति कुर्वाणा, नृत्यपुच्छा चचर्व च ॥ ३१४ ॥ इतश्च कश्चिदायातस्तद्गेहे मासपारणे । भिक्षार्थं भिक्षुरद्राक्षीद्, ज्ञानेनैतद् विरूपकम् ॥ ३१५ ॥ अनात्तभिक्षो व्यावृत्तो, धावित्वाऽऽह महेश्वरः । हर्षुलोऽसि न चाभक्तो, भिक्षाऽऽत्ता किं न मद्गृहात् ? ॥ ३१६ ॥ मुनिराहेदृशे गेहे, भिक्षाऽऽदानं न साम्प्रतम् । एकं हि मांसमशुचि, परं तदपि वमूजम् ॥ ३१७ ॥ कथमेतदिति पृष्टे, श्रेष्ठिनाऽऽचष्ट साधुराद् । पुत्रः पित्रामिषैः शत्रुः, पोष्यते हा ! धिगज्ञताम् ॥ ३१८ ॥ कः प्रत्यय ? इति पृष्टे, सार्थंसे(शे)न मुनिर्जगौ । शुनीं पृच्छ निरातं प्राग्, न्यस्तं सोऽपि तथाऽकरोत् ॥३१९॥ तत्राऽऽनीवा शुनी जातिस्वभावाद् भुवमंह्रिभिः । सा चखान खनित्राभैः, शिष्यार्थमिव तस्य तु (नु) ॥ ३२० ॥ जातप्रत्ययतस्तीव्रवैराग्यात् महेश्वरः । उपादत्त मुदा दत्तपात्रवित्तो जिनव्रतम् ॥ ३२१ ॥ तदेवं प्रभव ! ब्रूहि, तार्यन्ते पितरः कथम् । पतन्तो दुर्गतौ पुत्रैः, प्रत्युतानर्थदायिभिः ? ॥ ३२२ ॥ अत्रान्तरे समुद्रश्रीमुख्याभिर्या(:) कथाऽ(अ)कथि । वास्तु शास्त्रान्तराद् ज्ञेया, नोच्यन्ते ग्रन्थगौरवात् ॥ ३२३ ॥ प्रतिबोधमुपेयुष्यस्ता अष्टावार्यभिप्रियाः । ऊचुर्निस्सारय

स्वामिन्!, स्वमिवास्मान् भवाम्बुधेः ॥३२४॥ ततः स्वमातापितृभ्यां, पत्नी-तत्पितृ-मातृभिः। समं प्रबोधतो जम्बूः, कम्बूज्ज्वलयशा अभूत् ॥ ३२५ ॥ प्रभवोऽप्यार्यभिं प्राहाऽऽपृच्छ्य मातापितृनहम्। आयातोऽस्म्येष तेऽविघ्नं, भूया(द्)इत्यन्वशात् प्रभुः ॥ ३२६॥ ततः प्रातः कृतस्नानः, सर्वाङ्गाभरणाद्भुतः। सहस्रवाह्यां शिविकामारुरोहाऽऽर्यभिः स्वयम् ॥ ३२७ ॥ सर्वजनीनमानन्दाद्, ददानो दानमार्यभिः। जगामोपवनद्वारं, सुधर्मस्वामिपावितम् ॥ ३२८ ॥ याप्ययानादिहोत्तीर्य, पादचारेण चाऽऽर्यभिः। गत्वा नत्वा गुरोः पादान्, प्राञ्जलिः प्राञ्जलोऽलपत् ॥ ३२९ ॥ निस्तारय कृपासार!, मम संसारसागरात्। स्वस्य दीक्षातरीगोचरीचरीकृत्य सेवकम् ॥ ३३० ॥ ततस्तस्मै सतत्राय, सुधर्मस्वाम्यदाद् व्रतम्। सद्यः सत्पात्रलाभे हि, क उदास्ते प्रशस्तधीः? ॥ ३३१ ॥ प्रभवोऽप्यागतोऽन्येद्युर्दीक्षयित्वा सुधर्मणा। शिष्यत्वे चाऽऽर्यभेर्दत्तो, गुरुतुष्टे ह्य(ह्यं)दः फलम् ॥ ३३२॥ अथाऽऽर्यभिश्चेपिरीत्या, विहरन्नुर्वरां वराम्। सम्प्राप केवलं लोकालोकाऽऽलोकनवैभवम् ॥ ३३३ ॥ व्यतीतेषु चतुःषष्टिवर्षेषु चरमाऽऽर्हतः। निर्वृतेः प्रभवं शिष्यं, न्यस्य कात्यायनं पदे ॥ ३३४॥ चरमः केवली जम्बूः, काश्यपान्वयमण्डनम्। आससाद महानन्दपदोत्थाऽऽनन्दसम्पदम्। ॥ ३३५ ॥ [युग्मम्] मनःपर्याय-चारित्रत्रयाऽऽहारक-विग्रहाः। पुलाकलब्धिः परमावधिः श्रेणिद्वयकमः ॥ ३३६ ॥ केवलं सिद्धि-कल्पौ च, दश स्थानान्यमून्यतः। श्रीजम्बूस्वामिनः पश्चाद्, व्यवच्छेदं प्रपेदिरे ॥ ३३७ ॥ इत्थं मया चरमकेवलिनश्चरित्रमुक्त्वाऽर्जितं सुकृतमद्भुतभाग्यलभ्यम्। तेनाद्भुतेन सुकृतेन कृती कृतस्व-भावं विभाव्य भवताद् भुवि सम्पदाऽऽढ्यः ॥ ३३८ ॥ इति श्रीखरतरगच्छशृङ्गारहारश्रीगुणरत्नाचार्यशिष्यवर्यवाचनाचार्य-पद्म-मन्दिरगणिविरचितायां श्रीऋषिमण्डलप्रकरणवृत्तौ श्रीजम्बूस्वामिचरित्रम् ॥

चरमकेवलिजम्बूसुनिर्वर्णनम्।

अथ श्रीप्रभवप्रभुं स्तुमः—

सिरिजंबुदंसणेणं, पडिबुद्धो परिवुडो परिजणेणं। गुणमणिपभवो पभवो, चउदसपुव्वी दिसउ भद्दं ॥ १६२ ॥

व्याख्या—गाथार्थः सुगम एव ॥ १६२ ॥ भावार्थस्तूच्यते—

ततश्च तत्प्रद्योतप्रद्योतननिभद्युतिः। प्रभवः प्राभवं प्राप, कुमहग्ला(ग्ल)पनोद्भवम् ॥ १ ॥ योगनिद्रां गतोऽन्येद्युर्निशीथे प्रभव(ः) प्रभुः। स्वपदोद्योतकं शिष्यमद्राक्षीद् ज्ञानचक्षुषा ॥२॥ गणे सङ्घे च नापश्यत्, ततोऽन्यदर्शनेष्वपि। पश्यन्नपश्यच्च राजगृहे शय्यम्भवं द्विजम् ॥ ३ ॥ विहृत्य प्रभवस्तत्र, पुरे गणभृदीयिवान्। शय्यम्भवाख्यमारब्धयज्ञं प्रत्यादिशत् मुनी ॥ ४ ॥ गत्वोत्तालतया वत्सावदित्सायादिभिर्द्विजैः। स्खल्यमानावपि युवां, वदतं तत्पुरो हृदः ॥ ५ ॥ 'अहो! कष्टमहो! कष्टं, तत्त्वं न ज्ञायतेऽमलम्'। तथेति प्रतिपद्येतौ तमुद्दिश्य प्रचेलतुः ॥ ६ ॥ उत्तम्भितस्रजं द्वारि, मुक्ताऽऽचमनपात्रकम्। चषालबद्धछगलं, समिधुव्यापृतमाणवम् ॥ ७ ॥ सामिधेन्यर्पणव्यग्राध्वर्युमध्वरपाठकम्। होमद्रव्यभृतानेकपात्रं विविशतुर्मुनी ॥ ८ ॥ [ युग्मम् ] दास्यामो नैव वो भिक्षां, रे शूद्रौ! किमिहाऽऽगतौ? । पूत्कुर्वद्भिर्द्विजैर्मुन्योः(मुनी), तद्द्वाराभ्यर्णमीयतुः ॥ ९ ॥ गुर्वादिष्टमहो! कष्टमित्याद्यूचतुरुच्चकैः। शय्यम्भवोऽशृणोद् यज्ञदीक्षितो द्वाःस्थितोऽस्य सः ॥ १० ॥ लघुकर्मतया शय्यम्भवो दध्यौ महर्षयः। भाषन्ते नानृतममी, अविसंवादिवादिनः ॥ ११ ॥ किं तत्त्वं? तत्त्वतो यज्ञो, नेति सन्देग्धि मे मनः। पृच्छामि तदुपाध्यायं, ततोऽपृच्छत् स ऋत्विजम् ॥ १२ ॥ ब्रूहि तत्त्वमुपाध्याय!, वेदास्तत्त्वं स इत्यवक्। शय्यम्भवोऽभ्यधाद् वेदा, न तत्त्वं तत्त्वतः परम् ॥ १३ ॥ भवद्भिर्दक्षिणालोभात्, सर्वमेतद् हि कार्यते। तत्त्वं वदान्यथा शीर्षं, पातयिष्यामि तेऽसिना ॥ १४ ॥ इत्युक्त्वाऽऽकृष्टखड्गं तं, वीक्ष्यर्त्विक् क्रोधदुर्द्धरम्। वाच्यं तत्त्वं शिरश्छेदेऽसार्पीद् वाचं हि वैदिकीम् ॥ १५ ॥ अनन्यजीवनोपाय, उपाध्यायस्तमब्रवीत्। यूपस्याधोऽस्ति या साधो!, सा तत्त्वं प्रतिमाऽऽर्हती ॥ १६ ॥ आर्हतो



श्रीप्रभवस्वामिवर्णनम्।

नारदः सिद्धपुत्रो हन्ति मखक्रियाम् । विनाऽर्हत्प्रतिमां तेन, यूपस्याधोऽर्च्यतेऽत्र सा ॥१७॥ यूपमुत्पाट्य निष्कास्य, प्रतिमामार्हतीं ततः । श्रीप्रभवस्वामिवर्णनम् ।
शय्यम्भवायोपाध्यायो, दर्शयित्वैवमूचिवान् ॥१८॥ तत्त्वरूपामिमामर्हत्प्रतिमां विद्धि भो द्विज ! । अमुष्याः सेवनाद् भूयाः, सिद्धये परमा-
र्हत ! ॥ १९ ॥ जग्धो मुग्धेन लोभाभिभूतेनास्ति भवांश्चिरम् । हिंसात्मके मखे धर्मः, केयं किन्तु विडम्बना ॥ २० ॥ अतः परं
गुरुर्नाहं यजमानोऽपि नो भवान् । स्वस्त्यस्तु तेऽनघ ! स्वार्थं, साधयाबाधयाऽधुना ॥२१॥ उपाध्यायं द्विजोऽवादीत्, त्वमेव हि गुरुगु(र्गु)रुः ।
तत्त्वप्रकाशनाद् धर्मदातैव सुच्यते गुरुः ॥ २२ ॥ यज्ञोपकरणं स्वर्ण-ताम्रपात्रादि तोषतः । शय्यम्भवो ददौ तस्मै, गुरवे गुरुगौरवात्
॥ २३ ॥ तयोर्मुन्योः पदैरेव, शीघ्रं शय्यम्भवो द्विजः । प्रभवस्वामिपादान्ते, ययौ नाऽऽलस्यमीदृशाम् ॥ २४ ॥ नत्वा व्यजिज्ञपत्
पूज्य !, शुद्धधर्मरसायनम् । मिथ्यात्वकुथितश्रुत्योः, क्षिपाऽऽन्तररुजापहम् ॥२५॥ ऊचे गुरुरहिंसात्मा, धर्मोऽर्हद्गदितो हि नः । न वचो
वाच्यमनृतमप्यूतं नान्यबाधकम् ॥२६॥ आदीयते न चादत्तमूर्द्ध्वरेता भवेद् बुधः । सर्वथा मैथुनत्यागी, हेयो मेयः परिग्रहः (मे शाश्वतो महः)
॥ २७ ॥ व्रतैः पञ्चभिरप्येभिर्भवाब्धिस्तीर्यते सुखम् । भविकैर्भाविकैर्यानपात्रैरिवाम्बुधिः ॥ २८ ॥ शय्यम्भवस्तदाकर्ण्य, कर्णपेयं गुरो-
र्वचः । प्रबुद्धः प्राह भगवन् !, दीक्षां देहि ममाऽऽर्हतीम् ॥ २९ ॥ ततश्च प्रभवस्वामी, परिव्राजयति स तम् । यथोक्तविधिनाऽभीष्ट-
लाभपुष्टमुदं वहन् ॥ ३० ॥ परीषहेभ्यो निर्भीकस्तपस्यन् दुस्तपं तपः । जज्ञे गुरुपदोपास्त्या, स चतुर्दशपूर्ववित् ॥ ३१ ॥ प्रभवप्रभु-
रप्येनं, रूपान्तरमिवाऽऽत्मनः । ज्ञात्वा श्रुतादिभिः स्वस्य, न्यस्य पट्टेऽगमद् दिवि ॥ ३२ ॥ अथ तत्पुरवास्तव्यो, जनोऽवोचदहो ! श्रीशय्यम्भवसूरिवर्णनम् ।
महान् । शय्यम्भवः कठोराऽऽत्मा, योऽत्यजद् युवतीमिमाम् ॥ ३३ ॥ पतिं विनाऽपि पुत्राऽऽशावशाद् जीवति वर्णिनी । ताभ्यां विना
कथं ह्यऽसौ, जीविष्यति तपस्विनी ? ॥ ३४ ॥ जनोऽपृच्छच्च तां सुभ्रु !, गर्भोऽऽशाऽप्यस्ति काऽपि ते ? । प्राकृतोक्त्या मनागर्थे मणयं

चेति साऽवदत् ॥ ३५ ॥ ववृधे चोदरे तस्याः, पुण्यगर्भः शनैः शनैः । हंसपोतं सुहंसीव, काले सा सुषुवे सुतम् ॥ ३६ ॥ माता
मणयमित्युक्तं, तन्नाम्ना मणकं सुतम् । धात्रीत्वं कुर्वती मातृत्वं चाम्बा समवर्द्धयत् ॥ ३७ ॥ जातोऽष्टवार्षिकोऽपृच्छत्, मातस्तातोऽस्ति
मे क सः ? । वेषेणाविधवाऽसीति, ततोऽम्बाऽवददीदृशम् ॥ ३८ ॥ वत्स! धूर्त्तैः सितपटैस्तातस्ते विप्रतारितः । अङ्गीचक्रे व्रतं तेषां,
त्वयि गर्भगते सति ॥ ३९ ॥ यथा ह्यदृष्टपूर्वी त्वं, तातं त्वां सोऽपि चै तथा । इत्याकर्ण्योत्सुको जज्ञे, द्रष्टुं तातं स्वकं शिशुः ॥ ४० ॥
पप्रच्छिरा हतं मातुर्निर्ययौ मणको गृहात् । चम्पायां विहरन्नागात्, सूरिः शय्यम्भवस्तदा ॥ ४१ ॥ कायचिन्तादिकार्येण, पुरीपरिसरे
व्रजन् । दैवाद् ददर्श सूरिस्तं, दूरादायान्तमर्भकम् ॥ ४२ ॥ इन्दूदयादिवाम्भोधेः, सूरेस्तद्दर्शनादभूत् । उल्लासोऽस्य शिशोश्चित्तं, सेरं
चाम्बुजकोशवत् ॥ ४३ ॥ सूरिः पप्रच्छ तं बालं, कस्त्वं भोः!? कुत आगतः ? । कस्य पुत्रोऽसि ? पौत्रो वा ?, सुभगाऽऽख्याहि
मेऽखिलम् ॥ ४४ ॥ अर्भोऽभ्यधात् पुराद् राजगृहादागतवानहम् । वत्सगोत्रस्य पुत्रोऽस्मि, शय्यम्भवद्विजन्मनः ॥ ४५ ॥ प्रवव्राज
स मे तातो, भ्रमाम्यस्मि पुरात् पुरम् । तं पश्यन् प्रव्रजिष्यामि, गतिर्या तस्य सैव मे ॥ ४६ ॥ सद्यः प्रसद्य तत् पूज्याः!, पितरं दर्श-
यन्तु मे । गिरा गद्गदिताऽऽस्माऽस्य, स्नेहात् सूरिरदोऽवदत् ॥४७॥ तातस्ते मे सुहृद् बाल! रूप-वेषेण मत्समः । एहि मे प्रव्रजोपान्तेऽभेदः
पितृ-पितृव्ययोः ॥ ४८ ॥ तं बालं सूरिरादायाऽऽजगाम द्रागुपाश्रयम् । आलोचयत् सचि(चि)त्तोऽभूदद्य लाभो यदीदृशः ॥ ४९ ॥ दत्त्वा
तस्मै व्रतं सूरिरुपयोगं ददौ कियत् । आयुरस्यास्ति ? षण्मासीं, यावद् दृष्ट्वा व्यचिन्तयत् ॥ ५० ॥ अल्पकालेन बालेन, सिद्धान्तोऽधीय-
तेऽमुना । कथं ? महांस्त्वल्पसूत्रं महार्थं पाठयामि तम् ॥ ५१ ॥ अन्त्यश्च दशपूर्व्यन्त्यः, श्रुतसारं समुद्धरेत् । केनापि हेतुना चतुर्दश-
पूर्वधरः पुनः ॥ ५२ ॥ तत् निष्पलक्षणेऽमुष्मिन्, हेतौ ममाप्युपस्थिते । उद्धरामि श्रुतस्कन्धं, श्रुतात् चाऽऽत्मा भवाम्बुधेः ॥ ५३ ॥



श्रीशय्यम्भवसूरिवर्णनम् ।

श्रीशय्यम्भवसूरि-यशोभद्रसूरि-वर्णनम् ।

दशाध्ययनमानं यद्, विकालावसरे कृतम् । दशवैकालिकमिति, नाम्ना तदिह पप्रथे ॥ ५४ ॥ सूरिर्भूरिमुदाऽऽसे तं, श्रुतस्कन्धमपाठयत् । षण्मासा(स्य)न्ते प्रपूर्याऽऽयुर्मणकः स्वर्गमासदत् ॥५५॥ मणकेऽस्मिन् विपेदाने, सूरिर्भूरिगुणाश्रये । अश्रुश्रेणीभिरश्रान्तं, ववर्षेव शरद्घनः ॥ ५६ ॥ यशोभद्रादयः शिष्याः, विस्मिताः शोकसङ्कुलाः । पप्रच्छुः भगवन्! मोहरोहः कोऽयं भवादृशाम् ? ॥ ५७ ॥ तत् श्रुत्वा गुरवोऽवोचन्, मणकेन महर्षयः! । कथमल्पेन कालेन, स्वार्थोऽस्त्यर्थमनुष्ठितः ? ॥ ५८ ॥ चरणं मरणान्तं यद्, यालेनापालि निर्मलम् । अनुष्णानि तदश्रूणि, पेतुरक्ष्णोर्मुदा मम ॥ ५९ ॥ तथा मम सुतश्चायं, ततोऽन्तेवासिनोऽवदन् । प्राग् ज्ञापितं न किम्? पूज्या !, यदेषोऽस्ति ममाऽऽत्मजः ॥ ६० ॥ गुरुवद् गुरुपुत्रोऽपि, भवेत् मान्यो मनीषिणाम् । वैयावृत्यमजानद्भिरस्माभिः कारितं ततः ॥ ६१ ॥ गुरुराह महर्षीणां, वैयावृत्याद् विना कथम् । जायते सुगतिस्तस्य, तपस्विनस्तपस्विनः ? ॥ ६२ ॥ दशवैकालिकग्रन्थो, मणकार्थं कृतो मया । तेनाधीतः कृतार्थोऽथ, यथास्थाने क्षिपामि तम् ॥ ६३ ॥ सङ्घायोक्तं ततः शिष्यैः, सोऽपि सूरिं व्यजिज्ञपत् । अल्पप्रज्ञोपकाराय, मैवेदं संवृणु श्रुतम् ॥ ६४ ॥ ततोऽवस्थापितं पूज्यैः, सङ्घाग्रहवशाददः । दशवैकालिकं शास्त्रं, पठ्यतेऽद्यापि तद् बुधैः ॥ ६५ ॥ न्यस्य सूत्रार्थवेत्तारं, यशोभद्रं निजे पदे । कार्यं शय्यम्भवाचार्यैः, कृतं मृत्वा समाधिना ॥ ६६ ॥ सम्प्राप श्रीयशोभद्रसूरिः सूरिरिवोदयम् । रोदसीं मङ्गलाचारचरणैः प्रीणयन्नलम् ॥ ६७ ॥ तच्छिष्यौ श्रीभद्रबाहु-सम्भूतिविजयाह्वयौ । चतुर्दशपूर्वविदावभूतां भुवि विश्रुतौ ॥ ६८ ॥ पदमन्तिपदोर्दत्त्वा, स्वं तयोर्योग्ययोर्द्वयोः । सूरयः श्रीयशोभद्राः, स्वर्गमार्गमसाधयन् ॥ ६९ ॥

एतदर्थानुवादके अत्र सूत्रगाथे इमे ज्ञातव्ये—

सिज्जंभवं गणहरं, जिणपडिमादंसणेण पडिवुद्धं । मणगपियरं दसकालियस्स निज्जूहगं वंदे ॥१६३॥ तथा—

चउदसपुव्विस्स नमो, जसभद्दस्सावि जस्स दो सीसा । संभूइविजयनामा, थेरे तह भद्दवाहू य ॥ १६४ ॥

व्याख्या—गाथार्थः सुगम एव ॥ १६३-१६४ ॥ इति श्रीशय्यम्भवसूरि-यशोभद्रसूरीणां प्रबन्धः ॥

अथ श्रीभद्रबाहुगुरुं स्तौति—

दसा(स)कप्प-ववहारा, निज्जूढा जेण नवमपुव्वाओ । वंदामि भद्दबाहुं, तमपच्छिमसयलसुयनाणिं ॥ १६५ ॥

व्याख्या—गाथार्थः सुगमः ॥ १६५ ॥ भावार्थस्तूच्यते—

श्रीभद्रबाहुसूरिप्रबन्धः ।

दक्षिणस्यां प्रतिष्ठानपुरेऽभूतां द्विजाऽऽत्मजौ । भद्रबाहु-वराहाख्यौ, प्राज्ञौ निःस्वौ निराश्रयौ ॥ १ ॥ तत्र सूरिर्यशोभद्रोऽगात् चतुर्दशपूर्ववित् । शुश्रुवतुस्तदन्ते तावन्येद्युर्धर्मदेशनाम् ॥ २ ॥ प्रबुद्धौ तत्क्षणादेव, दध्यतुर्गृहमेत्य तौ । न तावद् भोगसामग्रीयोगः किं साध्यते न तत् ? ॥ ३ ॥ ततः स्वीचक्रतुः स्वैरं, चारित्रं सूरिसन्निधौ । को वा चिन्तामणिं प्राप्योदास्ते शस्ताभिलापुकः ? ॥ ४ ॥ क्रमाद् दशाचतुःपूर्ववेदी सूरिगु(ग)णाग्रणीः । भद्रबाहुर्यशोभद्रैर्न्यस्तः सूरिपदक्रमे ॥ ५ ॥ दशवैकालिकस्याऽऽचाराङ्ग-सूत्रकृताङ्गयोः । उत्तराध्ययन-सूर्यप्रज्ञप्त्योः कल्पकस्य च ॥ ६ ॥ व्यवहारर्षिभाषिताऽऽवश्यकानामिमाः क्रमात् । दशाश्रुताख्यस्कन्धस्य, निर्युक्तीर्दश सोऽतनोत् ॥ ७ ॥ [ युग्मम् ] तथाऽन्यां भगवांश्चक्रे, संहितां भद्रबाहवीम् । सूरयः श्रीयशोभद्रा, देवभूयं ययुः क्रमात् ॥ ८ ॥ मुख्यशिष्यद्वयं तेषां, पूर्वविद्याविशारदम् । आर्यसम्भूतिविजयो, भद्रबाहुस्तथाऽपरः ॥ ९ ॥ प्राप्ताऽऽचार्यपदं प्रीतितत्परं भरतावनौ । पृथक् पृथग् विहरति, भव्याम्भोरुहभास्करम् ॥१०॥ वराहो याचते सूरिपदं स्वभ्रातृपार्श्वतः । स ऊचे गुणवान् विद्वान्, क्रियावान् वर्त्तते भवान् ॥ ११ ॥ परस्त्वंगर्वपर्वताधिरूढः किन्तु तेन ते । महत् सूरिपदं सम्यग्, वराह ! नहि लभ्यते (शोभते) ॥ १२ ॥ यत्र स्याद्

गर्वसंसक्तिर्न तत्र विनयोद्गमः। तदभावे कुतो धर्मो ?, धर्माभावे न तत् शुभम् ॥ १३ ॥ तस्मै न सस्वदे सम्यक्, तत् सत्यमपि तद्वचः। अतितीव्रज्वराऽऽक्रान्तस्येव शीतलजीवनम् ॥ १४ ॥ ततोऽतिमानवस्त्यक्त्वा, व्रतं मिथ्यात्वमाप्तवान्। मुनेर्वेषं विहायालाद्, वराहत्वं द्विजन्मनः ॥ १५ ॥ व(वा)राहीसंहिताऽऽदीनि, शास्त्राण्यभिनवान्यसौ। तदा चक्रे व्रतावस्थाऽधीतशास्त्रार्थवित्त(त्व)तः ॥ १६ ॥ अभ्यस्यामि स(न्यसि) बाल्येऽहं, लग्नमाख्यद् जनेष्विति। तद्विचारपरोऽस्म्यस्यां, गतोऽन्येद्युः पुराद् वहिः ॥ १७ ॥ शिलायां मण्डयाम्यसि(-मि स), लग्नमभ्यासहेतवे। अमृष्ट एवास्मिन् सायं, स्वपिमि स गृहं गतः ॥ १८ ॥ तदमृष्टं स्मरामि स्मोत्थायागां च तत्रैव हि। तत्र हर्यक्षमद्राक्षं, शिलालग्नोपरिस्थितम् ॥ १९ ॥ मार्जयामि तल्लग्नं, क्षिप्त्वा तदुदरे करम्। साहसात् सहसा सिंहः, सोऽभूत् साक्षादहस्करः ॥ २० ॥ मामाह वत्स ! ते लग्नभक्त्या शक्त्या चमत्कृतः। याढं तुष्टोऽस्मि याचस्व, स्वामीष्टं वरमित्यसौ ॥ २१ ॥ ततो मयोदितं तात !, ज्योतिश्चक्रं ममाऽऽत्मनः। विमाने दर्शयाऽऽरोप्य, स्वीकृतं रविणाऽपि तत् ॥ २२ ॥ ततोऽहं स्व(तद्)विमानस्थः, सूर्येण भ्रमितोऽम्बरे। किञ्चित् नाऽऽसादितं दुःखं, सूर्यसङ्क्रामितामृतात् ॥ २३ ॥ कृतकृत्यस्तमापृच्छ्योपकर्तुमखिलं जगत्। भ्रमन्नस्मि महीपीठमुपकारपरो हि सन् ॥ २४ ॥ वराहमिहिर इति, नाम्ना वाच्यो(चा)ऽहमुचकैः। स्वैरं प्रख्यापयामास, मेने लोकोऽपि सम्भवात् ॥ २५ ॥ जनात् पूजां परां प्राप, स्वज्ञानकलया किल। वराहो रञ्जयामास, जितशत्रुनृपं तथा ॥ २६ ॥ काका इव वराकाः किं विदन्ति श्वेतभिक्षवः ?। भिणिहृणायमानाश्च, भ्रमन्ति मक्षिका इव ॥ २७ ॥ इत्थं निन्दति पापात्मा, राजादिपुरतो मुनीन्। शृण्वतां श्रावकाणां तत्, कर्णशूलोपमं भवेत् ॥ २८ ॥ किन्त्वस्मिन् नृपमान्यत्वादपकर्तुमनीश्वराः। ते कालं कलयामासुः, कालक्षेपावलम्बिनः ॥ २९ ॥ दध्युर्धिग् जीवितं नो यद्, गुर्ववज्ञां सहामहे। भद्रबाहुगुरुं तावदाह्वयामस्तथाऽपि हि ॥ ३० ॥ इत्यालोच्य तथा चक्रुरागता

भद्रबाहवः । प्रवेशकमहःपूर्वं, पुरान्तस्तैः प्रवेशिताः ॥ ३१ ॥ तेषामास्वादयामासुः, श्राद्धा व्याख्यारसामृतम् । तदागमे द्विजो मम्लौ, हिमाऽऽहत इव द्रुमः ॥ ३२ ॥ वराहस्तनयोत्पत्तौ, घनं धनव्ययं व्यधात् । अभूतं प्राभृत लोकाऽऽनीतं चाऽऽनीतवान् गृहे ॥ ३३ ॥ आयुर्वर्षशतं सूनोराख्यद् भूपादिसाक्षिकम् । वराहो ज्ञानवान् लग्नसौम्यमहादिदृग्वशात् ॥ ३४ ॥ अहो ! सहोदरोऽप्येष, भद्रबाहुर्न चाऽऽगतः । पुत्रजन्ममहेऽप्यहो ! (गेहे), लोकबाह्या अमी ततः ॥ ३५ ॥ इत्याचख्यौ सभाऽध्यक्षं, वराहोऽमर्षघर्षितः । भद्रबाहुप्रभुः श्राद्धैर्विज्ञप्तो यान्तु(तु) तद्गृहे ॥ ३६ ॥ सूरिराख्यदुभौ क्लेशौ, कारयत कथं वृथा ? । घाति(हनि)ष्यते विडाल्या हि, स बालः सप्तमेऽहनि ॥ ३७ ॥ तत्र नः शोकशान्त्यर्थं, लोकयात्रार्थमप्यतः । भविष्यति हि गन्तव्यं, लोकाचारो गुरुः स्मृतः ॥ ३८ ॥ तेऽभ्यधुर्नाथ ! तस्याऽऽयुर्द्विजेनोक्तं शतं समाः । इत्थं तु (नु) कथ्यते पूज्यैः, तत् सत्यं कस्य जल्पितम् ? ॥ ३९ ॥ ज्ञानस्य प्रत्यय(ः) सार, स्माह सूरिशिरोमणिः । श्राद्धाः स्थितास्ततस्तूष्णीमागतं सप्तमं दिनम् ॥ ४० ॥ धात्र्यासीनाऽर्द्धरात्रेऽमुं, स्तन्यं पाययितुं शिशुम् । पपात मस्तके तावद्, द्वारन्यस्ताऽर्गला शिशोः ॥ ४१ ॥ जनान्तरस्य सञ्चाराभावाद् बालो व्यपद्यत । रुद्यते(न्ते) तद्गृहे शोकः, प्राप कोटिं परामपि ॥ ४२ ॥ ययुः शोकापनोदार्थं, गृहे तस्य द्विजन्मनः । सूरयो भद्रबाह्वाह्वाः, साधु-श्रद्धालुभिर्वृताः ( साधु-श्राद्धशताऽऽवृ-(ऽन्वि)ताः ) ॥ ४३ ॥ अभ्युत्थानादिकां योग्या, प्रतिपत्तिं द्विजो व्यधात् । आसीना आ(श्राऽऽ-)सनेऽर्हेऽ(र्हा)र्हाः, ततोऽस्मै देशनां ददुः ॥ ४४ ॥ वराहः स्माह पूज्यानां, मिलितं ज्ञानमुज्ज्वलम् । किन्तु मृत्युर्विडालीतो, नाभूद् विघटितं ह्यदः ॥ ४५ ॥ सूरिराह न सार्वज्ञं, ज्ञानं स्यादन्यथा क्वचित् । यदर्गलाऽग्र(लोप)भागेऽस्ति, विडाली रेखयाऽङ्किता ॥ ४६ ॥ ततस्तेनार्गलाऽऽनीता, तत्र लोहमयीक्षिता । रेखामयी विडाल्यस्ति, ज्ञातव्यं महतामहो ! ॥ ४७ ॥ द्विजोऽवक् पुत्रशोकेन, न खिद्येऽहं तथा यथा । नृपादिसाक्षिकाऽऽख्यानाद्

वचोवैफल्यदर्शनात् ॥ ४८ ॥ अमीषां मामकीनानां, पुस्तकानां धिगस्तु तत् । ज्ञानं प्रकाशितं येषां, वलेनेदक्षदुःखदम् ॥ ४९ ॥ तस्मात् मृज्मो(ज्ये) जलैरेतान्, पुस्तकानित्यपूपुरत् । कुण्डानि वारिणा यावत्, मार्ष्टुमारभते स सः ॥५०॥ तावद् धृत्वा करे भद्रबाहुनाऽऽभाषितो द्विजः । विनाश्याऽऽत्मप्रमादात् किं, ज्ञानमेभ्यः प्रकुप्यसि ? ॥ ५१ ॥ नासत्यं कर्हिचिद् ब्रूयुः, सर्वज्ञोक्ताश्च(स्तु) पुस्तकाः । मदाऽऽवेशेन जातोऽसि, विपर्यस्तमतिर्भवान् ॥ ५२ ॥ विचारसूक्ष्मेक्षिकात्वं, न स्यात् मत्तस्य कस्यचित् । तत् मैवान् पुस्तकान् भाङ्क्षीर्निषिद्धोऽगाद् विलक्षताम् ॥ ५३ ॥ इतश्च तत्कृताऽऽर्हतमतगर्हाऽर्दिताऽऽत्मना । श्रावकार्भेण केनापि, पेठे तत्रेदमुच्चकैः ॥५४॥ युष्मादृशाः क्षपणकाः क्रमयोऽपि यस्यां, भान्ति स्म सन्तमसमभ्यगमत् निशाऽसौ । सूर्यांशुदीप्त(प्ति)दशदिग् दिवसोऽधुनाऽयं, भात्यत्र नेन्दुरपि कीटमणे ! किमु त्वम्? ॥ ५५ ॥ नष्टः सैवं वदन्नेव, वराहः पीडितो भृशम् । अत्रान्तरे नृपोऽप्यागात्, तत्र तच्छोकशान्तये ॥ ५६ ॥ भवस्थितिरियं मा स्म शोचीः स्माह वराहराट् । तदा च जिनभक्तेन, केनचित् मन्त्रिणोदितम् ॥ ५७ ॥ राजन्! नवीना आचार्या, आयाताः सन्ति यैः शिशोः । सप्ताहमात्रमादिष्टं, स्पष्टमायुर्महात्मभिः ॥५८॥ केनापि दर्शितास्तत्र, एते हि (त एते) भद्रबाहवः । ययुर्लोका यथास्थानं, श्राद्धधर्मं नृपोऽग्रहीत् ॥ ५९ ॥ वचोवैफल्यदुःखेन, वराहः पीडितो भृशम् । ललौ भागवतीं दीक्षां, नान्योपायस्तु तादृशाम् ॥ ६० ॥ महान्त्यज्ञानकष्टानि, कृत्वा मृत्वाऽऽयुषः क्षयात् । जैनेषु द्वेषवान् दुष्टव्यन्तरः समजायत ॥६१॥ महर्षीणां तपोवज्रपञ्जरान्तरवर्त्तिनाम् । किञ्चित्कर्त्तुमशक्तोऽसौ, तेषां श्राद्धानुपाद्रवत् ॥ ६२ ॥ तेषां गृहे गृहे रोगाः, प्रादुरासन् सुदुःसहाः । विज्ञप्तो भद्रबाहुस्तैरास्तिकैः पीडितैर्भृशम् ॥ ६३ ॥ भवत्सु भगवन्! सत्सु, रुग्भिः पीड्यामहे वयम् । तदेति (-त्वत-) कुञ्जरस्कन्धाधिरूढो भक्ष्यते श्वभिः ॥ ६४ ॥ सूरिर्बभाण मा भैष्ट, वराकोऽयं वराहकः । द्रोहिष्यति भवद्भ्यः प्राग्वैराद् व्यन्तरतां गतः ॥ ६५ ॥ वज्रपाणेरपि पाणे, रक्षामि

भुयसम्मि भोः ! (यः) । तानित्याश्वास्य पूर्वेभ्य उद्धृत्यासुं स्तवं व्यधात् ॥ ६६ ॥ उवसग्गहरं पासं, गाथापञ्चमयं नवम् । स लोकैः पठितः सद्यः, शान्तिर्जाता गता रुजः ॥६७॥ सोऽयमद्यापि कष्टापहारार्थिभिरहर्निशम् । पठ्यतेऽचिन्तितचिन्तारत्नतुल्यो ह्ययं त(-यत्न-)तः ॥ ६८ ॥ तेषां विद्योपजीवी श्रीस्थूलभद्रो महामुनिः । अचुचूर्णत् परमतं, दम्भोलिरिव पर्वतम् ॥६९॥ व्यवहार-दशा-कल्पाऽऽगमान् नवमपूर्वतः । उद्धृत्यान्त(न्त्य)श्रुतज्ञानी, भद्रबाहुर्दिवं ययौ ॥७०॥ इति श्रीभद्रबाहुप्रबन्धः ॥ [ ग्रन्थाग्रं ६७३१ ]

अथ क्रमप्राप्तं श्रीस्थूलभद्रमहामुनिं गाथाद्वयेन प्रस्तावयन्ति—

एक्को गुहाए(इ) हरिणो, बीओ दिट्ठीविसस्स सप्पस्स । तइओ वि कूवफलए, कोसघरे थूलभद्दमुणी ॥ १६६ ॥
सीहो वा सप्पो वा, सरीरपीडाकरा मुणेयव्वा । नाणं च दंसणं वा (च), चरणं च न पच्चला भित्तुं ॥ १६७ ॥

व्याख्या—द्वयो[र्गाथयो-]रक्षरार्थः स्पष्ट एव ॥ १६६-१६७ ॥

अत्र केषुचित् नवीनादर्शेषु प्रक्षेपरूपास्त्रयोदशेमा अपि गाथा दृश्यन्ते । तत्राऽऽद्यमिदं वृत्तम्—

न दुक्करं अंबयलुंबितोडणं, न दुक्करं नच्चियसिक्खियाए ।
तं दुक्करं जं(तं) च महाणुभावं, जं सो मुणी पमयवणम्मि वुच्छो ॥ १६८ ॥

निच्चं पि तस्स नमिमो, कमकमलं विमलसीलकलियस्स । अइदुक्करदुक्करकारयस्स सिरिथूलभद्दस्स ॥ १६९ ॥
जो हावभाव-सिंगारसारवयणेहिं णेगरूवेहिं । वालग्गं पि न चलिओ, तस्स नमो थूलभद्दस्स ॥ १७० ॥
कोसाए लवंतीए,पुराण(णु)भूयाहिं रहस्सभणियाहिं।जो मणयं पि न खुभि(हि)ओ, तस्स नमो थूलभद्दस्स ॥१७१॥

जो अचुम्भडलायन्नपुण्णापुण्णेसु मज्झ अंगेसु । दिट्ठेसु वि न हु खुभिओ, तस्स नमो थूलभद्दस्स ॥ १७२ ॥
जो मह्कडक्खविक्खेयतिक्खसरधोरणीहिं नो विद्धो । मेरु व निप्पकंपो, स थूलभद्दो मुणी जयउ ॥ १७३ ॥
अक्खलियमरट्टकंदप्पमद्दणे लद्धजयपडागस्स । तिक्कालं तिविहेणं, नमो नमो थूलभद्दस्स ॥ १७४ ॥
कोसासंसग्गीए, अग्गीए जो तया सुवन्नु व । उच्छलियबहुलतेऊ(ओ), स थूलभद्दो चिरं जयउ ॥ १७५ ॥
वंदामि चलणजुयलं, मुणिणो सिरिथूलभद्दसामिस्स । जो कसिणभुयंगीए, पडिओ वि मुहे न निड(ड्ड)सिओ ॥१७६॥
पणमामि अहं निच्चं, पयपउमं तस्स थूलभद्दस्स । अद्धच्छिपिच्छियाइं, कोसाए न जेण गणियाइं ॥ १७७ ॥
धन्नो स थूलभद्दो, मयरज्झयकुंभिकुंभनिम्महणो । निम्महियमोहमल्लो, जो गुरुणा वण्णिओ अइ(हि)यं ॥१७८॥
न खमो सहस्सनयणो वि वण्णिउं थूलभद्दज्झाणग्गिं । तिजयदमणो वि मयणो, खयं गओ जत्थ मयणं व ॥१७९॥
पणमह भत्तिभरेणं, तिक्कालं तिविहकरण-जोएणं । सिरिथूलभद्दपाए, निहणियकंदप्पभडवाए ॥ १८० ॥

व्याख्या—सर्वा अपि स्पष्टार्थाः ॥ १६८-१६९-१७०-१७१-१७२-१७३-१७४-१७५-१७६-१७७-१७८-१७९-१८० ॥ तथा—

भयवं पि थूलभद्दो, तिक्खं चंकमिओ न उण छिन्नो । अग्गिसिहाए वुच्छो, चाउमासे न वि य दड्ढो(ड्ढो) ॥१८१॥

व्याख्या—अक्षरार्थः सुगमः ॥ १८१ ॥ भावार्थः कथानकगम्यः । तच्चेदम्—

तमस्तोमतिरस्कारभास्करं परमेश्वरम् । प्रणम्य स्थूलभद्रर्षेश्चरित्रं रचयाम्यहम् ॥ १ ॥ अत्राऽऽसीद् भरतक्षेत्रे, पाटलीपुत्रपत्तनम् । तत्रोदायी नृपो राज्यं, कुरुते कूणिकाऽऽत्मजः ॥ २ ॥ हतोऽपुत्रो महात्माऽसौ, पाप्मना दम्भि(म्भ)साधुना । सज्जीकृतानि सन्ध्यायां,

पञ्च दिव्यानि मन्त्रिभिः ॥ ३ ॥ इतश्च दासो नन्दस्य, नन्दाख्यो गणिकोद्भवः । प्रत्यूषे स्वप्नमद्राक्षीद्, यद् मेऽन्त्रैर्वेष्टितं पुरम् ॥ ४ ॥
उपाध्यायस्य तं चोचे, स्वप्नज्ञः सोऽपि तं गृहे । नीत्वा स्नानादिसत्कारं, तस्मै कन्या निजां ददौ ॥ ५ ॥ पुरान्तः शिबिकाऽऽरूढः, सोऽभ्रमत्
समहोत्सवम् । अन्तर्दिव्यान्यपि भ्रान्त्वा, वहिरीयुस्तदन्तिकम् ॥ ६ ॥ पृष्ठमारोपितोऽश्वेन, छत्रं विकसितं स्वयम् । चक्रतुश्चामराचारं,
चामरे पार्श्वयोर्द्वयोः ॥ ७ ॥ तदा दिदीपे नन्दोऽपि, नृपोऽभूत् कर्मतः क्रमात् । न चक्रुर्विनयं हीन, इति सामन्त-मन्त्रिणः ॥ ८ ॥ दध्यौ
नन्दः किमैश्वर्यं, ममाऽऽज्ञाहीनमित्यतः । उत्थायाऽऽस्थानतस्तत्रैवागात् कश्चित् न चोत्थितः ॥ ९ ॥ नन्दोऽवादीत् क्रुधाऽऽक्रान्तो गृह्णीतै-
तानहो ! भटाः ! । जहसुस्ते मिथो वीक्ष्य, विलक्षोऽभूत् नृपो भृशम् ॥ १० ॥ प्रतीहारयुगं तत्रस्थं लेप्यकर्मनिर्मितम् । दृशाऽद्राक्षीत् ॥
तत् खड्गहस्तं दैवादधावत ॥ ११ ॥ हताः केचिद् गताः केचित्, नताः केचिद् भयात् नृपम् । प्रत्ययो हि विना सत्यं, नेत्यभूदुग्रशासनः
॥ १२ ॥ न तादृग् बुद्धिमांस्तस्य, मन्त्र्यास्ते वीक्षते स तम् । इतश्च कपिलो नाम, विप्रो वसति पूर्बहिः ॥ १३ ॥ सन्ध्यायां साधवस्त-
स्थुर्वासार्थं तद्गृहेऽन्यदा । किञ्चिद् जानन्ति नो वाऽमी ?, पप्रच्छेति द्विजो मुनीन् ॥ १४ ॥ सम्यक् सूरिभिराख्याते, श्रावकोऽभूत्
तदैव सः । अन्येद्युस्तद्गृहे तस्थुः, वर्षारात्रं महर्षयः ॥१५॥ जातमात्र(ः) सुतस्तस्य, रेवतीमस्त इत्यमुम् । कल्पयतां स पा(-प)त्राणामृषीणां
धारयत्यधः ॥ १६ ॥ नष्टा सा व्यन्तरी दुष्टा, स्थिराऽभूत् तस्य सन्ततिः । तस्याभूत् कल्प इत्याख्या, मम्रतुः पितरौ क्रमात् ॥ १७ ॥
चतुर्दशमहाविद्यास्थानाभिज्ञः स कल्पकः । दानं नेच्छति सन्तोषाद्, दीयमानां कनीमपि ॥ १८ ॥ विद्यार्थिभिर्वृतः स्वैरं, पत्तनान्तर्भ्र-
मत्यसौ । अथास्ति विप्रस्तस्यैको, गमनागमनाध्वनि ॥ १९ ॥ तस्य जलोदरिण्यस्ति, वृद्धा(रूपा)रूपस्विनी कनी । आगतं रुधिरं तस्या,
न कश्चिद् वृणुते तकाम् (वरः) ॥२०॥ माता तदुक्तं तातस्य, स दध्यौ सत्यसङ्गरः । कल्पकोऽस्ति ह्युपायेन, ददाम्यस्मै कनीमिमाम्

॥ २१ ॥ ततोऽसौ स्वगृहद्वारे, क्षिप्त्वा गर्त्तान्तरे कनीम् । पूत्कारोत्थकैस्तत्राऽऽयान्तमालोक्य कल्पकम् ॥ २२ ॥ पतितामुद्धरेदेतां, यस्तस्यैवास्त्वसाविति । कल्पकः कृपयोद्दध्रे, विप्रोऽवक् सत्यवाग् भवेः ॥ २३ ॥ जनापवादभीतस्तां, पर्यणैपीच कल्पकः । विद्यानौपधयोगेनाचिरात् चक्रे निरामयाम् ॥ २४ ॥ सत्यागूर्मतिमान् कल्पः, श्रुत्वेत्याहूय पार्थिवः । मन्त्र्यर्थं प्रार्थयामास, निःस्पृहः सोऽप्यदोऽवदत् ॥ २५ ॥ भोजनाऽऽच्छादनं मुक्त्वा, कुर्वे नान्यं परिग्रहम् । दध्यौ निरागसः किञ्चित्, कर्तुं नो शक्यते नृपः ॥ २६ ॥ राज्ञा पृष्टस्तदासन्नो, रजकः कल्पकस्य रे ! । प्रक्षालयसि वस्त्राणि ?, सोऽप्यूचे सुतरां प्रभो(ः) ॥ २७ ॥ तानीदानीन्तनान्यसदुक्तं देयानि नो विना । कल्पस्येन्द्रमहेऽन्येद्युः, प्रियोचे रञ्जयांशुकम् ॥२८॥ स नेच्छति प्रिया वारं वारं तस्योज्जगार तत् । रजको रञ्जयाम्येतद्, विना मूल्येन सोऽब्रवीत् ॥ २९ ॥ दत्तमिन्द्रमहे नाऽतीतेऽप्यददानोऽमुनाऽर्थितः, अद्यकल्ये ददाम्येतदित्यूचे रजकोऽन्वहम् ॥३०॥ ( पाठान्तरे तु–अन्यदा कल्पकेनापि, ययाचेऽसौ ददाम्यहम् । तमिन्द्रमहेऽतीते ददाम्यूचे रजकोऽन्वहम् ॥ ३० ॥ ) एवं वर्षे द्वितीयेऽपि, तृतीयेऽस्मिन्नपि क्रमात् । स मार्गयति नो दत्ते, रजकः कल्पकांशुकम् ॥ ३१ ॥ ततस्तेनोदितं रोषाद्, रञ्जयाम्यसृजा न ते । तदा वहौ विशाम्येवेत्युक्त्वाऽगात् कल्पकोऽन्यदा ॥ ३२ ॥ तमूचे क्षुरिकां कृष्ट्वा, रजकार्पय मेऽशुकम् । रजकोक्त्याऽर्पितं पत्न्या, तस्यारञ्जितमेव तत् ॥ ३३ ॥ कल्पस्तद् रञ्जयामास, विदार्य रजकोदरम् । रजक्याह न दोपोऽस्य, तत् न दत्तं नृपाऽऽज्ञया ॥ ३४ ॥ कल्पो दध्यौ ध्रुवं राज्ञो, मायेयं यत् मया ततः(दा) । तदुक्त्या मन्त्रिता नाऽऽत्ता, स्वयं यास्यन्तिकेऽसि(स्य) तत् ॥३५॥ बलाद् भटा नयिष्यन्ति, ततोऽगात् कल्पकः स्वयम् । राजोक्तस्सौ द्विजोऽवादीत्, किं कुर्वेऽथाऽऽह पार्थिवः ॥ ३६ ॥ व(म)दुक्तं चिन्तितं कल्पोऽवददेवमथाऽऽययुः । रजका रावकर्त्तारः, प्रायः पक्षाश्रयो जयः ॥ ३७ ॥ नन्देन साकं जल्पन्तं, तं वीक्ष्य रजका ययुः । तत्सर्वराज्याधिष्ठाता मन्त्र्यभूत्

कल्पको महान् ॥ ३८ ॥ तस्याश्चान्येभ्यपुरीणां, सन्ततिस्तस्य वह्वभूत् । अन्यदाऽऽविरभूत् चास्य, सुतोद्वाहमहामहः ॥ ३९ ॥ तत्राऽऽतपत्र-सद्वस्त्र-शस्त्राद्यहं महीभुजः । निष्पद्यते समुद्धान्तराजः सत्कारकर्मणे ॥ ४० ॥ प्राग्मन्त्री कल्पके कोपं, वहंश्छिद्राणि पश्यति । तेन कल्पकदास्येका, दान-मानवशीकृता ॥ ४१ ॥ प्रत्यहं कल्पकगृहवार्त्ता वाच्या त्वया मम । दास्योक्तमधुना निष्पद्यते छत्रादि मत्प्रभोः ॥ ४२ ॥ कल्पके कल्पयित्वाऽदश्छिद्रं राज्ञे व्यजिज्ञपत् । भ्रष्टमन्त्रिपदो मन्त्री, भक्ततां दर्शयन्निव ॥ ४३ ॥ यद्यप्यखिलकार्येभ्यो, देव! दूरीकृता वयम् । तथाऽपि सन्ति सिक्थानि, प्रभोर्नो जठरान्तरे ॥ ४४ ॥ तेन ज्ञातं हितं चरमः, कल्पो व्यापाद्य वः सुतम् । स्थापयिष्यति राज्येऽस्मिन्, को विश्वासोऽधिकारिणाम् ? ॥ ४५ ॥ प्रतीतिर्नो(र्ने) प्रभूणां चेत्, पश्यन्तु प्रेष्य तत् चरम् । तथाकृते तथा दृष्ट्वा, कल्पोपरि नृपोऽकुपत् ॥ ४६ ॥ क्षिप्तोऽन्धकूपकारायां, सकुटुम्बोऽपि कल्पकः । भूभुजां चेतसः स्थैर्यं, न क्वाप्यश्वत्थपत्रयत् ॥ ४७ ॥ तस्य तत्र सपुत्रस्य, कोद्रवी-कूर-सेतिकाम् । कूपकेऽक्षेपयद् राजा, तथैकं कुम्भमम्भसः ॥ ४८ ॥ कल्पोऽवक् स्वमनुष्याणां, भुङ्क्तां भक्तमदोऽल्पकम् । यः कश्चित् स्वकुलोद्धारधुर्यः स्याद् वैरशुद्धिकृत् ॥ ४९ ॥ तेऽप्यूचुर्न विना तातपादं कश्चित् क्षमोऽपरः । ततोऽन्येऽनशनं कृत्वा, विपद्य त्रिदिवं ययुः ॥ ५० ॥ कालं नयति कल्पोऽपि, तेनान्नेन विधेर्वशात् । इतश्च पाटलीपुत्रं, रुरुधुर्वैरिभूभुजः ॥ ५१ ॥ पुरकोट भाण्डं भाण्डेन, तद्भयात् पुरवासिनाम् । तत्राशक्तो निरानन्दो, नन्दः सस्मार कल्पकम् ॥ ५२ ॥ चेत् तस्य गृहदासोऽपि, तस्य धीः कार्यसाधका । ततो रक्षाकरान् नन्दोऽपृच्छत् कोऽद्यापि जीवति ? ॥ ५३ ॥ तेऽप्यूचुर्देव ! भक्ताम्भः, कश्चिद् गृह्णाति कूपगः । ततो मञ्चिकया राजा, कर्षयामास कल्पकम् ॥ ५४ ॥ पक्वद्रुपत्र-कपिशं, सज्जीकृत्यौ(त्वौ)षधैर्नृपः । भ्रमयामास वप्रस्योपर्यमुं शिबिकास्थितम् ॥ ५५ ॥ बहिःस्थास्तं तथा वीक्ष्य, दध्युर्भाषयते हि नः । कल्पभ्रान्त्या मुधा नन्द इत्युपद्रोतुमाययुः ॥ ५६ ॥

कल्पस्तान् मतिमानूचे, गङ्गान्तर्नौवमाश्रितः । भवतां कश्चिदायातु, सन्धिं चाऽन्यत् करोमि यत् ॥ ५७ ॥ तत्राऽऽगतस्य तत्पुंसः, पुरः कल्पोऽप्यनल्पधीः । भ्रमार्थं दर्शयामास, चित्रमाकस्मिकं ह्रदः ॥५८॥ मूले प्रान्ते च कृत्तस्येक्षुयष्टेर्हस्तसंज्ञया । छिन्नस्यान्ते तथा मूले, दग्ध-(ध्नः)कुण्डेऽथ किं भवेत् ? ॥ ५९ ॥ इत्युक्त्वाऽरिरजनार्थं, भ्रान्त्वा प्रदक्षिणाभ्रमात् । स्वस्थानमाययौ कल्पः, स्वसैन्यमरिभक्त्यपि ॥६०॥ कल्पोक्तं पृच्छतां तेषां, सोऽजानन् सम्यगाह न । ततो (भ्रान्ता) भीता नृपा नेशुर्नन्दोऽपि पृष्ठतोऽपतत् ॥६१॥ हस्त्यश्व-कोश-रत्नाद्याच्छिद्य नन्दोऽप्युपाददे । कल्पकः कल्पितो मन्त्री, प्राग्वत् चास्य रिपुर्हतः ॥ ६२ ॥ अभूवन् भूयो भूयांसः, सूनवः कल्पमन्त्रिणः । सहैव नन्दवंशेन, मन्त्रिणः कल्पकान्वयाः ॥ ६३ ॥ क्रमेण नवमो नन्दो, भूपोऽभूद् भरतार्द्धभुक् । तस्याभूत् शकटालाख्यो, मन्त्री कल्पकुलोद्भवः ॥ ६४ ॥ तस्य लक्ष्मीवती लक्ष्मीवती नाम्नाऽभवत् प्रिया । स्थूलभद्र-श्रीयकाख्यौ, तनयौ विनयौकसी ॥ ६५ ॥ यक्षा च यक्षदत्ता च, भूता च भूतदत्तका । सेणा वेणा तथा रेणा, पुत्र्यः सप्तास्य चाभवन् ॥ ६६ ॥ इतश्चाष्टोत्तरशतश्लोकैर्नन्दं नवैर्नवैः । द्विजो वररुचिर्नित्यमेत्य स्तौति सभास्थितम् ॥ ६७ ॥ नन्दस्तुतोष नो दानं, दत्ते मन्त्रिवचो विना । दानाभावाद्(यं) जनाः पृष्टास्तेऽप्यू(नो)चुर्मन्त्र्यधीनताम् ॥ ६८ ॥ ततो वररुचिर्विद्वान्, सिषेवे सचिवप्रियाम् । तया सन्तुष्टया पृष्टोऽन्यदाऽवादीदिदं द्विजः ॥ ६९ ॥ त्वत्पतिर्मम काव्यानि, पुरो राज्ञः प्रशंसतु । मन्त्रिपत्न्योदितं स्वार्थे(-र्थे)सिद्धि(द्धं)विद्धि द्विज ! व्रज ॥ ७० ॥ तयोक्तं मन्त्रिणः सोऽप्यूक्, मिथ्यादृष्टेर्वचः कथम् । प्रशंसामि ? शशंसान्यत्, कार्यं यत् प्रतिभाति ते ॥ ७१ ॥ स्वीचक्रे स्त्रीमहात् मन्त्री, प्रशशंस प्रगे पुनः । अहो ! सुभाषितमिति, पठतोऽस्य नृपाग्रतः ॥ ७२ ॥ दीनाराष्टशतं तुष्टिदानं नन्दो ददौ सदा । तद् वीक्ष्य धीसखो दध्यौ, राज्ञः कोशस्तु निष्ठितः ॥ ७३ ॥ मिथ्यात्ववृद्धिरप्यासीत्, ततो मन्त्र्यवदत् नृपम् । किमेतद् दीयतेऽमुष्मै ?, राजोचे त्वत्प्रशंसया ॥ ७४ ॥ मया लौकिक-

कल्पको महान् ॥ ३८ ॥ तत्याश्चान्येभ्यपुत्रीणां, सन्ततिस्तस्य यद्वयभूत् । अन्यदाऽऽविरभूत् चास्य, सुतोद्वाहमहामहः ॥ ३९ ॥ तत्राऽऽतपत्र-सद्वस्त्र-शस्त्राद्यर्हं महीभुजः । निष्पद्यते सशुद्धान्तराजः सत्कारकर्मणे ॥ ४० ॥ प्राग्मन्त्री कल्पके कोपं, वहंश्छिद्राणि पश्यति । तेन कल्पकदास्येका, दान-मानवशीकृता ॥ ४१ ॥ प्रत्यहं कल्पकगृहवार्त्ता वाच्या त्वया मम । दास्योक्तमधुना निष्पद्यते छत्रादि भत्रभोः ॥ ४२ ॥ कल्पके कल्पयित्वाऽथ छिद्रं राज्ञे व्यजिज्ञपत् । भ्रष्टमन्त्रिपदो मन्त्री, भक्ततां दर्शयन्निव ॥ ४३ ॥ यद्यप्यखिलकार्येभ्यो, देव! दूरीकृता वयम् । तथाऽपि सन्ति सिक्थानि, प्रभोर्नो जठरान्तरे ॥ ४४ ॥ तेन ज्ञातं हितं वचसः, कल्पो व्यापाद्य यः सुतम् । स्थापयिष्यति राज्येऽस्मिन्, को विश्वासोऽधिकारिणाम् ? ॥ ४५ ॥ प्रतीतिर्नो(र्ने) प्रभूणां चेत्, पश्यन्तु प्रेष्य तत् चरम् । तथाऽत्र्वे तथा दृष्ट्वा, कल्पोपरि नृपोऽकुपत् ॥ ४६ ॥ क्षिप्तोऽन्धकूपकारायां, सकुटुम्बोऽपि कल्पकः । भूभुजां चेतसः स्थैर्यं, न क्वाप्यश्वत्थपत्रवत् ॥ ४७ ॥ तस्य तत्र सपुत्रस्य, कोद्रवी-कूर-सेतिकाम् । कूपकेऽक्षेपयद् राजा, तथैकं कुम्भमम्भसः ॥ ४८ ॥ कल्पोऽवक् स्वमनुष्याणां, भुङ्क्तां भक्तमदोऽल्पकम् । यः कश्चित् स्वकुलोद्धारधुर्यः स्याद् वैरशुद्धिकृत् ॥ ४९ ॥ तेऽप्यूचुर्न विना तातपादं कश्चित् क्षमोऽपरः । ततोऽन्येऽनशनं कृत्वा, विपद्य त्रिदिवं ययुः ॥ ५० ॥ कालं नयति कल्पोऽपि, तेनान्नेन विधेर्वशात् । इतश्च पाटलीपुत्रं, रुरुधुर्वैरिभूभुजः ॥ ५१ ॥ पुस्फोट भाण्डं भाण्डेन, तद्भयात् पुरवासिनाम् । तत्राशक्तो निरानन्दो, नन्दः सस्मार कल्पकम् ॥ ५२ ॥ चेत् तस्य गृहदासोऽपि, तस्य धीः कार्यसाधका । ततो रक्षाकरान् नन्दोऽपृच्छत् कोऽप्यापि जीवति ? ॥ ५३ ॥ तेऽप्यूचुर्देव ! भक्ताम्भः, कश्चिद् गृह्णाति कूपगः । ततो मञ्चिकया राजा, कर्षयामास कल्पकम् ॥ ५४ ॥ पक्वद्रुपत्र-कपिशं, सञ्जीकृत्यौ(त्वौ)पधैर्नृपः । भ्रमयामास वप्रस्योपर्यमुं शिनिकास्थितम् ॥ ५५ ॥ वहिःस्थास्तं तथा वीक्ष्य, दध्युर्मीपयते हि नः । कल्पभ्रान्त्या मुधा नन्द इत्युपद्रोतुमाययुः ॥ ५६ ॥

कल्पस्तान् मतिमानूचे, गङ्गान्तर्नावमाश्रितः । भवतां कश्चिदायातु, सन्धिं वाऽन्यत् करोमि यत् ॥ ५७ ॥ तत्राऽऽगतस्य तत्पुंसः, पुरः कल्पोऽप्यनल्पधीः । भ्रमार्थं दर्शयामास, चित्रमाकस्मिकं ह्यदः ॥५८॥ मूले प्रान्ते च कृत्तस्येक्षुयष्टेर्हस्तसंज्ञया । छिन्नस्यान्ते तथा मूले, दग्ध-(ग्नः)कुण्डेऽथ किं भवेत् ? ॥ ५९ ॥ इत्युक्त्वाऽरिरननावं, भ्रान्त्वा प्रदक्षिणाभ्रमात् । स्वस्थानमाययौ कल्पः, स्वसैन्यमरिमक्ष्यपि ॥६०॥ कल्पोक्तं पृच्छतां तेषां, सोऽजानन् सम्यगाह न । ततो (भ्रान्ता) भीता नृपा नेशुर्नन्दोऽपि पृष्ठतोऽपतत् ॥६१॥ हस्त्यश्व-कोश-रत्नाद्याच्छिद्य नन्दोऽप्युपाददे । कल्पकः कल्पितो मन्त्री, प्राग्वत् चास्य रिपुर्हतः ॥ ६२ ॥ अभूवन् भूयो भूयांसः, सूनवः कल्पमन्त्रिणः । सहैव नन्दवंशेन, मन्त्रिणः कल्पकान्वयाः ॥ ६३ ॥ क्रमेण नवमो नन्दो, भूपोऽभूद् भरतार्द्धभुक् । तस्याभूत् शकटालाख्यो, मन्त्री कल्पकुलोद्भवः ॥ ६४ ॥ तस्य लक्ष्मीवती लक्ष्मीवती नाम्नाऽभवत् प्रिया । स्थूलभद्र-श्रीयकाख्यौ, तनयौ विनयौकसौ ॥ ६५ ॥ यक्षा च यक्षदत्ता च, भूता च भूतदत्तका । सेणा वेणा तथा रेणा, पुत्र्यः सप्तास्य चाभवन् ॥ ६६ ॥ इतश्चाष्टोत्तरशतश्लोकैर्नन्दं नवैर्नवैः । द्विजो वररुचिर्नित्यमेत्य स्तौति सभास्थितम् ॥ ६७ ॥ नन्दस्तुतोप नो दानं, दत्ते मन्त्रिवचो विना । दानाभावाद्(वं) जनाः पृष्टास्तेऽप्यू(नो)चुर्मन्त्र्यधीनताम् ॥ ६८ ॥ ततो वररुचिर्विद्वान्, सिषेवे सचिवप्रियाम् । तया सन्तुष्टया पृष्टोऽन्यदाऽवादीदिदं द्विजः ॥ ६९ ॥ त्वत्पतिर्मम काव्यानि, पुरो राज्ञः प्रशंसतु । मन्त्रिपत्न्योदितं स्वार्थ(-र्थं)सिद्धि(द्धिं)विद्धि द्विज ! व्रज ॥ ७० ॥ तयोक्तं मन्त्रिणः सोऽवक्, मिथ्यादृष्टेर्वचः कथम् । प्रशंसामि ? शशंसान्यत्, कार्यं यत् प्रतिभाति ते ॥ ७१ ॥ स्त्रीचक्रे स्त्रीमहात् मन्त्री, प्रशशंस प्रगे पुनः । अहो ! सुभाषितमिति, पठतोऽस्य नृपाग्रतः ॥ ७२ ॥ दीनाराष्टशतं तुष्टिदानं नन्दो ददौ सदा । तद् वीक्ष्य धीसखो दध्यौ, राज्ञः कोशस्तु निष्ठितः ॥ ७३ ॥ मिथ्यात्ववृद्धिरप्यासीत्, ततो मन्त्र्यवदत् नृपम् । किमेतद् दीयतेऽमुष्मै ?, राजोचे त्वत्प्रशंसया ॥ ७४ ॥ मया लौकिक-

काव्यानि, व्याख्यातानीति मन्त्र्यवक् । राजाऽऽहैवत् च किं सत्यं ?, मन्त्र्यूचे वेदवागियम् ॥ ७५ ॥ एतानि का कथाऽन्येषां ?, पठन्ति बालिका अपि । नन्दोऽवादीत् तदा प्रातः, पाठयेस्ता अमून्यहो ! ॥७६॥ ततो मन्त्रिसुताः सप्त, ज(य)वन्यन्तरिताः स्थिताः । नैत्यिकान्यमकाव्यानि, पपाठाशठधीर्द्विजः ॥७७॥ एक-द्वि-त्रि-चतुरादिवारं(र)श्रुतश्रुतग्रहाः । पेठुस्तदुक्तं सप्ताप्यनुज्येष्ठं मन्त्रिपुत्रिकाः ॥ ७८ ॥ राज्ञा न्यषेधि तद् दानं, ततो गङ्गाजले द्विजः । दीनाराष्टशतग्रन्थिं, मुक्त्वा गङ्गां प्रगेऽस्तवीत् ॥७९॥ यन्त्रांह्रिक्रमणकलयोरुत्पत्य तत्करेऽपतत् । दीनारग्रन्थिर्विप्रोऽवग्, राजाऽस्थात् किं सरिद(त्त्व)दात् ? ॥८०॥ जनो विसिष्मये राजाऽमात्यमूचेऽस्य नद्यदात् । मन्त्र्याह चेत् ममाध्यक्षं दत्ते सत्यं न चान्यथा ॥ ८१ ॥ ततश्चैकश्चरश्छन्नमादिष्टो मन्त्रिणाऽत्र भोः ! । यत् मुञ्चति वररुचिर्देयमानीय तत् मम ॥ ८२ ॥ सायं विप्रोऽपि दीनारान्, मुक्त्वाऽन्तर्गङ्गमागमत् । शरस्तम्बनिलीनोऽसौ, चरस्तान् वीक्ष्य चाऽऽददे ॥ ८३ ॥ ददावस्ते मन्त्रिणस्तेन, सोऽगाद् राज्ञा समं प्रगे । तुष्टाव जाह्नवीं विप्रो, दीनारान् प्राप नो पुनः ॥८४॥ यन्त्रभ्रष्टि(ष्ट)मिति ग्रन्थिं, पश्यन् पयसि पाणिना । सस्मितं मन्त्रिणोक्तोऽसौ, किं न दत्तेऽद्य जाह्नवी ? ॥ ८५ ॥ ततोऽमात्येन स ग्रन्थिर्दत्तोऽसौ ते भवत्ययम् ? । इत्युक्तोऽसौ तथा ह्रीणो, यथा वेद स एव हि ॥ ८६ ॥ जनापवादतो विप्रोऽपश्यत् छिद्राणि मन्त्रिणः । तदर्थं तेन तद्दासी, दान-मानवशीकृता ॥ ८७ ॥ श्रीयकस्य विवाहोऽस्तीत्युक्तो(क्तं)वररुचि(चे)स्तया । सज्यते तत्र शस्त्रादि, दातुं नन्दाय मन्त्रिणा ॥८८॥ तदेव छलमासाद्य, सद्यो वररुचिस्त्विदम् । बालानपाठयद् दत्त्वा, मोदकादि सुरादिकम् ॥ ८९ ॥ न वेत्ति नन्दस्तद् यच, शकटालः करिष्यति । नन्दं व्यापाद्य तद्राज्ये, श्रीयकं स्थापयिष्यति ॥९०॥ राजपाट्यां गतः श्रुत्वा, पठ्यमानं पुरान्तरे । नन्दो दध्यौ ह्यसम्बद्धं, किमिदं पठ्यतेऽर्भकैः ? ॥ ९१ ॥ बालका यत् च भाषन्ते, भाषन्ते यत् च (यच्च जल्पन्ति) योषितः । उत्पातिकी च या भाषा, सा प्रायो नान्यथा भवेत् ॥ ९२ ॥ शस्त्रादिसज्जतां ज्ञात्वा,

मन्त्रिगेहे चराऽऽननात् । नृपश्चुकोप विमर्शपरामर्शपराङ्मुखः ॥९३॥ ततो यतो यतो (विनयतो) मन्त्री, नृपतेरपतत् पदोः । ततस्ततः स्याद् विमुखो, मन्यथा(न्या)ऽऽगात् निजं गृहम् ॥ ९४ ॥ श्रीयकं स्माह मां हत्वा, स्वकुटुम्बं समुद्धर । त्यजेदेकं कुलस्यार्थे, हीति नीतिविदो विदुः ॥ ९५ ॥ स कर्णाच्छादनं चक्रे, आः ! पापमिति चोच्चरन् । विषं भोक्ष्येऽस्मि मन्त्र्याह, पतन्तं घातयासिना ॥ ९६ ॥ प्रभाते नमतो भूपमसिना श्रीयकः शिरः । चिच्छेद शकटालस्य, कन्द(द)लीकन्दलीलया ॥ ९७ ॥ हा हा ! अकार्यमित्युक्त्वोत्तस्थौ नन्दः ससम्भ्रमम् । न राजद्वेषिणा कार्यं, तातेनापीति सोऽवदत् ॥ ९८ ॥ कृतौर्ध्वदेहिकं नन्दस्ततः श्रीयकमनवीत् । गृहाण मन्त्रिपदवीं, स्वीयान्वय(ये)क्रमागताम् ॥ ९९ ॥ स ऊचे स्थूलभद्राख्यः, पितृतुल्योऽस्ति मेऽग्रजः । वस्थुषो द्वादशाब्दानि, तस्य वेश्यागृहे ययुः ॥ १०० ॥ सोऽप्यादा(हू)य नृपेणोक्तो, गृहाण मम मन्त्रिताम् । चिन्तयामीति सोऽप्यूचे, चिन्तयान्नेव राडवक् ॥ १०१ ॥ अशोकवनिकां गत्वा, स्थूलभद्रोऽप्यचिन्तयत् । व्यग्रस्य राज(ज्य)कार्येषु, कुतस्त्या भोगयोग्य(ग)ता ? ॥ १०२ ॥ स सर्वकार्यधुर्योऽपि, क्षणात् तातः क्षयं गतः । तत् मन्त्रिता कदाप्येवाभिमानसुखदा परम् ॥ १०३ ॥ प्रबुद्धो लघुकर्मत्वात्, कृत्वा लोचं च पानकम् । रत्नकम्बलदशानां, रजोहरणमाददे ॥ १०४ ॥ एधस्व धर्मलाभेनेत्यूचे सदसि पार्थिवम् । राजोचे चिन्तितं किं भोः ! ?, सोऽप्यूचे सुष्ठु चिन्तितम् ॥ १०५ ॥ इत्युक्त्वा स्थूलभद्रर्षिर्निर्ययौ राजमन्दिरात् । याता वेश्यागृहे दम्भादित्यारूढो गृहं नृपः ॥१०६॥ कलेवरादिदुर्गन्धेष्वविकूणितनासिकम् । अरक्तद्विष्टं तं दृष्ट्वा, शान्तं नन्दोऽब्रवीत् मुनिम् ॥ १०७ ॥ अहो ! मुनिर्निरीहोऽयं, भगवान् सर्वसङ्गमुक् । प्राव्राजीत् सोऽपि गत्वा श्रीसम्भूत(ति)विजयान्तिके ॥ १०८ ॥ बलाद् धृत्वा करे राजा, श्रीयकं मन्त्रिणं व्यधात् । शकटाल इव प्राज्ञो, राज्ञोऽर्थान् सोऽप्यसाधयत् ॥ १०९ ॥ स याति भ्रातृस्नेहेन, कोशावेश्यागृहेऽन्वहम् । दुःखाद् रुरोद सा दृष्टे,

गुहाद्वारे हरेरहम् ॥ १२८ ॥ दृग्विषाहिबिलद्वारे, स्थेयं तद्वत् परोऽकरोत् । कूपकाष्ठे तृतीयर्षिः, स्थेयमभ्यमहीदिदम् ॥ १२९ ॥
सूरयो योग्यतां ज्ञात्वा, तेषां तदनुमेनिरे । ततश्चाऽऽगत्य तत्रेदं, स्थूलभद्रो व्यजिज्ञपत् ॥ १३० ॥ स्थास्यामि कोशावेश्यायाश्चतुर्मासी-
मुपाश्रये । कुर्वाणः षड्रसाऽऽहारमनुमन्यस्व मे प्रभो ! ॥ १३१ ॥ स्वामीष्टं साधयेत्युक्तो, ज्ञानिना सूरिणा ततः । वर्षावासकृते कोशा-
वेश्यावासं मुनिर्ययौ ॥१३२॥ तं वीक्ष्याचिन्तयद् वेश्याऽऽयातं नूनमयं मुनिः । सुकुमारः प्रकृत्याऽऽगात्, परीषहपराजितः ॥१३३॥
उत्थाय साऽऽह सस्नेहं, किङ्करी किं करोमि ते ? । स्वामिन् ! सर्वं त्वया(दा)ऽऽयत्तं, धनं परिजनो जनः ॥ १३४ ॥ महर्षिः स्माह मे
वर्षावस्थानस्थानमर्पय । सोचे विचित्रचित्राढ्या, चित्रशालेयमस्तु वः ॥ १३५ ॥ तस्थौ गुहायां हर्यक्ष, इवर्षिस्तदुपाश्रये । चक्रे विहृत्य
तत्रैव, षड्रसाऽऽहारभोजनम् ॥ १३६ ॥ विहितस्फारशृङ्गारा, हावभावविचक्षणा । कोशा मुमुक्षुक्षोभार्थं, निश्यागात् कामविह्वला
॥ १३७ ॥ चाटु-साध्वसवाक्यानि, न्यस्तान्यस्मिन्ननेकधा । मुधा ययुः सुधासेक इवामलनभःस्थले ॥ १३८ ॥ प्रबोध्य श्राविका चक्रे,
प्रत्युतैषा महर्षिणा । नृपदत्तं नरं मुक्त्वैकं ब्रह्मव्रतमग्रहीत् ॥ १३९ ॥ शान्तान् दान्तान् मुनीन् दृष्ट्वा, सिंह-सर्पारघट्टिकाः । शान्तिं
ययुस्ततोऽभ्येयुर्वर्षान्ते मुनयस्त्रयः ॥ १४० ॥ तेषां पूर्णप्रतिज्ञानां, किञ्चिदुत्थाय सूरिराट् । क्रमात् स्वागतमित्यारयदहो ! दुष्करकारकाः
॥ १४१ ॥ वर्षान्ते स्थूलभद्रर्षिरागादुत्थाय सूरयः । प्रोचुर्दुष्करदुष्करकारक ! स्वागतं तव ? ॥ १४२ ॥ सासूयाश्चिन्तयामासुस्ते तद्
वीक्ष्यर्षयस्त्रयः । मन्त्रिपुत्रोऽयमित्यत्र, लभतेऽत्यर्थमादरम् ॥ १४३ ॥ वर्षेऽन्यस्मिन् प्रतिज्ञास्यामहे दुष्करमप्यदः । हृद्यवस्थाप्य तस्थुस्ते,
हस्तिनोऽन्तर्मदा इव ॥१४४॥ मुनिर्वर्षाऽऽगमे सिंहगुहावास्यवदद् गुरुम् । कोशाऽऽवासे चतुर्मासीं, स्थास्यामि षड्रसाशनः ॥१४५॥
ज्ञात्वा ज्ञानाद् गुरुस्तस्य, स्थूलभद्रासहिष्णुताम् । न्यवारयदनुष्ठानेऽशक्येऽस्मिन् माऽऽग्रहं कृथाः ॥ १४६ ॥ प्रत्युत प्राप्स्यसि भ्रंशं,

तपसोऽप्यावदत् मुनिः। नेदं दुष्करमित्युक्त्वा, ययौ कोशानिकेतनम् ॥ १४७ ॥ वसतिर्मार्गिता दत्ता, तयाऽस्मै सा व्यचिन्तयत्।
स्थूलभद्रस्पर्द्धयैव, ध्रुवमत्रायमाययौ ॥ १४८ ॥ भोजनानन्तरं धर्मश्रवणार्थमथाययौ। वेश्याऽसंस्कृतगात्रैव, वीक्ष्य चुक्षोभ मङ्क्षु सः
॥ १४९ ॥ कामार्थेऽभ्यर्थयाञ्चक्रे, स मुनिर्विस्मृतव्रतः। पतत्वेप भवे मेति, बोधायेदं तमाह सा ॥ १५० ॥ द्रव्यं(व्य)लक्षं मदर्थी
सन्, समानय मुने! ननु। मुह्यन्ति जातु रूपे न, जातरूपे तु मादृशाः ॥ १५१ ॥ भद्रे! ममास्ति नो वित्तं, किङ्करः किं करोत्वयम्।
तदर्थी(र्थे) याहि नेपालदेशे वेश्याऽऽह तर्हि भोः! ॥ १५२ ॥ राजाऽर्पयत्यपूर्वस्मै, साधवे रत्नकम्बलम्। वर्षाकालेऽपि सोऽचालीत्, पङ्कि-
लायां स्खलन् भुवि ॥ १५३ ॥ आढ्यराजार्पितं तत्र, वंशस्यान्तर्निधाय तम्। चौरपल्लयामथागात् स, लक्षं यातीत्यवक् शुकः। ॥ १५४ ॥
वेत्ति स्तेनपतिस्तस्य, रुतं द्रुतमधावत। वीक्ष्योपैक्षत तं भिक्षुं, लक्षं यातीत्यवक् तु सः (पुनः) ॥ १५५ ॥ निरूपितो मुनिः किञ्चिद्पश्य-
न्निर्मलिम्लुचैः। पृष्टः स्पष्टं वदामुष्य, प्रत्ययार्थे तवाभयम् ॥ १५६ ॥ मुनिर्बभाषे वंशस्यान्तरास्ते रत्नकम्बलः। नये वेश्यार्थमित्युक्ते,
मुक्तश्चौरैर्दयावशात् ॥ १५७ ॥ हृष्टेन मुनिनाऽदायि, कोशायै रत्नकम्बलः। तया निःस्पृहयाऽक्षेपि, गृहश्रो(स्रो)तोनिपद्वरे ॥ १५८ ॥ मुनिः
स्माह महाभागे!, तवेयं काऽविचारिता(रणा?)। ईदृक्कष्टाऽऽहृतं रत्नं, कथं निर्गमितं मुधा? ॥ १५९ ॥ वेश्योचे शोचसि मुधाऽमुं किं
कर्दममर्दितम्?। ममं विषयपङ्के त्वं, न चिन्त्यात्नर्निर्मलम् ॥१६०॥ उपयुक्तो मुनिः सम्यग्, बभाषे साधु(ध्वि) साध्विति। भवावटे पतन्
मुग्धो, रक्षितो रज्जुवत् त्वया ॥ १६१ ॥ वेश्याऽऽह यत् मया यूयं, बोधायाऽऽशातिता भृशम्। तत् क्षन्तव्यं ममाऽऽगस्तु, क्षमाभाहि-
महर्षयः ॥ १६२ ॥ भद्रे! गुरुरसीत्युक्त्वा, गत्वा गुर्वन्तिके मुनिः। स्वमागः क्षमयामास, मिथ्या मे दुष्कृतं वदन् ॥ १६३ ॥ गुरुणो-
कोऽन्तरं दृष्टं, स्थूलभद्राऽऽत्मनोर्मुने!?। तेनाश्राद्धप्यधिसेहे न श्राद्धपि त्वया पुनः ॥ १६४ ॥ ततोऽसौ सङ्घधारायां(मं), व्रतं मुनि-

रपालयत् । सम्भूत(ति)विजयाऽऽचार्या, ययुः स्वर्गं समाधिना ॥ १६५ ॥ कोशावेश्याऽन्यदा राज्ञा, तुष्टेन रथिनेऽर्पिता । स्थूलभद्रगुणग्राह्या, सा तथोपाचरन्न तम् ॥ १६६ ॥ न तत्समः पुमानन्यः, सामान्यगुणलक्षणः (न्योऽनन्यसामान्यलक्षणः) । सदैवं स्थूलभद्रस्य, वर्णिन्यवर्णयद् गुणान् ॥ १६७॥ स्वस्य दर्शयितुं तस्या, विज्ञानं रथिकोऽन्यदा । गत्वाऽशोकवनिकायां, निषण्णो मश्चि(श्च)काऽऽसने ॥ १६८ ॥ आम्रलुम्बीं शरेणास्य, पुङ्खमन्येन पत्रिणा । तं तस्यान्येन विव्याध, हस्तप्राप्यामिति व्यधात् ॥ १६९ ॥ वृन्तं छित्त्वा क्षुरप्रेण, तत्रस्थोऽस्याश्च तां ददौ । वेश्याऽऽह पश्य विज्ञानं, ममाप्यथ धनुर्धर ! ॥ १७० ॥ विन्यस्य सूचीं सिद्धार्थराशौ पुष्पैः पिधाय ताम् । ननर्त्त नर्त्तकी सूच्याऽविद्धा राशिश्च नाचलत् ॥१७१॥ कलयाऽतुलया शिष्टे !, तुष्टोऽस्मीत्यवदद् रथी । वरं याचस्व वेश्योचे, किमभ्यासस्य दुष्करम् ? ॥१७२॥ आम्रलुम्बीच्छेदं न तत्। नर्त्तनं शिक्षितं न तत् । दुष्करं स्थूलभद्रस्याऽऽचरणं यदशिक्षितम् ॥ १७३ ॥ मयाऽमा द्वादशाब्दानि, भोगान् योऽभुङ्क्त तन्मनाः । तत्रस्थोऽस्थात् चतुर्मासीं, त्यक्तभोगोऽक्षतव्रतः ॥ १७४ ॥ वर्षाकालोऽङ्गनासङ्गश्चित्रौकः षड्रसाशनम् । रहश्च व्रतलोपाय, हेतुरेकैक एव सः ॥ १७५ ॥ तत्सामीप्येऽपि दुर्भेद्यो, वज्रमूर्त्तिरिवाभवत् । रथिंस्तेन समं तेन, तुलां कोऽन्योऽधिरोहति ? ॥ १७६ ॥ रथिकोऽथ शुभाऽऽवेशयशो वेश्यामुवाच कः ? । स्थूलभद्रोऽथ साऽप्याख्यत्, शकटालसुतश्च सः ॥ १७७ ॥ रथ्याख्यत् स्थूलभद्रस्य, किङ्करोऽहमतः परम् । बद्धा(द्धोऽ)ञ्जलिरयं तस्मै, शरणं तत्पथोऽस्तु मे ॥ १७८॥ ज्ञात्वा धर्मार्थिनं वेश्या, विदधे धर्मदेशनाम् । प्रबुद्धो रथिकोऽप्याख्यद्, भद्रे ! साधु प्रबोधितः ॥ १७९ ॥ वेश्याऽऽह स्वोदितं सम्यक्, पालय क्षेममस्तु ते । रथ्यप्यन्ते गुरोर्गत्वा, प्राव्राजीद् वृजिनच्छिदे ॥ १८० ॥ खड्गधारं व्रतं स्थूलभद्रर्षिरप्यपालयत् । इतस्तदाऽभूद् दुष्कालः, करालो द्वादशाब्दि(ब्द)कः ॥ १८१ ॥ साध्वादयोऽम्बुधेस्तीरे, तमतिक्रम्य कृच्छ्रतः । एकत्र मिमिलुः काले, पाटलीपुत्रपत्तने ॥ १८२ ॥ विस्मृतो

गुणनाभावात्, सिद्धान्तो भक्तचिन्तया। एकत्रान्यान्यसाधुभ्यः, कृता उद्देशकादयः ॥ १८३ ॥ मेलितैकादशाङ्ग्येव, दृष्टिवादस्तु विस्मृतः। नेपालदेशे श्रीभद्रबाहवः सन्ति तद्विदः ॥ १८४ ॥ साधुसङ्घाटकस्तेषां, प्रैषि सङ्घेन धीमता। दृष्टिवादाध्यापनार्थाऽऽकारणप्रवणोक्तिभृत् ॥ १८५ ॥ गत्वोक्तं तेन तत् तेषां, भद्रबाहुरयो(था)ऽवदत्। महाप्राणं प्रविष्टोऽस्मि, ध्यानं द्वादशवार्षिकम् ॥ १८६ ॥ दुष्कालात् न पुनः पूर्वं, तदायास्यामि नाधुना। तदुक्तमुक्तं साधुभ्यां, सङ्घायाभ्येत्य सत्वरम् ॥ १८७ ॥ पूर्णे तस्मिन् महाप्राणे, पूर्वाणि गुणयेत् किल। आदितोऽन्तं यावदन्त्यादादि चान्तर्मुहूर्त्ततः ॥ १८८ ॥ प्राहिणोदनुशिक्ष्यो(ष्यो)पसूरि सङ्घोऽपरौ मुनी। तेषां वाच्यं च को दण्डः, सङ्घाऽऽज्ञालोपकारिणाम्? ॥१८९॥ तदुक्तमुक्तं तत् ताभ्यां, तत् श्रुत्वा सूरिरब्रवीत्। सङ्घाऽऽज्ञालोपकारी हि, श्रीसङ्घात् क्रियते बहिः ॥ १९० ॥ ताभ्यामुक्तं तर्हि दण्डः, प्राप्तोऽस्ति भवतामयम्। सूरिराह बहिः कुर्यात्, मा मां सङ्घः प्रसीदतु ॥ १९१ ॥ ममान्ते प्राहिणोत् किन्तु, शिष्यान् मेधाविनो नु च। मम तस्यार्थसिद्ध्यर्थं, सप्त दास्यामि वाचनाः ॥ १९२ ॥ तिस्रस्त्रिकालवेलासु, भिक्षापर्यन्त एकका। तिस्रः सन्ध्याऽऽवश्यकान्ते, सप्तैवं सन्तु वाचनाः ॥ १९३ ॥ सङ्घेन स्थूलभद्रादिसाधुपञ्चशती ततः। प्रेषिता पूर्वविद्यार्थलाभार्थं सूरिसन्निधौ ॥ १९४ ॥ वर्षाष्टकेनाष्टपूर्वाण्यध्यैष्ट स्पष्टधीः क्रमात्। स्थूलभद्रोऽपरे स्वल्पवाचनादानतो ययुः ॥ १९५ ॥ स्थूलभद्रं भद्रबाहुः, पप्रच्छान्येद्युरुद्यमिन्!। किं खिद्यसे? स ऊचे न, किन्तु मे स्वल्पवाचना ॥१९६॥ सूरिः प्राह पूर्णप्रायं, ध्यानं मेऽथाखिलं दिनम्। दास्यामि वाचनास्तुभ्यं, विद्यार्थिन्! मा स्म खिद्यथाः ॥१९७॥ पप्रच्छाथापि भगवन्!, कियत् शेषमिदं श्रुतम्?। बिन्द्वब्धि-मेरु-सिद्धार्थोपमामाह स सूरिराट् ॥ १९८ ॥ ध्यानान्ते दश पूर्वाणि, द्विवस्तूनानि सोऽपठत्। ततश्च सूरयोऽभ्येयुः पाटलीपुत्रपत्तनम् ॥ १९९ ॥ लघुदेवकुले स्थूलभद्रः स्थातुं श्रुतं ययौ। स्वसारस्तस्य यक्षाद्याः, सप्त सन्त्यात्तव्रताः ॥ २०० ॥ पप्रच्छुस्ताः

च भगवन् !, स्थूलभद्रोऽग्रजो हि नः ? । सूरिश्चाऽऽह देवकुले, रहोऽस्ति गुणयन् श्रुतम् ॥ २०१ ॥ ययुस्तास्तं नमस्कर्तुं, ता वीक्ष्या-चिन्तयत् मुनिः । स्वविद्या दर्शयामीति, चक्रे सिंहत्वमात्मनः ॥ २०२ ॥ तं वीक्ष्य ता भयभ्रान्ता, निवृत्त्याऽऽख्यन् गुरोः प्रभो ! । अग्रसे हरिणाऽऽर्यस्तु, तमान्यो नास्ति तं विना ॥ २०३ ॥ ज्ञात्वोपयोगादाचार्यो, विकारं तस्य चोचिरे । यात्वाऽऽर्यास्तत्र वन्दध्वं, भ्रातरं न पुनर्हरिम् ॥ २०४ ॥ आर्यां ययुः पुनस्तत्र, स्थूलभद्रं ववन्दिरे । प्रमोदमेदुरहृदोऽक्षताङ्गं वीक्ष्य चाभयन् ॥ २०५ ॥ स्वकथामथ यक्षाऽऽख्यत्, श्रीयकोऽशिश्रयद् व्रतम् । सहास्माभिर्बुभुक्षावाञेकभक्तेऽपि हि क्षमः ॥ २०६ ॥ अन्यदा पौरुषीप्रत्याख्यानं पर्युषणा-दिने । मयाऽकारि गु(तु) पूर्णेऽस्मिन्, पूर्वार्द्धं श्रीयकः पुनः ॥२०७॥ अपार्द्धपौरुषी चैत्यपरिपाट्या सुखेन च । यास्यतीति मयोक्तोऽसौ, दाक्षिण्यात् तामपि व्यधात् ॥ २०८ ॥ तस्यामपि च पूर्णायां, मयोक्तमतिदुर्लभम् । पर्वेदं कुर्वभक्तार्थं, निद्रया यास्यति क्षपा ॥२०९॥ चक्रे तेनापि दाक्षिण्यादर्द्धरात्रे क्षुधार्दितः । स्मरन् देव-गुरून् मृत्वा, श्रीयकस्त्रिदिवं ययौ ॥ २१० ॥ ऋषिघातपातकैकहेतुरस्मीति यामिनी । यक्षा श्रमणसङ्घामे, प्रायश्चित्तार्थमुत्थिता ॥ २११ ॥ शुद्धभाववशाद् भद्रे !, प्रायश्चित्तं न ते किल । सङ्घः स्माहास्म्यवोचं न निर्णयोऽर्हद्वचो विना ॥ २१२ ॥ ततः समग्रसङ्घोऽपि, कायोत्सर्गेण तस्थिवान् । एत्य शासनदेव्यूचे, किं कार्यं ? सोऽप्यदोऽनदत् ॥ २१३ ॥ इमां सीमन्धरस्वामिसन्निधौ नय सयतीम् । साऽऽह सहायिकं कायोत्सर्गपुण्यं हि दीयताम् ॥ २१४ ॥ सङ्घस्तथाऽस्था-दुत्पाट्यानयत् मां शासनामरी । महाविदेहे श्रीसीमन्धरस्वामी मया नु(न)तः ॥ २१५ ॥ प्रायश्चित्तं न ते साध्वीत्युक्त्वाऽर्हन्नुपदाकृते । प्रैषीत् सङ्घाय चत्वार्यध्ययनानि मुखेन मे ॥ २१६ ॥ रतिकल्पं च विविक्तचर्या विमुक्(क्ति)भावने । दशवैकालिकाऽऽचारा-योर्द्वे द्वे च चूलिके ॥२१७॥ सकृत् मयाऽर्हदुक्तानि, तान्यवधारितानि च । निःसन्देहा ततोत्पाट्य, मुक्ताऽत्राऽऽनीय(स्म्यपि) सोदरा(र!)

श्रीस्थूल-भद्रमहर्षि-चरित्रम् ।

॥ २१८ ॥ ताः स्थूलभद्रानुज्ञाता, ययुरार्या निजाश्रयम् । मध्याह्ने सोऽपि सूरीन्द्रं, वाचनार्थमुपस्थितः ॥ २१९ ॥ न योग्योऽसीति
सूरीन्द्रोऽवदत् नो वाचनां ददौ । स्वाऽऽगो महर्षिरस्मार्षीत्तत्, पश्यति स्म न ॥२२०॥ आ ! ज्ञातं सिंहरूपाऽऽगो, निपत्य गुरुपादयोः ।
मुनिः स्माह पुनर्नैवं, करिष्ये क्षम्यतां सकृत् ॥२२१॥ करिष्यसे न सोऽप्याख्यत्, कृतमेव कृतं नु(तु) यत् । सङ्घाग्राऽऽख्यत् मुनिः सोऽपि,
भद्रबाहुमदोऽवदत् ॥ २२२ ॥ क्षान्त्वैकं भगवन्नागोऽमुष्मै दद्व वाचनाः । अप्येकं पतनं पक्वं, दन्तानां क्षमते न किम् ? ॥ २२३ ॥
उपयोगं ददौ सूरिर्मत्तः पूर्वाण्यमूनि किम् । गमिष्यन्ति व्यवच्छेदं ?, न यास्यन्ति ? विवेद च ॥ २२४ ॥ वाचनाऽभिग्रहं दत्त्वाऽन्येषां
पूर्वाण्यवाचयत् । स्थूलभद्रं भद्रबाहुः, प्रामाण्यं(प्रमाणे) ह्याग्रहः सताम् ॥ २२५ ॥ तं सर्वपूर्ववेत्तारं, न्यस्याऽऽचार्यपदे वि(प्र)भुः ।
स्वर्ययौ सप्ततिशताब्दे गते वीरनिर्वृतेः ॥ २२६ ॥ तत्पट्टमण्डनं स्थूलभद्रोऽपि क्षितिमण्डलम् । पुनानश्चरणन्यासैः, श्रावस्तीमागतः
पुरीम् ॥ २२७ ॥ प्रभुं विवन्दिपुस्तत्रोद्यानस्थमखिलो जनः । हर्षसंवर्मितोऽभ्यागात्, चक्रेऽसौ धर्मदेशनाम् ॥ २२८ ॥ देशनान्ते प्रभु-
र्दध्यौ, सर्वोऽप्यत्राऽऽगतो जनः । पुनर्न धनदेवो मे, हृदयाह्लादकः सखा ॥ २२९ ॥ तत् मन्ये सोऽन्यविषयं, गतो ग्लानोऽथवा ज्वरी ।
तद्गे(द्गृ)हेऽहं स्वयं यामि, नाऽऽलस्यं हि युज्यते ॥ २३० ॥ प्रभुः प्रतस्थे पुण्यात्मै(त्मो)र्व(व)न्द्यमानः पदे पदे । पुरान्तर्वन्द्यमानश्च,
चैत्यान्यागात् सुहृद्गृहे(हम्) ॥ २३१ ॥ प्रभौ दृष्टिपथाऽऽयाते, जङ्गमस्वर्गशाखिनि । तद्गृहिण्या धनेश्वर्योत्थाय भक्त्या नमस्कृतः
॥ २३२ ॥ तयाऽर्पिताऽऽसनाऽऽसीनः, स्वाम्यपृच्छद् धनेश्वरीम् । सुरेण धर्मनिर्वाहो, भावसारे ! भवेत् तव ॥ २३३ ॥ धनदेवो-
ऽधुना क्वागात् ?, साऽऽह्द् ते भगवन् ! सुहृत् । व्ययते स्म धनं सर्वं, निःस्वोऽभूत् तृणवो लघुः ॥ २३४ ॥ निधीनपि च न प्राप,
पूर्वजैः सञ्चितान् बहून् । गेहान्तर्व्यवसायार्थं, ययौ देशान्तरं ततः ॥ २३५ ॥ जानन् निधानं स्तम्भाधःस्थं ज्ञानात् श्रुतकेवली ।

हस्तसंज्ञामिषात् तस्या, अदर्शयदिदं वदन् ॥ २३६ ॥ भवत्स्वरूपं पश्यामि !, गृहं भर्तुर्मनवेदशम् ! । व्यवसायस्तु तादृशोऽनेदृशं तत्र तादृशम् ॥ २३७ ॥ मुहुर्मुहुर्धनैश्वर्यो, श्लाघायायागमत् प्रभुः । साश्रयं धनदेवोऽपि, लाभहीनोऽभ्यरेश्च तैः ॥ २३८ ॥ धनेश्वर्या-न्यदत्राऽऽगात्, स्थूलभद्रः सुहृत् तव । पप्रच्छ धनदेवः किं, पृष्टं ? किमथवोदितम् ? ॥२३९॥ साऽप्यूचे स्तम्भमुद्दिश्येदमुक्तं हस्त-संज्ञया । धर्मोपदेशव्याजेनात्रेदृशं तत्र तादृशम् ॥ २४० ॥ धनदेवः सुधीर्दध्यौ, नहि निर्हेतुकं वचः । ज्ञानिनामिति सञ्चिन्त्य, स्तम्भमूल-मचीखनत् ॥ २४१ ॥ तत्राऽऽविरासीत् तत्पुण्यमिवामितधनो निधिः । धनदेवो धनेनाभूत् तेनोच्चैर्धनदोपमः ॥ २४२ ॥ स्थूलभद्र-पयस्यस्योपकारं तमविस्मरन् । वन्दितुं धनदेवोऽगात्, पाटलीपुत्रपत्तनम् ॥ २४३ ॥ नत्वाऽत्र वसतिस्थं तं, धनदेवोऽभ्यनीद् विभो ! । दारिद्र्यमुद्रांसमुद्रं, तीर्णोऽस्मि त्वत्प्रसादतः ॥ २४४ ॥ तव भृत्योऽस्मि किं कुर्वे ?, स्थूलभद्रोऽभ्यधादथ । भूयास्त्वमार्हतोऽस्त्वेवमित्युक्त्वाऽ-गाद् गृहं धनी ॥१४५॥ बालकालादपि यक्षाऽऽर्यया मात्रेव पालितौ । दीक्षितौ स्थूलभद्रेण, महागिरि-सुहस्तिनौ ॥१४६॥ साङ्गानि दश पूर्वाणि, गच्छाम्नायमधीयतुः । शान्तौ तपस्विनावार्यौ, महागिरि-सुहस्तिनौ ॥ १४७ ॥ तौ न्यस्य चाऽऽचार्यपदप्रमुखे, श्रीस्थू-लभद्रः श्रुतपारदृश्वा । आयुःक्षयात् प्राप्य समाधिना मृतिं, प्राप्त् सुरस्त्रीमुखपद्मभृङ्गताम् ॥ १४८ ॥ इति श्रीस्थूलभद्रमहामुनिकथानकम् ॥

श्रीस्थूलभद्रमहर्षिचरितम् ।

अथ श्रीभद्रबाहुचतुःशिष्यान् महासाहसिकान् नमस्कुर्वे—

**चउरो सीसे सिरिभद्दबाहुणो चउहिं रयणिजामेहिं । रायगिहे सीएणं, कयनियकज्जे नमंसामि ॥ १८२ ॥**

व्याख्या—गाथार्थो दृष्टान्तादेव स्पष्टः ॥ १८२ ॥ स चायम्—

भद्रबाहुरथान्येद्युरगाद् राजगृहे पुरे । चत्वारो वणिजस्तत्र, मिथः सवयसोऽभवन् ॥ १ ॥ जगन्वांसो गुरुं, ते चत्वारोऽपि

श्रीभद्रबाहुशिष्यचतुष्कवर्णनम् ।

प्रबुद्धा जगृहुर्दीक्षां, विनयाध्ययनादिभिः । विविशुर्मानसे हंसा इव तैस्तैर्गुणै-
हि श्रिया । भद्रबाहुप्रभूपान्ते, शुश्रुवुर्धर्ममार्हतम् ॥ २ ॥ ॥ ३ ॥ तदानीमब्जिनीकोशे,
गुरोः ॥ ३ ॥ एकाकिप्रतिमायोगाद्, गुर्वादेशवशंवदाः । ते विहृत्य विह्वलाऽऽगुः, पुना राजगृहं पुरम् ॥ ४ ॥ शीतस्यैकात-
हिमानीमभिवत् क्षिपन् । मर्तुकामिकृताध्वन्यो, निष्कृपं कपिकम्पदः ॥ ५ ॥ दुःस्थावस्थाभेदन्तानां, वीणावादनवाचकः । शीतस्यैकात-
पत्रत्वं, यथानोऽभूद्गुर्हिमः ॥ ६ ॥ [ युग्मम् ] अहो यामे तृतीये ते, भिक्षां कृत्वा महर्षयः । वैभारगिरये प्रत्यावृत्ता व्रतपवित्रिताः ॥७॥
एकस्याद्रिगुहाद्वारेऽन्यस्योद्याने तदन्तिके । तृतीयस्तु तुर्यस्य, पूर्द्वारेऽस्तमगाद् रविः ॥८॥ आहारो वा विहारो वा, कार्यो यामे तृतीयके ।
यामे चतुर्थे स्वाध्यायं, कायोत्सर्गेऽस्थुरित्यमी ॥ ९ ॥ शीतं स्फीतं गुहाद्वारे, स यामे प्रथमे मुनिः । ततो मन्दं पुरोद्याने, यामेऽन्यस्मिन्
स संयमी ॥ १० ॥ ततोऽल्पं तद्वनोपान्ते, सोऽपि यामे तृतीयके । पूर्द्वारेऽल्पल्पकं यामे, तुर्येऽसौ स्वर्ययुः समे ॥ ११ ॥ इति
श्रीभद्रबाहुचतुःशिष्यप्रबन्धः ॥

अथ क्रमप्राप्तान् श्रीआर्यमहागिरि-आर्यसुहस्तिसूरि-श्रीअवन्तीसुकुमालमहर्षीन् गाथाचतुष्टयेन स्तुवन्नाह—

जिणकप्पपरीकम्मं, जो कासी जस्स संथवमकासी । सिट्ठिघरम्मि सुहत्थी, तं अज्जमहागिरिं वंदे ॥ १८३ ॥
कोसंबीए जेणं, दमगो पव्वाविओ तओ जाओ । उज्जेणीए राया, संपइ सो नंदउ सुहत्थी ॥ १८४ ॥
सोऊण गुणिज्जंतं, सुहत्थिणा नलिण(णी)गुम्ममज्झयणं । तक्कालं पव्वइओ, चइत्तु भज्जाओ बत्तीसं ॥ १८५ ॥
तिहिं जामेहिं सिवाए अवचसहियाए विहियउवसग्गो । साहियकज्जो तियसेहिं पूइओऽवंतिसुकुमालो ॥१८६॥

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे तृतीयोऽंशः ।

श्रीभद्रबाहुशिष्यचतुष्टयवर्णनम् ।

॥१८५॥

आर्यमहागिरि-आर्यसुहस्तिसूरि-अवन्ती-सुकुमाल-महर्षिप्रबन्धता।

व्याख्या—जिनकल्पपरिकर्मणां "यः" आर्यमहागिरिरकार्षीत् [redacted] महागिरेः श्रेष्ठिगृहे 'संस्तवं' सम्यक् स्तवनां सुहस्ती अकार्षीत् इति प्रथमगाथार्थः ॥ १८३ ॥ शेषं सुगमम् ॥ १८४-१८५-१८६ ॥ भावार्थस्तु पञ्चानामपि कथानकगम्यः । तच्चेदम्—

चन्द्रगुप्ताभिधो राजा, पाटलीपुर(त्र)पत्तने । नन्दमुच्छिद्य कुरुते, राज्यं चाणक्यचिन्तितम् ॥ १ ॥ चाणक्यश्चन्द्रगुप्तस्य, परापायासमृतये । दिने दिने विषाक्तान्नं, साधयत्यधिकाधिकम् ॥ २ ॥ गुर्विणी दुर्द्धरानाम्नी, रागोत्कटतयाऽन्यदा । राज्ञी राज्ञा सहाऽऽशोस्य, भुञ्जाना भक्ष्यधारत ॥ ३ ॥ हाऽज्ञानात् किं कृतं राजन्!?, यावद् मूर्वे चाणिप्रसूः । तावत् नृपप्रिया प्राप, पञ्चत्वं विषयोगतः ॥ ४ ॥ गर्भः प्रलीयतां माऽस्या, निश्चार्येत्युदरं द्रुतम् । समाकृष्य चाणि(ण)क्यो, मुक्तामुक्तिपुटादिव ॥५॥ विषबिन्दुः शिशोर्मूर्ध्नि, सङ्क्रान्त इति सान्वयम् । बिन्दुसार इति नाम, गुरुभिस्तस्य निर्ममे ॥ ६ ॥ समाधिमृत्युना चन्द्रगुप्तो दिवमगात् क्रमात् । बिन्दुसारं न्यपाद् राज्ये, चाणि(ण)क्यो यौवनोन्मुखम् ॥७॥ अशोकश्री(ः)सुतो जज्ञे, बिन्दुसारस्य भूभुजः । क्रमात् तस्मिन् विपेदानेऽशोकश्रीरभवत् नृपः ॥८॥ कुणालो नाम तत्सूनुरनू(न्यू)नद्युतिमानभूत् । कुमारभुक्तौ तातोऽदात्, तस्मायुज्जयिनीं पुरीम् ॥९॥ तैर्बालपालकै रक्ष्यमाणो जीवितवद् भृशम् । कलश्चतुर्षु कुणालोऽभूद्, वर्धमानोऽष्टवार्षिकः ॥ १० ॥ विद्याग्रहणयोग्यं तं, ज्ञात्वा लेखेऽलिखत् स्वयम् । पार्थिवः प्राकृतोक्त्येव, यत् कुणालो अधीयताम् ॥११॥ सपत्नीजननी तस्याऽऽसन्नाऽऽसीनाऽस्ति भूभुजः । तं लेखं वीक्ष्य सा दध्यौ, राज्यं मत्सुतस्येऽस्त्विति ॥ १२ ॥ निष्ठीवनाऽऽर्द्रीकृतया, साऽऽत्मा(त्म)ग्रनखशलाकया । बिन्दुं चकारास्य मूर्ध्नि, पुनश्चान्धीयतामिति ॥ १३ ॥ कृत्वा मुद्राऽङ्कितं राजा, तमवाचितमेव हि । लेखं प्रैषीदुज्जयिन्यां, भाव्यं भवति नान्यथा ॥१४॥ कुणालः पितृनामाङ्कं, तं लेखं वीक्ष्य हर्षभाक् । उत्थायाऽऽशय पाणिभ्यां, ववन्दे मूर्ध्नि च न्यधात् ॥१५॥ लेखकाद् वाचयामास, विषण्णं वीक्ष्य लेखकम् । उद्वस(श्रु)नयनं तात्कालिकरूपं

ताबा-यनुमक्षमम् ॥ १६ ॥ कुणालः स्वयमादायानुमानेनाप्यवाचयत् । लेखमन्वीयतामिति(-तु इति), वीक्ष्य वर्णानचिन्तयत् ॥ १७ ॥ ताबा-
ऽऽज्ञालोपकृत् कश्चित्, नास्मिन् मौर्यान्वयेऽभवत् । मय्याज्ञालोपके वमुः, कोऽन्यस्तां पालयिष्यति ? ॥ १८ ॥ कुणालस्तु विचिन्त्यैवं,
तप्तत्रपुशलाकया । अनक्ति स्म दृशौ धीरो, हाहाकारपरे जने ॥१९॥ तत् स्वरूपमशोकश्रीः, श्रुत्वाऽऽत्मानं निनिन्द च । हा ! कूटलेखकं
धिङ् मामज्ञानाऽऽरामसारणिम् ॥ २० ॥ न यौवराज्य-मण्डलिकत्वार्हो मे सुतोऽधुना । तद् दास्ये यौवने राज्यमित्याशा गुर्व्यभूत् मम
॥ २१ ॥ हा ! दुर्दैवेन भग्नाऽऽशा, हताशः किं करोम्यथ ? । सपत्नीसूनवे भूपो, ददावुज्जयिनीं पुरीम् ॥२२॥ एकं महर्द्धिकं ग्रामं, कुणा-
लस्य ददौ पुनः । पत्न्यां शरच्छ्रियां तस्यान्यदोत्पेदेऽद्भुतः सुतः ॥ २३ ॥ वर्द्धापिकाभ्यो दासीभ्यः, सुतोत्पत्तिं निशम्य सा । ददौ दानं
तदा पारितोपिकं तोषपोषजम् ॥ २४ ॥ सपत्नीमातुराशास्तु, मुधा ध्यात्वेति चेतसि । कुणालः पाटलीपुत्रमाययौ राज्यलिप्सया ॥२५॥
पुरेऽसौ यत्र यत्रान्धो, जगौ गीतानि सुस्वरम् । तत्र तत्राऽऽययुः पौरा, गीताऽऽकृष्टाः कुरङ्गवत् ॥२६॥ नृपः श्रुत्वा जनोक्त्या तं, गान्ध-
र्वेणातितुम्बुरुम् । आहूय जवनीगुप्तं, गो(गा)पयामास सस्पृहम् ॥ २७ ॥ षड्जादिभिः स्वरैर्मन्द्र-मध्य-तारैर्यथास्थितम् । कुणालः पद्य-
बन्धेन, रागं पूर्ण(-र्ण)मिदं जगौ ॥ २८ ॥ प्रपौत्रश्चन्द्रगुप्तस्य, विन्दुसारस्य नप्तृकः । एकोऽशोकश्रियः सूनुर्याचतेऽन्धोऽपि काकिणीम्
॥ २९ ॥ पद्यप्रबन्धं तं श्रुत्वा, नृपः पप्रच्छ गायनम् । कस्त्वं ? सोऽप्याह सूनुस्ते, योऽन्धो लेखादभूत् स्वयम् ॥ ३० ॥ ततोऽपसार्य
जवेन, जवनीमवनीपतिः । उपलक्ष्याऽऽत्मनः सूनुर्मुदस्र(श्रु)ः परिषस्वजे ॥ ३१ ॥ स्वाङ्कमारोप्य भूपालः, स्माह तुष्टो ददाम्यहम् । किं ?
तुभ्यमभ्यधादन्धो, देहि मे देव ! काकिणीम् ॥३२॥ किं स्वल्पं(ल्प) याचितमिति, राज्ञि ब्रुवति मन्त्रिणः । प्रोचू राजन् ! कुमाराणां, काकिणी
राज्यमुच्यते ॥ ३३ ॥ अशोकश्रीरवग् वत्स !, राज्येनान्धस्य किं तव ? । अन्यसादेव तद् दत्तमपि स्याद् देवदूषितम् ॥ ३४ ॥ अन्योऽ-

आर्यमहागिरि-आर्यसुहस्तिसूरि-अवन्तीसुकुमाल-महर्षिद्वयवक्तव्यता।

ह्यधात् प्रभो ! दिष्ट्या, वर्धसे(स्व) पौत्रजन्मना। राज्येऽभिषिच्यतां सैव, याच्ञा मोघा न साधुषु ॥३५॥ नृपः पप्रच्छ सूनुस्ते, कदोत्पेदे च (ऽथ) ? सोऽवदत् । सम्प्रत्येव ततो राजाऽर्भं तमानाययद् द्रुतम् ॥३६॥ सत्यवाक् स्वन्यपमपि, तं दशाहादनन्तरम् । राज्ये न्यवीविशद् राजाऽऽहूय नाम्नेति सम्प्रति[ः] ॥३७॥ वयसा विक्रमेणापि, वर्द्धमानोऽथ सम्प्रतिः । क्रमेण साधयामास, भरतार्द्धं स दक्षिणम् ॥३८॥ इतश्च स्थूलभद्रस्य, जिनशासनभारकरौ । शिष्यमुख्यौ तदाऽभूतां, महागिरि-सुहस्तिनौ ॥ ३९ ॥ वाचनाभिर्बहून् शिष्यान्, निष्पाद्याऽऽर्यमहागिरिः । जिनकल्पस्य व्युच्छेदादपि चक्रे मनोरथम् ॥ ४० ॥ सुहस्तिनेऽन्यदा न्यस्य, गच्छभारं महागिरिः । जिनकल्पं गच्छनिश्राऽऽश्रयाऽऽश्रितमशिश्रियत् ॥ ४१ ॥ देशनावारि वर्षन्तौ, भव्योर्व्यां वारिदाविव । ईयतुः पाटलीपुत्रं, महागिरि-सुहस्तिनौ ॥ ४२ ॥ वसुभूत्याह्वयः श्रेष्ठी, प्रबोध्याऽऽर्यसुहस्तिना । जीवाजीवादितत्त्वज्ञो, विहितः परमाऽऽर्हतः ॥ ४३ ॥ स्वजन्यून् बोधयत्यर्हद्धर्मेऽर्हद्धर्मविद् धनी । नाबुध्यत पर कश्चिद्, धर्माचार्यं विनाऽल्पधीः ॥ ४४ ॥ आख्यत् सुहस्तिने श्रेष्ठी, ततस्तद्बोधहेतवे । नित्यमेत्य गृहे तस्याऽऽर्यश्चक्रे धर्मदेशनाम् ॥ ४५ ॥ तत्राऽऽगादथ भिक्षार्थं, जिनकल्पी महागिरिः । पीठादुत्थाय सस्नेहं, ववन्दे तं सुहस्त्यपि ॥ ४६ ॥ अनात्तभिक्षो भगवान्, निर्ययौ गेहिगेहतः । श्रेष्ठ्यपृच्छद् विभो ! कोऽयं यो वन्द्यो भवतामपि ? ॥ ४७ ॥ सुहस्त्याख्यदसौ श्रेष्ठिश्रेष्ठ ! ज्येष्ठो गुरुर्मम । जगद्वन्द्यो महाविद्योऽनवद्याजीविकोद्यमी ॥ ४८ ॥ त्यागार्हभिक्षाभोज्येषोऽन्यथा नित्यमुपोषितः । इति ख्युत्वा(त्वा)प्रबोध्यैतान्, सुहस्ती वसतिं ययौ ॥ ४९ ॥ स्वजनान् श्रेष्ठ्युवाचैवं, पश्येतर्षिं यदेदृशम् । प्रदर्श्य भक्तं त्यागार्हं, देयं तद् हि महाफलम् ॥ ५० ॥ दैवादागाद् द्वितीयेऽह्नि, भिक्षार्थी वहहे प्रभुः । श्रेष्ठ्युक्तविधिना भक्तं, दातुमारेभिरेऽस्य ते ॥ ५१ ॥

ऋषि० ३२ अकल्पनीयं तद् ज्ञात्वोपयोगेन महागिरिः । निवृत्त्याऽऽगत्य वसतिं, सुहस्तिनमदोऽवदत् ॥ ५२ ॥ कृताऽऽर्यानेषणा मयं, [illegible] कृत्वा

विनयं त्वया । पुनः करिष्ये नेत्युक्त्वा, स(तन्-)मिथ्या दुष्कृतं ददौ ॥ ५३ ॥ इतश्च सम्प्रती राजा, ययावुज्जयिनीं पुरीम् । जीवन्तस्वामिप्रतिमां, नन्तुं सूरीश्वरावपि ॥ ५४ ॥ रथयात्रामहेऽन्येद्यु रथस्तस्य पुरान्तरे । अन्वीयमानः सङ्घेनाऽऽचार्याभ्यां चाऽऽटदस्खलन् ॥ ५५ ॥ आयाते क्रमतो राजकुलद्वारपथे(थं) रथे । गवाक्षस्थो नृपोऽद्राक्षीत्, तत्राऽऽचार्यं सुहस्तिनम् ॥ ५६ ॥ दृष्टः क्वापीदृशः सूरिर्मन्मनोमकराम्बुधिः । आगच्छत् मूर्च्छामतुच्छां(-दतुच्छां मूर्च्छा), सम्प्रतिश्चिन्तयन्निति ॥ ५७ ॥ प्रापोपचारैश्चैतन्यं, शीतलैर्भृत्यकल्पितैः । सम्प्रतिः सम्प्रति कृतार्थयत् प्राग्भवमसस्मरत् ॥ ५८ ॥ तं प्राग्जन्मगुरुं मत्वोत्तीर्य वेगाद् गवाक्षतः । सुहस्तिनं नमश्चक्रे, सम्प्रतिर्भक्तिगर्भितः ॥ ५९ ॥ पप्रच्छ जिनधर्मस्य, किं फलं ? भगवन् ! वद । सुहस्त्याह फलं तस्य, स्वर्गो मोक्षश्च निश्चितम् ॥ ६० ॥ पुनः पप्रच्छ भूपालः, फलं सामायिकस्य किम् ? । तस्याव्यक्तस्य राज्यादि, फलमित्याह सूरिराट् ॥ ६१ ॥ नखाच्छोटनिकां कृत्वा, सत्यमेतदिति ब्रुवन् । राजोपलक्षयध्वं मामित्यपृच्छत् सुहस्तिनम् ॥ ६२ ॥ ज्ञात्वोपयोगतः सूरिरूचे त्वामुपलक्षये । शृणु प्राग्भवमात्मीयं, सम्यक् प्रत्ययकारकम् ॥ ६३ ॥ पुरा वयं महागिर्याचार्यवर्यैः सहाऽऽगताः । को(कौ)शाम्ब्यां वृद्धगच्छत्वात्, स्थिताः पृथगुपाश्रये ॥ ६४ ॥ तदा तत्रातिदुर्भिक्षमभूदस्मासु भक्तिमान् । श्रद्धालुर्दातुमारेभे पयोऽन्नादि विशेषतः ॥ ६५ ॥ एकस्य श्रेष्ठिनो गेहे, भिक्षार्थं साधवोऽविशन् । एकस्तत्पृष्ठगो रङ्कोऽद्राक्षीदाग्रहपूर्वकम् ॥ ६६ ॥ दीयमानं मोदकादि, साधुभ्यो वाञ्छिताधिकम् । दध्यौ सोऽमी ध्रुवं धन्या, येषां स्यात् प्रीतिरीदृशी ॥ ६७ ॥ तेषामन्वागतो रङ्को, ययाचे दीयतां मम । भोजनं साधवोऽवोचन्, वयं न स्ववशा हि भोः ! ॥ ६८ ॥ गुर्वाज्ञावर्त्तिनः किन्तु, ततो द्रमक आगमत् । तैः समं वसतौ सूरिं, तदयाचत पूर्ववत् ॥ ६९ ॥ याचिता भगवन् ! मार्गे, वयमप्यूपयोऽभ्यधुः । ज्ञातं प्रवचनाधारोऽयं भावीत्युपयोगतः ॥ ७० ॥ अस्माभिरुक्तं रे रङ्क !, न तद् दीक्षां

विना वयम् । दध्यौ दध्यौ स नो दुःखं, तस्यां(-स्या-)मिष्टान्नलाभतः ॥ ७१ ॥ ततः प्रव्रज्य रङ्कोऽसावाकण्ठं भुक्तवांस्तथा । सुस्वादुस्वादुमाहारं, श्वासोऽप्यायाति नो यथा ॥ ७२ ॥ तस्यां निश्यशनाजीर्णात्, मृत्वा मध्यस्थभावतः । कुणालस्याभवत् सूनुर्भवानुज्जयिनीपतिः(तिः) ॥ ७३ ॥ इत्युक्त्वा विरते सूरौ, तथेत्युक्त्वा नृपोऽवदत् । तदा प्रव्राजितो न स्यां, कुतस्त्या पदवीदृशी ? ॥ ७४ ॥ प्राग्जन्मगुरुवत् स्वामिन्निदानीमपि मे गुरुः । तदादिशत किं कुर्वे ?, कृपालुगु(गुं)रुरादिशत् ॥ ७५ ॥ अर्हद्धर्मं कुरु क्ष्माप !, परत्रेह च शर्मदम् । ततो व्रतानि सर्वाणि, श्रावकाणां नृपोऽग्रहीत् ॥ ७६ ॥ त्रिखण्डभरतक्षेत्रं, जिनप्रासादमण्डितम् । आवैताढ्यं प्रतापाढ्यो, दानशौण्डो नृपोऽतनोत् ॥ ७७ ॥ चैत्ययात्रोत्सवोऽन्यस्मिन्नथ सह्वेन हायने । रथयात्रोत्सवश्चापि, विस्तरेण गरीयसा ॥ ७८ ॥ आहूय सर्वसामन्तानेवं सम्प्रतिरादिशत् । ग्राहयित्वा च सम्यक्त्वं, सर्वसत्त्वहितावहम् ॥ ७९ ॥ मदाज्ञासारमेवद् हि, भो भोः सामन्तपुङ्गवाः ! । कार्यमर्हच्छासनस्योत्सर्पणं मे सुदर्पणम् ॥८०॥ श्रमणोपासकाः सन्तु, नार्थोऽर्थैर्भवदर्पितैः । ममाङ्गीकृत्य तत् सर्वं, सर्वेऽगुः स्वस्वनीवृति ॥ ८१ ॥ रथयात्रोत्सवं तत्रानुयानं कुसुमोत्करैः । रथार्चां चार्चयामासुः सामन्ताः स्वस्वनीवृति ॥ ८२ ॥ दध्यौ सम्प्रतिरन्येद्युर्निशीथेऽनार्यभूमिषु । विहारः स्यात् मुनीन्द्राणां, वदाऽऽशा मे फलेग्रहिः ॥ ८३ ॥ ध्यात्वेत्यनार्यदेशेषु, साधुवेषधरान् नरान् । प्रेष्यानार्यमनुष्याणामेवं सम्प्रतिरादिशत् ॥ ८४ ॥ दध्यं मे करमेतेषां, देयं दोषैरदूषितम् । द्विचत्वारिंशता वस्त्र-पात्र-भक्त-जलादिकम् ॥ ८५ ॥ अध्येतव्यं नमस्कारादीत्थं सन्तोषमेष्यति । अन्यथा सम्प्रतिः कोपमनार्या ! यास्यति ध्रुवम् ॥ ८६ ॥ सम्प्रतिः श्रावकाऽऽचारविज्ञानेवं विधाय तान् । प्राहाऽऽचार्यमनार्येषु, किं विहरन्ति नर्षयः ? ॥ ८७ ॥ सुहस्ती भगवानाख्यद्, राजंस्तत्र तपस्विनाम् । उत्सर्पन्ति न च ज्ञानादीनि भक्ताद्यलाभतः ॥ ८८ ॥ प्रेष्यैकवेलं भगवन् !, साधून् पश्यन्तु चातुरीम् । इत्याग्रहवशाद् राज्ञः, सुहस्ती

आर्यमहागिरि-आर्यसुहस्तिसूरि-अवन्तीसुकुमाल-महर्षिप्रयवक्तव्यता।

प्राहिणोत् मुनीन् ॥ ८९ ॥ द्रमिलान्ध्रादिदेशेष्वनार्येषु प्रेष्य साधवः । श्राद्धाऽऽचारं सविचारं, निवृत्याऽऽख्यन् सुहस्तिने ॥ ९० ॥ एवं सम्प्रतिनाऽनार्यदेशेष्वपि महात्मनाम् । विहारः कारितः किं किं, न कुर्युः प्रभविष्णवः ? ॥ ९१ ॥ स्मरन् प्राग्भवरङ्कत्वं, पूर्द्वारेषु चतुर्ष्वपि । श्रीसम्प्रतिः कृपाऽऽक्रान्तो, महासत्रानसूत्रयत् ॥ ९२ ॥ तत्रोद्धरति यद् भक्तं, महानसनियोगिनः । तद् विभज्योपाददिरे, स्वनिर्वाहचिकीर्षवः ॥९३॥ कोऽवशिष्टमिहाऽऽदत्ते ?, पृष्टं सम्प्रतिनाऽन्यदा । तेऽप्यूचिरे वयं राद्धं, कोशेऽन्नं किं पतत्यपि ? ॥९४॥ देयं भवद्भिः साधुभ्योऽन्नं तदकृत-कारितम् । निर्वाहार्थमर्थजातं, दास्ये वः प्राह सम्प्रतिः ॥९५॥ ततोऽवशिष्टं तद् भक्तं, साधुभ्यस्ते ददुर्मुदा । पक्वान्न-शालि-दाल्यादि, स्वीचक्रुः शुद्धमित्यमी ॥ ९६ ॥ वस्त्र-पात्र-तैल-दध्याज्यादिविक्रयकारकान् । तथा कान्दविकान् साधुभक्तः सम्प्रतिरादिशत् ॥ ९७ ॥ साधूनामुचितं वस्तु, देयं मूल्यमहं पुनः । दास्ये भवद्भ्योऽवदत् स(वदन-)प्रार्थितं व्यवसायिनः ! ॥ ९८ ॥ ददुस्ते तत् च साधुभ्यो, दोषयुक्तं विदन्नपि । राजभक्तं सुहस्त्यार्यः, सेहे शिष्यानुरागतः ॥ ९९ ॥ महागिरिस्तमाचार्यं, प्राहाऽऽचार्य ! विदन्नपि । अनेषणीयं राजान्नं, किमादत्से तपस्विभिः ? ॥ १०० ॥ शिष्यरागात् सुहस्त्याख्यद्, यथा राजा तथा प्रजाः । भगवन् ! यत्रभक्तादि, भक्त्या ददुरुपासकाः ॥ १०१ ॥ जानन् मायेयमित्यार्यः, क्रुधाऽवादीत् महागिरिः । आः ! शान्तं पापमाचार्योऽसत्यं वदसि किं मुधा ! ॥ १०२ ॥ अतः परं विसम्भोगः, सुहस्तिन्नावयोः खलु । विभिन्नसामाचारित्वाद्, भिन्नोऽध्वा ते समं मया ॥ १०३ ॥ सुहस्त्यपि भिया वेपमानो बाल इवावदत् । आगो मे क्षम्यतामेकं, करिष्ये नेदृशं पुनः ॥ १०४ ॥ प्रोचे महागिरिर्दोषः कस्ते ? वीरेण यत् पुरा । प्रोक्तं मच्छिष्यसन्ताने स्थूलभद्रात् मुनेः परम् ॥ १०५ ॥ पतत्प्रकर्षा साधूनां, सामाचारी भविष्यति । तीर्थप्रवर्त्तकौ जातौ, तस्याऽऽवां पृष्ठतोऽधुना ॥ १०६ ॥ तद् वीरवचनं तावत्, त्वया सत्यापितं ध्रुवम् । इत्युक्त्वा सम्भोगिकल्पं, स्थापयामास

सूरिराट् ॥ १०७ ॥ जीवन्तस्वामिनो मूर्त्तिं, ततो नत्वा महागिरिः। निर्गत्योज्जयिनीपुर्या, गजेन्द्रपदनाऽभ्यगात् ॥ १०८ ॥ तीर्थे
तत्रानशनेन, कालं कृत्वा समाधिना। महागिरिगु(र्गु)रुः स्वर्गं, ययौ स्वार्गेरिनिश्चलः ॥ १०९ ॥ श्रीसम्प्रतिरपि श्राद्धधर्ममाराध्य
शुद्धधीः। देवीभूतः क्रमात् प्राप्य, सुकुले जन्म सेत्स्यति ॥ ११० ॥ सुहस्तिसूरिरन्यत्र, विहृत्योज्जयिनीं पुरीम्। जीवन्तस्वामिप्रतिमां,
नमस्कर्त्तुमगात् पुनः ॥ १११ ॥ स्थित्वा तद्बहिरुद्याने, सूरिः प्रैषीत् मुनिद्वयम्। उपाश्रयार्थं तद् भद्राश्रेष्ठिनीगृहमागमत् ॥ ११२ ॥
स्वयाहनकुटी तेभ्यो, भक्त्या नत्वाऽर्पिता तया। सगच्छाः सूरयस्तस्थुस्तत्र सन्तोषशालिनः ॥ ११३ ॥ प्रदोषे नलिनीगुल्माख्याध्ययनं
सुहस्तिभिः। परावर्त्तितुमारेभे, शुभभावाभिवर्द्धकम् ॥ ११४ ॥ अवन्तिसुकुमालाख्यः, पुण्यवान् श्रेष्ठिनीसुतः। स्त्रीभिर्द्वात्रिंशता
सप्तभूगृहस्थो ललत्यलम् ॥ ११५ ॥ ददावध्ययने कर्णं, सम्यक् श्रोतुमद(ना)स्ततः। भद्रासूस्तत उत्तीर्य, वसतिद्वारमाययौ ॥ ११६ ॥
मयाऽनुभूतं क्वापीदं, भद्रासूश्चिन्तयन्निति। नलिनीगुल्मविमाने, प्राक्स्वस्या(प्राक्स्वा-)वस्थानमस्मरत् ॥ ११७ ॥ गन्तुं तत्रोत्सुकोऽत्यर्थं,
गुरून् नत्वाऽथ सोऽवदत्। प्रभोऽहं प्रव्रजिष्यामि, प्रव्राजयत मां द्रुतम् ॥ ११८ ॥ प्राहाऽऽर्यः सुकुमारोऽसि, भाद्रेयोऽभिदधे प्रभो!।
सामाचारीं चिरं पालयितुं नेशोऽस्मि दुश्चराम् ॥११९॥ तेन सानशनां दीक्षामादास्येऽहं समुत्सुकः। सूरिणाऽभाणि बन्धून् स्वांस्तत् पृच्छ
सुरु(स्वप्र)तकृते ॥ १२० ॥ वेश्मैत्य तेन ते पृष्टाः, सादरं नानुजज्ञिरे। स्वयं केशानिव क्लेशांस्ततोऽसावुदमूलयत् ॥ १२१ ॥ प्रव्रज्यागाद्
गुरूपान्तमात्तलिङ्गो भवेत् स्वयम्। इति प्रव्राजयामास, भद्रापुत्रं सुहस्त्यपि ॥ १२२ ॥ व्रतकष्टं चिरं सोढुमसहिष्णुः सुहस्तिनम्।
आपृच्छ्यानशनचिकीर्षयौ पितृवनं मुनिः ॥१२३॥ कन्थारिकाकुडङ्गान्तस्तस्थावु(-रस्थादु-)त्सर्गयोगवान्। असृगाश्रा(स्रा)चविस्राणि, लिहाना
तत्पदान्यथ ॥ १२४ ॥ विवेश जम्बु(म्बू)की काचित्, क्षुत्क्षामा सशिशुस्तदा। पादं खादितुमारेभे, सैकं तच्छिशवोऽपरम् ॥ १२५ ॥

आर्यमहागिरि-आर्यसुहस्तिसूरि-अवन्तीसुकुमाल-महर्षित्रय-वक्तव्यता।

मेने तां पादरादिनीं, पादसंवाहिकामिव । स मुनिर्निश्चलध्यानाधरीकृतसुराचलः ॥१२६॥ चटचटिति तच्चर्म, त्रटत्त्रटिति ज(जा)ङ्गलम् ।
धगद्धगिति मेदश्च, कटत्कटिति कीकसम् ॥ १२७ ॥ तत्पादं भक्षयन्ती साऽऽद्ये यामे निरशेषयत् । द्वितीयं डिम्भरूपाणि, न पुनः
तन्मुनेर्मनः ॥१२८॥ यामे द्वितीये तस्योरू, तृतीये तुन्दमप्यथ । तुर्ये यामे विपद्यासौ, नलिनीगुल्ममासदत् ॥ १२९ ॥ रञ्जितैर्निर्ममत्वेन, निर्ममे महिमाऽमरैः । तद्भार्यास्तमपश्यन्त्यः, पप्रच्छुर्गौरवाद् गुरुम् ॥ १३० ॥ ज्ञात्वा ज्ञानेन वृत्तान्तं, तस्याऽऽख्यन् सूरयोऽखिलम् । पश्यो गत्वा श्मशानेऽस्मद्, भद्रायै साऽप्यगाद् वनम् ॥ १३१ ॥ दृष्ट्वाऽऽकृष्टं च नैर्ऋत्यां, भद्रा सूनोः कलेवरम् । रुरोद विललाप्योच्चैः, स्ववधूभिर्वृता प्रगे ॥ १३२ ॥ वत्स ! नालङ्कृथा गेहमेकस्मिन्नपि वासरे । प्रव्रज्य पर्यहार्षीत् मां, निर्मोहत्वाद् गुरुश्च किम् ?
॥ १३३ ॥ रात्री भविन्त्री कल्याणी, काऽपि हा दैव ! कर्हिचित् । या स्वप्ने दर्शयित्वा त्वामस्मान् सञ्जीवयिष्यति ॥ १३४ ॥ एवं
विलप्य बहुधा, भद्रा सिप्रानदीतटे । तस्यौर्ध्वदेहिकं चक्रे, क्रन्दन्ती करुणस्वरम् ॥ १३५ ॥ चक्रिरे शल्योद्धरणं, तत्प्रियाः छिन्नवाससः ।
मुक्त्वैकां गुर्विणी भद्रा, प्राव्राजीत् स्ववधूवृता ॥ १३६ ॥ गुर्विण्या जातपुत्रेण, पितृमृत्यूपलक्षिते । स्थाने चक्रे महादेवकुलमुत्तुङ्गतोरणम् ॥ १३७ ॥ तदद्यापि महाकालाख्यमवन्तिविभूषणम् । वर्त्तते कालदोषेण, मिथ्यादृग्भिरधिष्ठितम् ॥ १३८ ॥ काले सुहस्त्यपि
गुरुर्निजगच्छभारं, न्यस्यान्तिपद्यनुपमश्रुतवारिराशौ । प्रायं विधाय निजकायभयं विहाय, स्वर्लोकमस्तकमणिप्रभुतां प्रपेदे ॥ १३९ ॥
इत्यार्यमहागिरि-सुहस्त्यवन्तिसुकुमालमहर्षीणां कथानकम् ॥ [ ग्रन्थाग्रं ७०६५ ]

अथाऽऽर्यश्यामगुरोर्जयमाविर्भावयन्ति—

**निज्जूढा जेण तया, पन्नवणा सव्वभावपन्नवणा । तेवीसइमो पुरिसो, पवरो सो जयउ सामज्जो ॥१८७॥**

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे तृतीयोंऽशः । आर्यमहागिरि-आर्यसुहस्तिसूरि-अवन्तीसुकुमाल-महर्षित्रय-वक्तव्यता । आर्य-श्यामाचार्य-स्वरूपम् । ॥१८९॥

व्याख्या—सुगमैव। नवरम्—सर्वभावानां ज्ञापयित्री 'प्रज्ञापना निर्यूढा' उपाङ्गग्रन्थः कृत इत्यर्थः। त्रयोविंशतितमपुरुषत्वमेवम्—एकादश गौतमाद्या गणधराः "जंबूनामं च कासवं" इति स्थविरावलीसूत्रादितः "वंदिमो हारियं च सामज्जं" इत्यन्तादवसेयमिति वृद्धाः ॥ १८७ ॥

अथ कालकसूरेर्वक्तव्यतामाह—

**पढमणुओगे कासी, जिण-चक्कि-दसारचरियपुव्वभवे। कालगसूरी बहुयं, लोगणुओगे निमित्तं च ॥ १८८ ॥**

व्याख्या—सुगमैव। नवरम्—'प्रथमानुयोगं' द्वादशाङ्गान्तर्गतशास्त्रविशेषं(षकं) लोकानुयोगरूपं ग्रन्थद्वयं चकार। तत्राऽऽद्ये जिनानां चक्रिणां 'दशार्हाणां' वासुदेवानां 'चरितानि' पूर्वभवांश्चाकार्षीत्, तत्रैतत् क्षिप्तमित्यर्थः। लोकानुयोगग्रन्थे तु बहुकं निमित्तमुक्तवानिति ॥ १८८ ॥

अथाऽऽर्यसमुद्रसूरीन्द्रान् दर्शयन्ति—

**अज्जसमुद्दगणहरे, दुब्बलिए घिप्पए पिहो सव्वं। सुत्तत्थचरिमपोरिसिसमुट्ठिए तिन्नि किइ(कय)कम्मा ॥ १८९ ॥**

व्याख्या—आर्यसमुद्रेण गणधरेण 'दुर्बले' कृशे सति सर्वं पृथग् गृह्यते, अयं भावः—ते ह्यत्यन्तं(त)कृशत्वाद् बहुप्रयासाक्षमा अतस्तेषां योग्यं सर्वं भक्त-पानादि पृथग् विहितवत इत्यर्थः। तथा सूत्रार्थ-चरमपौरुषीतः समुत्थिते च, चस्य अनुक्तस्याप्यत्र गम्यमानत्वात् त्रीणि कृतकर्माणि क्रियन्त इति शेषः। 'कृतकर्म' विश्रामणादिशुश्रूषा, तत्रैकं यदा गुरवः सूत्रवाचनां कारयित्वा निर्विण्णा उत्तिष्ठन्ति तदा मुनयो वैय्यावृत्यं कुर्वन्ति, द्वितीयम् अर्थकथनपौरुष्यां, तृतीयं चरमपौरुष्यां संस्तारकलक्षणायामिति ॥ १८९ ॥

आर्य-श्यामाचार्य-स्वरूपम्।

श्रीकालकाचार्य-वक्तव्यता।

आर्य-समुद्रसूरि-वर्णनम्।

अथाऽऽर्यमङ्गोः स्वरूपमाह—

**सड्ढाण गंति-भंडगपमुहे दिट्ठंतए गमिंतस्स। मंगुस्स न किइकम्मं, न य वीसुं घिप्पई किंचि ॥ १९० ॥**

व्याख्या—मङ्गुसूरेः 'विष्वक्' पृथक् किञ्चित् न गृह्यते, कृतकर्मापि न क्रियते, स क्षमदेहत्वात् न कारयति, किं कुर्वतः? 'गमयतः' ज्ञापयतः, कान्? गन्त्री-भण्डकप्रमुखान् दृष्टान्तान्, केषां? श्राद्धानां, किं कुर्वतां? हे पूज्या! यूयमपि गुरुवत् पृथग् भक्तादि विश्रामणादि [च] कारयत इति वदतां, यथा सुदृढा गन्त्री सुदृढं भाजनं च विशेषसंस्कारं विनाऽपि चलति; नादृढा इत्यर्थः। एतेषां चतुर्णामपि चरित्रं प्रायः क्वापि न दृश्यत इत्युपेक्षितम्। यथाश्रुतं यथाज्ञातं समयज्ञैः स्वयमत्रावतार्यम् ॥ १९० ॥

अथ सिंहगिरिगुरोर्गरिमाणमाह—

**जाइसरे सीहगिरी, वरसीसा आसि जस्सिमे चउरो। धणगिरी थेरे समिए, वयरे तह अरिहदिन्ने य ॥ १९१ ॥**

व्याख्या—गाथार्थः स्पष्टः ॥ १९१ ॥

अथ श्रीभद्रगुप्ति(प्त)गुरुमभिवादये—

**सुमिणे पीओ पयपुण्णपडिग्गहो जस्स हरिकिसोरेणं। सिरिवयरसमागमणे, तं वंदे भद्दगुत्ति(त्त)गुरुं ॥ १९२ ॥**

व्याख्या—गाथार्थः कथानकगम्यः। तच्चाग्रे वज्रस्वामिचरित्रान्तर्दर्शयिष्यते ॥ १९२ ॥

अथाऽऽर्यसमितं नमस्करोति सूत्रकृत्—

**कन्ना-वे(वि)न्नंतरदीववासिणो तावसा वि पव्वइया। जस्साइसयं दट्ठुं, तं समियं वंदिमो समियं ॥ १९३ ॥**

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे वृतीयोंऽशः।

आर्यमङ्गुसूरि-सिंहगिरिसूरि-भद्रगुप्तसूरि-स्वरूपम्।

॥१९०॥

आर्य-समितसूरि-वक्तव्यता।

व्याख्या—गाथार्थः स्पष्टः ॥ १९३ ॥ भावार्थः कथानकगम्यः । तच्चेदम्—

आभीरविषयेऽभूतां कन्या-पूर्णाऽऽख्यनिम्नगे । अन्तराले तयोः केचिद्वात्सुस्तापसर्षयः ॥१॥ तेष्वेकस्तापसः पादलेपविद्याविशारदः । चक्रे गतागतं नित्यं, स्थलवद् जलवर्त्मना ॥ २ ॥ जलान्तःपादुकाऽऽरूढः, स आयाति पुरान्तरे । जहास श्रावकान् नेदृक्, प्रभावो योऽस्ति शासने ॥ ३ ॥ इतश्च समिताऽऽचार्याः, श्रीवज्रस्वामिमातुलाः । विहारयोगात् तत्रेयुर्योगसिद्धा महर्षयः ॥ ४ ॥ तेषां तत्तापसोपज्ञं, हास्यमाचख्युरार्हताः । तैः सत्यपि श्रुतज्ञाने, तद् ज्ञातं मतिवैभवात् ॥५॥ आस्तिका ! नास्ति काऽप्यस्य, तपसः शक्तिरित्यवक् । सूरिर्लेपच्छलाद् विप्रतारयत्येष किन्तु वः ॥ ६ ॥ न चेत् प्रतीतिर्युष्माकं, निमन्त्र्य स्वगृहे तदा । परीक्षार्थं पादशौचं, कार्यमस्य तपस्विनः ॥ [illegible] ॥ ततः श्रद्धालुनैकेन, स्वगृहेऽसौ निमन्त्रितः । भुक्त्यर्थं भक्तितः सोऽपि, तत् मेने मुदमुद्वहन् ॥ ८ ॥ भक्तिगर्भं इव श्राद्ध, आयातस्य तपस्विनः । प्रोचे वो भगवन्! पादौ, क्षालयामि पयोऽम्बुभिः ॥ ९ ॥ ततो नेति ब्रुवाणस्याऽऽस्तिकेनास्य तपस्विनः । क्षालितौ पादुका-पादौ, लेपघर्षणपूर्वकम् ॥ १० ॥ तं भक्त्याऽभोजयत् श्राद्धो, विदाञ्चक्रे स तापसः । रसवत्या न चाऽऽस्वादं, लेपापगमशङ्कया ॥ ११ ॥ पदोर्लेपलवः कश्चित्, स्यादित्यसत्यसाहसात्, तापसोऽगात् सरित्तीरं, तज्जलोल्लङ्घनेच्छया ॥ १२ ॥ कुर्वन् बुडबुडारावं, ब्रुडन्निव कमण्डलुः । जलान्तस्तापसः श्राद्धैराकृष्टः कृपया वहिः ॥ १३ ॥ तत्रेयुः श(स)मिताऽऽचार्याः, श्राद्धाऽऽहूता जनैर्वृताः । नयन्तश्चिक्षिपुर्योगं, शासनोत्सर्पणेच्छवः ॥ १४ ॥ ऊचुश्चोच्चैरेहि पुत्रि!, यामः पारे वयं तव । इत्युक्त्यनन्तरं नद्या, मिलितं तत् तटद्वयम् ॥ १५ ॥ तत्राऽऽर्याः सपरीवारास्तस्यास्तीरभुवं ययुः । तादृक्प्रभावं दृष्ट्वैषां, तापसा विस्मयं दधुः ॥ १६ ॥ ततो मिथ्यात्वमुत्सृज्य,

आर्यवज्रस्वामिस्वरूपम् ।

श(स)मिताऽऽचार्यसन्निधौ । तापसाः प्राव्रजन् सर्वे, कस्य श्रेयसि नाऽऽदरः ? ॥ १७ ॥ ते ब्रह्मद्वीपवास्तव्या, ब्रह्मद्वीपाभिधा इति । श्रमणा जज्ञिरे स्वर्ग, ययुः श(स)मितसूरयः ॥ १८ ॥ इति श्रीश(स)मिताऽऽचार्यसम्बन्धः( कथा ) ॥

अथ श्रीवज्रस्वामिस्वरूपं प्ररूपयन्ति (कथ्यते)—

वेसमणस्स उ सामाणिओ चुओ वग्गुवरविमाणाओ । जो तुंबवणे धणगिरिअज्ज-सुनंदासुओ जाओ ॥ १९४ ॥

व्याख्या—गाथार्थः स्पष्टः ॥ १९४ ॥ अत्रापि केषुचित् नवीनाऽऽदर्शेषु पूर्वाचार्यकृताः प्रक्षेपरूपा इमा एकादश गाथा दृश्यन्ते—

तुंबवणसन्निवेसाओ निग्गयं उस्सग्गसमल्लीणं । छम्मासियं छसु जयं, माऊइ(य)समन्नियं वंदे ॥ १९५ ॥
जो गुज्झगेहिं बालो, निमंतिओ भोयणेण वासंते । निच्छइ विणीयविणओ, तं वयररिसिं नमंसामि ॥ १९६ ॥
उज्जेणीए जो जंभगेहिं आणक्खिऊण थुय(इ)महिओ । अक्खीणमहाणसियं, सीहगिरिपसंसियं वंदे ॥ १९७ ॥
जस्स अणुन्नाए वायगत्तणे[ण] दसपुरम्मि नयरम्मि । देवेहि कया महिमा, तं पयाणुसारिं नमंसामि ॥ १९८ ॥
जो कन्नाय धणेण य, निमंतिओ जुव्वणम्मि गिहिवइणा । नयरम्मि कुसुमनामे, तं वयररिसिं नमंसामि ॥ १९९ ॥
जेणुद्धरिया विज्जा, आगासगमा महापरिण्णा उ । वंदामि अज्जवयरं, अपच्छिमो जो सुयहराणं ॥ २०० ॥
भणइ य आहिंडिज्जा, जंबुद्दीवं इमाइ विज्जाए । गंतूण माण(णु)सनगं, विज्जाए एस मे विसओ ॥ २०१ ॥
भणइ य धारेयव्वा, न हु दायव्वा मए इमा विज्जा । अप्पड्ढिया य मणुया होहुंति अओ परं अन्ने ॥ २०२ ॥
माहेसरीइ सेसा पुरीए नीया हुयासणगिहाउ । गयणयलमणुवय(इ)त्ता, वयरेण महाणुभावेणं ॥ २०३ ॥

जस्सासी वेउव्विय-नहगमण-पयाणुसारिलद्धीओ। तं वंदे जाइसरं, अपच्छिमं सुयहरं वयरं ॥ २०४ ॥

मूलसूत्रकृत्कृतेयम्—

नाण-विणयप्पहाणेहिं पंचहिं सएहिं जो सुविहियाणं। पाओवगओ महप्पा, तमज्जवयरं नमंसामि ॥ २०५ ॥

व्याख्या—सर्वासामक्षरार्थः कथानक(कादेव)गम्यः। तच्चेदम्—

अस्यैव जम्बूद्वीपस्य, भरतेऽवन्तिनीवृति। आस्ते तुम्बवनमिति, सन्निवेशनमद्भुतम् ॥ १ ॥ आसीद् धनगिरिरिति, ख्यातस्तत्रास्तिकाग्रणीः। इभ्यपुत्रोऽविशत् कामस्तारुण्येऽप्यस्य नो हृदि ॥२॥ स दानधर्मव्यसनी, ब्रह्मचर्यव्रतैकधीः। इयेष कन्यां नोद्वोढुं, पितृभ्यां प्रार्थितामपि ॥ ३ ॥ यत्र यत्र कुले कन्यां, तदर्थं याचते पिता। तत्र तत्र धनगिरिर्गत्वा प्राहेदमुच्चकैः ॥ ४ ॥ हंहो! अहं ग्रहीष्यामि, चारित्रमचिरादपि। नैव(न च) देया स्वकन्येति, दोषः कथयतो न मे ॥५॥ अथेभ्यधनपालस्य सुनन्दाऽस्तीति नन्दना। सोचे धनगिरेस्तात!, देया दीक्षार्थिनोऽपि हि ॥६॥ पतिर्धनगिरिर्मेऽस्तु, दिव्यरूपोऽपि नापरः। तन्निर्बन्धाद् ददौ तस्मै, तां तातोऽनिच्छवेऽपि हि ॥७॥ भ्राताऽस्याः स(श)मितो नामाभ्यासे सिंहगिरेर्गुरोः। प्रव्रज्यामग्रहीत् पूर्वं, वैराग्यरसगर्भितः ॥ ८ ॥ ऋतुस्नातां धनगिरिः, सुनन्दामन्यदा प्रियाम्। भोगकर्मोदयाद् भेजे, नाभुक्तं क्षीयते ह्यदः ॥ ९ ॥ इतश्चाष्टापदस्याभूदारूढेनेन्द्रभूतिना। पुण्डरीक-कण्डरीकाध्ययनं धनदामतः ॥ १० ॥ यदुक्तं तस्य सामानिकामरेणावधारितम्। स सुनन्दोदरे देवः, स्वर्गात् च्युत्वाऽवतीर्णवान् ॥ ११ ॥ [ युग्मम् ] ज्ञात्वा धनगिरिः पत्नीमन्तर्वत्नीं रहोऽवदत्। भद्रे! गर्भः सहायस्ते, भाव्यतः प्रव्रजाम्यहम् ॥ १२ ॥ अनिष्ट एव सम्बन्धस्त्वया सह ममाभवत्। प्रेयसी श्रेयसी मेऽभूद्, दीक्षा स्वस्त्यस्त्वतः परम् ॥ १३ ॥ इत्युक्त्वाऽवक्रयकुटीमिव त्यक्त्वाऽश्रुवर्षिणीम्।

आर्य-वज्रस्वामि-स्वरूपम्।

सिंहगिर्यन्त इत्यसौ (इभ्यसूः) ॥ १४ ॥ तपो धनगिरिस्तेपे, सहमानः परीषहान् । विनयाद्यैर्गुरोः शिष्यगुणैर्-
सुनन्दामाददे दीक्षां,
प्याददे श्रुतम् ॥ १५ ॥ अजीजनत् सुनन्दाऽपि, नन्दनं नन्दनक्षमा । सुरद्रुमिव पूर्णायां, नवमास्यां शुभेऽहनि ॥ १६ ॥ तदुत्पत्तौ
समायाता योषितः सूतिकागृहे । सुनन्दाप्रीतिपात्राणि, तं बालं प्रत्यदोऽवदन् ॥ १७ ॥ यदि नो जात! तातस्ते, प्राव्रजिष्यत् ततोऽ-
धुना । बहुद्रव्यव्ययात् कान्तमकरिष्यत् तवोत्सवम् ॥१८॥ तत् निशम्य शिशुर्दध्यौ, प्रज्ञावान् कर्मलाघवात् । प्राव्राजीत् मत्पिता धन्यो,
जल्पन्त्येता हि यत् मिथः ॥ १९ ॥ प्राग्जन्मस्मृतिमासाद्य, सद्यो भवविरागवान् । मनो मुनिजनाऽऽराध्ये, न्यस्यपोऽप्यध्वनि न्यधात्
॥ २० ॥ न त्यक्ष्यत्यन्यथा माता, मां हि ध्यात्वेत्यसौ शिशुः । सिषेवे रोदनाद्वैतं, सदोदनमिवार्भकः ॥ २१ ॥ नोत्सङ्गलालनैर्वस्त्र-दोला-
भिर्मन्मनोक्तिभिः । न च क्रीडनकैरर्भो, निवृत्तस्तीव्ररोदनात् ॥ २२ ॥ रुदतोऽस्यात्तगुर्मासाः, षडेवमधिकाधिकम् । सुनन्दा नन्दना-
नन्दं, सदनेऽप्याससाद न ॥ २३ ॥ धनगिर्यार्यस(श)मितादिभिः शिष्यैर्वृतोऽन्यदा । तस्मिन् सिंहगिरिर्गुरुः, समागात् सन्निवेशने
॥ २४ ॥ धनगिर्यार्यश(स)मितावन्वजिज्ञपतां गुरुम् । स्वजनाः सन्ति नावत्र, तान् विवन्दयिषावहे ॥२५॥ पृच्छतोरनयोरेवं, शकुनं
लाभपूर्वकम् । वीक्ष्याऽऽख्यद् गुरुरत्याऽऽर्यौ !, लाभो भावी द्वयोर्महान् ॥ २६ ॥ सचि(चि)त्तं वाऽप्यचित्तं वा, परं माह्यं मदाज्ञया ।
इति श्रुत्वा सुनन्दायाः, सदने (आसन्ने) तौ गतौ मुनी ॥ २७ ॥ प्राप्तौ द्वार्येन्यनारीभिः, सुनन्दाया निवेदितौ । ऊचुस्तस्याश्च ता भद्रे !,
पत्युर्दर्शय नन्दनम् ॥ २८ ॥ निरानन्दा सुनन्दाऽपि, पत्युर्भूत्वाऽग्रतोऽवदत् । इयन्तं पालितः कालं, बालोऽयमिति कृच्छ्रतः ॥ २९ ॥
अथ प्रव्रजितोऽपि त्वं, गृहाणामुं च पालय(येः) । तत् श्रुत्वाऽऽह धनगिरिर्मा पश्चात्तापमाप्नुयाः ॥ ३० ॥ कल्याणि ! साक्षिणो देहि,
तथा प्रतिभुवश्च मे । साक्ष्यादिपूर्वमेतस्मै, वितीर्णस्तनयोऽनया ॥ ३१ ॥ पात्रबन्धे न्यधात् साधुर्निवृत्तो रोदनादनु । सोऽर्भो मुनी तमा-

दायाऽऽयातौ गुर्वन्तिके द्रुतम् ॥३२॥ तद्द्वारेण नमद्बाहुं, दृष्ट्वा धनगिरिं गुरुः। सहसोत्थाय हस्ताभ्यां, पात्रबन्धं त(-न्धन-)मग्रहीत् ॥३३॥ वज्रादप्यधिकं भारं, शिशोरालोक्य सूरयः। जगत्प्रसिद्धां श्रीवज्र, इत्याख्यां ददुरुन्मुदः ॥३४॥ भावी प्रवचनाधारो, नररत्न(त्नं) पुमानयम्। ज्ञात्वाऽऽचार्योऽर्पयामास, साध्वीनां पालनाय तम् ॥३५॥ शय्यातरकुल(ले) श्राद्धीवर्गस्याप्यार्यिका ददुः। सौभाग्यभूमिं(मिः) सोऽप्येनं, पुत्रस्नेहादलालयत् ॥ ३६ ॥ शय्यातरीणां सौभाग्यादङ्कादङ्कान्तरं व्रजन्। हर्षप्रकर्षं नो कस्याः, श्रीवज्रश्चक्षुपोर्ददौ ॥३७॥ जातिस्मृतिवशाद् ज्ञातप्रासु(शु)काप्रासु(शु)ककमः। बुभुजे भक्त-पानादि, वज्रः शुद्धर्षिसेवितम् ॥ ३८ ॥ उल्लापयन्ति तं नार्यो, मन्मनोल्लापपूर्वकम्। संज्ञावान् सोऽपि संज्ञादि, कुर्वन् संज्ञां स्फुटां व्यधात् ॥ ३९ ॥ युग्मजात इव क्रीडन्, शय्यातरसुतैः समम्। प्रीतिपात्रमभूद् वज्रो, विशिष्टस्पष्टचेष्टया ॥ ४० ॥ विशिष्टचेष्टं श्रीवज्रं, सुनन्दा वीक्ष्य सादरम्। शय्यातरीभ्योऽयाचिष्ट, मत्पुत्र इति वादिनी ॥ ४१ ॥ ताः प्रोचुर्न वयं विद्मः, सम्बन्धं मातृ-पुत्रयोः। गुरूणां किन्त्वयं न्यासोऽर्पयामस्तेन ते न हि ॥ ४२ ॥ ततः प्रैक्षिष्ट दूरस्था, सुनन्दा तं परस्ववत्। स्तन्यपानादिना चान्यगृ(गे)हस्था पर्यलालयत् ॥४३॥ इ(त)स्त्रिहायणो वज्रो, वर्द्धमानोऽभवत् क्रमात्। अथाऽऽययुर्धनगिरिश(स)मिताद्या महर्षयः ॥४४॥ सुनन्दा चिन्तयन्त्यासीत्, तेष्वा(तथाऽऽ)यातेषु साधुषु। ग्रहीष्याम्यात्मनः पुत्रं, छलादपि बलादपि ॥४५॥ मुनीन् सुनन्दाऽयाचिष्ट, सुतं तेऽप्यवदन्निदम्। भद्रे ! न लभ्यते जातु, स्वदत्तं सर्वसाक्षिकम् ॥४६॥ स्वयमेव त्वया दत्तः, पुत्रोऽस्मभ्यममार्गितः। यान्तान्नमिव तं त्यक्त्वाऽऽदातुं किं पुनरिच्छसि ? ॥४७॥ विवादवशयोरेवं, सुनन्दा-साधुपक्षयोः। जनोऽवादीदमुं न्यायं, राजैव हि विधास्यति ॥ ४८ ॥ वाम(मे) पार्श्वे सुनन्दाऽस्थात्, श्रीसङ्घो दक्षिणे पुनः(रः)। राज्ञश्चान्ये यथास्थानं, तादृक्स्थाने हि सद्विधिः ॥ ४९ ॥ राजाऽवोचदमुं न्यायं, यस्याऽऽहूतः शिशुर्व्रजेत्। तस्यैवास्तु सुनन्दायाः पक्षोऽवादीदिदं पुनः ॥ ५० ॥ स्वामिन् ! परिचि-

आर्य-
वज्रस्वामि-
स्वरूपम्।

आर्यवज्रस्वामिस्वरूपम्।

वोऽमीषामर्भकैस्तेनाऽऽदितो वयम्। आह्वयामीऽनुकम्प्या स्यादेवं राजन्! जनन्यपि ॥ ५१ ॥ ततो नृपाऽऽज्ञया माता, भूमिक्रीडनकानि च। भक्ष्यभेदानुपादायाऽऽगत्य चक्रान्त इत्यवक् ॥ ५२ ॥ एहि लाहि सुतैतेऽश्वा, गजाश्चामी अमी रथाः। भक्ष्यं च मोदकाद्येतद्देया च सुरभक्षिका ॥५३॥ यद् रोचते तदादत्स्वोत्सङ्गं वत्स! ममाऽऽश्रय। निरानन्दां सुनन्दां मां, सानन्दां कर्तुमर्हसि ॥५४॥ वलिः क्रियेऽहमास्याय, दृशोर्याम्यवतारणे। स्पृशामि वक्त्रं वस्त्रेण, तव जीवितसार! मे ॥ ५५ ॥ इत्यादिचाटुवाक्यानि, भक्ष्यक्रीडनकानि च। नालं वज्रमनो भेत्तुं, शस्त्रघाता इवाम्बरे ॥ ५६ ॥ दध्यौ ह्युपकाराणां, न मातुर्जातु जायते। सुतोऽनृणो यथा कृच्छ्रात्, पूतरोऽपि करीकृतः ॥ ५७ ॥ उपेक्षिष्येऽसि चेत् सङ्घं, मातुकत्सङ्गसङ्गमात्। तदा दीर्घतरः स्यात् मे, ससारो दुःखदारुणः ॥ ५८ ॥ प्रव्रजिष्यति धन्येयं, माताऽप्येवमुपेक्षिता। इति निश्चित्य स स्थानाद्, ध्यानस्थ इव नाचलत् ॥ ५९ ॥ जनाध्यक्षं सुनन्दायास्ततो राज्ञोदितं ह्रदः। इतोऽपसर नाऽऽयाति, तवाऽऽहूतः शिशुर्यतः(तिः) ॥ ६० ॥ राज्ञा प्रोक्तो धनगिरिस्थाऽऽगत्य शिशुं प्रति। स्वं (स्व)धर्मध्वजमुत्क्षिप्य, प्राहैवं प्रकटाक्षरम् ॥६१॥ चेद् व्रतेऽध्यवसायस्ते, वत्साऽऽदत्स्वोत्सृतं तदा। धर्मध्वजं कर्मरजःप्रमार्जनपटुक्रियम् ॥ ६२ ॥ तत् श्रुत्वा कलभ इवोत्क्षिप्य हस्तमधावत। वज्रो धनगिरेः क्रोडं, चाऽऽरुरोहार्यमेव स्वम् ॥६३॥ लीलाब्जमिव पाणिभ्यां, रजोहरणमाददे। शुशुभे तत्करस्थं तद्, रोमगुच्छ इव श्रियः ॥ ६४ ॥ दध्यौ हृदि सुनन्दाऽपि, भ्राता भर्त्ता पुरा मम। प्राव्राजीदधुना सूनुः, कुर्वेऽस्म्येकाकिनी किमु? ॥ ६५ ॥ प्रव्रजिष्याम्यहमपि, ध्यात्वेति स्वाऽऽश्रयं ययौ। महर्षयोऽपि श्रीवज्रं, लात्वोपाश्रयमाययुः ॥ ६६ ॥ व्रतेच्छुर्न पपौ स्तन्यं, वज्रस्तावद्वया अपि। तद्गच्छाचार्यपादान्ते, सुनन्दा प्राव्रजत् क्रमात् ॥ ६७ ॥ परिव्राज्याऽऽर्यिकाभ्योऽसावाचार्यैः पुनरार्प्यत। पठत्तदास्तादेकादशाङ्गीं शृण्वंस्तयाऽग्रहीत् ॥ ६८ ॥ आर्यिकोपाश्रये वज्रः, क्रमाद् जातोऽष्टवार्षिकः। ततो वसतिमानीतः, प्रीति(त)चित्तै-

महर्षिभिः ॥ ६९ ॥ सवज्राः सूरयोऽन्येद्युः, प्रत्यवन्तीं प्रतस्थिरे । ववर्ष वारिदो मार्गे, ते तस्थुर्यक्षमण्डपे ॥ ७० ॥ वज्रं परीक्षितुं तत्र, तिर्यग्जृम्भकदेवताः । प्राग्जन्मसौहृदयुजो, वणिक्सार्थं विचक्रिरे ॥ ७१ ॥ कचिद् वृषभसंरम्भं, कचित् शकटपेटकम् । चरदौष्ट्रकमुत्कण्ठं, कचिद् वेसरधूसरम् ॥ ७२ ॥ नयनच्छन्नसद्वस्तु, तृणच्छन्नक्रयाणकम् । राद्धान्नमृतपात्र(त्री)कं, भोजनव्याप्रुताभकम् ॥ ७३ ॥ मेघेऽथ विरतप्राये, ते तिर्यग्जृम्भि(म्भ)कामराः । न्यमन्त्रयन्त भिक्षार्थं, सूरीन् वन्दनपूर्वकम् ॥७४॥ वज्रायाऽऽदिशदा(त्रा)चार्यास्तदर्थे(र्थं) दैवयोगतः । चचाल स तथेत्युक्त्वा, सममन्येन साधुना ॥७५॥ स साधुविधिना गच्छंस्त्रसरेणुनिभान् पथि । विलोक्य पततो बिन्दून्, निवृत्तोऽस्खलितव्रतः ॥ ७६ ॥ अनात्तभिक्षमायान्तं, तमाह्वासत निर्जराः । पुनर्भिक्षाकृते वृष्टिर्निवृत्तेत्यादि भाषिणः ॥ ७७ ॥ ततस्तदाप्रह्वाद् वज्रस्तदावासं गतः सुधीः । उपयोगं ददौ भक्ते, द्रव्य-क्षेत्रादिसम्भवम् ॥ ७८ ॥ कूष्माण्डाद्यत्र वर्षासु, दुर्लभं तदिदं कुतः ? । कर्कशं क्षेत्रमेतत् तु (तु), मृदुता केयमन्धसः ? ॥ ७९ ॥ भावोपयोगे दातारः, कीदृक्षा ? भूस्पृशो न हि । अनिमेषदृशोऽयं तद्, देवपिण्डो ह्यसंशयम् ॥ ८० ॥ अकल्पनीयः साधूनां, तद् गच्छाम्यन्तिके गुरोः । अनात्तभिक्षो ध्यात्वेति, सौनन्देयो न्यवर्त्तत ॥ ८१ ॥ तैः पृष्टः स्पष्टमाचष्ट, भिक्षाऽग्रहणकारणम् । प्रत्यक्षीभूय तेऽप्यूचुः, सौनन्देयमिदं मुदा ॥ ८२ ॥ भगवंस्तव प्राग्जन्म सुहृदो जृम्भ(म्भि)कामराः । वयं हि त्वत्परीक्षार्थमेतां चक्रम कल्पनाम् ॥ ८३ ॥ ततो वैक्रियलब्ध्याख्यां, विद्यां दत्त्वा सुरोत्तमाः । श्रीवज्रस्वामिने स्वं स्वं स्थानं जग्मुरसावपि ॥ ८४ ॥ तैरेव निर्जरैर्ज्येष्ठमासेऽन्येद्युर्बहिर्गतः । वज्रस्वामी वणिग्रूपैर्घृतपूरैर्न्यमन्त्र्यत ॥ ८५ ॥ देवपिण्ड इति प्राग्वत्, नाग्रहीदुपयोगवान् । तैर्नभोगामिनी विद्या, तस्मै तुष्टैरदायि च ॥ ८६ ॥ गच्छान्तर्विहरन् वज्रः, श्रावं श्रावं मुनेर्मुखात् । लब्ध्या पदानुसारिण्यैकादशाङ्गीं स्थिरां व्यधात् ॥ ८७ ॥ यद् यत् पूर्वगतं वज्रोऽधीयमानं महर्षिभिः । शुश्राव श्रव-

ऋषिमण्डलप्रकरणे

॥१९४॥

णाम्यां तद्, जग्राह ग्रहणाऽऽग्रहः ॥८८॥ यदा सूत्रार्थपाठार्थे(र्थं), स्थविराः प्रेरयन्त्यमुम्। जानन् गुणगणाऽऽरावं, स निद्रालुरिव न्यधात्
॥ ८९ ॥ मध्याह्नेऽन्येद्युराचार्याः, कायचिन्ताकृते ययुः। साधवोऽन्येऽपि भिक्षार्थं, स एकोऽस्थादुपाश्रये ॥ ९० ॥ अवस्थाप्याखिलर्षीणां
वेष्टिकामण्डलं क्रमात्। उपविश्यान्तराचार्य इवासौ वाचनां ददौ ॥ ९१ ॥ एकादशाङ्ग्याः कस्याश्चित् कस्याश्चित् पूर्वसङ्गतान्। उच्चै-
रालपकान् वज्रः साधुबुद्ध्याऽध्यजीगपत् ॥ ९२ ॥ इतश्च वसतिद्वारमागात् सिंहगिरिर्गुरुः। श्रुत्वा महमहा(गहगहा)रावं, तस्य दध्या-
विदं हृदि ॥ ९३ ॥ आगताः सद्य एवाद्य, विहृत्य मुनयो ननु। स्वाध्यायं विदधत्युच्चैः, पश्यन्तो वर्त्म मामकम् ॥ ९४ ॥ क्षणं स्थित्वा
विदाञ्चक्रे, सूरिर्वज्रर्षिभाषितम्। दध्यौ चाध्यैष्ट किं गर्भे एवैकादशाङ्ग्यसौ? (एवैकाङ्ग्यसौ शिशुः?) ॥९५॥ माऽस्माकं दर्शने लज्जा,
स्याद् ध्यात्वेति गुरुर्हृदि। चक्रे नैषेधिकीमुच्चैः स्वरेणोपाश्रयाद् बहिः ॥ ९६ ॥ तत् श्रुत्वा सत्वरं वज्रः, पीठादुत्थाय वेष्टिकाः। यथा-
स्थाने मुमोचाऽऽशु, मुनीनां मुद्रिमण्डन(ल)म्(नः) ॥९७॥ एत्याऽऽददे गुरोर्हस्ताद्, दण्डमंह्री ममार्ज च (सः)। ववन्दे विनयात् पादावासनं
चाप्यढौकयत् ॥ ९८ ॥ तत्रस्थानां पदौ तेषां, क्षालयांमास वारिणा। ववन्दे तीर्थवारीव, वज्रो विनयविह्वलः ॥ ९९ ॥ दध्यौ गुरुर्महा-
पात्रं, नररत्नमयं शिशुः। अविज्ञातो ह्यवज्ञाया युज्यते नाऽऽस्पदीभवन् ॥ १०० ॥ शिष्यानाख्यत् ततो रात्रावाचार्योऽस्ति प्रयोजनम्।
अस्माकममुकग्रामे, द्वि-त्र्य(त्रा)हं तत्र यामि भोः! ॥१०१॥ विनेया विनयात् प्रोचुर्भगवन्! योगवाहिनाम्। कश्चिदादिश्यते वाचनाऽऽचार्यः
प्रभुभिः पुनः ॥ १०२ ॥ वज्रो वो वाचनाऽऽचार्य, आचार्य इति तान् जगौ। श्रद्दधानास्तथेत्युक्त्वा, तत्र सर्वं तेऽनुमेनिरे ॥ १०३ ॥
प्रस्थितेऽथ (तु) गुरौ शिष्या, गुरुवाक्कृतनिश्चयाः। आचार्यस्येव वज्रस्य, विनयं चक्रिरेऽखिलम् ॥१०४॥ न्यषीदयन् निषद्यायां, वाचना-
ग्रहणार्थिनः। उपाविशदसौ तत्र, गुर्वादेश इति स्मरन् ॥ १०५ ॥ प्रातःकृत्य-तनूत्सर्ग-वाचनाऽऽदिप्रयोजनम्। स्थिराभ्यासवशाद् वज्रो,

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे तृतीयोंऽशः।

आर्यवज्रस्वामिस्वरूपम्।

॥१९४॥

आर्य-वज्रस्वामि-स्वरूपम् ।

गुमुक्षूणां क्षणाद् व्यधात् ॥ १०६ ॥ ये स्वल्पमतयस्तेऽपि, सुखेनाऽऽलापकादिकम् । वज्रेण सकृदप्युक्तं, जगृहुर्गृहवस्तुवत् ॥ १०७ ॥ गुरूपान्ते कृताभ्यासा, अपि सूत्रार्थवेदिनः । पृष्ट्वाऽसन्दिग्धवां निन्युर्मुनयस्तं स्वसंशयम् ॥ १०८ ॥ शीघ्रं सूत्रार्थसङ्क्रान्तिकलयाऽतुलयाऽन्वितः । गच्छो विसिस्मिये वज्रमुनेर्यशोज्ज्वलैर्गुणैः ॥ १०९ ॥ वाचनाभिरनेकाभिर्यावन्मात्रं महर्षयः । गुर्वन्ते पेठुरप्येकया वज्रान्ते तया श्रुतम् ॥ ११० ॥ गुरूणां चेद् विलम्बः स्यात्, श्रुतस्कन्धः समाप्यते । हृदीदं साधवो दध्युरथागात् सूरिरन्यदा ॥ १११ ॥ सवज्राः साधवः सर्वे, सूरिपादान् ववन्दिरे । पप्रच्छुर्वाचनादीनां, निर्वाहोऽभूत् सुखेन वः ? ॥ ११२ ॥ महर्षयोऽभ्यधुर्देव-गुरुपादप्रसादतः । सोऽभवद् भृशमस्माकमीदृशोऽस्तु सदाऽपि सः ॥ ११३ ॥ सूरीन् व्यजिज्ञपन् शिष्या, भगवन्! भवदाज्ञया । अस्तु नो वाचनाऽऽचार्यो, वज्रो वाग्लब्धिवारिधिः ॥११४॥ आचार्या जगदुर्योग्यो[ऽ]नाऽऽचार्यपदवीक्रमे । श्रुतस्यायं भवश्रुत्याऽभ्यासात् मास्तु नो गुरोः ॥११५॥ सङ्क्षेपानुष्ठानरूपोत्सारकल्पे कृते ततः (व) । आचार्यपदवीयोग्यो, भविता भवतामसौ ॥११६॥ वत्सलं पाठयामास, सूरिरर्थयुतं श्रुतम् । अग्रहीदुमधीः साक्षिमात्रीकृत्याप्यसौ गुरुम् ॥११७॥ गुर्वन्ते दृष्टिवादोऽभूद् (तदभूद्) यावांस्तावानुपाददे(-नप्याददे हि सः) । गुरूणामपि सन्देहलेष्टुमुद्गरतामगात् ॥११८॥ अन्येद्युर्विहरन्नागात्, सूरिर्दशपुरं पुरम् । दध्यौ चास्ति विशालायामाचार्यो दशपूर्ववित् ॥११९॥ एकादशाङ्गीपाठेऽप्यलसायन्ते ममर्षयः । तत् कथं दशपूर्व्येषा, गृह्यते तैस्तपस्विभिः ? ॥ १२० ॥ हुं! [redacted] वज्रनाम्ना(मा)ऽऽस्ते मच्छिष्योऽनल्पधीनिधिः । पदानुसारिलब्ध्याऽसौ, ग्रहीष्यत्यपरो न ताम् ॥ १२१ ॥ इति ध्यात्वाऽऽदिशत् सूरिः, श्रीवज्रं कार्यकर्मठम् । द्राग् गत्वोज्जयिनीपुर्यां, दश पूर्वाण्यधीष्व भोः! ॥ १२२ ॥ न त्व(नात्रा-)लम्भूष्णवश्चान्ये, त्वत्सहाध्यायिसाधवः । सन्तु शासनदेव्योऽपि, सौम्य! सन्निहितास्तव ॥ १२३ ॥ प्रमाणमादेश इति, प्रोच्य वज्रो गुरोः पुरः । मुनिद्वययुतोऽचालीदुज्जयिन्योज्ज-

यिनीं पुरीम् ॥ १२४ ॥ स्वप्नं शुभे क्षणेऽद्राक्षीद्, भद्रगुप्तस्तदागमे । पीतः पतद्ग्रहः क्षीरपूर्ण आगन्तुकेन यत् ॥ १२५ ॥ प्रातः
शशंसुराचार्याः, शिष्येभ्यः स्वप्नमात्मनः । तदर्थं विविधं तेऽपि, प्राहुः प्रज्ञानुसारतः ॥१२६॥ भद्रगुप्त(प्तो) गुरुः स्माह, न जानीथातिथि-
र्मुनिः । कश्चिदेष्यति सूत्रार्थं, मत्तः सर्वं स लास्यति ॥ १२७ ॥ अतिवाह्य पुरद्वारे, श्रीवज्रोऽपि हि शर्वरीम् । भद्रगुप्तगुरुपूतं, प्रात-
रागादुपाश्रयम् ॥ १२८ ॥ उल्लासं कलयन्निन्दुदर्शनादब्धिवद् गुरुः । दध्यौ चाऽऽरोपयाम्यङ्कं, किं वाऽऽलिङ्गामि सस्पृहम् ? ॥ १२९ ॥
प्रसिद्धिसदृशाकारानुमानेन मुनीश्वरः(म्) । [तं] वज्रोऽयमिति निश्चिक्येऽमूढलक्षा(क्ष्या) हि सूरयः ॥१३०॥ तावत् सूरिपदाम्भोजे, श्रीवज्रो
भृङ्गतां ययौ । गाढोत्कण्ठं तमुत्थाप्य(य), दोर्भ्यां सस्वजे प्रभुः ॥१३१॥ पप्रच्छुः सूरयः कच्चिद्, विहारोऽभूत् सुखेन ते ? । कच्चिदङ्गं
निराबाधं ?, कच्चित् ते कुशली गुरुः ? ॥ १३२ ॥ किमर्थमागतोऽसीहेत्यादिप्रश्ने कृते मुनिः । प्राह सर्वत्र नो वार्त्तं, युष्मत्पादप्रसा-
दतः ॥ १३३ ॥ किञ्चाप्येतुं दशपूर्वीमागमं युष्मदन्तिकम् । प्रसद्य दीयतां सद्यो, वाचनाभिरियं मम ॥ १३४ ॥ ततस्तं दश पूर्वाणि,
भद्रगुप्तोऽप्यजीगपत् । गुरोः क्लेशं विना वज्रोऽप्यग्रहीत् तान्युदग्रधीः ॥१३५॥ य(त)त्र चाध्येतुमारब्धं, तत्रानुज्ञा भवेदिति । सिंहगि-
र्यन्तिके गन्तुं, श्रीवज्रं सूरिरादिशत् ॥ १३६ ॥ गृहीताऽऽगमसर्वस्वः, श्रीवज्रो दशपूर्वभृत् । सूर्यादेशाद् दशपुरमाययौ गुर्वधिष्ठितम्
॥ १३७ ॥ अनुज्ञाऽवसरे तत्र, तिर्यग्जृम्भ(म्भि)कनिर्जरैः । पुष्पवृष्ट्यादिना चक्रे, पूर्वप्रीत्या महामहः ॥१३८॥ सिंहगिर्याचार्यवर्यो,
वज्रे न्यस्य गणं ततः । समाधिना शुभध्यानाद्, विपद्य त्रिदशोऽभवत् ॥ १३९ ॥ पुनानश्चरणन्यासैः, श्रीवज्रोऽप्यवनीतलम् । विजहार
हरंश्वेतस्त्रैलोक्योत्तरैर्गुणैः ॥१४०॥ इतश्च पाटलीपुत्रे, धना(न्या)ख्यश्रेष्ठिनः सुता । रूपेण रुक्मिणीवान्या रुक्मिण्याख्याऽस्ति कन्यका
॥ १४१ ॥ श्रेष्ठिनो यानशालायां, तस्य तस्थुर्बहुश्रुताः । श्रीवज्रगच्छवासिन्यस्तपस्विन्यः क्रियापराः ॥ १४२ ॥ अहो ! रूपमहो ! तेज-

आहो! लावण्यमद्भुतम्। एवं वज्रस्य कुर्वन्ति, प्रत्यहं ता गुणस्तवम् ॥ १४३ ॥ ततो जातानुरागाऽस्मिन्, रुक्मिण्युद्भिन्नकण्टका। वज्राऽऽचार्यं पतीयन्ती, प्रतिज्ञामकरोदिमाम् ॥ १४४ ॥ श्रीवज्रो यदि मे भर्त्ता, मोक्ष्ये भोगानहं तदा। नान्यथा तं मनोऽभीष्टं, विना किं तैर्निरर्थकैः ? ॥ १४५ ॥ वरणार्थमथैतस्या, ये केचित् पुनराययुः। मुखमोटनतस्तांस्तान्, रुक्मिणी प्रत्यषेधयत् ॥ १४६ ॥ वज्रं प्रव्रजितं मुग्धे!, वुवूर्षसि कथं वृथा ?। वीतरागं निरारम्भं, साध्व्यस्तामिदमूचिरे ॥ १४७ ॥ साऽप्यूचे भगवत्यश्चेद्, वज्रः प्रव्रजितस्तदा। प्रव्रजिष्याम्यहमपि, या गतिस्तस्य सैव मे ॥ १४८ ॥ इतश्च विहरन्नागात्, पाटलीपुत्रपत्तनम्। श्रीवज्रः सपरीवारः, परोपकृतिकर्मठः ॥ १४९ ॥ श्रुत्वाऽऽयान्तं नरेन्द्रस्तं, नमस्कर्त्तुमुपागमत्। महर्द्ध्याऽध्वनि साधूंश्च, वृन्दीभूतान् ददर्श च (सः) ॥ १५० ॥ सर्वेऽपि सुभगाकाराः, सर्वेऽपि प्रियवादिनः। द्युतिमन्तश्च सर्वेऽपि, सर्वे कारुण्यसिन्धवः ॥ १५१ ॥ वज्राऽऽचार्यः क एतेषां ?, चिन्तयन्निति चेतसा। पप्रच्छ पार्थिवः साधून्, श्रीवज्रोऽस्ति भवान् किमु ? ॥ १५२ ॥ तेऽप्यूचुर्मुनयो राजन्!, न वयं वज्रसूरयः। परमन्तिषदस्तेषामशेषाऽऽगमवेदिनाम् ॥ १५३ ॥ विद्धि ताराभिवाऽऽदित्यं, वज्राचार्यं नृपात्र तम्। अत्रान्तरे नृपोऽद्राक्षीद्, वज्राऽऽर्यं तेजसां चयम् ॥ १५४ ॥ अन्तर्वणं तत्रिवासं, तं समासीनमासने। तेषामचर्चयद् यक्षकर्दमैश्चरणौ नृपः ॥ १५५ ॥ नत्वाऽऽसीने यथास्थानं [illegible]हि पाऽऽरब्धवान् प्रभुः। अज्ञानध्वान्तदीपाभां, देशनां पेशलोक्तिभिः ॥ १५६ ॥ क्षीराश्रवलब्धिनिधेर्वज्रस्याऽऽकर्ण्य देशनाम्। परमामासदत् प्रीतिं, पार्थिवो धूनयन् शिरः ॥ १५७ ॥ ततो नत्वा गुरुं प्रीतोऽन्तःपुरान्तर्नृपोऽविशत्। तदग्रे वर्णयामास, श्रीवज्रस्वामिनो गुणान् ॥ १५८ ॥ प्रियाः! प्रियावहो दृष्टिदृष्टोऽपि हि भवेत् नृणाम्। स मया वन्दितो वज्रस्वामी चाऽऽकर्णिता गिरः ॥१५९॥ तद् यात यूयमप्येनं, नमस्कर्त्तुं प्रभुं द्रुतम्। अवस्थानं न चैकत्र, यदुद्यतविहारिणाम् ॥१६०॥ ता वियन्दिषवः पूर्वमेवाऽऽसन्

आर्य-वज्रस्वामि-स्वरूपम्।

प्रेरिताः पुनः । राज्ञा तत् क्षुधितस्येव मिष्टान्नेन निमन्त्रणम् ॥ १६१ ॥ ततो राजाऽऽज्ञया राज्योऽधिरुह्य शिबिकोत्तमा:(म्) । मनःपवनवेगेन ययुर्वज्राङ्कितं वनम् ॥ १६२ ॥ ध्यायन्ती योगिनीवाऽऽत्मतत्त्वं रुक्मिण्यभूत् सदा । तदा श्रीवज्रमायातं, श्रुत्वा तातमदोऽवदत् ॥ १६३ ॥ तात ! वज्रकुमाराय, देहि मां पुनरन्यथा । प्राणांस्त्यक्ष्यामि वह्न्यादौ, भ्रावरेखेव गीरियम् ॥ १६४ ॥ त्यक्त्वा कुलीनकन्याऽर्हां, लज्जां तात ! ब्रवीमि यत् । तत् तस्य सद्यः प्रस्थानशङ्कैव हि निबन्धनम् ॥ १६५ ॥ तस्याः श्रेष्ठीति निर्बन्धाद्, धनकोट्या समं कनीम् । विवाहयोग्यनेपथ्यामनैषीद् वज्रसन्निधौ ॥ १६६ ॥ आचष्ट स्पष्टवाक् श्रेष्ठी, श्रीवज्रं भगवन्निमाम् । कन्यां स्वयंवराऽऽयातां, कृतार्थय करग्रहात् ॥ १६७ ॥ तस्थौ सङ्क्षिप्य रूपं स्वं, तद्दिनाद् ह्यस्तने दिने । भगवान् नगरक्षोभशङ्कार्थं प्राकृताऽऽकृतिः ॥ १६८ ॥ जनाः प्रोचुः प्रभोर्वाणी, यादृशी तादृशी पुनः । आकृतिः स्यात् तदा स्वर्णं, सुगन्धं विश्ववल्लभम् ॥ १६९ ॥ ज्ञात्वा ज्ञानेन तद्भावं, चक्रे वैक्रियशक्तितः । सहस्रपत्रमम्भोजं, वज्रः पद्माम्बुजोपमम् ॥ १७० ॥ तस्योपर्यात्मनो रूपं, कृत्वा स्वाभाविकं प्रभुः । उपाविशद् जनो वीक्ष्य, विस्मयादिदमूचिवान् ॥ १७१ ॥ अहो ! (दः) स्वाभाविकं रूपं, केनचिद् हेतुना नु (तु) तत् । सूरिणा ह्यः कृतमहो !, शक्तिरेषां गरीयसी ॥ १७२ ॥ राजा प्राह प्रभोर्लेब्धिर्यथेष्टरूपनिर्मितौ । रूपं निरूपयन् श्रेष्ठी, स्वकन्यामप्यवर्णयत् ॥ १७३ ॥ प्रभुणा सर्वलोकानां, तदानीं देशनाऽर्पिता । तदर्थो नालगत् श्रेष्ठिचित्ते लेपवदम्बरे ॥ १७४ ॥ श्रेष्ठ्याह कामराकारस्त्वं ? केयं मर्त्यकीटिका ? । तथाऽप्यामहतोऽस्माकमुद्वहेमां कनीं मम ॥ १७५ ॥ द्रव्यकोटि(टी)रिमास्तुभ्यं, दास्यामि करमोक्षणे(चने) । इत्यर्थलोभवाक्येऽपि, न प्रभोरक्षुभत् मनः ॥ १७६ ॥ प्रत्युत प्राह भोः श्रेष्ठिन् !, विषया विषसन्निभाः । आपातमधुराः काले, प्रेत्यात्रापि च दुःखदाः ॥ १७७ ॥ तीव्रानुरागिणी कन्या, मय्येवं(यीयं) यदि वर्तते । स्वीकरोतु तदा दीक्षामेकान्तसुखदायिनीम् ॥ १७८ ॥

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे तृतीयोऽशः ।

आर्यवज्रस्वामिस्वरूपम् ।

आर्य-वज्रस्वामि-स्वरूपम् ।

तत् श्रुत्वा लघुकर्मत्वात्, प्रबुद्धा रुक्मिणी ततः । प्राव्राजीद् वज्र एवैको, मम स्वामीति वादिनी ॥ १७९ ॥ अहो ! निर्लोभताऽमीषां, कन्यायां विभवेषु च । इत्युक्त्वा बहवो लोका, जगृहुर्धर्ममार्हतम् ॥ १८० ॥ आचाराङ्गस्थितमहापरिज्ञाऽध्ययनात् प्रभुः । पदानुसारिलब्ध्योदधार विद्यां खगामिनीम् ॥ १८१ ॥ ततो बभाण सूरीन्द्रो, ममोच्चैर्विद्ययाऽनया । जम्बूद्वीप(पाद्)भ्रमणेऽस्ति, शक्तिरामानुषोत्तरम् ॥ १८२ ॥ धार्या मयैव विद्येयं, दातव्याऽत्र न कस्यचित् । अल्पर्द्धयोऽल्पसत्त्वाश्च, भाविनो मनुजा यतः ॥ १८३ ॥ प्राचीतः प्रभुरन्येद्युरुत्तरस्यां गतो दिशि । तदा तत्राभवद् रौद्रं, दुर्भिक्षं भिक्षुदुःखदम् ॥ १८४ ॥ तदोनोदरि(र)तां चक्रुर्जैना मुनिवदन्वहम् । संयमिरेऽतिरङ्कत्वात्, सत्रशाला अपीश्वरैः ॥ १८५ ॥ स्फोटं स्फोटं स्फुटं रङ्का, दधिभाण्डानि चत्वरे । लिलिहुस्तत्कपालस्थं, कुर्कुरा इव तद् दधि ॥ १८६ ॥ अप्याच्छिद्य करात् यूनां, भक्ष(क्ष्य)वस्तूनि बभ्रसुः, क्षुत्क्षामकुक्षयः साक्षाद् राक्षसा इव रङ्ककाः ॥ १८७ ॥ पत्य श्रद्धालवोऽप्युच्चैर्भिक्षादोपानदर्शयन् । भक्तलोभेन दम्भेन, साधुष्वप्यतिथिष्वहो ! ॥ १८८ ॥ एवमेकान्तधान्यैकध्याने जाते जनेऽखिले । सङ्घो व्यजिज्ञपद् वज्रस्वामिनं विनयाद् गुरुम् ॥ १८९ ॥ निस्तारय कृपासारास्मानत्राऽऽपत्पयोनिधेः । सङ्घे प्रयुक्ता विद्याऽपि, न दोषाय महात्मनाम्(नः) ॥ १९० ॥ ततः कृपार्णवो वज्रो, विचक्रे विद्ययाऽऽत्मनः । पटं विस्तीर्णमास्तीर्णं, चक्रिणश्चर्मरत्नवत् ॥ १९१ ॥ तत्र वज्राऽऽज्ञया सङ्घोऽप्यारुरोहाखिलोऽर्दितः । पोते वणिक्सार्थ इवोत्पपात स पटोऽम्बरे ॥ १९२ ॥ इतश्च दत्तनामाऽऽसीत्, सूरेः शय्यातराग्रणीः । जलार्थं स गतोऽद्राक्षीत्, सङ्घाऽऽयातस्तद(म)म्बरे ॥१९३॥ प्रत्युत्पन्नमतिर्दत्तः, केशानुत्खाय चाभ्यधात् । वर्षं शय्यातरः प्राक् तेऽधुना साधर्मिकोऽप्यहम् ॥ १९४ ॥ तत् मां निस्तारयास्मात्, व्यसनाद् गुरुराडपि । उच्चैर्निशम्य तद्वाचं, सूत्रार्थमनुस्मरत् ॥ १९५ ॥ "ये साधर्मिकवात्सल्ये, स्वाध्याये संयमेऽपि च । तीर्थप्रभावनायां चोद्युक्तास्तांस्तारयेत् मुनिः ॥१९६॥"

आर्यवज्रस्वामिस्वरूपम् ।



ततो वज्रर्षिणा दत्तः, पटेऽध्यारोपि धीमता । चचाल स पटो व्योम्नि, वातोत्क्षिप्तार्कतूलवत् ॥ १९७ ॥ भगवान् सह सङ्घेनापश्यद् व्योम्नि पटस्थितः । करामलकवत् क्षोणीं, समुद्राद्रि-द्रुमाकुलाम् ॥ १९८ ॥ व्यन्तरैरर्च्यमानोऽसौ, दत्तार्घः खे(ख)चरामरैः । विद्याधरैर्वर्ण्यमानो, भक्तिप्रह्वैः पटस्थितः ॥ १९९ ॥ नित्यानित्यानि चैत्यानि, वन्दमानो नभोऽध्वनि । पटेन वायुवेगेन, पुरीं नामाऽऽसदत् पुरीम् ॥२००॥ [युग्मम्] तस्यां सुभिक्षमेवासीद् धान्याढ्यायां सदा तदा । श्राद्धान् विनाऽखिलो लोको, बौद्धभक्तो नृपादिकः ॥ २०१ ॥ कुर्वन्ति स्पर्द्धया श्राद्धा बौद्धाश्चान्योन्यमर्हणां (वराम्) । स्वतीर्थपस्य पुष्पाद्यैर्जैनैस्ते जिग्यिरे पुनः ॥२०२॥ पूजोपकरणं यद् यत्, पुरान्तर्ददृशुर्दृशा । बहुमूल्यार्पणात् श्राद्धास्तत् तद् जगृहुरद्भुतम् ॥२०३॥ आसीत् चैत्येषु जैनाना, पुष्पाद्यैरर्हतोऽ(द्भुता-)र्हणा । न तथा बौद्धचैत्येषु, स्वल्पद्रव्यव्ययादसौ ॥ २०४ ॥ हीनैर्बौद्धैस्ततो बौद्धभक्तं विज्ञप्य पार्थिवम् । पुष्पाणि पुष्पलाविभ्यो, निषिद्धानि जिनालये ॥ २०५ ॥ इतश्चोपस्थिते पर्युषणापर्वण्यनुक्रमात् । सङ्घो दीनाननो वज्रमेवमेत्य व्यजिज्ञपत् ॥ २०६ ॥ स्मृतिः श्रुते रवेरेव, प्रनष्टे भगवन् ! भवेत् । तदिदानीमयं सङ्घः, सन्तमस्त्वामुपस्थितः ॥ २०७ ॥ पूर्णाथेन निषिद्धानि, पुष्पाणि जिनसद्मनि । तैर्विना स्यात् कथं पूजाऽर्हद्बिम्बानां प्रमोददा ? ॥ २०८ ॥ बहुमूल्यार्पणेनापि, प्राप्यन्ते कुसुमानि न । राजाऽऽदेशाद् यतो राज्ञामाज्ञां कोऽपि न लङ्घते ॥ २०९ ॥ तुलसीवर्बरैः(री)पत्रैः, पूज्यन्ते ग्रामयक्षवत् । बिम्बानि हा ! धिगस्माकं, जीवितेन धनेन किम् ? ॥२१०॥ अङ्गुलीभिर्गणयतां, दिनानां दिनमागतम् । एतत् पर्युषणापर्वाभिधमस्माकमीप्सितम् ॥ २११ ॥ तत्रापि यतिवद् भावपूजैव चेद् विधीयते । पुष्पाभावात् ततो बौद्धैर्जिता एते मृता इव ॥ २१२ ॥ त्वयि सत्यपि यूथेशे, बौद्धैर्यदि जिता अमी । ईदृशैस्तर्हि सिंहस्य, कुलं श्वभिरभिद्रुतम् ॥ २१३ ॥ तत् श्रुत्वाऽऽख्यत् प्रभुः श्राद्धाः !, समाश्वसित साम्प्रतम् । यतिष्येऽहं तथा तेजोवृद्धिर्वो भविता यथा ॥ २१४ ॥ तानित्याश्वास्य भगवानु-

आर्य-वज्रस्वामि-स्वरूपम् ।

त्पपात सुपर्णवद् । व्योम्नि क्षणार्द्धमात्रेणाऽऽप च माहेश्वरीं पुरीम् ॥२१५॥ हुताशनस्य देवस्योपवने तत्र च प्रभोः । पितुर्मित्रं तडिताख्यः, समस्त्युद्यानपालकः ॥ २१६ ॥ अनभ्रवृष्टिवद् वज्रमागतं वीक्ष्य हर्षभाक् । स प्राहेयं तिथिर्धन्या, यत्राऽऽयातोऽतिथिर्भवान् ॥२१७॥ ब्रूताऽऽर्याः! केन कार्येण, जनोऽयं पावनीकृतः ? । प्रभुः प्राह स सद्भावें, पुष्पैर्मेऽस्ति प्रयोजनम् ॥२१८॥ तडिताऽऽरामिकः प्रोचे, स्वामिन्नुपवने मम । पुष्पविंशतिलक्षाण्युत्तरन्ति प्रत्यहं प्रगे । वज्रोऽवक् तानि सर्वाणि, पुष्पाणि प्रगुणीकुरु ॥२१९॥ आद्यास्यन्तेऽमतो गत्वा, प्रत्यावृत्तैस्ततः पुनः ॥२२०॥ उत्पपात पुनर्वज्र, इत्युक्त्वा व्योम्नि वायुवत् । गङ्गा-सिन्धुजलस्ना(स्था)नाऽऽसक्तस्वर्नाथसिन्धुरम् ॥ २२१ ॥ प्रारब्धकिन्नरीगीतस्तम्भितैणकदम्बकम् । अक्षुद्रः क्षुद्र-हिमवद्गिरिं प्राप क्षणार्द्धतः ॥ २२२ ॥ [ युग्मम् ] तत्र सहस्रपत्राद्यैरब्जभेदैरधिष्ठितम् । दृशोर्ददर्श पीयूषकुण्डं पद्महृदं प्रभुः ॥ २२३ ॥ तस्यान्तरेऽस्ति श्रीदेवीसद्म पन्नगणाङ्कितम् । गायद्देवाङ्गनावृन्दमुखरीकृतदिङ्मुखम् ॥ २२४ ॥ अवचित्यैकमम्भोजं, तदा देवार्चनाकृते । यान्ती वज्रर्षिमैक्षिष्ट, श्रीदेवी देवतागृहम् ॥ २२५ ॥ सा वज्राङ्घ्रीन् नमस्कृत्य, प्राह पादावधारिताः । प्रयोजनेन केनापि, किं वाऽहन्नीश्वरेच्छया ? ॥२२६॥ कार्यमादिशतेत्युक्ते, वज्रोऽवादीत् करस्थितम् । ममार्पयैतदम्भोजं, मन्मनोऽम्भोजभास्करम् ॥ २२७ ॥ श्रीदेवी साह भगवन्निदं किं स्वल्पमार्थितम् ? । आनयाम्यस्मि पुष्पाणि, शक्रोपवनजान्यपि ॥ २२८ ॥ भक्त्या ववन्दे तद् दत्त्वा, श्रीदेवी प्रभुरप्यथ । हुताशनसुरोद्यानमुत्पत्यागाद् विहायसि ॥ २२९ ॥ विचक्रे विद्यया तत्र, विमानं पालकोपमम् । विंशतिपुष्पलक्षाणि, चिक्षेपाक्षेपतः प्रभुः ॥ २३० ॥ ततः सस्मार वज्रर्षिः, तिर्यग्जृम्भ(म्भि)कनाकिनः । तेऽप्याययुः स्मृतमात्रा, मात्राऽऽहूता इवार्भकाः ॥२३१॥ श्रीदेवीदत्तपद्मस्याधस्तात् छत्राऽऽकृतेः प्रभुः । पार्श्वे निक्षिप्य पुष्पाणि, तद्यानेनाम्बरेऽचलत् ॥ २३२ ॥ यानाधिरूढाः सञ्चेलुः, ते तिर्यग्जृम्भ(म्भि)कामराः । वादित्र-नृत्य-गीता(गीत-नृत्या)दि

कुर्वन्तः प्रभुपृष्ठतः ॥२३३॥ आगात् निमेषमात्रेण, पुरीं नाम पुरीं प्रभुः। जनानां दर्शयन् यानैः, शरदभ्रभ्रमक्रमम् ॥२३४॥ बौद्धाः प्रोचुरयोत्सया, महिमा बौद्धशासने । तद्भक्तिं कर्तुमायान्ति, यदेतेऽहो ! सुरा अपि ॥२३५॥ श्वपाकपाटकमि(इ)व, बौद्धाऽऽयतनसञ्चयम् । त्यक्त्वा वज्रर्षिरायातोऽर्हच्चैत्ये देवसेवितः ॥२३६॥ तत्र देवैः कृतामर्चां, मषीधौताऽऽनना इव । बौद्धा वीक्ष्यावदन्नर्हद्दर्शने महिमा महान् ॥ २३७ ॥ अर्हच्चैत्ये कृतामर्चां, दिव्यामालोक्य पार्थिवः। सप्रजः श्रावको(जोऽप्यार्हतो)जज्ञे, बौद्धधर्मं विहाय तम्॥ २३८ ॥ ततश्च विहरन्नागाद्, वज्रर्षिर्दक्षिणापथम् । इवार्कः कर्कसङ्क्रान्तो, स्वपदे रोदसीं स्पृशन् ॥२३९॥ तत्रत्यस्तं जनो वीक्ष्य, देशनावारिवारिदम् । केकीव हर्षभाग् जज्ञे, स्मरंस्तांस्तान् गुणान् गुरोः ॥२४०॥ वज्रर्षेश्चान्यदा जज्ञे, श्लेष्मबाधाऽविदुस्सहा । कञ्चनाऽऽनेतुमादिक्षत् , महर्षिं वि(-र्षिर्वि-) श्वभेषजम् ॥२४१॥ विहृत्य तेन तत् तेषां, वृत्तं भुक्त्वाऽनु चाऽऽनने । क्षेप्स्यामीत्येष निश्चित्य, कर्णोपरि न्यधात् तदा ॥२४२॥ स्वाध्यायध्यानव्यग्रस्य, विस्मृत्य तदगाद् विभोः । प्रायो हि·त्रिविधाहारप्रत्याख्यानं यतेर्यतः ॥ २४३ ॥ प्रत्युपेक्षयतः कायं, मुखवस्त्रिकया प्रभोः । च(त्व)टत्कृत्यापतत् शुण्ठी, सन्ध्याऽऽवश्यककर्मणि ॥ २४४ ॥ वज्रस्तां पतितां वीक्ष्य, दध्यौ धिङ् मे प्रमादताम् । तयाऽकलङ्कं चारित्रं, न स्यात् स्वस्वार्थसाधकम् ॥२४५॥ त्यागाय तस्यास्तद् देहत्यागं कुर्मोऽधुना वयम् । दुर्भिक्षमभवद् रौद्रं, सर्वतो द्वादशाब्दिकम् ॥२४६॥ इति निश्चित्य वज्रर्षिः, श्रुताकूपारपारगम् । स्वशिष्यं वज्रसेनाख्यमादिक्षदिति सौष्ठवम् ॥ २४७ ॥ वत्स ! यत्राऽऽमुया भिक्षां, लक्षमूल्यौदनोद्भवाम् । तद्दिनादवबुध्येथाः, सुभिक्षमुपसि स्फुटम् ॥ २४८ ॥ इत्यादिश्य तमन्यत्र, विहर्तुं प्रभुरादिशत् । ग्रामाऽऽकर-पुराप्रण्यां, पदैः पस्पर्श सोऽपि गाम् ॥ २४९ ॥ वज्रान्ते वर्तिनो भिक्षां, लेभिरे न महर्षयः । गृहे गृहे भ्रमन्तोऽपि, कूटाकूटोत्तरच्छलात् ॥ २५० ॥ अनन्याजीविकोपाया, बुभुक्षाक्षामकुक्षयः । विद्याहृतं च ते(वज्रविद्याहृतं) सर्वे, देवपिण्डममुञ्जत ॥ २५१ ॥ भोक्तव्यो



आर्यवज्रस्वामिस्वरूपम् ।

आर्य-वज्रस्वामि-स्वरूपम् ।

द्वादशाब्दानि, देवपिण्डो महर्षयः! । वज्रः स्माह महादोषदूषितोऽप्यर्हदागमे ॥२५२॥ तत् चेद् वः संयमे कार्यं, तत् तत्त्यागं विदध्महे । इत्युक्तास्तेऽभ्यधुर्धर्ममतयो यतयोऽप्यदः ॥ २५३ ॥ तेन पिण्डेन पिण्डेन, व्रतविप्लवकारिणा । किं कार्यं तत् प्रसीदाऽऽर्य !, यत् त्यजामो द्वयं वयम् ॥ २५४ ॥ ततः सर्वान् मुनीञ्ज्ञात्वा, वज्राऽऽचार्याः प्रतस्थिरे । क्वापि ग्रामे प्रतार्यैकं, क्षुल्लं चाऽऽरुरुहुर्गिरिम् ॥ २५५ ॥ क्षुल्लोऽप्यक्षुल्लधीर्दध्यौ, भूवं माऽप्रीतिकृद् गुरोः । दृष्ट इत्यचलस्याधः स्थितोऽनशनकर्मणा ॥ २५६ ॥ मध्याह्नार्कोग्रकिरणैरतितप्ते शिलातले । विलीनो नवनीतस्य, पिण्डवत् क्षुल्लकः क्षणात् ॥ २५७ ॥ तस्मिन् देवाङ्गनानेत्रपद्मभृङ्गत्वमीयुषि । एत्योन्मुदः सुराश्चक्रुरर्हणां तस्य वर्ष्मणः ॥ २५८ ॥ पप्रच्छ वज्रमृषयोऽवतरन्त्यत्र किं सुराः ? । सोऽप्यूचे साधितं तेन, स्वकार्यं क्षुल्लकर्षिणा ॥ २५९ ॥ महिमां कर्तुमायान्ति, व्योम्नोऽस्य तदमी सुराः । तत् श्रुत्वा मुनयो दध्युः, स्वार्थोऽर्भेणापि साधितः ॥ २६० ॥ तद् वयं साधयामः किं, न स्वार्थं वृद्धसाधवः ? । ध्यात्वेति तस्थुः संवेगवेगवन्तोऽखिलर्षयः ॥ २६१ ॥ अथ तद्गिर्यधिष्ठात्री, मिथ्यादृग् देवता मुनीन् । वीक्ष्य क्षोभार्थमाचख्यौ, भवतामद्य पारणम् ॥ २६२ ॥ तद् गृह्णीत सिताक्षोदमोदकादीन् ममाऽऽग्रहात् । तत् श्रुत्वा दध्युर्ऋषयोऽवग्रहोऽप्रीतिकृद् ह्ययम् ॥ २६३ ॥ तदासन्नगिरौ गत्वा, ह्यवस्थाप्य तत्सुरीम् । कायोत्सर्गेण तस्थुस्ते, साऽप्येत्येदमभाषत ॥ २६४ ॥ स्वामिनोऽनुमहोऽयमहार्थनेन कृतो मयि । इत्युक्ताः सुस्थिताऽऽत्मानस्ते तस्थुस्तत्र साधवः ॥ २६५ ॥ प्रपाल्यानशनं सम्यक्, ते वज्रेण सहर्षयः । कालं समाधिना कृत्वाऽलभ्रकुस्विदशश्रियम् ॥ २६६ ॥ ज्ञात्वा प्रदक्षिणीकृत्य, तं गोत्रं गोत्रभित् तदा । श्रीवज्रादिमहर्षीणां, शरीराण्यप्यपूजयत् ॥ २६७ ॥ रथस्थप्रदक्षिणया, नम्रीभूताश्च ये द्रुमाः । हरेरद्यापि वर्त्तन्ते, तेन तत्र(तत्रैव) तथास्थि(श्रि)ताः ॥ २६८ ॥ ततो लेभे रथावर्त्तं, इत्याख्यां स गिरिस्ततः (दा, था) । व्युच्छिन्नं दशमं पूर्वं, तुर्यं संहननं तथा ॥२६९॥ वज्रसेनोऽपि सोपारं, पुरं प्राप्तो

आर्यवज्रस्वामिस्वरूपम् ।



भ्रमन् महीम् । जितशत्रुश्च यत्राऽऽस्ते, यथार्थः पार्थिवाग्रणीः ॥२७०॥ तत्प्रिया धारिणी नाम(तत्र), जिनदत्ताभिधो धनी । अस्यास्तिक-
शिरोरत्नं, नाम्ना तस्येश्वरी प्रिया ॥ २७१ ॥ सतीमतल्लिका सा नु (तु), शीलादिगुणधारिणी । तदा दुर्भिक्षदोषेण, विनाऽन्नैः पीडिता
क्षितिः ॥२७२॥ अन्येद्युरीश्वरी श्राद्धी, बन्धूनाहूय चाभ्यधात् । जीविता [ः] स इयत्कालं, भो भद्रा ! भद्रकर्मणा ॥ २७३ ॥ धान्या-
भावाद्यो(था)ऽन्येषा, पुरः करप्रसारणम् । न (मा) कुर्मो यत् क्षुधाऽऽक्रान्ताः, किमकृत्यं न कुर्वते ? ॥ २७४ ॥ तस्मात् सविषमाहारं,
भुक्त्वा पण्डितमृत्युना । स्मृतपञ्चनमस्काराः, साधयामः समीहितम् ॥ २७५ ॥ सर्वेऽपि स्वजनास्तस्याः, स्वीचक्रुस्तद्वचो हितम् ।
पक्तुमारेभिरे लक्षमूल्यान्नैस्तेऽप्यथौदनम् ॥ २७६ ॥ क्षिपन्ति न विषं यावत्, तन्मध्ये तावदागमत् । वज्रसेनो मुनिस्तेषां जीवातुरिव
मूर्त्तिमान् ॥ २७७ ॥ तमालोक्येश्वरी श्राद्धी, दध्यौ धन्यो जनोऽप्ययम् । इदृशेऽवसरे प्राप्ते, यदीदृक्पात्रसङ्गमः ॥ २७८ ॥ दत्त्वा
तदस्मै पात्रायैतदन्नं जन्म जीवितम् । कुर्वे सफलमित्युक्त्वा, दत्ता भिक्षामदात् मुदा ॥ २७९ ॥ वृत्तान्तं चाभ्यधाल्लक्षमूल्यप्राप्तौदनोद्भवम् ।
तत् श्रुत्वा वज्रसेनोऽवक्, म्रियध्वं तर्हि मा मुधा ॥ २८० ॥ सुभिक्षं भविता प्रातः, तत् श्रुत्वाऽवददीश्वरी । भगवन् ! स्वतोऽन्यतो
वा, ज्ञातमेतत् त्वया किमु ? ॥ २८१ ॥ मुनिराहाऽऽस्तिके ! वज्रस्वामिना प्रोक्तमस्ति मे । यदा त्वमाप्नुया भिक्षां, लक्षमूल्यौदनोद्भवाम्
॥ २८२ ॥ सुभिक्षं भविता प्रातस्तदेत्याकर्ण्य साऽऽस्तिका । हर्षामृतप्लुता शेषं, क्षणाद् दिनमलङ्घयत् ॥ २८३ ॥ धान्यैः पूर्णं प्रभाजाले-
श्चण्डांशोरिव मण्डलम् । दूरादागतमद्राक्षीत् पोतचक्रं प्रगे जनः ॥ २८४ ॥ पिप्रिये सेश्वरी श्राद्धी, तत्रत्योऽन्यो जनोऽपि च । कियन्तं
वज्रसेनोऽपि, कालं तत्र स्थितो मुनिः ॥२८५॥ विधायार्चां जिनार्चानां, सप्तक्षेत्रेषु चाऽऽत्मनः । उप्त्वा धनं धनं श्राद्धो, जिनदत्ताभिधो
धनी ॥ २८६ ॥ बन्धु-प्रिया-सुतैः सार्द्धं, वज्रसेनर्षिसन्निधौ । समये समयज्ञोऽर्हद्व्रतसाम्राज्यमाददे ॥ २८७ ॥ [ युग्मम् ] एवं शिष्य-

प्रशिष्यादिशाखाभिर्यदशाखियत्। श्रीवज्रस्वामिनो वंशो, भुवि विस्तरमाप्तवान् ॥ २८८॥ चरित्रमत्रापि(ति)पवित्रमेवं, श्रीवज्रसूरेः सुगुरोर्विधाय। यदाप्तुवं पुण्यचयं(फलं)प्रशस्तं, प्रशस्तभावो(च)ऽस्तु जन(नोऽ)स्तु तेन ॥२८९॥ इति श्रीखरतरगच्छशृङ्गारहार-श्रीगुणरत्नाचार्य-[पदं]शिष्यवाचनाऽऽचार्यपद्ममन्दिरगणिविरचितायामृषिमण्डलप्रकरणवृत्तौ श्रीवज्रस्वामिचरित्रं सम्पूर्णम् ॥ [ग्रन्थाग्रं ७५११ ] तथा—

आर्य-वज्रस्वामि-स्तवनम्।

कणगाए वयरसामी, जं उज्झिय उत्तमट्ठमल्लीणो। आराहियं लहुं तेण, खुड्डुगणावि संतेण ॥ २०६ ॥
तस्स य सरीरपूयं, जं कासि रहेहिं लोगपाला उ। तेण रहावत्तगिरी, अज्ज वि सो विस्सुओ जाओ॥ २०७ ॥
सोपारयम्मि नयरम्मि, वयरसाहा विणिग्गया जत्तो। सिरिवयरसामिसीसं, तं वंदे वयरसेणरिसिं॥२०८॥

व्याख्या—तिसृणामपि गाथानामक्षरार्थः सुगमः। भावार्थस्तु श्रीवज्रस्वामिचरित्रे दर्शित एव। नवरम्—"उत्तमट्ठ' त्ति अनशनं, अल्लीणो" त्ति आश्रितः ॥ २०६-२०७-२०८ ॥

अथाऽऽर्यरक्षितं नमस्करोमि(ति)—

आर्य-रक्षित-सूर्यादिमुनि-परिचयः।

नाऊण गहण-धारणहाणिं, चउहा पिहीकओ जेणं। अणुओगो तं देविंदवंदियं रक्खियं वंदे ॥ २०९ ॥
निप्फायकुलसमाणो, जेण कओ अज्जरक्खिओ सूरी। सुत्तत्थ-तदुभयविऊ, तं वंदे पूसमित्तगणिं ॥ २१० ॥
तथा—गहियनवपुव्वसारो, दुब्बलियापूसमित्तगणिवसहो। वंझो अवंझपाढो, न ण्णोहिओ परपवाएहिं ॥ २११ ॥

व्याख्या—तिसृणामपि गाथानामक्षरार्थः सुगम एव। नवरम्—"नाऊण" इत्यादि 'येन' भगवता ग्रहण-धारणयोः—सम्यक्परिच्छेद-स्मरणस्थापनयोः हानि-ह्रासं विज्ञाय 'चतुर्धा' चतुःप्र(प्र)कारः चरणकरणानुयोग-गणितानुयोग-धर्मकथानुयोग-द्रव्यानुयोगभेदात्

"पिहो" इति पृथक्कृतः, कोऽसौ ? अनुयोगः । अयं भावः—पूर्वं हि एकस्यामेवागमगाथायां चत्वारोऽप्यनुयोगा व्याख्यायमाना आसन्, यथा चतुर्दशपूर्वधरश्रीभद्रबाहुस्वामिकृतावश्यकनिर्युक्तिगाथायाम्—"पउमाभ-वासुपुज्जा, रत्ता ससि-पुप्फदंत ससिगोरा । सुव्वय-नेमी काला, पासो मल्ली पियंगाभा ॥ १ ॥" इत्यस्यां गाथायाम् । तद्व्याख्यानं विस्तरार्थिना श्रीजिनप्रभसूरिकृतैतद्गाथाविवरणतो ज्ञेयम् । यदा त्वेकैकाऽऽगमगाथा चतुर्भिरनुयोगैर्व्याख्यायते तदा कालदोषात् पाश्चात्या अल्पमतयो ग्रहीतुं भणित्वा पश्चात् चित्ते स्थापयितुं च न शक्नुवन्तीति तैर्हि भगवद्भिस्तेषामनुग्रहाय पृथक् कृतोऽनुयोगः । कस्याञ्चिद् गाथायां कोऽप्यनुयोगः, कस्याञ्चिन् कोऽपि, एवं पृथक्करणे पाश्चात्यानां सुखावबोधो जात इति वृद्धाः । तथा "निप्फाव" इत्यादि येन पुष्पमित्रेणाऽऽर्यरक्षितः स्वगुरुर्निष्पावकुटसमानः कथः 'निप्फावाः' वल्लाः 'कुटाः' घटाश्चोच्यन्ते, अयं भावः—यथा वल्ला घटाद् घटान्तरे क्षिप्यन्ते तदा सर्वेऽपि मङ्क्षामन्ति न केऽ(कोऽ)पि पश्चात् तिष्ठन्ति(ति) । एवं तेनापि सूत्रार्थौ गृहीत्वा गुरोः सकाशात् तत्सत्कं सूत्रमर्थं तदुभयं च गृहीतं न किमपि तत्र स्थितमित्यर्थः । तथा विन्ध्यः 'परप्रवादे' बौद्धवादे जयवादी जातः । एषोऽप्यार्यरक्षितसूरिशिष्यः ॥ २०९-२१०-२११ ॥ भावार्थः कथानकादेवोच्यते । तथा हि—

पार्थिवोदायनोपज्ञमास्ते दशपुरं पुरम् । सोमदेवद्विजस्तत्र रुद्रसोमा तु तत्प्रिया ॥ १ ॥ आर्हत्या रुद्रसोमाया, बभूव तनयद्वयम् । नाम्नाऽऽर्यरक्षितो ज्यायानन्यश्च फल्गुरक्षितः ॥ २ ॥ आमौञ्जीबन्धनाद् विद्यामग्रहीत् पितुरन्तिके । ज्यायांश्चाधिकविद्यार्थं, पाटलीपुत्रमागमत् ॥ ३ ॥ तत्राध्यैष्ट षडङ्गानि, वेदांश्चतुर एव च । पुराणं धर्मशास्त्रं च, मीमांसा न्यायविस्तरम् ॥ ४ ॥ चतुर्दश महाविद्यास्थानान्येतान्यसौ सुधीः । अधीत्य पुनरायातो, निजं दशपुरं पुरम् ॥५॥ विद्यावानिति तत्रत्यो, भू(नृ)पोऽभिमुखमाययौ । करिस्कन्धाधिरू-

दोऽसौ, महर्द्धा पुरमाविशत् ॥६॥ बहिःशालास्थितो लोकढौकनान्यार्यरक्षितः । आददे प्रभुभिः पूज्यः, पूज्यः कस्य भवेत् न सः ? ॥७॥ बयन्धुर्बन्धयः स्वस्य, सौधद्वारेषु सम्मदात् । तोरणानि रणत्क्षुद्रघण्टिकाबन्धुराण्यपि ॥ ८ ॥ वधूट्यः पूरयामासुर्मौक्तिकस्वस्तिकान् बहून् । गृहान्तस्तद्गुणश्रेणिप्रशस्त्यक्षरपङ्क्तिवत् ॥ ९ ॥ प्रभूतैः प्राभृतैर्लोकानीतैर्विविधवस्तुभिः । जज्ञे गृहाद् बहिःस्थोऽलं धनवानाऽऽर्यरक्षितः ॥ १० ॥ अन्येद्युः स सुधीर्दध्यौ, प्रमादो मे महानहो ! । न नमस्कृतवान् मातुर्यदद्यापि पदद्वयम् ॥ ११ ॥ मयि देशान्तरं प्राप्ते, मद्वियोगे कथं प्रसूः । अभविष्यद् ? यतस्तस्या, दुःखदं तददर्शनम् ॥ १२ ॥ भयामि नोपकारस्यानृणो मातुस्तपस्यहम् । नाम्नः स्मरन्त्या स्वप्नेऽपि, प्रैषि देशान्तरे यया ॥ १३ ॥ गच्छामि द्रष्टुं तत् स्वाम्बां, ध्यात्वेति स्वच्छवाससी । संवीय दिव्यरागाङ्गः(-व्याङ्गरागः), स्वर्णाऽऽभरणभूषितः ॥१४॥ स्वमातुरन्तिकं गत्वा, नमश्चक्रे पदद्वयम् । गलावलाम्बिवस्वर्णशृङ्खलः सोमदेवभूः ॥ १५ ॥ साऽऽह वत्साक्षयो भूयाः, स्वागतं ते सुतोत्तम ! । इत्युक्त्वा किञ्चिदप्याख्यत्, सा प्रातिवेश्मकीव न ॥ १६ ॥ प्राहाऽऽर्यरक्षितो मातः !, सर्वविद्याऽर्णवे मयि । तोषिताखिलभूपादिलोके प्राप्ते चिरादपि ॥१७॥ भक्तिगर्भे चिरोत्कण्ठाऽकुण्ठे विनयवर्त्तिनि । पूर्वं प्रेमानुपत्तायाः, किमौदासीन्यमस्ति ते ? ॥१८॥ [ युग्मम् ] तत् श्रुत्वाऽऽह प्रसूर्वत्स !, कथं तुष्टिर्भवेत् मम ? । हिंसात्मकानि शास्त्राणि, यदधीत्य त्वमागतः ॥ १९ ॥ तस्माद् (तेभ्यो) हिंसाऽऽत्मकं धर्मं, प्रकाश्य जनतामतः । सुकरो नरकोऽन्येषामात्मनश्च करिष्यते ॥२०॥ तत् तुष्टिर्मे भवेद् दृष्टिवादं त्वं किमधीतवान् ? । तत् निशम्य सुधीर्दध्यौ, शुभकर्माऽऽर्यरक्षितः ॥ २१ ॥ असारेण किमन्येन, तोषितेन जनेन मे ? । तोषयामि न चेदम्बां, सर्वतीर्थामवर्तिनीम् ॥२२॥ प्राहाऽऽर्यरक्षितो मातर्दृष्टिवादस्य पाठकम् । प्रदर्शय गुरुं येनाधीयेऽहं तं तदन्तिकम्(के) ॥२३॥ माताऽऽह साधु साधु त्वमेव मे वर्त्तसे सुतः । प्रमयन्सम्रलं यस्यास्ते मातुर्भक्तिरीदृशी ॥ २४ ॥ पाठकाः श्रमणा एव, दृष्टिवादस्य वत्स ! तत् ।

तेषामुपासको भूया, निष्णातः स्वार्थसाधने ॥ २५ ॥ क्वाधुना सन्ति ते मातः !?, पप्रच्छेत्यार्यरक्षितः । साऽऽह तोसलिपुत्राख्याऽऽ-
चार्याः सन्तीक्षुवाटके ॥ २६ ॥ तत् श्रुत्वा चिन्तयंश्चित्ते, दृष्टिवादार्थमर्थवित् । दर्शनानां विचार इत्याप निद्रां स नो निशि ॥ २७ ॥
उत्तस्थौ सद्य एवासौ, प्रातस्तत्पठनोत्सुकः । इतश्च तत्पुरासन्ने, सखा ग्रामेऽस्ति तत्पितुः ॥ २८ ॥ स चाऽऽर्यरक्षितं श्रुत्वाऽऽयातं
न गतवासरे । आयातोऽभूद्याऽऽयावः, प्रातस्तन्मिलनोत्सुकः ॥ २९ ॥ नवेक्षुदण्डान् सम्पूर्णान्, खण्डमेकं च हस्तगम् । कृत्वाऽऽर्यर-
क्षितस्याऽऽगात्, सम्मुखं दैवयोगतः ॥३०॥ बाहुभ्यां सस्वजेऽत्यर्थं, मित्रपुत्रं स सम्मदात् (-त्रममुं मुदा)। ऊचे च ह्यः कुटुम्बार्थं(र्थे) व्यग्र-
त्वात् नाऽऽगतोऽस्मि भोः ! ॥ ३१ ॥ इक्षुदण्डान् गृहाणैतान्, प्रीत्या ते प्राभृतीकृतान् । तानार्यरक्षितो नत्वा, तं द्विजं प्रत्यदोऽवदत्
॥ ३२ ॥ एतान् मद्वचसा तात !, मन्मातुरुपदीकुरु । वाच्यं तस्याश्च यत् पूर्वं, मिलितो मे सुतस्तव ॥ ३३ ॥ ततो गत्वा द्विजो मातु-
र्दत्त्वा तांश्च तदब्रवीत् । सा दध्यौ नव पूर्वाणि सार्द्धान्येष पठिष्यति ॥ ३४ ॥ पथ्यार्यरक्षितो गच्छन्नचिन्तयदिदं हृदि । नवाध्येष्ये
भुवमहं, पूर्वाण्यध्ययनानि वा ॥ ३५ ॥ क्रमादिक्षुगृहद्वारं, प्राप्तो दध्यौ स सोमभूः । प्रविशामि वसत्यन्तरजानानो विधिं कथम् ?
॥ ३६ ॥ स्थित्वा क्षणं यदैतेषामेति कश्चिदुपासकः । तदा तदनुसारेण, गच्छामि गुरुसन्निधौ ॥ ३७ ॥ इतश्च ढड्ढरो नाम, श्राद्धस्तत्रा-
ऽऽगतः क्षणात् । वसतिं स विशन्नुच्चैश्चक्रे नैषेधिकीत्रयम् ॥ ३८ ॥ प्रतिक्रम्यैर्यापथिकीं, गुरून् नत्वा मुनीनपि । प्रतिलिख्य स भूपीठं,
यथास्थानमुपाविशत् ॥ ३९ ॥ उच्चैः स्वरेण स श्राद्धश्चक्रे सर्वं विधिं सुधीः । तमार्यरक्षितोऽप्यार्यो, दक्षस्तत्पृष्ठगोऽतनोत् ॥ ४० ॥
परं नावन्दत श्राद्धं, ढड्ढरं सोमदेवभूः । विधेरदर्शनात् तस्य, निराम्नाये कियद्ज्ञता ? ॥ ४१ ॥ तं दृष्ट्वा गुरवो दध्युर्नवीनोऽयमुपा-
सकः । आभाषितश्च तैः श्राद्ध!, धर्मोऽस्ति ते कुतो गुरोः ? ॥ ४२ ॥ असत्यगिरिदम्भोली, रुद्र-सोमाऽऽत्मजोऽवदत् । श्राद्धादमुष्माद्

भगवन्!, धर्मोऽस्तिरधुनैव मे ॥ ४३ ॥ ततोऽन्ये साधवोऽवोचन्, रुद्रसोमाऽऽत्मजो ह्ययम् । यः कल्ये भगवन्! राज्ञा, पुरं स्फीतया प्रवेशितः ॥ ४४ ॥ उत्कटाऽऽद्यगुणस्थानवर्त्तिनां धुरि खल्वयम् । श्राद्धाचारं स्पृशत्येष, छद्मना कौतुकेन वा ॥ ४५ ॥ अथाऽऽर्यरक्षितोऽवादीत्, नाभूवं श्रावकः पुरा । इदानीमेव जातोऽस्मि, वचसा मातुरात्मनः ॥ ४६ ॥ अध्यापयन्तु तत् पूज्या !, दृष्टिवादं प्रसद्य मे । आचार्यो जगदुर्वत्स !, तत्पाठो न व्रतं विना ॥ ४७ ॥ व्रताऽऽदानेऽपि तत्पाठः, क्रमादेव भवेत् पुनः । प्राहाऽऽर्यरक्षितः स्वामिन् !, दीयतां तदपि द्रुतम् ॥ ४८ ॥ ततस्तोसलिपुत्राख्याऽऽचार्या ज्ञात्वाऽस्य योग्यताम् । प्रव्रज्यां ग्राहयामासुर्योच्चा मोघा न साधुषु ॥ ४९ ॥ विहारः क्रियतां स्वामिन्नन्यत्रावगणय्य तत् । उत्कृष्टं कष्टमप्यस्येत्यवादीदार्यरक्षितः ॥ ५० ॥ ममानुरागी मा(चा)ऽत्यर्थं, पार्थिवश्चाखिलो जनः । प्रव्रज्यां त्याजयेदज्ञो, विघ्नो हि सुकृते बहुः ॥ ५१ ॥ तदामहादथाऽऽचार्या, विजह्रुः सपरिच्छदाः । अन्यदेशाय भरतक्षेत्रं विपुलमस्ति यत् ॥५२॥ वर्द्धमानस्य तीर्थेऽभूत्, तदाऽऽद्या शिष्यचौ(चो)रिका । निर्ग्रन्थानामथाचालीत्, पुरस्तादार्यरक्षितः ॥ ५३ ॥ तप्यमानस्तपस्तीव्रं, सहमानः परीषहान् । अधीयाय सुधीरेकादशाङ्गान्यार्यरक्षितः ॥ ५४ ॥ यावांस्तोसलिपुत्राणां, दृष्टिवादोऽन्तिकेऽभवत् । मातृकावत् सुखेनैव, सुधीस्तावन्तमग्रहीत् ॥ ५५ ॥ वृद्धाऽऽननेभ्यः शुश्राव, दृष्टिवादोऽस्ति यद् बहुः । श्रीवज्रान्तेऽधुनेत्यार्यरक्षितः पठनोद्यतः ॥ ५६ ॥ पप्रच्छाऽऽचार्यवर्यं स्वं, तमादातुमना मुनिः । श्रुतोपयोगात् तं योग्यं, ज्ञात्वाऽऽदिशदसावपि ॥ ५७ ॥ तदा पुरीपुरीसंस्थं, वज्रं प्रत्यार्यरक्षितः । अचालीदचलाऽऽचारः, प्राप्तश्चोज्जयिनीं क्रमात् ॥ ५८ ॥ तत्र प्राग् भद्रगुप्ताख्याऽऽचार्याः सन्ति बहुश्रुताः । तेषामुपाश्रयं प्राप्तो, भक्त्याऽवन्दत तान् मुनिः ॥ ५९ ॥ तेऽप्यार्यरक्षितं ज्ञात्वाऽऽकृत्या तं चोज्ज्वलैर्गुणैः । प्रशशंसुरहो ! धन्यस्त्वमेवासेक एव हि ॥ ६० ॥ त्यक्त्वा ब्राह्मण्यमीदृक्षं, यद् बाल्येऽपि व्रतं श्रितः । दुष्करं भोगयोग्येऽपि, स्वागतं साम्प्रतं

तव ॥ ६१ ॥ क्षीणायुः कर्तुकामोऽस्मि, वत्साद्यानशनक्रियाम् । परं निर्यामको नास्ति, ताहक्षस्त्वं पुनर्भव ॥ ६२ ॥ महाप्रसाद इत्यु-
क्त्वा, तत् मेने विनयात् मुनिः । ततो गृहीतानशनः, सूरिरित्यन्वशाच तम् ॥ ६३ ॥ अधीयेथाः श्रुतं वत्स!, मिश्रोपाश्रयमाश्रितः ।
यज्ञोपान्ते यतस्तेन, सहैकरजनीं वसेत् ॥ ६४ ॥ यस्तु सोपक्रमायुष्कस्तैः समं म्रियते हि सः । आमेत्युक्तोऽमुना सूरिर्ययौ स्वर्गं
समाहितः(धिना) ॥६५॥ ततः कृतार्थः प्रस्थायाऽऽययौ वज्राऽऽश्रितां पुरीम् । महर्षिर्बहिरेवास्थादुत्सूर इति तां निशाम् ॥६६॥ श्रीवज्रोऽपि
निशाशेषेऽद्राक्षीत् स्वप्नमसुं सम । पपावागन्तुकः कोऽपि, क्षीरपूर्णं पतद्ग्रहम् ॥६७॥ तस्थौ किञ्चित् पयस्तत्र, स्वप्नार्थं व्याकरोत् प्रभुः ।
आयास्यति प्रगे कश्चिदतिथिः साधुमण्डनम् ॥ ६८ ॥ ग्रहीष्यति स चास्मत्तोऽप्रमत्तोऽतिबहुश्रुतम् । तद्गृहीतावशिष्टं तत्, किञ्चित् मयि
रहिष्यति ॥ ६९ ॥ अथाऽऽर्यरक्षितः प्रावर्वज्रोपाश्रयमाश्रयत् । ववन्दे द्वादशाऽऽवर्तवन्दनेन च तं मुदा ॥ ७० ॥ प्रभुः पप्रच्छ
महर्षे!, स्वागतं कुत आगतः ? । सोऽवक् तोसलिपुत्राणां, समीपाद् भवदन्तिकम् ॥ ७१ ॥ उपलक्ष्य प्रभुः प्राह, किं भो ! नास्यार्य-
रक्षितः ? । ववन्दे चैवमित्युक्त्वा, विनयात् मुनिरप्यसौ ॥ ७२ ॥ दृष्टिवादस्य पाठार्थं, भगवंस्त्वामुपस्थितः । गुरुणोक्तः स्थितः क्वासि
( वि: क्वासि ) ?, सोऽवक् पृथगुपाश्रये ॥ ७३ ॥ किं मिश्रोपाश्रयस्थस्य, वत्सैवं पठनं भवेत् ? । स प्राह भद्रगुप्तानुशासनादुद्ववारि-
षम् ॥७४॥ ज्ञात्वोपयोगवान् वज्रः, स्माह निष्कारणं न हि । विधिं निषेधं चा(वा)ऽऽचार्याः, शिष्यान् प्रत्यादिशन्त्यपि ॥७५॥ अध्याप-
यितुमारेभे, स पूर्वाण्यार्यरक्षितम् । जग्राह लीलयैषोऽपि, नवपूर्वीमपूर्वधीः ॥ ७६ ॥ ततश्च दशमं पूर्वमधीयानो धियां निधिः ।
वज्रेणोक्तो यमकान्यधीष्वातिविषमाणि भोः ! ॥७७॥ इतश्च सन्दिदिशतुः, पितरावार्यरक्षितम् । वत्स ! नाऽऽगच्छसि स्वच्छ!, किमावां
विस्मृतौ तव ? ॥ ७८ ॥ आवाभ्यामभवद् ज्ञातं, यदुद्योतं करिष्यति । सुतः प्रव्रजितस्तत् नः(न), प्रत्युतासीत् तमोऽधिकम् ॥७९॥ एवं

सन्देशवाक्यैर्न, यदाऽऽयात्यार्यरक्षितः । ताभ्यां तस्यानुजः फल्गुरक्षितः प्रेषितस्तदा ॥ ८० ॥ गत्वा नत्वा स चाऽऽचार्यौ, निर्बन्धादार्यरक्षितम् । कुटुम्बोत्कण्ठिताकु(त्कण्ठतोत्क)ण्ठ(ः), कठोरः किमभूद् भवान् ? ॥८१॥ इति तेनानुजेनोक्तः, स्नेहलेनाऽऽर्यरक्षितः । पप्रच्छ स्वच्छधीर्वज्रं, स्वबन्धुमिलनोत्सुकः ॥८२॥ सूरिराख्यदधीष्वार्य !, ततोऽपठदसौ पुनः । किमार्य ! विस्मृतस्नेहमित्यूचे फल्गुरक्षितः ॥८३॥ तत्र दीक्षार्थिनो भ्रातर्वर्त्तन्ते बन्धवोऽखिलाः । कार्येऽस्मिन् लाभरूपे हि, किमद्यापि प्रमाद्यसि ? ॥ ८४ ॥ प्राहाऽऽर्यरक्षितस्तेषां, यदि व्रतमनोरथः । सत्यं तर्हि त्वमेवादौ प्रव्रजानुज ! मेऽन्तिकम् ॥ ८५ ॥ साधूक्तमित्यसौ जल्पन्, देहि दीक्षां ममेत्यवक् । ततस्तं दीक्षयामासानुजं साध्वार्यरक्षितः ॥ ८६ ॥ अन्येद्युरुत्सुकोऽपृच्छदधीतयमको मुनिः । भगवन् ! यामि मिलनकृते स्वगोत्रिणामहम् ॥ ८७ ॥ पुनः पठेति प्रभुभिः, प्रोक्तो(के) दध्यौ स हा ! महान् । गुर्वाज्ञा-स्वजनाह्वानसङ्कटोऽयमुपस्थितः ॥ ८८ ॥ यमकाध्ययने(नोद्)भग्नमना मुनिरथान्यदा । पप्रच्छ प्राञ्जलिर्भूत्वा, श्रीवज्रं वज्रनिर्मलम् ॥ ८९ ॥ प्रसद्याऽऽदिश दशमपूर्वस्याधीतवान् कियत् ? । कियत् चास्त्यवशिष्टं मे, तत् श्रुत्वा प्रभुरभ्यधात् ॥९०॥ वत्साद्यशिष्यतेऽद्यापि, समुद्रसदृशं श्रुतम् । बिन्दुमात्रं त्वयाऽधीतं, पू(स)र्वस्यास्य तपोधन ! ॥९१॥ प्राहाऽऽर्यरक्षितः स्वामिन् !, नाध्येतुं तत् क्षमोऽस्म्यहम् । भग्नोत्साहस्ततो यामि, मिलनाय स्वगोत्रिणाम् ॥ ९२ ॥ अनिर्वेदः श्रियो मूलं, वत्स ! तत्पारमेष्यसि । अचिरेणापि कालेन, कृथा माऽऽलसगं मनः ॥ ९३ ॥ ततो मनो विनाऽध्येतुं, पुनर्लग्नो गुरूक्तिभिः । लज्जया सा हि महतां, मण्डनं स्यादकृत्रिमम् ॥ ९४ ॥ तस्याध्ययनविघ्राभानन्यदा फल्गुरक्षितः । स्मारयामास सन्देशान्, बन्धूनामाग्रहमहात् ॥ ९५ ॥ ततोऽपृच्छदसौ वज्रं, प्रस्थानाय पुनः पुनः । निशम्योद्घोषणां तस्योपयोगं दत्तवान् विभुः ॥ ९६ ॥ कथमध्ययनादेष, भज्यते हि मुहुर्मुहुः ? । मत्तो हि दशमं पूर्वं, व्यवच्छेदं प्रपत्स्यते ॥ ९७ ॥ ज्ञात्वाऽस्याध्ययनाशक्तिमात्मनश्चायुरल्पकम् । ददावादेशमेतस्मै, गन्तुं

यन्ध्याश्रितां पुरीम् ॥ ९८॥ सफल्गुरक्षितस्तत्र, समागादार्यरक्षितः । वन्दितः परया प्रीत्या, सगोत्रपितृ-मातृभिः ॥ ९९ ॥ तं महर्षिं नमस्कर्तुं, सपौरोऽप्याययौ नृपः । भक्त्या नत्वा यथास्थानमासीनेष्वखिलेष्वपि ॥ १०० ॥ श्रोत्रपत्रपुटीपेयां, विदधे धर्मदेशनाम् । मुनिर्मनोमलजलप्रवाहाकारघारि(घोर)णीम् ॥ १०१ ॥ तां निशम्य समं पौरैर्नृपः सम्यक्त्वमग्रहीत् । सोमदेवो रुद्रसोमा भगिन्यप्याहेतं व्रतम् ॥ १०२ ॥ प्रभुभिस्त्याजितो यज्ञोपवीतादि पिताऽऽत्मनः । विहर्तुं प्रेषितो बुद्ध्या, सोऽधिकं लब्धिमानभूत् ॥ १०३ ॥ इतश्चास्मिन् गणेऽभूवन्, पुष्पमित्रत्रयस्त्रयः । एको दुर्बलिकापुष्पो, घृत-वस्त्राह्वयौ परौ ॥ १०४ ॥ यस्तु दुर्बलिकापुष्पस्तस्य विसरति श्रुतम् । अगुण्यमानं गु(ग)णयन्, दुर्बलस्तेन सोऽधिकम् ॥१०५॥ यो घृतपुष्पमित्रोऽसौ, पूरयत्यखिले गणे । घृतं द्रव्य-क्षेत्र-काल-भावास्खलितलब्धिमान् ॥ १०६ ॥ तत्र द्रव्यं घृतं क्षेत्रमवन्ती कालतः पुनः । ज्येष्ठाऽऽषाढेषु मासेषु, भावाद् रोरद्विजप्रिया ॥ १०७ ॥ गुर्वी तस्या धवेनाल्पमल्पं मीलयता सता । षड्भिर्याचनया मासैः, कृच्छ्रादुत्पादितं घृतम् ॥ १०८ ॥ यरमेष्यति चेतस्याः, प्रसूतायाः प्रयोजने । अथान्तरे घृतपुष्पमित्रस्तां प्रार्थयेद् घृतम् ॥ १०९ ॥ गृहान्तरपरं नास्ति, हृष्टाऽस्मै तद् ददाति सा । स यान् पृच्छति सर्वर्षीन्, कियताऽर्थो घृतेन वः ? ॥ ११० ॥ यस्य यावत्प्रमाणं तत्, तावत् तस्मै ददात्यसौ । वस्त्रलब्धिर्वस्त्रपुष्पमित्रेऽप्येवमनाहता ॥ १११ ॥ द्रव्यं तत्राम्बरं क्षेत्रमवन्ती मथुराऽथवा । कालः शीतर्तुर्वर्षा वा, भावतो विधवाङ्गना ॥ ११२ ॥ कृच्छ्रेण परिधानार्थं, तयैका पोतिकाऽर्जिता । भ्रातर्व्यापारयिष्यामि, सोऽथैत्य याचते मुनिः ॥ ११३ ॥ तस्मै ददाति तां तुष्टा, सैवं सर्वगणस्य सः । तपसोर्जितया लब्ध्या, वासः पूरयतीप्सितम् ॥ ११४ ॥ दुर्बलिकापुष्पमित्रो, नव पूर्वाण्यधीतवान् । स्मरत्यहर्निशं तानि, विसरन्त्यन्यया पुनः ॥ ११५ ॥ स तेन दुर्बलोऽत्यर्थं, बन्धवोऽस्य वसन्ति च । पुरे दशपुरे रक्तपट-पादोपजीविनः ॥ ११६॥ एत्याऽऽर्यरक्षितं

ते तु (तु), प्राहुर्नो भिक्षवोऽधिकम् । ध्यानैकताना युष्माकं, ध्यानमस्ति न शासने ॥ ११७ ॥ आचार्याः प्रोचुरस्माकं, साधवो ध्यानसाधयः । एष दुर्बलिकापुष्पमित्रो ध्यानेन दुर्बलः ॥११८॥ तेऽप्यूचुः प्रागसौ स्निग्धाऽऽहारभोज्यभवद् गृहे । न चाऽऽप्नोति तमधुना, तेनासावविदुर्बलः ॥ ११९ ॥ प्राह प्रभुरसावाज्यं, विना भुङ्क्ते न कर्हिचित् । ते स्माहुर्वः कुतस्तस्य, प्रातिराज्यदयो गुरुः ॥ १२०॥ आनयेद् घृतपुष्पस्तत्, ततस्तत्प्रत्ययाय ते । दुर्बलिकापुष्पमित्रं, निन्युर्गुर्वाज्ञया गृहम् ॥ १२१ ॥ तं भोजयन्त्यति(न्ति ते)स्निग्धं, तत्र ससार ▪ श्रुतम् । क्षार(रे) क्षेप इव व्यर्थं, तत् सोऽभूत् तेन दुर्बलः ॥१२२॥ भृशं स्निग्धप्रदानेऽपि, कृशतां वीक्ष्य तस्य ते । निर्विण्णा जगृहुः श्राद्धधर्मं श्रुत्वाऽन्तिके गुरोः ॥१२३॥ विन्ध्यो दुर्बलिकापुष्पमित्रश्च फल्गुरक्षितः । गोष्ठामाहिल इत्येते, प्रधानास्तद्गणेऽभवन् ॥१२४॥ विन्ध्यस्तेष्वथ(ति) मेधावी(वान्), सूत्रार्थग्रहणक्षमः । आलापकक्षणे सूत्रमण्डल्यां सोऽतिरिच्यते ॥१२५॥ स प्राह भगवन्नेरालापको मे चिरेण तत् । प्रसद्य वाचनाऽऽचार्यैः, कश्चित् स्वामिन् (ऽऽचार्यवर्यैः कश्चित्) प्रदीयताम् ॥ १२६ ॥ ततो दुर्बलिकापुष्पमित्रस्तत्राऽऽर्यरक्षितैः । आदिष्टो दत्तवान् सोऽपि, विन्ध्याय सूत्रवाचनाः(म्) ॥१२७॥ प्राह दुर्बलिकापुष्पमित्रोऽन्येद्युः प्रभून् प्रति । स्वामिन्नगुणितं बन्धुगृहे विस्मरति श्रुतम् ॥ १२८ ॥ अतो मे नवमं पूर्वं, क्षयं यास्यत्यचिन्तितम् । हृदि दध्युरथाऽऽचार्याः, श्रुतपाथोम्बुराशयः ॥ १२९ ॥ महामेधाविनोऽप्यस्य, श्रुतं चेद् यात्यचिन्तितम् । ही ! तर्हि का कथाऽन्येषां, स्वभावादल्पमेधसाम् ? ॥ १३० ॥ सानुग्रहोऽथ शिष्येषु, भगवानार्यरक्षितः । अनुयोगं पृथक् चक्रे, चतुर्धा सूत्रगोचरम् ॥ १३१ ॥ कालिकश्रुतमेकोऽसौ, द्वितीय ऋषिभाषितम् । तृतीयः सूर्यप्रज्ञप्तिर्दृष्टिवादश्चतुर्थकः ॥ १३२ ॥ धारणा-ग्रहणाशक्तिं, वीक्ष्यैवं स कृपार्द्रधीः । कालदोषादनुयोगं, चतुर्धा चकृवान् पृथक् ॥ १३३ ॥ अथाऽऽर्यरक्षिताऽऽचार्या, यथा देवेन्द्रवन्दिताः । आसंस्तथोच्यतेऽन्येद्युर्जग्मुस्ते मथुरा-

पुरीम् ॥ १३४ ॥ तत्र भूतगुहाख्यस्य, व्यन्तरस्य स्थिता गृहे । इतश्च प्राग्विदेहेऽगात्, नमस्कर्तुं हरिर्जिनम् ॥ १३५ ॥ नत्वा पप्रच्छ
देवेन्द्रो, निगोदाङ्गिविचारणाम् । सीमन्धरजिनेन्द्रोऽपि, तामाचख्यौ यथास्थिताम् ॥१३६॥ पुनः पप्रच्छ देवेन्द्रो, वर्षेऽस्मिन् कोऽपि
भारते । एवं निगोदजीवानां, वक्तुं वेत्तीश ! किं न वा ? ॥ १३७ ॥ प्रभुः प्राह हरे ! वेत्ति, वक्तुं तानार्यरक्षितः । कौतुकाद् वृद्ध-
विप्रेन्द्ररूपं कृत्वेन्द्र आययौ ॥१३८॥ नत्वा स्वरूपं पप्रच्छ, निगोदप्राणिनां हरिः । प्राहाऽऽर्यरक्षितः सम्यक्, तत् श्रुत्वेन्द्रो मुदं दधौ
॥१३९॥ प्राहेन्द्रो भगवन् ! व्याधिर्मच्छरीरे महानयम् । गृह्णाम्यनशनं ब्रूहि(व), कियदायुर्विलोक्य मे ? ॥१४०॥ ततस्तैर्जविकैरायुरस्य
सम्यग् विलोकितम् । यावद् वर्षशतमेकमागाच्च तच्छतद्वयम् ॥ १४१ ॥ ततश्चिन्तितमाचार्यैर्भारतोऽयं न मानवः । विद्याधरो व्यन्तरो
वा, रूपं चक्रेऽन्यथाऽऽत्मनः ॥१४२॥ यावद् वर्षसहस्राद्यैरप्यन्तोऽस्याऽऽयुषो न हि । तावद् द्विसागरोपमप्रमाणं च तदागतम् ॥१४३॥
ततोऽस्य भवमुत्पाट्याऽऽचार्यैः प्रोक्तं भवान् हरिः । प्रीतः सीमन्धरकृतां, प्रशंसां हरिरप्ययक् ॥ १४४ ॥ प्राहेन्द्रः परमप्रीत्या, धन्या
भारतभूरियम् । ईदृशस्य नृरत्नस्य, यत्राभूदधुनोद्भवः ॥ १४५ ॥ इत्युक्त्वा गन्तुकामेऽस्मिन्नाचार्याः प्राहुरुन्मुदः । प्रतीक्षस्व क्षणं शक्र !,
यावदायान्ति साधवः ॥ १४६ ॥ येऽस्थिराः स्थिरता तेषां, स्याद् व्रतेऽद्यापि वासवाः । यदायान्तीति तत् श्रुत्वा, हरिरूचे
प्रभून् प्रति ॥ १४७ ॥ मुमुक्षवः करिष्यन्ति, निदानं वीक्ष्य माममी । निःसत्त्वत्वेन तत्त्वेन, तेन यामि स्वमाश्रयम् ॥ १४८ ॥ कुरु
किञ्चिदभिज्ञानमित्युक्ते सूरिभिर्हरिः । विधायोपाश्रयद्वारविपर्ययमगाद् दिवि(वम्) ॥ १४९ ॥ आययुर्यतिनो द्वारमपश्यन्त इतस्ततः ।
अत्राऽऽयान्त्विति गुरुभिरुक्ते तस्मात्तरायुः ॥ १५० ॥ प्रभो ! किमेतदित्युक्ते, साधुभिः प्रभवोऽभ्यधुः । अत्राऽऽगाद् वासवस्तेन, प्राति-
हार्यमिदं(मदः) कृतम् ॥१५१॥ दृष्टोऽभविष्यत् सोऽस्माभिर्नेश ! किं रक्षितः क्षणम् ? । तैरुक्तो हेतुरेतेषां, निदानकरणाऽऽत्मकः ॥१५२॥

देवेन्द्रवन्दिताश्चाऽऽसंस्त एवमार्यरक्षिताः । विहरन्तोऽन्यदा जग्मुः, पुरं दशपुराह्वयम् ॥१५३॥ तदोत्थितोऽक्रियावादी, मथुरापुरि सोऽधमः । पितरं मातरं धर्माधर्मादीनि न मन्यते ॥ १५४ ॥ तदा तत्र न वाद्यस्ति, साधुसङ्घाटकस्ततः । सङ्घेन प्रैषि सूरीणां, तदा ते हि युगोत्तमाः ॥ १५५ ॥ वृद्धत्वात् प्रभुभिर्गोष्ठामाहिलः स्वस्य मातुलः । प्रहितो वादलब्धिर्हि, तस्य चाऽऽस्ते विशेषतः ॥१५६॥ क्षणाद् वादे जितस्तेनाऽक्रियावादी निरुत्तरः । हर्षेण रक्षितो वर्षारात्रं तत्राऽऽस्तिकैरसौ ॥ १५७ ॥ दध्युरन्येद्युराचार्याः, कोऽत्र भावी गणाधिपः ? । ज्ञातो दुर्बलिकापुष्पमित्रस्तत्रोचितश्च तैः ॥१५८॥ तेषां स्वजनवर्गस्य, सम्मतः फल्गुरक्षितः । विद्वान् गोष्ठामाहिलश्च, वमाहूयाथ सूरयः ॥ १५९ ॥ वल्लाऽऽज्य-तैलकुम्भानां, निदर्शनमदर्शयन् । त्रयोऽप्यधोमुखीकृत्य, वल्लाद्यैः पूरिताः पुनः ॥१६०॥ वल्लास्तावन्त एव स्युस्तैलं किञ्चिद् लगत्यपि । बहवस्त्वाज्यावयवाः, स्थानान्तरनिवेशनात् ॥१६१॥ स्वजनांस्तेऽभ्यधुः सूत्रार्थोभयाभ्यां स मां प्रति । दुर्बलिकापुष्पमित्रो, निष्पावकुटसन्निभः ॥ १६२ ॥ विज्ञेयस्तैलकुम्भाभः, शुद्धधीः फल्गुरक्षितः । गोष्ठामाहिलसाधुर्मां प्रत्याज्यघटतुल्यधीः ॥ १६३ ॥ तस्माद् दुर्बलिकापुष्पमित्रो गणभृदस्तु वः । स्वजनानिति सम्बोध्यास्मै शिक्षां सूरयो ददुः ॥ १६४ ॥ हंहो ! दुर्बलिकापुष्पमित्राऽऽयं फल्गुरक्षितम् । प्रति गोष्ठामाहिलं च, वर्तितव्यं यथा मयि ॥१६५॥ पूज्यैरुक्तौ ततो गोष्ठामाहिल-फल्गुरक्षितौ । वर्तितव्यं भवद्भ्यां भो !, मयीवास्मिन् गणाधिपे ॥ १६६ ॥ अपि चाकृते कृते वा, न कुर्वे रोषमप्यहम् । एवत् सहिष्यते नैष, तद् भाव्यं भोः ! सदोद्यतैः ॥ १६७ ॥ अनुशिष्योभयं पक्षमित्थं सूर्यार्यरक्षिताः । प्रत्याख्याय निराहारं, शुभध्याना ययुर्दिवम् ॥ १६८ ॥ श्रुतं गोष्ठामाहिलेन, स्वर्ययुः सूरयो यथा । आगात् पप्रच्छ गणभृत्, स्थापितः को जनानिति ? ॥ १६९ ॥ कुटदृष्टान्तमाकर्ण्य, स्थिता पृथगुपाश्रये । आयातो वसतावभ्युत्थिताः(तः) सर्वे महर्षयः (सर्वैर्महर्षिभिः) ॥ १७० ॥ तिष्ठात्रैवेति तैरुक्तः, संस्थितो-

(स्थित उ-स स्थित्वो-)पाश्रये पृथक्। द्वेषाद् व्युद्ग्राहयत्यन्यान्, न तु शक्नोति तान् मुनीन् ॥ १७१ ॥ अर्धपौरुषीमाचार्याः, कुर्वन्ति न शृणोत्यसौ। ब्रूते भवन्तो निष्पावकुटतुल्या महर्षे(र्द्धे)यः ॥ १७२ ॥ शिष्योऽनुभाषते तेषां, विन्ध्यस्तत्र शृणोत्यसौ। तत्र कर्मप्रवादाऽऽख्ये, पूर्वे कर्मोच्यतेऽष्टमे ॥ १७३ ॥ यथैव वध्यते कर्म, कर्म(कथं)वन्धोऽस्य चाऽऽत्मनः(?)। प्ररूपयन् विचारेऽस्मिन्नन्यथाऽभूत् स निह्नवः ॥ १७४ ॥ तद्विस्तरोऽथ विज्ञेयो, विशेषावश्यकाऽऽगमात्। क्षुब्धो न विन्ध्यस्तद्वाक्याद्, यथा गच्छा(सङ्घा-)द् बहिष्कृतः ॥ १७५ ॥ सूरिर्दुर्बलिकापुष्पमित्रः प्राप्तः क्रमाद् दिवम्। ततान तत्पदोद्योतं, ततो विन्ध्योऽप्यविन्ध्यधीः ॥ १७६ ॥ इत्यार्यरक्षितगुरोस्तु चास्य शिष्यनिष्पावकुम्भसदृशस्य च विन्ध्यसाधोः। सम्बन्धबन्धमभिधाय यमर्थसारं, सम्प्राप्तवान् भवतु तेन सुखी जनोऽयम् ॥ १७७ ॥ इति श्रीखरतरगच्छशृङ्गारहारश्रीगुणरत्नाचार्यवर्यशिष्यवाचनाचार्यपद्ममन्दिरगणिविरचितायां कथार्णवाङ्कायां श्रीऋषिमण्डलप्रकरणवृत्तौ श्रीआर्यरक्षिताचार्यचरित्रं परि(स)पूर्णम् ॥

अथ श्रीस्कन्दिलाचार्यं दर्शयन्ति—

**दुब्भिक्खम्मि पणट्ठे, पुणरवि मेलित्तु समणसंघाओ। महुराए अणुओगो, पवत्तिओ खंदिलेण तया ॥२१२॥**

व्याख्या—गाथार्थः सुगमः। नवरम्—तेनानुयोगस्तदा प्रवर्त्तितः। वाचना तु(ऽनु) चलिताऽग्रतः ॥ २१२ ॥ भावार्थश्च(स्तु) विशिष्टसम्प्रदायाभावात् नोक्तः ॥

अथ देवर्द्धिगणिक्षमाश्रमणान् प्रणिपतामि—

**सुत्तत्थरयणभरिए, खम-दम-मद्दवगुणेहि संपन्ने। देवड्ढिखमासमणे, कासवगुत्ते पणिवयामि ॥ २१३ ॥**



आर्यरक्षिताचार्यचरित्रम्।

स्कन्दिलाचार्यदेवर्द्धिगणिनिरूपणम्।

व्याख्या—गाथा सुगमैव। विशेषश्चायम्—श्रीवीरनिर्वाणादशीत्यधिकनवशतवर्षेषु व्यतीतेषु देवर्द्धिगणिक्षमाश्रमणैर्हि कालदोषात् सर्वागमानां व्यवच्छित्तिमालोक्य ते पुस्तकेषु न्यस्ताः। पूर्वं पुस्तकानपेक्षयैव गुरु-शिष्ययोः श्रुतार्पण-ग्रहणव्यवहारोऽभूदिति वृद्धसम्प्रदायः॥

अथान्तिमयुगप्रधानाचार्यं स्तौमि(ति)—

फग्गुसिरिसमणि-नाय(इ)लसावय-सच्चसिरिसाविया(इ)थुणियं। ओस्स(उस)प्पिणीइ चरि(र)मं, वंदे दुप्पसहमुणिवसहं॥ २१४॥

व्याख्या—गाथार्थस्तु सम्प्रदायेनैवोच्यते—

एतस्यामवसर्पिण्यां, सूरिर्दुःप्र(प्प्र)सहाह्वयः। पञ्चमारकपर्यन्ते, भावी श्रीवीरशासने॥ १॥ दशवैकालिकसिद्धान्तवेत्ता रत्निद्वयाङ्गवान्। स वीरशासनेऽब्दान्यष्टावुद्योतं विधास्यति॥ २॥ साध्वीमुख्या(ख्या) तदा फल्गुश्रीः श्रद्धालुश्च नागिलः। सत्यश्रीः श्राविकामुख्या(ख्या), ह्येष सङ्घश्चतुर्विधः॥ ३॥ सचिवः सुमुखाभिख्यो, राजा विमलवाहनः। षष्ठं तपस्तदोत्कृष्टं, भविता कालदोषतः॥ ४॥ चारित्रस्य तदोच्छेदः, पूर्वाह्णे भविता ततः। राजधर्मस्य मध्याह्नेऽपराह्णे ज्वलनस्य च॥ ५॥ गार्हस्थ्ये द्वादशाब्दानि, सूरेश्चाष्टौ व्रतेऽभवन्। स मृत्वाऽष्टमभक्तेन, कल्पं सौधर्ममेष्यति॥ ६॥ ततः परमरः षष्ठो, हाहाभूतः प्रवर्त्स्यते। तद्विस्त(स्ता)रोऽन्यशास्त्रेभ्यो, ज्ञेयो नोक्तोऽत्र गौरवात्॥ ७॥ इति श्रीदुःप्र(प्प्र)सहसूरिसम्बन्धः॥

अथ सर्वर्षीणां प्रणामं सूचयन्नाह—

एए अन्ने वि रिसी, तीए इस्से य वट्टमाणे य। भरहेरवय-विदेहे, पणमामि सया वि तिविहेण॥ २१५॥

श्रीदुप्प्रसहसूरिप्रबन्धः।

अन्यसर्वर्षिप्रणमनम्।

व्याख्या—'एतान्' एतच्छास्त्रोक्तान् भरतमहाराजर्ष्यादीन् दुःप्र(प्प)सहान्तान् 'अन्यांश्च(नपि)' अत्रानुक्तान् ऋषीन्, तथा "तीए इरसे य" इत्यादि अतीतान् एष्यतो वर्त्तमानांश्च ऋषीन् इत्यत्रापि योज्यम् । शेषं सुगममिति ॥ २१५ ॥

अथाऽऽर्याश्चापि नमस्करोमि—

अज्जाओ बंभि-सुंदरि-राइमइ-चंदणापमुक्खाओ । कालत्तए वि जाओ, ताओ वि नमामि भावेणं ॥ २१६ ॥

व्याख्या—'आर्याः' साध्व्यः, 'ब्राह्मी-सुन्दर्यौ' श्रीआदिजिनपुत्रिके, तथा 'राजीमती' श्रीनेमिजिनपूर्वजन्मजानिः, 'चन्दना' श्रीवीरप्रथमशिष्यणी । प्रमुखशब्देन सुज्येष्ठाद्या बालब्रह्मचारिण्यो गृह्यन्ते । शेषं सुगममिति ॥ २१६ ॥

अथैतत्पाठादिकर्तॄणां परम्परप्रयोजनफलाविर्भाविकां सूत्रकर्त्तुरभिधानसूचिकां चान्तिमगाथामाह—

जो पढइ गुणइ निसुणइ, इणमो गुणसंथवं महरिसीणं । सिरिधम्मघोसमणहं, काउं सो लहइ सिद्धिसुहं ॥२१७॥

व्याख्या—यः 'पठति' सूत्रतः, 'गुणयति' कण्ठसात्कृतं परावर्त्तयति, 'निशृणोति' पठ्यमानं गुण्यमानं वा, "इणमो" त्ति एनं गुणसंस्तवं "सिरिधम्मघोसं" इति श्रीधर्मस्य घोषं-संशब्दनं कीर्त्तनमिति यावत्, पक्षे श्रीधर्मघोष इति सूत्रकर्त्तुरभिधानं च । स लभते सिद्धिसुखमिति परम्परपरमप्रयोजनकथनम् । शेषं सुगममिति गाथार्थः ॥ २१७ ॥ इति समाप्तं ऋषिमण्डलाख्यप्रकरणसूत्रम् । तत्समाप्तौ च समाप्ता कथार्णवाङ्कानाम्नी तद्वृत्तिः ॥

कथार्णवाङ्कायां वृत्तौ पञ्चमविश्रामे वृत्तीयोंऽशः । आर्यानमस्करणम् । परम्परप्रयोजनफलसूचना सूत्रकर्तुरभिधानसूचना ।

## वृत्तिकर्तुः प्रशस्तिः—

एनां जेसलमेरुनाम्नि नगरे प्रारब्धवानश्विनीकोट्टे वाग्गुरुपद्ममन्दिरगणिः पूर्णीचकारानु च । वर्षे वह्नि-शरोऽऽङ्गगोडुपमिते वैशाख-शुक्लत्रयोदश्यां शुक्र-करोद्भवे शुभतमे योगेऽल्पधीशेखरः ॥१॥ अपि च—अर्हन्मतातिविपुलाम्बरमण्डलेऽस्मिंश्चान्द्रं कुलं किल कलां कल-यान्बभूव । सूर्यावली प्रतिदिनं ननु यत्र चित्रमुद्योतमासददनुत्तरसम्पदमा ॥ २ ॥ तत्र स्वच्छक्रिया(यो)ऽतुच्छो, गच्छः खरतराह्वयः । सम्प्राप योऽतिविस्तारं, शाखाभिर्वटशाखिवत् ॥ ३ ॥ तत्राऽऽसीदादिमो देवाचार्य आचार्यवर्यधीः । नेमिचन्द्रोद्योतन-श्रीवर्द्धमानाश्च सूरयः ॥ ४ ॥ खरतरबिरुदं विशदं, श्रीदुर्लभराजसदसि यो लेभे । स श्रीजिनेश्वरगुरुर्जीयाद् जिनचन्द्रगुरवश्च ॥ ५ ॥ स्वप्ने शासन-देवतोक्तवचसाऽऽविष्कृत्य यः स्तम्भनश्रीपार्श्वप्रतिमां तदङ्गपयसा पुष्टं च (स्व)कुष्ठं क्षणात् । दूरीकृत्य नवाङ्गवृत्तिममलामाविश्चकारोच्चकैः, तत्पट्टेऽभयदेवसूरिसुगुरुर्जातोऽयमुद्यद्यशाः ॥ ६ ॥ प्राप्तोपसम्पद्विभवस्तदन्ते, द्विधाऽपि सूरिर्जिनवल्लभोऽभूत् । जमन्थ यो ग्रन्थम-नर्थसार्थप्रमाथिनं तीव्रक्रियाकठोरः ॥ ७ ॥ पट्टे तदीयेऽभवदद्भुतश्रीर्युगप्रधानो जिनदत्तसूरिः । यो योगिनीचक्रमुखादिदेवशीर्षे निजा-ऽऽज्ञां मुकुटीचकार ॥ ८ ॥ नृरत्नमौलिर्जिनचन्द्रसूरिस्ततोऽप्यभूत् श्रीजिनपत्ति(ति)सूरिः । षट्त्रिंशदुद्यद्वरवादजेता, चकार गच्छेऽत्र विधीन् बहून् यः ॥ ९ ॥ जिनेश्वराख्यः प्रबभूव सूरिर्जिनप्रबोधाभिधसूरयश्च । जज्ञे पुनः श्रीजिनचन्द्रसूरिः, श्रीवीरतीर्थ(र्थे) प्रकट-प्रभावः ॥ १० ॥ जिनादिरूपः कुशलो मुनीन्द्रो, नृलक्षणा वाग् जिनपद्मसूरिः । लब्धिप्रधानो जिनलब्धिसूरिः, पुनर्गणेशो जिनचन्द्र-सूरिः ॥ ११ ॥ जिनोदयाख्योऽनु च सूरिरासीद्, विद्वन्मणिः श्रीजिनराजसूरिः । समग्रसिद्धान्तविचारवार्द्धिकुम्भोद्भवः श्रीजिनभद्र-

सूरिः ॥ १२ । तत्पट्टपूर्वाचलहेलिकेलिर्दीक्षागुरुर्मे जिनचन्द्रसूरिः । व्याख्यारसप्रीणितभूरिभूपश्चातुर्यवर्यामृतबिन्दुकूपः ॥ १३ ॥ जिनादित्याग्नि समुद्रसूरिर्गुरुर्गणेऽस्मिन्नय विद्यमानः । यत्कीर्त्तिकान्ता ककुभां मुखानि, चुम्बन्त्यपि प्राप सतीप्रसिद्धिम् ॥ १४ ॥ श्रीकीर्त्तिरत्नाभिधसूरयोऽस्मिन्, गणे बभूवुर्भुवनप्रसिद्धाः । वाक्सिद्धि-सल्लब्धि-विशुद्धबुद्ध्यादयो गुणाः कस्य मुदे न येषाम् ? ॥१५॥ ज्ञात्वाऽऽजंबभार-दुष्पतपश्चारित्र-तीव्रक्रिया-काठिन्यप्रमुखाश्चमत्कृतिकृतो लोकम्पृणा यद्गुणाः । केषां नाद्भुतदायिनोऽत्र गुणरत्नाचार्यचर्या अमी ?, जीयासुर्गुरुकीर्त्तिरत्नपदवीशृङ्गारहीरश्रियः ॥१६॥ तेषां प्रसादादणुधीः प्रयत्नमकार्षमस्मिन् गहने कवीनाम् । जह्वालतां किं न जगद्विलङ्घने, धत्ते तुरङ्गोऽपि मृगाङ्कसङ्गतः ? ॥१७॥ संसूत्रितं यदुत्सूत्रमत्र मुग्धधिया मया । तत् शुद्धबुद्धिभिः शुद्धं, कार्यं मयि कृपापरैः ॥ १८ ॥* प्रत्यक्षरं गणनया, ज्ञेयानि श्रेयस्त्वनुष्टुभाम् । द्वासप्ततिशतान्यस्यामेकपञ्चाऽधिकान्यपि ॥ १९ ॥ वाग्गुरू धवलचन्द्र-ज्ञानमन्दिरसंज्ञकौ । शोधयामासतुर्यत्नादिमां लाक्षणिकोत्तमौ ॥ २० ॥ यावद् भूवलयं समुद्रनिलयं यावत् सुवर्णाचलो, यावत् चन्द्र-रवी नवीनमहसौ यावद्

* १७४ पत्रात्मके पत्तनस्थप्राच्यविद्यामन्दिरीयादर्शपुस्तके [क्र. २०८७] इतो निम्ननिर्दिष्टोऽन्तिमोल्लेखः पठ्यते—

(१) "इति श्रीऋषिमंडलवृत्तिः संपूर्णा । शुभं भवतु । कल्याणमस्तु । संवत् १६६३ वर्षे ज्येष्ठमासे शुक्लपक्षे द्वादश्यां तिथौ शनिवारे । महाराजाधिराजमहाराजा श्रीरायसिंहजीविजयराज्ये । श्रीकुकेशगच्छे वा० देवचंद्र तत्पट्टे वा० ज्ञानकलश तत्पट्टे वा० वीरकलश तत्पट्टांभोजविकासदिनमणिवा० विनयकलश तच्छिष्य पं० श्रीश्रीश्रीश्रीश्रीश्रीश्री—चारित्रकलश तच्छिष्य दूदाजी मुनिमहेस लिषतं । शुभं भवतु । श्रेयस्तु ।"

११४ पत्रात्मके तस्मिन्नेव (क्र. ३००४) चित्रचतुष्टयान्वितेऽन्यस्मिन्नादर्शपुस्तके प्रान्तोल्लेख ईदृश उपलभ्यते—

(२) "शुभं भवतु । संवत् १६८० वर्षे कार्तिक वदि ५ दिने भृगुवारे श्रीबृहत्खरतरगच्छे श्रीजिनराजसूरिविजयराज्ये श्रीजिनभद्रसूरिशाखायां

कथार्णवाख्यायां वृत्तौ पञ्चमविश्रामे वृतीयोंऽशः ।

वृत्तिकारप्रशस्तिः ।

पुष्पिका

जिनाज्ञा शुभा। तावत् शास्त्रमिदं विदग्भहृदयैः पापठ्यमानं बुधैर्भव्यानामनुवासरं हृदि चिदुत्पादाय सज्जायताम् ॥ २१ ॥ इति श्रीऋषिमण्डलवृत्तिः सम्पूर्णा। लिखिता प्रथमपण्डितजयध्वजगणिप्रवरैः ॥ प्रशस्त्या सह सर्वग्रन्थाग्रं ( ७५९० अक्षर १२, ( ७७९० ) अक्षर १२, ( ८००० ) ॥ शुभं भवतु कल्याणमस्तु श्रीरस्तु ॥

वृत्तिकारप्रशस्तेः समाप्तिः।



---

श्रीवाचनाचार्यपद्ममेरुगणि तच्छिष्य वा० श्रीमतिवर्द्धनगणिशिष्य वा० श्रीमेरुतिलकगणितत्सनीर्थ्यं वा० श्रीदयाकलशगणि तच्छिष्य वा० श्रीअमरमाणिक्यगणि तच्छिष्य पं० क्षमारंगगणि तच्छिष्य वा० रत्नलाभगणीनां पं० राजकीर्तिगणि [ पं० मुनितिलकादि......... ]नां उपकेशवंशीयपारिषगोत्रे श्रीतिम(व)रीपास्तव्य सा० विमभार्या ययजलदे तत्पुत्र सा० थिरा भार्या चंद्रादे तत्पुत्रस्य सा० नेतसी भार्या रत्नादेनाम्या पुत्र सा० गंगा सा० जीवा भ्रातृ पद्मसीप्रमुख पौत्र-देवराजादिसपरिकरया स्वपुण्यार्थं विहारिता वाच्यमाना चिरं नंद्यात् ॥"

